'यो[१] ऽनधीत्य द्विजो वेदान् अन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' ॥

( म. स्मृ. २.१६८; व. स्मृ. ३.२ )

इति । उद्बन्धनं तु द्वयोस्तुल्यम्—इति विवक्षया 'स्त्री पुमान् वा'—इत्युक्तम् । गतिरिति नरकप्राप्तिः । एषा समनन्तरश्लोकेन वक्ष्यमाणा विधीयते ज्ञाप्यते ॥ १ ॥

प्रतिज्ञातां गतिं दर्शयति—

पूय-शोणितसम्पूर्णे त्वन्धे तमसि मज्जति ।
षष्ठीर्[३]वर्षसहस्राणि नरकं प्रतिपद्यते ॥ २ ॥

अन्धंतमस्तीव्रो नरकविशेषः ।

'तामिस्रम् । (२) अन्धतामिस्रम्' ।

( वि. स्मृ. ४३. २ ३ )

इति उदाहरन्ति । तीव्रत्वाभिव्यक्तये षष्ठीरिति अत्यन्त-संयोगे द्वितीया ॥ २ ॥

अस्त्वेवमतिकष्टत्वमुद्बन्धनमरणस्य किं ततः? इत्याशङ्क्य फलितं दर्शयन् विधित्सितस्य प्रायश्चित्तस्य निमित्तं च सम्भावयन्नाशौचादीन् प्रतिषेधति—

नाशौचं नोदकं नाग्निं नाश्रुपातं च कारयेत् ।

१ This verse appears in Manu. In Vasishtha it is quoted under the same name. २. The text uses the singular form, i. e., श्रमम्. Except I. all omit अन्यत्र कुरुते श्रमम् and the following line. ३. Except B. D. and I. all read षष्ठि for षष्ठी .

उदकमुदकदानम् । अग्निं अग्निदानम् । अश्रुपातं चेति चकारेण शववहनादिकं समुच्चिनोति । न कारयेत् न कुर्यादित्यर्थः । ब्रह्मपुराणे ऽपि—

'शस्त्रमुद्बन्धनं जलम्'।

इत्याद्यनुक्रम्य

'पतितास्ते प्रकीर्त्तिताः'।

इत्यभिधायानन्तरमिदमुक्तम्—

'पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित्'॥

इति । [ शातातपोऽपि—

'वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद् यस्तु भृग्वग्न्यनशनादिभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ' ॥

( अ. स्मृ. ७. ७ )

इति । अत्र याज्ञवल्क्यः—

' पाषण्डयनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः ।
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः '॥

( या. स्मृ. ३. ६ )

इति । ब्रह्मपुराणे—

' शृङ्गि-दंष्ट्रि-नखि-व्याल-विष-वह्नि-स्त्रिया-जलैः ।

---

१ The parenthetically shown portion does not appear in all except A. and I., and we think it unnecessary here, as it occurs in the foregoing chapter.

सुदूरात् परिहर्त्तव्यैः कुर्वन् क्रीडां मृतस्तु यः।
नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता॥
निगृहीतश्च यो राज्ञा चौर्यदोषेण कुत्रचित्।
परदारान् हरन्तश्च रोषात्तत्पतिभिर्हताः॥
असमानैश्च सङ्कीर्णैश्चण्डालाद्यैश्च विग्रहम्।
कृत्वा तैर्निहतास्तद्वत् चण्डालादीन् समाश्रिताः॥
क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्।
गिरि-वृक्षप्रपातं च ये कुर्वन्ति नराधमाः॥
कुसीदजीविनो येऽपि ये चालङ्कारवर्जिताः।
मुखेभगाश्च ये केचित् क्लीबप्राया नपुंसकाः॥
ब्रह्मदण्डहता ये च ये चैव ब्राह्मणैर्हताः।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः।
न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित्॥
एतानि पतितानां तु यः करोति विमोहितः।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा'॥

इति। विष्णुपुराणे—

'भार्या-पुत्रविहीनाश्च ह्यग्निसंस्कारवर्जिताः॥
पक्षिणः प्रेतरूपेण ह्यन्तरिक्षे प्रलम्बिताः।
अग्निना भृगुपातेन ह्युद्बन्धेन जलेन वा॥
दन्तिभिः शृङ्गिभिर्वाऽपि विषेण गरलेन वा।
चोरान्त्यजाति-चण्डालै रणे वाऽपि हताश्च ये॥

श्राद्धकर्मविहीनाश्च लुप्तपिण्डोदकक्रियाः ।
तेषामुद्धरणार्थाय प्रायश्चित्तं विधीयते'॥

इति । ]अपरार्के -

'मृगभक्षेरणे चैव दावाग्नौ पतनं यदि ।
शूलेऽप्यर्धे कबन्धस्य मरणं पापकर्मणाम् ॥
दृष्टच्छेदं समादाय पुनः संस्कारमाचरेत् ।
विद्युदग्नि-पयःपन्था-चण्डाल-ब्राह्मणैर्हतः ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ।
आत्मानं घातयेद्यस्तु विषाग्नि-जल-बन्धनैः ॥
तस्य पापविशुद्ध्यर्थं प्राजापत्यत्रयं चरेत् ।
एक-द्वि-त्रि चतुःपञ्च-षडब्दं पर्यवस्यति ॥
एतत्संवत्सरादूर्ध्वं प्रायश्चित्तं विधीयते ।
षण्मासात् द्विगुणं प्रोक्तं त्रिमासात् त्रिगुणं भवेत् ॥
चतुर्गुणं त्रिपक्षे तु सद्यः पञ्चगुणं भवेत् ।
चण्डालादुदकात् सर्पाद्ब्राह्मणाद्वैद्युतादपि ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम ।
उदकं पिण्डदानं च प्रेतेभ्यो यत् प्रदीयते ॥
नोपतिष्ठति तत् सर्वमन्तरिक्षे विनश्यति ।
ब्राह्मणेन वधे पाशे चण्डालस्य करेण वा ॥
आत्मनाशः सनिर्घाते शूद्रवद्दाहयेत द्विजम् ।
भस्मास्थीनि गृहीत्वा तु विप्राणामनुशासनात् ॥

१. All of the following 13 verses do not appear in Aparārka and those too which appear are not found in one place, some occurring in Â. P. and others in Ś. P. with slight differences.

क्षीरप्रक्षालनं कृत्वा पुनः संस्कारमाचरेत् ।
यदि कश्चित् प्रमादेन म्रियेताग्न्युदकादिभिः ॥
तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया ।
चण्डाला-ऽशनि-शस्त्रा-ऽहि-दंष्ट्रि-शृङ्ग्यम्बु-रज्जुभिः ॥
वृक्षा-ऽश्म-विष-विप्रैश्च मृतानामात्मघातिनाम् ।
नारायणबलिः कार्यो दुर्मरणेन मृतस्य च ॥
जीवतो यद्व्रतं प्रोक्तं मृते तद्द्विगुणं भवेत् ।
अस्थिनि त्रिगुणं प्रोक्तं पालाशे तु चतुर्गुणम्' ॥

इति ॥

इदानीं दुर्मृतानां वहनादौ प्रायश्चित्तं विदधाति—

**वोढारोऽग्निप्रदातारः पाशच्छेदकरास्तथा ॥ ३ ॥**

**तप्तकृच्छ्रेण शुद्ध्यन्तीत्येवमाह प्रजापतिः ।**

तथाशब्देनाशौचोदकदानादिकर्तॄन्[1] समुच्चिनोति । तप्तकृच्छ्रलक्षणं वक्ष्यते । यत्तु[2] ब्रह्मपुराणेऽभिहितम्—

'एतानि पतितानां तु यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा' ॥

इति । एतानि दाहादीनि[3] । तेषां तत्र प्रकृतत्वात् । —तत् कामकारविषयम्[4] ।

'विहितं यदकामानां कामात्तु द्विगुणं भवेत्' ।

१. Except A. B C. and D. all read आशौचोदकदानादिकम for आशौचोदकदानादिकर्तॄन्. २. B. and D omit यत्तु, and read लक्षणं वक्तुं ब्रह्मपुराणेऽभिहितम् for लक्षणं वक्ष्यते । यत्तु ब्रह्मपुराणेऽभिहितम्. ३. B. and D. read वाहादीनि. ४. F. reads कामकाराकारविषयम्.

इति स्मरणात् । यच्च बृहस्पतिनोक्तम्—

'विषोद्बन्धन-शस्त्रेण यस्त्वात्मानं प्रमापयेत् ।
मृतो मेध्येन लेप्तव्यो नान्यं संस्कारमर्हति ॥
पाशच्छेत्ता तु यस्तस्य वोढा वाऽग्निप्रदस्तथा ।
सोऽतिकृच्छ्रेण शुद्ध्येत्तु पिण्डदो वा नराधमः' ॥

इति यच्च यमेनोक्तम्[1]—

'गो-ब्राह्मणहतं दग्ध्वा मृतमुद्बन्धनेन च ।
पाशाञ्छित्वा तथा तस्य कृच्छ्रं सान्तपनं चरेत्' ॥
(य. स्मृ. १. ९)

इति तदुभयमशक्तविषयम् । देश-काल-वयः-शक्त्यादीनां प्रायश्चित्ततारतम्यहेतुत्वात्[2] । तथा च व्याघ्रः[3]—

'देशं कालं वयः शक्तिं ज्ञानं बुद्धिकृतं तथा ।
अबुद्धिकृतमभ्यासं ज्ञात्वा निष्करणं[4] वदेत्' ॥

इति । शक्त्यादितारतम्यवन्निमित्ततारतम्यमपि[5] प्रायश्चित्ततारतम्यकारणम् । अत एव प्रजापतिः स्पर्शाद्यल्पनिमित्ते स्वल्पं प्रायश्चित्तमाह—

'तच्छवं[6] केवलं स्पृष्ट्वा पातयित्वाऽश्रु वा तथा ।
एकरात्रं तु नाश्नीयात् त्रिरात्रं बुद्धिपूर्वकम्[7]' ॥

इति । एवं निमित्तभूयस्त्वे प्रायश्चित्तभूयस्त्वम् । अत एवाशेषाः प्रेतक्रियाः कुर्वतोऽधिकं प्रायश्चित्तमाह वसिष्ठः—

१. B and D. substitute गोतमेन for यमेन, but the quotation occurs in Yama. २ B and D. read प्रायश्चित्तार्थहेतुत्वात्. ३. G. reads व्यासः for व्याघ्र. ४ B. D. and I. read निष्क्रयणं for निष्करणं. ५. B. and D. read शक्त्यादितारतम्यमपि and omit निमित्ततारतम्यमपि. ६. G. reads तत्सर्वं ७. I. reads बुद्धिपूर्वकम्.

'य आत्मत्यागिनां[1] कुर्यात् स्नेहात् प्रेतक्रियां द्विजः।
स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणं व्रतम्' ॥
(व. स्मृ. २३. १६)

इति । 'प्रजापति' ग्रहणमुक्तार्थे बुद्धिदार्ढ्यार्थम् । ततो विरोधिवचनानां विषयव्यवस्था द्रष्टव्येत्युक्तं भवति । सा चास्माभिः प्रदर्शिता ॥ ३ ॥

उद्बन्धनन्यायं गोहतादिष्वतिदिशति—

गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् ॥ ४ ॥
संस्पृशन्ति तु ये विप्रा वोढारश्चाग्निदाश्च[2] ये ।
अन्ये ये[3] वाऽनुगन्तारः पाशच्छेदकराश्च ये ॥ ५ ॥
तप्तकृच्छ्रेण शुद्धास्ते कुर्युर्ब्राह्मणभोजनम् ।
अनडुत्सहितां गां च दद्युर्विप्राय दक्षिणाम् ॥ ६ ॥

अत्राततायितया गोभिः क्रीडन् यदि हतस्तदानीमिदं द्रष्टव्यम् । प्रामादिकमरणे पातित्याभावात् । एतच्चाशौचप्रकरणेऽस्माभिरुपवर्णितम् । पूर्वत्रोद्बन्धनविषये तप्तकृच्छ्रमात्रमुक्तम् । इह तु ब्राह्मणभोजनादिकमधिकमुच्यत इति नाशङ्कनीयम् । परकर्तृकोद्बन्धनस्यात्र विवक्षितत्वात् । गोहत-ब्राह्मणहतयोर्मध्ये पाठात् । न च परकर्तृकोद्बन्धने प्रायश्चित्ताल्पत्वमिति वाच्यम् । परकर्तृकोद्बन्धनप्रसक्तिं ज्ञात्वा प्रवृत्तस्याततायिनोऽत्र विवक्षितत्वात् । गोमिथुनदक्षिणां च्यव-

१. The text reads आत्मस्यागिन. २. K. and L. read वाहकाश्च ये for ऽग्निदाश्च ये. ३. L. reads -ऽपि for ये.

'आत्मघातकस्पर्शन-दहन-वहनेषु तप्तकृच्छ्रं
चरेत् । वृष-गावौ दक्षिणा ब्राह्मणेषु' ।

इति ॥ ४-५-६ ॥

तप्तकृच्छ्रस्वरूपमाह[२]—

त्र्यहमुष्णं पिबेद्वारि त्र्यहमुष्णं पयः पिबेत् ।
त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षो दिनत्रयम् ॥ ७ ॥
षट्पलं तु पिबेदम्भस्त्रिपलं तु पयः पिबेत् ।
पलमेकं पिबेत् सर्पिस्तप्तकृच्छ्रं विधीयते ॥ ८ ॥

इति । वायुभक्षणमुपवासः । तप्तशब्देन शीतकृच्छ्रो व्यावर्त्यते । तत्स्वरूपं च यमेनोक्तम्—

'त्र्यहमुष्णं पिबेदम्भस्त्र्यहमुष्णं घृतं पिबेत् ।
त्र्यहमुष्णं पयः पीत्वा वायुभक्षः परं त्र्यहम् ॥
तप्तकृच्छ्रं विजानीयात् शीतैः शीतमुदाहृतम्' ।
(य. स्मृ. १. १२-१३)

इति । यत्तु याज्ञवल्क्येनोक्तम्—

'तप्तक्षीर-घृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः' ॥
(या. स्मृ. ३. ३१८)

इति तत् तप्तकृच्छ्रस्यावान्तरभेदविवक्षयोपपद्यते । यथा

---

१. I reads -घातुक- for -घातक-. २. I. inserts अत्रि. after आह and thus shows that the next four lines belong to Atri. Other MSS. by the omission of अत्रिः render them as from Parâśara. These lines appear in Atri Samhita, but with certain differences in the readings; while in Parâśara Smriti they are exactly the same as given above.

सान्तपनं-महासान्तपनं—इति द्वैविध्यं तथा तप्तकृच्छ्रं महातप्तकृच्छ्रमिति द्वैविध्यं द्रष्टव्यम्। पलशब्देन सुवर्णचतुष्टयमुच्यते।

'पलं सुवर्णाश्चत्वारः'।

(या. स्मृ. १. ३६३)

इति याज्ञवल्क्यवचनात्।

[उक्तं च—

'पञ्च गुञ्जात्मको माषो निष्को माषाष्टनिर्मितः।
दशनिष्कात्मकं प्रोक्तं पलमानं बुधैः सदा'॥

इति।]

एतादृशैः पलैः षड्भिः सम्मितमम्भः पिबेत् ॥७-८॥

पतितसंसर्गप्रायश्चित्तं विधातुं तत्संसर्गस्य निन्दितत्वं दर्शयति—

योवै समाचरेद्विप्रः पतितादिष्वकामतः।
पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥ ९ ॥
मासार्धं मासमेकं वा मासद्वयमथापि वा।
अब्दार्धमब्दमेकं वा तदूर्ध्वं चैव तत्समः ॥ १० ॥

इति। अत्र विप्रग्रहणं क्षत्रियादेरुपलक्षणम्। मनुष्यमात्रस्य तत्संसर्गस्य निन्दितत्वात्। तथा च मनुः—

'यो येन पतितेनैषां संसर्गं याति मानवः।
स तस्यैव व्रतं कुर्यात् तत्संसर्गविशुद्धये'॥

इति। (म. स्मृ. ११. १८१)

---

१. All, except L. omit the portion enclosed in parenthesis. It is unnecessary as it produces redundancy of sense. २. A. B. D. K. L. and M read ससर्गम for यो वै सम्. ३. K. L. and M read अर्धवूर्ध्वं तु for तदूर्ध्वं चैव. ४. B. and D. read एतम् for एव.

'समाचरणं' सह यानासनादि । तथा च कण्वः[1]—

'आसनाच्छयनाद्यानात् सह्लापात् सहभोजनात् ।
सङ्क्रमन्तीह पापानि तैलबिन्दुरिवाम्भसि ॥
संवत्सरेण पतति पतितेन समाचरन्[2] ।
यानासनादिभिर्नित्यमित्याहुर्ब्रह्मवादिनः' ॥

इति । याजनादौ तु सद्यः पतति । तथा च बौधायनः—
'संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनात् सद्योऽन्न-शयेनासनात्[3]' ॥
(बौ. स्मृ. २. १. २. ३९)

इति । बृहस्पतिरपि[4] बहुविधं समाचरणं निषेधति—
'एकशय्याऽऽसनं[5] पङ्क्तिर्भाण्डं पक्यन्नमिश्रणम् ।
याजनाध्यापने योनिस्तथा च सहभोजनम् ॥
नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह' ।

इति । देवलोऽपि—
'सह्लाप-स्पर्श-निश्वासात् सहशय्या-ऽऽसनाशनात् ।
याजनाध्यापनाद् यौनात्[6] पापं सङ्क्रमते नृणाम्' ॥

इति । एतच्च[7] पूर्वस्मिन् युगे । अत्र तु मूलवचनोक्तं द्रष्ट-

---

१ J. reads काण्वा and the next two lines do not appear in C. F. G. and H., while B. D. E. and J. omit them and also the next five lines. २. I reads सहाचरन्. ३ I reads सद्यो न शयनादिभि; while the text reads न तु यानासनाशनात्. ४. B. and D. read बृहस्पतिश्च विविधं for बृहस्पतिरपि बहुविधं ५. J. reads—

'एकशय्यां समं पक्ति भाण्डपक्वयन्नमिश्रणे ।;

while G. reads सद्योऽन्नमिश्रणं. ६. B. and D. read यानात् for यौनात्, for the same J. reads यानात्. ७. The portion from एतच्च to याजना-दिर्भाह्य does not appear in all except A. and I.

व्यम्। याजनादेर्वक्ष्यमाणत्वात्। संसर्गश्चात्र याजनादिर्ग्राह्यः। पतितादिष्वित्यादिशब्देन तत्पुत्रादयो गृह्यन्ते।

'पतितोत्पन्नः पतितो भवति'[1]।

(व. स्मृ. १३. ५१)

इति वसिष्ठेन तन्निन्दनात्। विधित्सितस्य प्रायश्चित्तस्याल्पत्वं ज्ञापयितुमकामत इत्युक्तम्। कामतः संसर्गे तु विशेषः स्मृत्यन्तरेऽभिहितः—

'पञ्चाहे तु चरेत् कृच्छ्रं दशाहे तप्तकृच्छ्रकम्।
पराकस्त्वर्धमासे स्यान्मासे चान्द्रायणं चरेत्॥
मासत्रये तु कुर्वीत कृच्छ्रं चान्द्रायणोत्तरम्।
षाण्मासिके तु संसर्गे कृच्छ्रं त्वब्दार्धमाचरेत्॥
संसर्गे चाब्दिके कुर्यादब्दं चान्द्रायणोत्तरम्'।

इति। पृथक्पृथग्व्यवस्थितप्रायश्चित्तविधित्सया पञ्चाहाद्यनेकपक्षोपन्यासः। 'तदूर्ध्वं चैव तत्समः'—इत्यभिधानात् पूर्वत्र तत्साम्याभावेऽपि ततोऽर्वाचीनं पापं कालतारतम्येन भवति—इत्यवगम्यते। यः समाचरेत् स पापी भवति इत्यध्याहृत्य निन्दा योजनीया॥ ९–१०॥

इदानीं कालतारतम्येन पूर्वोक्तेष्वष्टसु पक्षेषु यथाक्रमं[2] प्रायश्चित्तं विदधाति—

त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत्।
तृतीये चैव पक्षे तु कृच्छ्रं सान्तपनं चरेत्॥ ११॥
चतुर्थे दशरात्रं स्यात् पराकः पञ्चमे मतः।
कुर्याच्चान्द्रायणं षष्ठे सप्तमे त्वैन्दवद्वयम्[3]॥ १२॥

---

१. The text reads पतितनोत्पन्न. २. Except A. and I. all omit पूर्वोक्तेष्वष्टसु पक्षेषु यथाक्रमम्. ३. B. and D. read चैन्दवत्रयम्.

शुद्ध्यर्थमष्टमे चैव षण्मासान् कृच्छ्रमाचरेत् ।
पक्षसंख्याप्रमाणेन सुवर्णान्यपि दक्षिणा ॥ १३ ॥

इति । प्रथमः पक्षः पञ्चाहसंसर्गः । तत्र त्रिरात्रसंज्ञकं कृच्छ्र-माचरेत् । त्रिरात्रकृच्छ्रो नाम त्रिरात्रोपवासः । तथा च विष्णुः—

'अथ कृच्छ्राणि भवन्ति (१)।
त्र्यहं नाऽश्नीयात्' (२)।
(वि. स्मृ. ४६. १–२)

इति । द्वितीयपक्षो दशाहसंसर्गः । तत्र प्राजापत्यमाचरेत् । न च मूलवचने प्राजापत्याख्यः कृच्छ्रविशेषो न श्रूयते—इति शङ्कनीयम् । स्मृतिशास्त्रेषु निरुपपदस्य कृच्छ्रशब्दस्य प्राजापत्य एव प्राचुर्येण प्रयोगात् ।

'कृच्छ्रमिति प्राजापत्यम्' ।

इति देवलस्मरणाच्च । प्राजापत्यस्वरूपं मनुराह—

'त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं तु नाश्नीयात् प्राजापत्यं चरन् द्विजः' ॥
(म. स्मृ. ११. २११)

इति । तृतीयपक्षो द्वादशाहसंसर्गः । तत्र सान्तपनं कृच्छ्र-माचरेत् । सान्तपनं चतुर्विधम् । द्विरात्रं सप्तरात्रं पञ्चदशरात्रमेकविंशतिरात्रं चेति । तत्र द्विरात्र-सप्तरात्रयोः स्वरूपमाह याज्ञवल्क्यः—

१. B. and D. omit this line and the following portion up to कृच्छ्र-माचरेत्.

'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
जग्ध्वा परेऽन्ह्युपवसेत् कृच्छ्रं सान्तपनं चरन्॥
पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः'॥
(या. स्मृ. ३. ३१५–३१६)

इति। यमेनापि पञ्चदशाहसाध्यो महासान्तपनोऽभिहितः –
'त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत्।
त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः॥
महासान्तपनं ह्येतत् सर्वपापप्रणाशनम्'।

इति। जाबालेन त्वेकविंशतिरात्रनिर्वर्त्यो महासान्तपनोऽभिहितः–
'षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत्।
त्र्यहं चोपवसेदन्ते महासान्तपनं विदुः'॥

इति। एतेषां मध्ये न तावदत्र द्विरात्रं गृहीतु शक्यम्। तस्य द्वितीयपक्षोक्तात् प्राजापत्यात् न्यूनत्वात्। नापि पञ्चदशरात्रैकविंशतिरात्रयोर्ग्रहणम्। तयोश्चतुर्थपक्षोक्तदशरात्रोपवासादधिकत्वात्। तस्मात् सप्तरात्रं परिशिष्यते। न च तस्य द्वादशाहसाध्यात् प्राजापत्यादर्वाचीनत्वं शङ्कनीयम्। प्राजापत्ये हि त्रिष्वेव दिनेष्वशनवर्जनम्। अत्र तु सप्तस्वपि दिनेष्वशनवर्जनम्। अतोऽधिकत्वात्। एवमेव तृतीयपक्षे प्रायश्चित्तम्। अर्धमाससंसर्गः चतुर्थपक्षः। तत्र दशरात्रोपवासमाचरन्।

१ This line appears in Manu without the slightest difference. २. H. and J read परे ह्युपवसेत् ३. The text reads परम् for चरन् ४. B. and D. substitute अथ for अपि; while I. omits अपि. ५. J. reads जाबालस्मृते. ६. C. E. F. G. H. and J. read उपवासमेत्.

यद्यप्यत्रोपवसेदिति न श्रुतं तथापि वक्ष्यमाणपराककृच्छ्र-[1]साहचर्यात्तल्लभ्यते। माससंसर्गः पञ्चमः पक्षः। तत्र पराकः कृच्छ्रः[2] कर्तव्यत्वेन संमतः। पराकस्वरूपं दर्शयति मनुः—

'यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्।
पराको नाम कृच्छ्रोऽयं सर्वपापप्रणाशनः'[3]॥

(म. स्मृ. ११. २१५)

इति। मासद्वयसंसर्गः षष्ठः पक्षः। तत्र चान्द्रायणं कुर्यात्। चान्द्रायणलक्षणं स्वयमेवोत्तरत्र वक्ष्यति। षण्माससंसर्गः सप्तमः पक्षः। तत्रैन्दवद्वयं कुर्यात्। ऐन्दवं चान्द्रायणं इन्दुवृद्धि-ह्रासोपेतत्वात्। किंचिदूनसंवत्सरसंसर्गोऽष्टमः पक्षः। यद्यपि किंचिदूनत्वं न श्रुतं तथापि सम्पूर्णसंवत्सरसंसर्गस्य पातित्य हेतुत्वात् किंचिदूनत्वं कल्प्यते। तच्च पातित्यहेतुत्वं याज्ञवल्क्येन दर्शितम्—

'संवत्सरेण पतति पतितेन समाचरन्'।

(म. स्मृ. ११. १८०)

इति। तत्राष्टमे पक्षे षण्मासान् कृच्छ्रमाचरेत्। षण्मासानित्यत्यन्तसंयोगे द्वितीयया कृच्छ्रनैरन्तर्यं विवक्षितम्। तथा च सति षट्सु मासेषु प्राजापत्यकृच्छ्राः पञ्चदश सम्पद्यन्ते। शुद्ध्यर्थमिति सर्वेषु वाक्येष्वनुषज्यते। सर्वेष्वेतेषु पक्षेषु यथोक्तं प्रायश्चित्तमनुष्ठाय तदङ्गत्वेन दक्षिणा दातव्या। तत्र-पञ्चरात्रसंसर्गे प्रथमपक्षे सुवर्णमेकं, दशरात्रसंसर्गे द्वितीयपक्षे सुवर्णद्वयं, एवमितरेष्वपि पक्षेष्वनुगन्तव्यम्॥ ११-१२-१३॥

---

१. All, except A. and I. omit -कृच्छ्र- and J and H. omit तत्.
२. Except A. and I. all omit कृच्छ्रः. ३. The text reads सर्वपापपनोदनः.

इत्थं पतितसंसर्गे प्रकीर्णके निमित्तानुसारेण प्रायश्चित्ततारतम्यं व्युत्पादितम् । इदानीमनयैव दिशा निमित्तानुसारेण प्रायश्चित्तमुन्नेतुं शक्यमिति हृदि निधाय ऋतुस्नातेत्यारभ्य यस्तु धर्मपराङ्मुखः—इत्यन्तेन प्रायश्चित्तनिमित्तान्येवोपन्यस्यति—

ऋतुस्नाता तु या नारी भर्त्तारं नोपसर्पति[1] ।
सा मृता नरकं याति विधवा च पुनः पुनः ॥ १४ ॥
ऋतु[2]स्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः[3] ॥ १५ ॥
दरिद्रं व्याधितं मूर्खं[4] भर्त्तारं या ऽवमन्यते[5] ।
सा[6] शुनी जायते मृत्वा सूकरी च पुनःपुनः ॥ १६ ॥
पत्यौ[7] जीवति या नारी उपोष्य व्रतमाचरेत ।
आयुष्यं हरते भर्त्तुः सा नारी नरकं व्रजेत ॥ १७ ॥
अपृष्ट्वा चैव भर्त्तारं या नारी कुरुते व्रतम् ।

१ K and L. read उपगच्छति for उपसर्पति. २ M reads स्नाता तु ३. M. inserts after this line the following·

अदुष्टाऽपतितां भार्यां यौवने यः परित्यजेत् ।
सप्तजन्म भवेत् स्त्रीत्वं वैधव्यं च पुनःपुनः ॥.

४. All, except B and D, read धूर्तं for मूर्खं. ५. M. reads म मन्यते for ऽवमन्यते ६. This line appears in M as follows—

सा मृता जायते व्याली वैधव्यं च पुनः पुनः ।.

७. This and the following four ślokas do not appear in M.

सर्वं तद् राक्षसान् गच्छेदित्येवं मनुरब्रवीत्॥१८॥
बान्धवानां सजातीनां दुर्वृत्तं कुरुते तु या ।
गर्भपातं च या कुर्यान्न तां सम्भाषयेत् क्वचित्॥ १९॥
यत् पापं ब्रह्महत्यायां द्विगुणं गर्भपातने ।
प्रायश्चित्तं न तस्याः स्यात्तस्यास्त्यागो विधीयते॥२०॥
न कार्यमावसथ्येन नाग्निहोत्रेण वा पुनः ।
स भवेत् कर्मचाण्डालो यस्तु धर्मपराङ्मुखः॥२१॥

इति । रजोदर्शनमारभ्य षोडशादिनान्यृतुः । तत्र चतुर्थदिवसे स्नाता नारी पुत्रोत्पादनार्थमाहूता सती यदि भर्त्तारं नोपसर्पति तदा नरकमनुभूय पश्चाद्बहुषु जन्मसु विधवा भवति भर्त्राऽऽहूताया अनुपसर्पणे दोषो नारदीयपुराणे दर्शितः—

'आहूता या तु वै भर्त्रा न प्रयाति त्वरान्विता ।
सा ध्वाङ्क्षी जायते ऽपुत्री दश जन्मानि पञ्च च'॥

इति । यथा वध्वा ऋतुकालातिक्रमे प्रत्यवायस्तथा पुरुषस्यापि ऋतुस्नातामनुपगच्छतः प्रत्यवायः । सन्निधिशब्दस्त्वत्रारोग्यादेरुपलक्षकः । अत एव देवलः—

'यः स्वदारानृतुस्नातान् स्वस्थः सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति प्रजां प्राप्तां विनाश्य सः' ॥

इति । अत्र चोन्नेयं यत् प्रायश्चित्तं तद्बृहस्पतिर्दर्शयति—

१. This śloka does not appear in B. and D. २. B. and D. read ततः for तस्याः. ३. K. and L. substitute कर्म for धर्म-. ४. B. and D. read ऽभिहितः. ५. I. reads मृत्वा for ऽपुत्री. ६. B and D. read यश्च दारान् and I. reads यस्त्वरोगां for यः स्वदारान्.

'ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत्'।

इति। बौधायनोऽपि—

'ऋतौ न गच्छेद्यो भार्यां नियतां धर्मचारिणीम्।
नियमातिक्रमे तस्य प्राणायामशतं स्मृतम्'॥
(बौ. स्मृ. ४. १. २१)

इति। न चात्र प्रायश्चित्तद्वयस्य समविकल्पः शङ्कनीयः। प्राणायामशतस्य अर्धकृच्छ्रप्रत्याम्नायत्वेनाऽनुकल्पत्वात्। अत एव प्राणायामशतद्वयं कृच्छ्रप्रत्याम्नायत्वेन चतुर्विंशतिमते दर्शितम्—

'कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम्।
तिलहोमसहस्रं तु वेदाध्ययनमेव च'॥

इति। पुरुषम्प्रति उक्तस्य प्रायश्चित्तस्यार्धं स्त्रियम्प्रति उन्नेयम्। तथा च भृगुः—

'अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः।
प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च'॥
(आ. स्मृ. ३. ६.)

इति। न केवलमृत्वतिक्रमे स्त्रियाः प्रत्यवायः किन्तु दारिद्र्यादिना येन केनापि निमित्तेन पत्युरवमानेऽपि महान् प्रत्यवायः। तथा च ब्रह्माण्डपुराणम्—

'कामात्क्रोधान्मत्सराद्वा भर्त्तारं याऽवमन्यते।
सा सप्तजन्मकं यावत् नरके स्यान्न संशयः'॥

---

१. The text reads ऋतुस्नातां न चेद्गच्छेत् for ऋतौ न गच्छेद्यो भार्यां. २. I. reads -अतिक्रमात् for -अतिक्रमे. ३. B. and D. read स्मरेत् for स्मृतम्. ४. These two lines appear in Āpastamba smṛti. ५. I. reads मानात् for कामात्.

इति । अवमानश्च पुरुषान्तरगमन-वित्तवञ्चनादिः । एतदेवाभिप्रेत्य मनुराह–

'अपत्यलोभाद्या तु स्त्री भर्तारमतिलङ्घयेत् ।
सेह निन्दामवाप्नोति परलोकाच्च हीयते ॥ (१६१)
व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
सृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥ (१६४)
पतिं हित्वा ऽपकृष्टं स्वमुत्कृष्टं योपसेवते ।
निन्द्यैव लोके भवति परपूर्वेति चोच्यते' ॥ (१६५)
(म. स्मृ. ९. १६१–१६५)

इति । नारदीये ऽपि–

'जीवितेना ऽर्थे वित्तेन भर्तारं वञ्चयेत्तु या ।
कृमियोनिशतं गत्वा चाण्डाली जायते तु सा' ॥

इति । अत्रोचितं प्रायश्चित्तमापस्तम्बो दर्शयति ।

'भर्तुर्व्यतिक्रमे कृच्छ्रम्' ।
(आ. ध. सू. १. १० २८. २०)

इति । उशनाऽपि–

'व्यभिचारिणीं भार्यां कुचैलपरिभूतां
पिण्डमात्रोपजीविनीं निवृत्ताधिकारां
चान्द्रायणं प्राजापत्यं वा चारयेत्' ।

इति । अवमानाभावे ऽपि पतिशुश्रूषामुपेक्ष्य व्रतोपवासादि-

---

१. I. reads -चित्त- for -वित्त-. २. The text reads अतिवर्तते for अतिलङ्घयेत्. ३. The text reads पतिलोकाच्च for परलोकाच्च. But Kullûkabhatta seems to prefer the latter. ४. The text reads या निषेवते for योपसेवते, and निन्द्यैव सा भवेल्लोके for निन्द्यैव लोके भवति. ५ C. E. F. G. H. I. and J. read सुखार्थेन for ऽथ वित्तेन. ६. B. and D. read पुल्कसा सा भवेत्ततः. ७. All, except A. and I. read कुचैलपिण्डपरिभूतां for कुचैलपरिभूतां पिण्डमात्रोपजीविनीं. ८. I. reads कारयेत् for चारयेत्.

परायाः स्त्रियाः प्रत्यवायो ऽस्ति। एतदेवाभिप्रेत्य व्रतोपवासादीनां स्त्रियम्प्रति श्रेयोहेतुत्वं निषेधत्यत्रिः—

‘न व्रतेनोपवासेन धर्मेण विविधेन च।
नारी स्वर्गमवाप्नोति प्राप्नोति[1] पतिपूजनात्’॥

इति। महाभारतेऽपि पतिशुश्रूषापराया भार्याया उत्तमां गतिमुक्त्वा व्रतादिपराया अन्यस्या भार्यायास्तदभावं ज्ञापयितुमिदमुदाहृतम्—

‘तां यमो लोकपालस्तु बभाषे पुष्कलं वचः।
मा शुचस्त्वं निवर्त्तस्व न लोकाः सन्ति ते ऽनघे॥
[2]स्वधर्मविमुखा नित्यं [3]कान् लोकान् त्वं गमिष्यसि।
दैवतं हि पतिः स्त्रीणां स्थापितः सर्वदैवतैः॥
मोहेन त्वं वरारोहे न जानीषे स्वदैवतम्।
पतिमत्याः स्त्रिया लोके धर्मः [4]पत्यर्चनं त्विति’॥

इति। यदा स्त्री[5] पतिशुश्रूषा ऽनुरोधेन व्रतादिकं चिकीर्षति तदा ऽपि पतिमपृष्ट्वा ऽनुष्ठितं तद्व्रतं निष्फलं भवति। तदाह मार्कण्डेयः—

‘नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा।
निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकम्’॥

इति। अत एव मनुः सर्वत्र स्त्रियाः स्वातन्त्र्यं निषेधति—

‘बालया वा युवत्या वा वृद्धया वाऽपि योषिता।
न स्वातन्त्र्येण कर्त्तव्यं कार्यं किञ्चिद् गृहेष्वपि’॥

(म. स्मृ. ५. १४७)

---

१. B. and D. read स भक्त्या for प्राप्नोति. २. This and the following three lines do not appear in B. and D. ३. A. reads कथं लोकान् गमिष्यसि for कान् लोकान् त्वं गमिष्यसि. ४. C. E. F. G. H. and J. read पत्यर्पितास्त्विति for पत्यर्चनं त्विति. ५. Except A. and I. all omit स्त्री.

इति । तथा च पुराणे—

'पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रः स्थविरभावे तु न स्त्री स्वातन्त्र्यमर्हति' ॥
(म. स्मृ. ९. ३)

इति । अपृष्ट्वेत्यभिधानादनुज्ञापुरःसरमनुष्ठितस्य व्रतादेः साफल्यमवगम्यते । तच्च शङ्ख-लिखिताभ्यां दर्शितम्—

'न भर्त्तारं द्विष्याद् यद्यप्यशीलः स्यात् । पतितो ऽर्थहीनो व्याधितो वा ऽपि पतिर्दैवतं स्त्रीणाम् । न व्रतोपवास-नियमेज्यादानं देमो वाऽनुग्रहकरः स्त्रीणामन्यत्र पतिशुश्रूषायाः । कामं तु भर्त्तुरनुज्ञया व्रतोपवास-नियमादीनामभ्यासः स्त्रीधर्मः' ।

इति । कात्यायनो ऽपि—

'भार्या भर्तुर्मतेनैव व्रतादीनाचरेत्सदा' ।

इति । या तु नारी बान्धवानामसपिण्डानां सजातीनां सपिण्डानां दुर्वृत्तं विद्वेषं कुरुते या च गर्भं पातयेत् ते उभे पातकबाहुल्यान्न सम्भाषणीये । एतदेवाभिप्रेत्य बन्धुद्वेषः शङ्ख-लिखिताभ्यां निषिद्धः—

'न बन्धून् द्विष्यात्' ।

इति । अत्र च विद्वेषो विषप्रयोगाभिचारादिपर्यन्तो विव-

---

१ This and the following two lines are not found in all except A and I.; the quotation occurs in Manu Smriti with a slightest difference in the second half. २. I. omits वमो वाऽनुग्रहकरः. ३. C. E. F. G. H and J. read अन्यः for अभ्यास.

क्षितः। अन्यथा स्वल्पस्य द्वेषस्य गर्भपातासाम्येनासम्भाषण-हेतुत्वासम्भवात्। यद्यपि बन्धुवध-गर्भपातनयोरसम्भाषण-हेतुत्वं समानं तथापि गर्भपाते पापद्वैगुण्येन प्रायश्चित्तं नास्ति अतस्तस्यास्त्याग एव।

ननु—प्रायश्चित्ताभावोऽनुपपन्नः। मनुना ब्रह्महत्याव्रतस्य तत्रोपदिष्टत्वात्—

'हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्'।

(म. स्मृ. ११. ८७)

इति। अविज्ञातं स्त्रीत्व-पुंस्त्वाभ्यामनिश्चितम्। विज्ञाते तु गर्भे स्त्री-पुरुषवधयोर्यथाविहितं द्रष्टव्यम्—अतः कथमुच्यते प्रायश्चित्तं नास्तीति? नायं दोषः। पातनीयगर्भगतगुणागुणाभ्यां व्यवस्थोपपत्तेः। हननीयब्राह्मणगतगुणागुणाभ्यां प्रायश्चित्ततारतम्यस्य दर्शनात्। तथा च याज्ञवल्क्यः ब्रह्मघ्न-व्रतमुक्त्वा दीक्षितघ्ने द्वैगुण्यमाह—

'द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्'।

(या. स्मृ. ३. २५२)

इति। यद्यपि दीक्षितादीक्षितयोरिव गर्भयोर्गुणागुणौ नोपपद्येते तथापि पितृगतगुणागुणाभ्यां तौ कल्पनीयौ। न-स्मात् प्रायश्चित्तविषयाणि वचनानि गर्भमात्रवधविषयाणि। इदं प्रायश्चित्ताभाववचनं सम्भावितगुणवद्गर्भविषयम्। यद्वा पापद्वैगुण्येन प्रायश्चित्ताभावोक्तिस्तस्यास्त्यागविधिशेषार्थवाद इति न कश्चिद्विरोधः। तथाच विशिष्टगर्भपातने पापद्वैगुण्याद् व्रतद्वैगुण्यमुन्नेयामिति भावः।

---

१. All, except A. and I. omit तथा च विशिष्टगर्भपातने पापद्वैगुण्याद् व्रतद्वैगुण्यमुन्नेयमिति भावः.

यस्तु वेदे विश्वासरहितो वेदोक्तात् धर्मात् पराङ्मुखस्तं नानुतिष्ठति स जन्मना ब्राह्मणोऽपि कर्मणा चाण्डालो भवेत्। तस्य धर्मपराङ्मुखत्वं तदीयोक्तिरूपेण पूर्वार्धेन द्योत्यते। आवसथ्यः पञ्चमोऽग्निः। तेन च गार्हपत्याद्यग्निपञ्चकमुपलक्ष्यते। न चाग्निपञ्चकेन वा तत्साध्येनाग्निहोत्रादिना वा किञ्चित् फलमस्ति। ऐहिकस्य फलस्यादर्शनात् आमुष्मिकस्य फलस्य सन्दिग्धत्वात्। तथा च श्रूयते—

'को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वा'।

इति। एवमेतेषु व्याख्यातेषु वचनेषु यानि निमित्तान्युपन्यस्तानि तेषां मध्ये स्त्रीकर्तृकस्य पुरुषकर्तृकस्य ऋत्वतिक्रमस्य पत्यवमानस्य च प्रायश्चित्तमुन्नीय प्रदर्शितम्। यत् पतिशुश्रूषामुल्लङ्घ्य तत्प्रतिकूलव्रताद्याचरणं तत्र पतिं प्रसाद्य तदुक्तं प्रायश्चित्तमाचरेत्। तथाच याज्ञवल्क्यः—

'प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुद्ध्यति'।

(या. स्मृ. ३. २८३)

इति। स्मृत्यन्तरेऽपि—

'अथ वा यद् गुरुर्ब्रूयात् तत्कार्यमविशङ्कया।
निग्रहेऽनुग्रहे वाऽपि गुरुः सर्वत्र कारणम्'॥

इति। यच्चानुज्ञामन्तरेण व्रताचरणं तत्र निष्फलप्रयासस्य दण्डरूपत्वात् तेनैव शुद्ध्यतीति न पृथक् प्रायश्चित्तापेक्षा।

दुर्वृत्ताचरणं च द्विविधम्। वधावसानं प्रयत्नमात्रं चेति। तयोर्मध्ये वधावसानस्य पुरुषकर्तृकस्य दुर्वृत्ताचरणस्य प्रायश्चित्त-

---

१ I. reads वेदविश्वासरहितो वेदोक्तधर्मपराङ्मुखः.

माचार्यो वक्ष्यति । प्रयत्नमात्रस्य तु प्रायश्चित्तं याज्ञवल्क्यो[1]ऽतिदिशति–

'चरेद्व्रतमहत्वाऽपि घातार्थं चेत् समागतः' ।

( या स्मृ. ३. २५२. )

इति । न च हननाहननयोर्व्रतसाम्यं शङ्कनीयम् । अतिदिष्टस्योपदिष्टात् किञ्चिन्न्यूनत्वात् । योषितस्तु पुरुषकर्तृकप्रायश्चित्तादर्धं द्रष्टव्यम् । गर्भपातने प्रायश्चित्तं गर्भभेदादनेकधा भिद्यते । गर्भो द्विविधः । पतिजन्यो जारजन्यश्च । जाराश्च सवर्णा असवर्णाश्च । तत्र सर्वत्र[2] प्रायश्चित्तं चतुर्विंशतिमते ऽभिहितम् -

'गर्भपाते समुद्दिष्टं यथावर्णविधि[3] व्रतम् ।
जारगर्भे विशेषः स्यात् यथोक्तमृषिभिः पुरा ॥
ब्रह्मगर्भवधे कृच्छ्रमब्दं सान्तपनाधिकम्[4] ।
क्षत्रगर्भवधे चैव चरेच्चान्द्रायणद्वयम् ॥
वैश्यस्य चैन्दवं प्रोक्तं पराकः शूद्रघातने ।
प्रायश्चित्तमिदं प्रोक्तं गर्भपाते विशेषतः' ॥

इति । वेदविश्वासरहितस्य प्रायश्चित्तं वसिष्ठो दर्शयति -

'नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा[5] विरमेन्नास्तिक्यात् । (२९) नास्तिकवृत्तिस्त्वति कृ[illegible]च्छ्रम्[6]' ।

( व. स्मृ. २१. २९–३० )

इति । एतच्च सकृत्करणविषयम । असकृत्करणे तु शङ्खेनोक्तम्–

---

१ B. D. and G. read याज्ञवल्क्येन ऽतिदिष्टम for याज्ञवल्क्यो ऽतिदिशति २. B. and D. read सर्वप्रायश्चित्त for सर्वत्र प्रायश्चित्तं ३. G. [illegible] H read यथावर्ण ४. Except A. G. I. and J. all read सान्तपनाधिकम. ५. I. reads च कृत्वा for चरित्वा ६. I. reads नास्तिकस्य for नास्तिक-

'नास्तिको नास्तिकवृत्तिः कृतघ्नः कूट-
व्यवहारी मिथ्याभिशंसीत्येते पञ्च
संवत्सरं ब्राह्मणगृहे भैक्ष्यं चरेयुः' ।

इति ॥ १४-१५-१६-१७-१८-१९-२०-२१ ॥

अथ बीजि-क्षेत्रिणोः पित्रोः प्रत्यवाय-प्रायश्चित्तसद्भाव-सूचनार्थमस्मिन् प्रायश्चित्तप्रसङ्गे कुण्ड-गोलकौ पुत्रौ सदृष्टान्त-मुपन्यस्यति–

ओघ-वाता-ऽऽहृतं[1] बीजं यस्य[2] क्षेत्रे प्ररोहति ।
स[3] क्षेत्री लभते बीजं न बीजी भागमर्हति ॥२२॥

तद्वत् परस्त्रियाः पुत्रौ द्वौ स्मृतौ कुण्ड-गोलकौ ।
पत्यौ जीवति कुण्डः स्यात् मृते भर्त्तरि गोलकः[4] ॥२३॥

इति । ओघो जलप्रवाहः । वातः प्रचण्डवायुः । तयोरन्य-तरेणाहृतं परकीयं शाल्यादिबीजं यस्यान्यस्य क्षेत्रे प्ररोहति स क्षेत्री बीजं बीजफलं लभते । न तु बीजी । तदेतल्लोकप्रसि-द्धम् । तेनैव न्यायेन क्षेत्रिणो भार्यायां बीजिनोत्पादितौ कु-ण्ड-गोलकौ क्षेत्रिणः पुत्रौ भवतः । न तु बीजिनः । तयोः पुत्रयोर्मध्ये क्षेत्रिण्यमृते जारजः कुण्डः । मृते तस्मिन् जारजं गोलकः ।

१. I and M. read ओघवाताहृत २. M. reads यथा for यस्य ३. B. and D. read तत् for सः; while M. omits सः and inserts तत before क्षेत्री. ४. These two ślôkâs of the text can be traced in several Smritis and Purânâs.

'अमृते च मृते चैव जारजौ कुण्ड-गोलकौ'।

इति स्मृत्यन्तरात्। जारजशब्देन देवरादयो व्यावर्त्यन्ते। न हि तेषां जारत्वमस्ति। तेषां गुर्वनुज्ञातत्वात्। अनुज्ञातत्वं च याज्ञवल्क्येनोक्तम्—

'अपुत्रां गुर्वनुज्ञातो* देवरः पुत्रकाम्यया।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्' ॥
(या. स्मृ. १. ६८)

इति। बीजि-क्षेत्रिणोरत्र सूचितः प्रत्यवायो महाभारते दर्शितः—

'क्षेत्रिकश्चैव बीजी च द्वावेतौ निरयङ्गमौ।
न रक्षति च यो दारान् परदारांश्च गच्छति॥
गर्हितास्ते नरा नित्यं धर्माचारबहिष्कृताः'।

---

* गुर्वनुज्ञातोऽपि देवरः ऋतावियादा गर्भोत्पत्तेः। तदूर्ध्वं पुनर्गच्छन् पतितो भवति। वस्तुतस्त्विदं वचनम्—

'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः।
तामनेन विधानेन निजो विन्देत देवरः' ॥
(म. स्मृ. ९. ६९)

इति मनूक्तवाग्दानपरमेवेत्याचार्याः।

१ J reads देवरादयो B and D. omit this portion:- व्यावर्त्यन्ते। न हि तेषां जारत्वमस्ति। तेषां गुर्वनुज्ञातत्वात्। अनुज्ञातत्वं च याज्ञवल्क्येनोक्तम्—

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्' ॥

इति। बीजि क्षेत्रिणोरत्र सूचितः प्रत्यवायो २ G. and I. घृताभ्यक्त and I. व्रजेत् for इयात् ३ I. reads द्वावेतौ नियमङ्गमौ, while B. and D. read द्वावेतौ निरयङ्गमौ ४ I. reads

गर्हितौ तौ नरौ नित्यं धर्माचारबहिष्कृतौ।

इति। जारस्य गर्भानुत्पादने यत् प्रायश्चित्तमभिहितं तदेव बीजी द्विगुणमाचरेत्। जारप्रायश्चित्तं च व्याघ्रेण दर्शितम्—

'ब्राह्मणो ब्राह्मणीं गच्छेदकामां यदि कामतः।
कृच्छ्र-चान्द्रायणे कुर्यादर्धमेव प्रमादतः॥
अर्धमेव सकामायां तप्तकृच्छ्रं सकृद्व्रती।
अर्धमर्धं नृपादीनां दारेषु ब्राह्मणश्चरेत्॥
एतद्व्रतं चरेत्सार्धं श्रोत्रियस्य परिग्रहे।
अश्रोत्रियश्चेद् द्विगुणमगुप्तावर्धमेव च'॥

इति। क्षेत्रिणः प्रायश्चित्तविशेषानादेशात् सामान्यप्रायश्चित्तं द्रष्टव्यम्। तच्च याज्ञवल्क्येन दर्शितम्

'प्राणायामशतं कार्यं सर्वपापापनुत्तये।
उपपातकजातानामनादिष्टेषु चैव हि'॥

(या. स्मृ. ३. ३०६)

इति। 'न बीजी भागमर्हति'—इत्ययमर्थो मनुना दृष्टान्तैः प्रतिपादितः—

'यथा गो-ऽश्वोष्ट्र-दासीषु महिष्यजाविकासु च।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि॥
ये ऽक्षेत्रिणो बीजवन्तः परक्षेत्रे प्रवापिणः।
ते वै सस्यस्य जातस्य न लभन्ते फलं क्वचित्॥

---

१. B. and D. read जारजस्य गर्भानुत्पादे and E. H. and I. जारस्य गर्भानुत्पादे; while J जारस्य गर्भमुत्पादयतः. २ I. omits च. ३. C. and F read एतच्छ्रुत, E. and H. एतत्सर्वं for एतद्व्रतं ४. B. and D. substitute चेत् for च and for the same C. and F. read वा. ५. B. D. and the text read अनादिष्टस्य for अनादिष्टेषु. ६. All, except A. and the text read महिषीष्वाविकासु. ७. The text reads परक्षेत्रप्रवापिणः.

यदन्यगोषु वृषभो वत्सानां जनयेच्छतम् ।
गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम् ' ॥
(म. स्मृ. ९. ४८–५०)

इति । ये ऽक्षेत्रिण इत्यत्र अक्षेत्रिण* इति छेदः ॥२२–२३॥
इदानीं कुण्ड-गोलकप्रसङ्गेन बुद्धिस्थान् पुत्रभेदान् दर्शयति -

औरसः क्षेत्रजश्चैव[1] दत्तः कृत्रिमकः सुतः ।

इति । एतच्च द्वादशविधानां पुत्राणामुपलक्षणम् । ते च मनुना दर्शिताः –

'औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नो ऽपविद्धश्च दायादा बान्धवाश्च षट् ॥ (१५९)
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥ (१६०)

* सर्वज्ञनारायणस्तु– ' क्षेत्रिणः क्षेत्रस्वामिनः । केवलं बीजवपनात् । परक्षेत्रे इति प्रवापिण इति च दृष्टान्तः' इति व्याचख्यौ ।

† अत्र कलिधर्मनिरूपणप्रसङ्गे कलिनिषिद्धयोः क्षेत्रज कृत्रिमयोः पुत्रयोः निर्देशात् इतरेषां गूढोत्पन्नादीनामनिर्देशाच्च क्षेत्रज-कृत्रिमकौ कलौ विहिताविति न शङ्कनीयम् । केवलमुपलक्षणरूपत्वात्तयोः । अन्यथा -

' दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः' ।

इत्यादयो निषेधा व्याकुप्येरन्

१. C. E. F. G. H. I. and J. read च्यथ for यत २. B. and D. read –

गोष्ठीनामेव स वत्सः मोघं वृषभचेष्टितम् ।,

C. E. F. and H. read—

गोमतामेव ते वत्सा नाशः वृषभचेष्टितम् ।;

G. reads the same, but substitutes नो यदू for नाशः. ३. B. and D. read शूद्रश्च and J. शौर्यश्च for शौद्रश्च

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः ।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ॥ (१६६)
यस्तल्पजः प्रमीतस्य क्लीबस्य पतितस्य वा ।
स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥ (१६७)
माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥ (१६८)
सदृशं तु प्रकुर्याद्यं गुण-दोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥ (१६९)
उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥ (१७०)
माता-पितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥ (१७१)
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं विजानीयाद्वोढुः कन्यासमुद्भवम् ॥ (१७२)
या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाता चे या सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥ (१७३)
क्रीणीयाद् यस्त्वपत्यार्थं माता-पित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥ (१७४)

१. I reads स्वे for स्व- २ II reads कल्पकम for कल्पितम् ३ The text reads व्याधितस्य for पतितस्य. ४. B. and D. read प्रयुक्ताया for नियुक्तायां ५ All, except A. I. and the text substitute च for वा. ६. B. and D. read दत्तक for दत्त्रिम. ७. The text reads च for तु. ८ All, except A I. and the text substitute य. for स ९ We follow here A. I and the text All others read तस्करम for तल्पज. १०. The text reads वर्ज्जात्मना for विजानीयात् ११. The text substitutes अपि for च, while I. reads ज्ञाताऽज्ञाततया for ज्ञाताऽज्ञाता च १२. This and the following three lines do not appear in B. and D.

या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते ॥ (१७५)
माता-पितृविहीनो यस्त्यक्तो वा स्यादकारणात्।
आत्मानं स्पर्शयेद् यस्मै स्वयंदत्तस्तु स स्मृतः ॥ (१७७)
यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम्।
स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः' ॥ (१७८)
(म. स्मृ ९. १५९-१७८)

इति।

[याज्ञवल्क्येनापि-

'औरसः पुत्रिकापुत्रः क्षेत्रजो गूढजस्तथा।
कानीनः पञ्चमः प्रोक्तो षष्ठः पौनर्भवः स्मृतः ॥
दत्तः क्रीतः कृत्रिमश्च स्वयंदत्त इतीरितः।
सहोढजोऽपविद्धश्च पुत्रा द्वादश कीर्तिताः ॥
औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ (१२८)
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥ (१२९)
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥ (१३०)
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः।

---

१. C and F read वेच्छया पुन for वा स्वयेच्छया and for the same G, H and J read स्वेच्छया पुन २ B and D read सस्मृत for स स्मृत ३ B and D read पावयन्नेव for पारयन्नेव ४. याज्ञवल्क्येनापि and the following quotation is omitted by all except A and I ५. The first four lines of this quotation are not found in Yājnavalkya. ६. The text substitutes सुत for स्मृत.

दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः ॥ (१३१)
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः ।
पिण्डदोंऽशहरश्चैषां पूर्वाभावे परः परः ॥ (१३२)
सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः[2] । (१३३)
(या. स्मृ. २. १२८ १३३)

इति] ॥

अत्र द्वादशानां पुत्राणां यानि लक्षणानि मनुना दर्शितानि तानि सर्वाण्युपलक्षयितुं दत्तस्य लक्षणमाह –

**दद्यान्माता पिता वाऽपि स पुत्रो दत्तको भवेत् ॥२४॥**

इति । अत्र दाने सदृशं प्रीतिसंयुक्तमाद्भिरापदीति विशेषण-चतुष्टयं द्रष्टव्यम् ॥ २४ ॥

प्रसक्तानुप्रसक्तं परिसमाप्य प्रकृतमेव प्रायश्चित्तमनुसरति परिवित्तिरित्यादिश्लोकद्वयेन—

**परिवित्तिः परिवेत्ता यया च परिविद्यते ।**
**सर्वे ते नरकं यान्ति दातृ-याजकपञ्चमाः ॥२५॥**
**द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च ।**
**कृच्छ्रातिकृच्छ्रौ दातुस्तु होता चान्द्रायणं चरेत् ॥२६॥**

इति । यत्र ज्येष्ठो नोद्वहति कनिष्ठश्चोद्वहति तत्र ज्येष्ठः परिवित्तिरित्युच्यते । कनिष्ठः परिवेत्ता । यया कन्यया कनिष्ठः परिविद्यते सा परिवेदिनी । तस्याः पित्रादिर्दाता । याजको विवाहहोमस्य कारयिता । त एते पञ्च नरकं यान्ति । तथा च हारीतः –

१. The text reads भिन्न for विन्न. २ M. inserts after this line —
दाराग्निहोत्रसंयोगं यः कुर्यादग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

'ज्येष्ठे ऽनिविष्टे कनीयान्निविशन् परिवेत्ता भवति।
परिवित्तिर्ज्येष्ठः। परिवेदनी कन्या। परिदायी दाता।
परियष्टा याजकः। ते सर्वे पतिताः'।

इति। तत्र परिवित्तेर्द्वौ कृच्छ्रौ प्रायश्चित्तम्। कन्याया एकः कृच्छ्रः। दातुः कृच्छ्रातिकृच्छ्रः। तस्य लक्षणं याज्ञवल्क्य आह—

'कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्'।
(या॰ स्मृ॰ ३. ३२१)

इति। याजकस्य चान्द्रायणम्। न चात्र परिवेत्तुः प्राय[illegible]त्तमनुक्तमिति शङ्कनीयम्। परिवित्तिशब्देन तस्याप्युप[illegible]त्वात्। अत एव यमः परिवित्ति परिवेत्रोर्द्वयोः [illegible] प्रायश्चित्तमाह—

'कृच्छ्रौ द्वौ परिवित्तेस्तु कन्यायाः [illegible]।
अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं [illegible]॥
(अ[illegible] स्मृ[illegible])

इति। यत्तु शङ्ख-लिखिताभ्यामुक्तम्—
'परिवित्तिः परिवेत्ता च संवत्सरं
ब्राह्मणगृहेषु भैक्ष्यं चरेयाताम्'।

इति शङ्खेनापि—
'परिवित्तिः परिवेत्ता च यया च परिविद्यते
व्रतं संवत्सरं कुर्युर्दातृ-याजकपञ्चमाः'॥

इति यदपि हारीतेनोक्तम्—

१ [illegible] परिवेत्तु [illegible] कृच्छ्रा-
तिकृच्छ्रौ दातुस्तु [illegible]

7

'ते सर्वे पतिताः संवत्सरं प्राजापत्येन कृच्छ्रेण यापयेयुः'[1]।

इति तत्र सर्वत्र चिर-क्षिप्र-ज्ञानाज्ञानभेदेन प्रायश्चित्तगौरव-लाघवव्यवस्था द्रष्टव्या। प्रायश्चित्तचरणानन्तरं परिवेत्तुः कर्त्तव्यमाह वसिष्ठः—

'परिविविदानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत् तां चैवोपयच्छेत'।

(व. स्मृ. २०. ८)

इति। तस्मै दत्त्वा ज्येष्ठाय निवेद्य। पुनर्निविशेत पुनरुद्वहेत्। कामित्यपेक्षायामाह तामेवोपयच्छेदिति। अयमर्थः—ज्येष्ठभ्रातर्यकृतदारपरिग्रहे कृतदारपरिग्रहः कनिष्ठः परिवेत्ता परिवेदनार्थं स्वयं व्यूढया कन्यया परिवित्तिना ज्येष्ठभ्रात्रा च सह उक्तं प्रायश्चित्तं निर्वर्त्य ज्येष्ठभ्रातरि कृतदारपरिग्रहे कनिष्ठः पूर्वं गृहीतां कन्यां ज्येष्ठभ्रात्रे निवेद्य तद्दत्तां स्वयमेव पुनरुद्वहेत्। अयमेव न्यायो ज्येष्ठ-कनिष्ठयोराधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे चानुसन्धेयः। अत एव गौतमः—

'परिवित्ति-परिवेतृ-पर्याहित-पर्याधाता-ऽग्रेदिधिषु[2]-दिधिषूणां संवत्सरं प्राकृतं ब्रह्मचर्यम्'।

इति। अग्रेदिधिषुपत्यादौ विशेषो वसिष्ठेनोक्तः—

'अग्रेदिधिषुपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत्

---

१. B and D read हापयेयुः, G. पावयेयुः, C. and F. यातयेयु and I. परिन्तरेयु for यापयेयुः. २. All, except I. omit दिधिषु-.

तां चैवोपयच्छेत्। (१) दिधिषुपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्वा पुनर्निविशेत्'।

(व. स्मृ. २०. ९ १०)

इति। अग्रेदिधिष्वोर्दर्लक्षणं देवलेनोक्तम

'ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा।
सा चाग्रेदिधिषुर्ज्ञेया पूर्वा तु दिधिषुः स्मृता'॥

इति। तत्राग्रेदिधिषुपतिर्द्वादशरात्रं कृच्छ्रं प्राजापत्यं चरित्वा ज्येष्ठायां पश्चादन्येनोढायां तामेवोद्वहेत। दिधिषूपतिस्तु कृच्छ्रातिकृच्छ्रौ चरित्वा स्वोढां ज्येष्ठां तस्मै कनीयस्याः पूर्वोढ दत्वाऽन्यामुद्वहेत॥ २५ २६॥

परिवेदने प्रत्यवायं प्रायश्चित्तं च प्रदर्श्येदानीं विशेषं तदपवादं दर्शयति -

कुब्ज-वामन-षण्ढेषु गद्गदेषु जडेषु च।
जात्यन्धे बधिरे मूके न दोषः परिवेदने॥ २७॥

कुब्जः पृष्ठभागे मांसादिविशेषेणात्यन्तविकृतदेहः। वामनोऽतिह्रस्वदेहः। षण्ढो नपुंसकः। गद्गदो जिह्वादिदोषेण सहसा वक्तुमशक्तः। जडो ऽक्षरे कार्येष्वप्रवृत्तः। जात्यन्धादयः प्रसिद्धाः। एवंविधस्य ज्येष्ठस्य विवाहायोग्यत्वात कनिष्ठस्य विवाहे नास्ति परिवेदने दोषः। एतच्च ज्येष्ठस्य प्रव्रज्या-देशान्तरगमनादीनामप्युपलक्षणम। अस्मिंश्च परिवेदनाभ्यनुज्ञाने सर्वादिवचनानि पूर्वमेव श्राद्धप्रसङ्गादुदाहृतानीति नात्र प्रपञ्च्यन्ते॥ २७॥

---

१. B. and D. read साऽग्रे for सा चाग्रे and क्रमात for स्मृता. २ D. reads -खञ्जेषु for षण्ढेषु ३ D. reads परिविन्दने for परिवेदने

कुब्जत्वादिदोषरहितेष्वपि भिन्नोदरेषु परिवेदनमभ्यनुजानाति –

पितृव्यपुत्रः सापत्नः परनारीसुतस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ २८ ॥

इति । पितृव्यपुत्र-सापत्नौ प्रसिद्धौ । परनारीसुतो दत्त-क्रीतादिः । एतेषु ज्येष्ठेषु स्थितेषु कनिष्ठस्य विवाहाधानयोर्नास्ति प्रत्यवायः ॥ २८ ॥

कुब्जत्वादिदोषरहितस्वैकोदरेषु पर्याधाने विशेषमाह –

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥ २९ ॥

इति । कारयेत् कुर्यात् । अनुज्ञातः कनिष्ठो ज्येष्ठात् पूर्वमाधानं कुर्यात् । ज्येष्ठभ्रात्रेव पित्राऽप्यनुज्ञातस्य पुत्रस्य पर्याधानप्राप्तौ चतुर्विंशतिमते तत्रोपदर्शितं –

'ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्यादग्निपरिग्रहम् ।
अनुज्ञातोऽपि सन् पित्रा नादध्यान्मनुरब्रवीत्' ॥

इति । यत्तु सुमन्तुनोक्तम् –

'पितुर्यस्य तु नाधानं कथं पुत्रस्तु कारयेत्[1] ? ।
अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा' ॥

इति । उशना अपि –

'पिता पितामहो यस्य अग्रजो वाऽथ कस्यचित् ।
तपोऽग्निहोत्र-मन्त्रेषु न दोषः परिवेदने' ॥

---

१. M. reads चिन्तयेत for कारयेत.

इति तत् पित्रादीनां वैधुर्यादिना प्रतिबन्धे सति द्रष्टव्यम् ॥ २९ ॥

परिवेदन-पर्याधानयोरिव स्त्रीणां पुनरुद्वाहस्यापि प्रसङ्गात् क्वचित् अभ्यनुज्ञां दर्शयति -

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ ३० ॥

इति। नष्टो देशान्तरगमनेनापरिज्ञानवृत्तान्तः। अयं च पुनरुद्वाहो युगान्तरविषयः। तथा चादित्यपुराणम् -

'ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्' ॥

इति। अत्र ऊढाशब्देन विधिवदूढा ग्राह्या। अन्यथैव पुनरुद्वाहस्यात्राप्यङ्गीकृतत्वात् ॥ ३० ॥

पुनरुद्वाहमकृत्वा ब्रह्मचर्यव्रतानुष्ठाने श्रेयो विशेषं दर्शयति—

मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता।
सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥ ३१ ॥

इति। मृतग्रहणं नष्टादीनामुपलक्षणम्। चतुर्थपादेन स्मृत्यन्तरप्रसिद्धा ब्रह्मचारिणोऽनिर्दिष्टापि उपलक्षिता। सा च मनुना दर्शिता—

---

१. This Sloka occurs in several Smritis and Puranas with slight differences. २. M. reads न विद्यते for विधीयते. But this reading is quite contrary to the author's explanation. ३. Except A. all omit the following:—

अत्र ऊढाशब्देन विधिवदूढा ग्राह्या।
अन्यथैव पुनरुद्वाहस्यात्राप्यङ्गीकृतत्वात्।

'अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् ।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्' ॥
(म. स्मृ. ५. १५९)

इति ॥ ३१ ॥

उक्तब्रह्मचर्यादप्यधिकफलमनुगमने दर्शयति -

**तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे ।**
**तावत्कालं वसेत् स्वर्गे भर्त्तारं याऽनुगच्छति ॥ ३२ ॥**

इति । तावत्कालं तावत्सहस्रसंवत्सरम् । तथा च हारीतः—

'मृते भर्त्तरि या नारी धर्मशीला दृढव्रता ।
अनुगच्छति भर्त्तारं शृणु तस्यास्तु यत फलम् ॥
तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे ।
तावन्त्यब्दसहस्राणि स्वर्गलोके महीयते ॥
मातृकं पैतृकं चैव यत्र कन्या प्रदीयते ।
कुलत्रयं पुनात्येषा भर्त्तारं याऽनुगच्छति' ॥

इति । शङ्खा-ऽङ्गिरसौ—

'मृते भर्त्तरि या नारी समारोहेद्धुताशनम् ।
सा ऽरुन्धतीसमाचारा स्वर्गलोके महीयते' ॥

---

१ The text reads कुमार- for कौमार-. २ B. D. and M. read तिस्र कोट्यर्धकोटी च ३. B and D. omit this and the following four lines -

तावत्कालं वसेत् स्वर्गे भर्तारं याऽनुगच्छति ॥ ३२ ॥
इति । तावत्काल तावत्सहस्रसवत्सरम । तथा च हारीत -
'मृते भर्तरि या नारी धर्मशीला दृढव्रता ।
अनुगच्छति भर्त्तार शृणु तस्यास्तु यत फलम ॥
तिस्र कोट्योऽर्धकोटी च यानि लोमानि मानुषे ।

४. B. and D. read अष्ट- for अर्ध- ५. I. reads शङ्ख-लिखितौ for शङ्खा-ङ्गिरसौ, but the quotations that have been hitherto given as from Sankhalikhitau are in prose and the present one ... ever —

इति। ननु—इदमनुगमनं प्रत्यक्षश्रुतिविरुद्धम्।

'तस्माद् ह न पुरायुषः स्वर्गकामी प्रेयात्'।

इति श्रुत्या आत्महत्याप्रतिषेधात्।

'असूर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः'॥

(ई. उ. ३)

इति श्रुत्यन्तराच्च। मैवम्। अनुगमनस्मृतेर्निरवकाशत्वेन प्राबल्यात्। आत्महत्यानिषेधश्रुतिस्तु स्वर्गकामयोषितोऽन्यत्र सावकाशा। ननु स्वर्गकामिन्याः पतिमनुगच्छन्त्या अपि ब्राह्मण्या अनुगमनं स्मृत्यैव निषिद्धम्। तथा च पैठीनसिः-

'मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्।
इतरेषां तु वर्णानां स्त्रीधर्मोऽयं परः स्मृतः॥

इति। स्मृत्यन्तरं च—

'उपकारं यथा भर्तुर्जीवन्ती न तथा मृता।
करोति ब्राह्मणी श्रेयो भर्तुः शोककरी चिरात्॥

* आत्मानं हन्तीत्यात्महनः।

'येऽन्यथा सन्तमात्मानमकर्तारं स्वयंप्रभम्।
कर्ता भोक्तेति मन्यन्ते त एवात्महनो जनाः'॥

इत्युक्तेरात्मज्ञानाभाव एव आत्महत्याशब्दवाच्यः। अनुगमनेन शरीरत्यागो नात्र आत्महत्याशब्दवाच्यो भवति।

---

१ Except I and the text all read प्रेत्याभिगच्छन्ति २ Except A. and I all read श्रुत्यैव for स्मृत्यैव H also reads the same and inserts तत after श्रुत्यैव ३ I. omits इति स्मृत्यन्तरं च and A. by the insertion of मनु after इति shows that the next four lines are from Manu. However, they are not found in Manusmriti.

अनुवर्त्तेन जीवन्तं नानुयायान्मृतं पतिम् ।
जीव्ये भर्तुर्हितं कुर्यात् मरणादात्मघातिनी' ॥

इति । अङ्गिरा अपि–

'या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।
सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत्' ॥

इति । व्याघ्रपादोऽपि–

'न म्रियेत समं भर्त्रा ब्राह्मणी शोकमोहिता ।
प्रव्रज्यागतिमाप्नोति मरणादात्मघातिनी' ॥

इति । प्रव्रज्या मैथुनादिभोगत्यागः । नायं दोषः । अस्य निषेधस्य पृथक्चितिविषयत्वात् । अत एवोशनाः–

'पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासां चैव नारीणां स्त्रीधर्मोऽयं परः स्मृतः' ॥

इति । एकचित्यां समारोहणं कल्पसूत्रकारेण दर्शितम् 'प्रेतस्योत्तरतः* पत्न्या संवेशनमविशेषेण नित्यवत्' इति ॥ ३२ ॥

* प्रेतस्योत्तरतः सुप्ता पत्नी यदि कातरा भवेत् तर्हि तां देवः शिष्यो वान्यः

'उदीर्ष्व नार्यभि जीवलोक-
मितासुमेतमुपशेष एहि ।
हस्तग्राभस्य दिधिषोस्त्वमेत-
त्पत्युर्जनित्वमभिसम्बभूत' ॥

इतिमन्त्रेणोत्थापयेत् इति विशेषोऽत्रानुसन्धेयः' ।

१ H reads जीवा for जीव्य. २. G. and H. read मृतम् for स्मृतः

न केवलं स्वयमेवानुगमनेन स्वर्गे वसति किन्तु स्वभर्त्तारं नरकादुद्धरतीत्याह—

व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।
एवं स्त्री पतिमुद्धृत्य तेनैव सह मोदते ॥३३॥

## इति श्रीपराशरसंहितायां प्रायश्चित्तकाण्डे चतुर्थोऽध्यायः ॥ ४ ॥

यद्यपि पापीयान् पतिः स्वपापफलभोगाय नरकमार्गायाभिमुखो भवेत् तथापि योषित् स्वकीयेन प्रबलसुकृतेन तस्य पापफलभोगं प्रतिबद्ध्य पतिमपि स्वेन सह गतिं नयति । अत एव व्यासः—

'यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः ।
सम्प्राप्तो यातनास्थानं गृहीतो यमकिङ्करैः ॥
तिष्ठते विवशो दीनो वेष्टयमानः स्वकर्मभिः ।
व्यालग्राही यथा व्यालं बलाद् गृह्णात्यशङ्कितः ॥
तद्वद्भर्त्तारमादाय दिवं याति च सा बलात् ।
सा भर्तृपरमा नित्यं स्तूयमानाऽप्सरोगणैः ॥
क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश ।
ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत् पतिः ।
पुनात्यविधवा नारी तमादाय मृता तु या' ॥

(व्या. स्मृ. ४. ६०—६४)

इति । इदं चानुगमनं पतिव्रतयाऽनुष्ठितं सदुक्तरीत्या द-

म्पत्योरुभयोः श्रेयोहेतुः पापीयस्याऽनुष्ठितं चेत् पापक्षयहेतु-र्भवति । तथा च महाभारतम्—

'अवमत्य तु याः पूर्वं पतिं दुष्टेन चेतसा ।
वर्त्तन्ते याश्च सततं भर्तॄणां प्रतिकूलतः ॥
भर्त्राऽनुमरणं काले याः कुर्वन्ति तथाविधाः ।
कामात् क्रोधात् भयान्मोहात् सर्वाः पूता भवन्ति ताः ॥
आदिप्रभृति या साध्वी पत्युः प्रियपरायणा ।
ऊर्ध्वं गच्छति सा तत्र भर्त्रा ऽनुमरणं गता' ॥

इति । एतच्चानुमरणं न सर्वासामपि स्त्रीणां सम्भवति

'साध्वीनामेव नारीणामग्निप्रपतनादृते ।
नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्त्तरि कर्हिचित् ॥
यावन्नाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता ।
तावन्न मुच्यते नारी स्त्रीशरीरात् कथञ्चन' ॥

इत्यङ्गिरसा सामान्येन पतिव्रतानां साध्वीनामधिकारस्य बोधनात् । अयं चाधिकारो रजआदिभिः प्रतिबद्ध्यते । तथा च बृहस्पतिः—

'बालसंवर्धनं* त्यक्त्वा बालापत्या न गच्छति ।
रजस्वला सूतिका च रक्षेद्गर्भं च गर्भिणी' ॥

---

* यथा बालापत्याद्या नानुगन्तुमर्हन्ति तथा वीरसूरपि नान्वियात् अत एव—

'तस्यात्मनोऽर्धं पत्न्यास्ते नान्वगात् वीरसूः कृपी' ।

इत्याद्युक्तं श्रीमद्भागवतादिषु । (श्री. भा. १. ७. ४५)

---

१. E. G. and H. read अवगत्य for अवमत्य २ All, except A and I omit from this line to अदृष्टकृतत्व कृत्स्वदर्शनेन सम्भावितगर्भसन्देहा ·( P. 59, L. 7, both inclusive.)

इति । अत्र बालसंवर्धनं त्यक्त्वेति वदन् संवर्धयितृजनान्तरविलम्भे बालापत्याया अप्यधिकारोऽस्तीति दर्शयन् रक्षेद्गर्भं च गर्भिणीति रक्षां दर्शयन् सम्भावितगर्भसन्देहाया अप्यधिकारं वारयति । तथा च नारदीये—

'बालापत्याश्च गर्भिण्य अदृष्टऋतवस्तथा ।
रजस्वला राजसुते नारोहन्ति चितां शुभे' ॥

इति । अदृष्टऋतवः ऋत्वदर्शनेन सम्भावितगर्भसन्देहाः ॥ ३३ ॥

श्रुतिविषयितं प्रायश्चित्तं प्रकीर्णिषु[1] यन्मतं
नयविषययोर्भेदस्तल्लक्षणं[2] परिवेदनम् ।
प्रथयति परं तुर्याध्याये पराशरभाषिते
विवृतिमकरोत् शक्त्या[3] निर्णीय स[4] माधवः ॥ १ ॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां चतुर्थोऽध्यायः ॥ ४ ॥

१ L reads प्रकीर्णकेषु for प्रकीर्णिषु  २ Except A all others read तन्नयविशेषयोः  ३ H reads व्यक्त्या for शक्त्या  ४ All, except A. and H omit स.

# पराशरसंहिता

## अथ पञ्चमोऽध्यायः ।

येन् समाश्रित्य वाल्मीकिप्रमुखाः शं परं गताः ।
तदाश्रयेऽङ्घ्रिकमलं रामचन्द्रस्य निर्मलम् ॥ १ ॥[1]

इत्थं[2] चतुर्थाध्याये प्रकीर्णकपापानां प्रायश्चित्तमभिहितम् । तत्र यद्यपि परिवेदनादिकं न प्रकीर्णकम् । उपपातकेषु पठितत्वात्[3] । यद्यपि च[4] पुत्रभेदादिकथनं न प्रायश्चित्तरूपं तथापि प्रकीर्णकप्रायश्चित्तस्य बाहुल्यात् अध्यायार्थत्वमविरुद्धम् । तत्राध्यायान्ते स्वर्गसाधनमनुगमनं वर्णितम् । तेन ब्रह्मलोकसाधनमाहिताग्निदहनं बुद्धिस्थम् । अतः पञ्चमाध्याये तद्विवक्षुः[5] आदौ प्रायश्चित्तप्रकरणविच्छेदशङ्कामपनुदन् परिशिष्टं प्रकीर्णकप्रायश्चित्तं तावन्नवभिः श्लोकैराह—

वृक[6]-श्वान-सृगालाद्यैर्दष्टो यस्तु द्विजोत्तमः ।
स्नात्वा जपेत्[7] स गायत्रीं पवित्रां वेदमातरम् ॥१॥
गवां शृङ्गोदकैः[8] स्नानं महानद्योस्तु सङ्गमे ।
समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत् ॥ २ ॥
वेद-विद्या-व्रतस्नातः शुना दष्टो द्विजो यदि[9] ।

---

१ This Sloka appears only in A. and I २ C and F. omit इत्थं. ३. B and D. read निरूपितत्वात् for पठितत्वात् ४. I. omits च. ५. B. and D substitute विवक्ष्य च for विवक्षुः ६ M. reads इव वृकाभ्यां सृगालाद्यैः.. ७. B and D. read जपेत्तु and M जपन for जपेत स. ८ B. and D read शृङ्गोदकस्नान-महानद्यो, C E. F. G and H. शृङ्गोदकस्नानं महानद्यां, J शृङ्गोदके स्नानं महानद्या, M शृङ्गोदके स्नातो महानद्या and K. and L. शृङ्गोदकस्नानात् महानद्योः. ९. M. reads तु ब्राह्मणः for द्विजो यदि.

स हिरण्योदकैः स्नात्वा घृतं प्राश्य विशुद्ध्यति ॥ ३ ॥
सव्रतस्तु[1] शुना दष्टो यस्त्रिरात्रमुपावसेत्[2] ।
घृतं कुशोदकं पीत्वा व्रतशेषं समापयेत् ॥ ४ ॥
अव्रतः सव्रतो वाऽपि शुना दष्टो भवेद् द्विजः ।
प्रणिपत्य भवेत् पूतो विप्रैश्चक्षुर्निरीक्षितः[3] ॥ ५ ॥
शुना घ्रातावलीढस्य नखैर्विलिखितस्य च ।
अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपचूलनम्[4][5] ॥ ६ ॥
शुना[6] तु ब्राह्मणी दष्टा[7] जम्बुकेन वृकेण वा ।
उदितं ग्रहनक्षत्रं[8] दृष्ट्वा सद्यःशुचिर्भवेत् ॥ ७
कृष्णपक्षे[9] यदा सोमो न दृश्येत कदाचन ।
यां दिशं व्रजते सोमस्तां दिशं वाऽवलोकयेत् ॥ ८ ॥
असद्ब्राह्मणके ग्रामे शुना दष्टो[10] द्विजोत्तमः ।
वृषं प्रदक्षिणीकृत्य सद्यः स्नात्वा[11] शुचिर्भवेत् ॥ ९ ॥

---

१. K L and M. read this Sloka after the 5th. २. M reads उपोषित for उपावसेत् ३ M. reads चानुनिरीक्षित for चक्षुर्निरीक्षित. ४. M reads प्रक्षालनाच्छुद्धि for प्रक्षालन प्राक्तम् ५. K. and L read चावधूलनम् for चोपचूलनम् ६ K and L read ब्राह्मणीं तु शुना दृष्टा. ७ B and D. read ब्राह्मण· स्पृष्ट for ब्राह्मणी दृष्टा. ८. M reads सोमनक्षत्र for ग्रहनक्षत्र. ९. This and the following three lines are not found in B. and D.—

कृष्णपक्षे यदा सोमो न दृश्येत कदाचन ।
या दिशं व्रजते सोमस्ता दिश वाऽवलोकयेत् ॥ ८ ॥
असद्ब्राह्मणके ग्रामे शुना दृष्टो द्विजोत्तम ।
वृषं प्रदक्षिणीकृत्य सद्य स्नात्वा विशुद्ध्यति ॥ ९ ॥

१० M. reads दृष्टस्तु ब्राह्मण for दष्टो द्विजोत्तम. ११. M. reads स्नानाद्विशुद्ध्यति for स्नात्वा शुचिर्भवेत्.

इति । वृक-शुनोरारण्यक-ग्राम्यत्वाद्भेदः। सृगालो जम्बुकः । आदिशब्देन वराहादयो गृह्यन्ते । तैर्दष्टः प्रत्यवायपरिहाराय स्नात्वा गायत्रीं जपेत् । न च—अत्र विधि-प्रतिषेधातिक्रमरहितस्य कथं प्रत्यवायः ? इति शङ्कनीयम् । श्व-वराहादीनां दूरतः परिहर्त्तव्यत्वेन तत्समीपगमन-क्रीडादेरतिक्रमरूपत्वेन प्रत्यवायहेतुत्वात् । 'वेदमातरम्'—इत्यनेन मन्त्रान्तरेभ्यो ऽधिकं पवित्रत्वं दर्शयति । वेदमातृत्वं च—

'गायत्री च्छन्दसां माता'।

इति स्मृतेरध्यवसीयते । यद्वा वेदा मातरो यस्याः सा वेदमाता । यद्यपि मन्त्रान्तराण्यपि वेदजन्यानि तथापि वेदत्रयजन्यत्वमस्या विशेषः । अत एव मनुः—

'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचो ऽस्याः साविञ्याः परमेष्ठी प्रजापतिः' ॥
(म. स्मृ. २. ७७)

इति । अत्र गायत्रीजपे सङ्ख्याविशेष उशनसा दर्शितः—

'दंष्ट्र्यादिदष्टो * गायत्र्यष्टशतं प्राणायामशतं वा' ।

इति (॥ १ ॥)—

एतच्चासमर्थविषयम् । समर्थस्तु गोशृङ्गोदकस्नानादिकमाचरेत् इति । तत्र गोशृङ्गोदकस्नानन्नाम गोशृङ्गपूरितेनोदकेन गायत्र्या शतवाराभिमन्त्रितेन सेचनम् ।

* 'गायत्रीत्युपलक्षणं त्रिष्टुप्-जगत्योः'—इति केचित् ।
'त्रैष्टुभं राजन्यस्य जगतीं वैश्यस्य सर्वेषां वा गायत्रीम्' ।
इति श्रुत्या वर्णभेदेन त्रिष्टुप्-जगत्योरपि विधानात् ।

'गोशृङ्गेन शतं स्नानं गायत्र्या' ।

इति हारीतस्मरणात् । गोशृङ्गोदकस्नान-नदीसङ्गमस्नान-समुद्रदर्शनानामधम-मध्यमोत्तमाङ्गभेदेन वा दंशनारतम्येन वा व्यवस्था द्रष्टव्या (॥ २ ॥)–

वेदाध्ययनं वा प्राजापत्य-सौम्या-ऽऽग्नेय-वैश्वदेवादिव्रतानि वा समाप्य स्नातो 'वेद-विद्या-व्रतस्नातः' । स यदि शुना दष्टः तदा हिरण्यमुदके निधाय तेनोदकेन स्नात्वा घृतं प्राश्य विशुद्ध्यति । तत्रापि ब्राह्मणश्चेत् गायत्रीं शतकृत्वो जपेत् । तदाह बौधायनः–

'वेद-विद्या-व्रतस्नातः शुना दष्टस्तु[1] ब्राह्मणः ।
शतपर्यायमावर्त्य गायत्रीं शुद्धिमाप्नुयात्' ॥

इति (॥ ३ ॥)–

चान्द्रायणादिव्रतेन सहितः 'सव्रतः' । स यदि शुना दष्टः तदा त्रिरात्रमुपोष्य चतुर्थेऽहनि घृतं प्राश्य कुशोदकं च पीत्वा पश्चाद्व्रतशेषं समापयेत् । कुशोदकस्थाने यावकं वा पिबेत् । तदाह बौधायनः–

'सव्रतस्तु शुना दष्टः त्रिरात्रमुपवासयेत् ।
[2]सघृतं यावकं पीत्वा व्रतशेषं समापयेत्' ॥

इति (॥ ४ ॥)–

---

१. H. omits—

'* * * * तु ब्राह्मण ।
शतपर्यायमावर्त्य गायत्री शुद्धिमाप्नुयात्' ॥

इति । चान्द्रायणादिव्रतेन सहित. सव्रत. । स यदि शुना दष्ट . २. G. omits this line—

'सघृत यावकं पीत्वा व्रतशेष समापयेत' ॥ .

सव्रता-ऽव्रतावुभावपि विप्रान् प्रणिपत्य तैर्निरीक्षितौ यथोक्तप्रायश्चित्ताचरणेन पूतौ भवतः (॥ ५ ॥)–

यस्तु शुना न दष्टः किन्तु नासिकया घ्रातः जिह्वया वाऽवलीढः नखैर्वा लिखितः एतत् त्रये ऽपि तं प्रदेशं प्रक्षाल्य वह्निना सन्ताप्य शुद्धा भवेयुः[1] (॥ ६ ॥)–

यदा ब्राह्मणी श्वादिभिर्दष्टा भवति तदा सा रात्रावुदितान् ग्रहान् सोमाङ्गारकादीन् नक्षत्राणि च कृत्तिकादीन्यवलोक्य शुद्धा भवति (॥ ७ ॥)–

कृष्णपक्षे मेघच्छन्ने[2] सोमदर्शनासम्भवे शास्त्रदृष्ट्या तदवस्थानयोग्यां दिशं वा चक्षुषाऽवलोकयेत् । एतच्चावलोकनं पञ्चगव्यप्राशनस्योपलक्षणम् । अत एवाङ्गिराः–

> 'ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ।
> यदा न दृश्यते सोमः प्रायश्चित्तं कथं भवेत्? ॥
> यां दिशं तु गतः सोमस्तां दिशं वाऽवलोकयेत् ।
> सोममार्गेण सा पूना पञ्चगव्येन शुद्ध्यति ' ॥

इति । या तु समुद्रतीरवासिनी तस्याः सोमदर्शनाभावे तद्दिगवलोकनवत् समुद्रदर्शनमपि विशुद्धिहेतुः । तदाह बौधायनः–

> 'ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ।
> समुद्रदर्शनाद्वाऽपि शुना दष्टा शुचिर्भवेत् ' ॥

इति (॥ ८ ॥)

यस्मिन् ग्रामे ब्राह्मणा न सन्ति तत्र ब्राह्मणप्रणि-

---

[1] B. E. D. and H. read स्युः for भवेयुः. [2] B. D. G and H. omit कृष्णपक्षे मेघच्छन्ने.

पात-निरीक्षणयोः स्थाने वृषभदक्षिण-निरीक्षणे । ननु–स्मृत्यन्तरेष्वन्यथा प्रायश्चित्तानि दृश्यन्ते । तत्र मनुः–

'श्व-सृगाल-खरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च ।
नरा-ऽश्वोष्ट्र-वराहैश्च प्राणायामेन शुद्ध्यति' ॥
(म. स्मृ. ११. १९९)

इति । याज्ञवल्क्यो ऽपि–

'पुंश्चली-वानर-खरैर्दष्टः श्वोष्ट्रादि-वायसैः ।
प्राणायामं जले कृत्वा घृतं प्राश्य* विशुद्ध्यति' ॥
(या. स्मृ ३ २७७)

इति । हारीतो ऽपि–

'श्वानो वा क्रोष्टुको वापि नारी वा यदि वा नरः ।
आखुर्नकुल-मार्जारौ वायस-ग्रामसूकराः ॥
एतैर्दष्टे द्विजस्याङ्गे प्रायश्चित्तं कथं भवेत्? ।
स्नानं कुर्यात् सचैलं तु विप्राणामनुशासनात् ॥
प्रोक्षणीभिस्त्रिभिर्ऋग्भिः कारयेन्मार्जनं द्विजः ।
प्राणायामत्रयं कुर्यात् दद्यात् गोभ्यस्तृणं नरः ॥
सह द्विजैश्च भुक्तेन शुद्ध्यते नात्र संशयः' ।

इति । वसिष्ठोऽपि–

---

* इदं च घृतप्राशनं भोजनप्रत्याम्नाय इति नोद्भ्रमम् । प्रायश्चित्तस्य तपोरूपत्वेन शरीरसन्तापनार्थत्वात् ।

---

१. I reads -प्रदक्षिणं द्रष्टव्यम for -प्रदक्षिण-निरीक्षणे २ The text reads चोष्ट्रादि- for श्वोष्ट्रादि-. ३ I reads प्राणायामत्रय for प्राणायामं जले ४ I reads क्रौञ्चको for क्रोष्टुको ५ G H. and I substitute -ग्रामग्र for -ग्राम ६ C. E. F. G H and J read तिसृभी ऋग्भि and I [illegible] for त्रिभिर्ऋग्भि .

'ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम्[१] ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति' ॥
(व. स्मृ. २३. ३१)

इति । अत्र[२] शङ्खः—

'सृगाल-वृक-गो-विप्रैः शुना दष्टस्तथैव च ।
त्रिरात्रं तु व्रतं कुर्यात् पुंश्चलीदशनक्षतः' ॥

इति । हारीतो ऽपि—

'शुना दष्टस्त्र्यहं यावकाहारः[३] समुद्रगां नदीं गत्वा[४]
प्राणायामशतं कृत्वा घृतं प्राश्य शुचिर्भवति'[५] ।
(हा. स्मृ. २३. ११)

इति । अङ्गिरा अपि[६]—

'ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत् ।
गृहस्थस्तु[७] द्विरात्रं वा ऽप्येकाहं वा ऽग्निहोत्रवान् ॥
नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।
स्यादेतत त्रिगुणं वक्त्रे मस्तके तु[८] चतुर्गुणम् ॥

इदं च वचनं उत्तमाङ्गदंशविषयमित्याचार्याः ।
। इदं च सम्यग्दष्टविषयम् । यद्यप्यत्र क्षत्रिय-वैश्ययोर्नोक्तं तथापि तत् पादपादोनं कल्पनीयम् । शूद्रस्य तु—

'शूद्राणां चोपवासेन शुद्धिर्दानेन वा पुनः ।
गा वा दद्याद्वृषं चैकं ब्राह्मणाय विशुद्धये' ॥

इति बृहदाङ्गिरसोक्तं द्रष्टव्यम् ।

---

१ The text reads तत्र शुचि for विशुद्ध्यति. २ I omits अत्र ३ H and I read यवाहार for यावकाहार. and J omits the latter, and नदीं, and substitutes समुद्रगामिनीं for समुद्रगां ४ I omits गत्वा and renders this Sutra in a versified form ५ B. and D. read विशुद्ध्यति. ६ A. substitutes आपस्तम्बोऽपि for अङ्गिरा अपि ७ B. and D. omit this and also the next line—
गृहस्थस्तु द्विरात्रं वा ऽप्येकाहं वा ऽग्निहोत्रवान् ॥
नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।
८ I. substitutes च for तु.

अव्रती सव्रती वाऽपि शुना दष्टस्तथा द्विजः ।
दृष्ट्वाऽग्निं हूयमानं तु सद्य एव शुचिर्भवेत्' ॥

इति । पैठीनसिरपि—

'शुना दृष्टस्त्रिरात्रमुपवसेत् द्विजश्च । ब्राह्मणस्तु शुना दष्टो गायत्र्यष्टसहस्राभिमन्त्रितं कृत्वोल्मुकेन दहेच्चतुर्भिः कलशैःस्नानैः शुद्ध्यति[1] । नदीसङ्गमे वा[2] । बालस्यातुरस्य वा तत्र पिता मनसा ध्यायन् सर्वकार्याणि कुर्वीत । पितुरभावे सत्याचार्यः' ।

इति । पुलस्त्योऽपि—

'रजस्वला यदा दष्टा शुना जम्बुक-रासभैः ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥
ऊर्ध्वं तु द्विगुणं* नाभेर्वक्त्रे तु त्रिगुण[3] तथा ।
चतुर्गुणं स्मृतं मूर्ध्नि दष्टे[4]ऽन्यत्राप्लुतिर्भवेत् ॥

इति । जातूकर्ण्योऽपि—

* पञ्चरात्रं निराहारः पञ्चगव्यप्राशनं चेति साधारणं प्रायश्चित्तम् । एतदेव नाभेरूर्ध्वं प्रदेशविशेषेषु द्विगुण-त्रिगुणादिकं योज्यम् । उक्तप्रदेशातिरिक्ते स्थले दशे सति स्नानपूर्वकं पूर्वोक्तं साधारणं प्रायश्चित्तमिति व्यवस्था ।

१ I reads कलशै. स्नापन कृत्वा तत. शुद्धयति for कलशै. स्नानै शुद्ध्यति. २ I reads वाऽऽलस्यातुरस्य for वा । बालस्यातुरस्य ३. II. and I read द्विगुण for त्रिगुण ४ All, others except A read देशे for दष्टे and I. reads तदन्यत्राशुचिर्भवेत् for देशेऽन्यत्राप्लुतिर्भवेत्.

'ब्राह्मणी क्षत्रिया वैश्या शुना च श्वापदैरपि।
दष्टा[1] सचैलमाप्लुत्य शुद्ध्यतीति न संशयः' ॥

इति। एतेषु वचनेषु यत्र यत्र[2] प्रायश्चित्तबाहुल्यं तत्र तत्रोत्तमाङ्गविषयत्वं दंशतारतम्यविषयत्वं चोहनीयम्[3]। ब्रह्मचारि-गृहस्था-ऽग्निहोत्रिषु उत्तरोत्तरं तपोबाहुल्यात् प्रायश्चित्तह्रासः ॥ १-२-३-४-५-६-७-८-९ ॥

अथ दुर्मृतस्याहिताग्नेर्दहने प्रायश्चित्तमाह—

चण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो[4] यदि।
आहिताग्निर्मृतो[5] विप्रो विषेणात्महतो यदि ॥१०॥
दहेत्तं[6] ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम्।
स्पृष्ट्वा[7] वोढ्वा च दग्ध्वा च सपिण्डेषु च सर्वथा ॥११॥
प्राजापत्यं चरेत् पश्चात् विप्राणामनुशासनात्।

इति। ब्राह्मण्यां शूद्राज्जातश्चण्डाल इत्यभिधीयते। तदाह याज्ञवल्क्यः—

'ब्राह्मण्यां[8] क्षत्रियात् सूतो वैश्याद् वैदेहकस्तथा।
शूद्राज्जातस्तु[9] चण्डालः सर्वकर्म[10]बहिष्कृतः' ॥
(या. स्मृ. १. ९३)

१ I. reads दृष्ट्वा for दष्टा २ I does not repeat यत्र ३. B and D. read दंशे वृत्तिविषयत्व चोह्यनीयम for दंशतारतम्यविषयत्व चोहनीयम् ४ I K. and L read विप्रैः हतो for विप्रैर्हतो. ५ K. and L. substitute हतो for मृतो ६ I reads तु for त, and B C D. F G. and H read दहेत for दहेत्त ७. B. and D. read अस्पृश्य चात्र for स्पृष्ट्वा वोढ्वा च The text reads चोह्य for वोढ्वा ८. I reads ब्राह्मण्या for ब्राह्मण्यां. ९. B D. and I. read शूद्रजातस्तु for शूद्राज्जातस्तु १०. The text substitutes -धर्म- for कर्म .

इति । क्षत्तुरुग्रायां जातः श्वपाकः । तथाच मनुः—

'क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते' ।

(म. स्मृ. १०. १९)

इति । हतो दण्ड-शस्त्रादिना प्रहतः । मृतः प्राणैर्वियुक्तः । आत्महतः स्वयमेव विषं पीत्वा मृतः । तमाहिताग्निं मृतं ब्राह्मणं सपिण्डेषु प्रत्यासन्नो विप्रो मन्त्रवर्जितं दहेत् । तत्र स्पर्शनं दहनं वहनं वा यः करोति स विप्रैरनुज्ञातः स्पर्शनादिदोषपरिहाराय प्राजापत्यं कृच्छ्रमाचरेत् । लौकाग्नावित्यनेन गार्हपत्यादीनां व्यावृत्तिः । यद्यप्यतीतस्य चतुर्थाध्यायस्यादौ दुर्मृतवहनादिप्रायश्चित्तमुक्तं तथापि तस्य सामान्यरूपत्वादनाहिताग्निविषयत्वेनाप्युपपत्तेः । आहिताग्निविषयस्य तु इहैवोपवर्णनमुचितम् । वक्ष्यमाणतत्संस्कारम्प्रति उपोद्घातरूपत्वात् ॥ १०–११ ॥

प्राजापत्यचरणानन्तरं शास्त्रीयसंस्कारः कर्त्तव्य इत्याह—

दग्धाऽस्थीनि पुनर्गृह्य क्षीरैः प्रक्षालयेद् द्विजः॥१२॥

पुनर्दहेत् स्वाग्निना तु स्वतन्त्रेण पृथक् पृथक् ।

इति । उक्तरीत्या लौकिकाग्नौ यानि दग्धान्यस्थीनि

---

१ B C D. E. F. G and H read उग्रात्तु जात क्षत्त्रायां and J. उग्राज्जात. क्षत्रियायां. २. I reads कीर्तित for कीर्त्यते ३ I omits प्रहत. । मृत . ४ All, except A. and I read उपपत्ति for उपपत्ते ५ I. K L and M. read दग्ध्वा for दग्धा-. ६ K and L. read this line as follows —

स्वेनाग्निना स्वमन्त्रेण पृथगेतत् पुनर्दहेत ।,

M. reads—

पुनर्दहेत् स्वकाग्नौ तन्मन्त्रेण च पृथक् पृथक् ।,

while B D. and I. read स्वातन्त्र्येण for स्वतन्त्रेण

तानि पुनः संगृह्य क्षीरप्रक्षालनपूर्वकं गार्हपत्याद्यग्निभिः कल्पोक्तप्रकारेण दहेत् । एतच्च हारीतेन दर्शितम्—

'ब्राह्मणाद्वधसम्प्राप्तौ चण्डालस्य करेऽथ वा ।
आत्मना शस्त्रघाते वा शूद्रवत् दाहयेत् द्विजम् ॥
प्राजापत्यं चरेत् पश्चात् सपिण्डेष्वेव समभात् ।
तद्भस्मास्थि गृहीत्वैव विप्राणामनुशासनात् ॥
क्षीरप्रक्षालनं कुर्यात् तदस्थि प्रेतवद्दहेत् ।
पुनर्दहनमन्त्रैश्च यथाविधि समाचरेत् ॥
एवमेव विधिं कुर्यात् मरणे गर्हितस्य च' ।

इति ॥ १२ ॥

इदानीं प्रोषितस्याहिताग्नेः संस्कारं—'आहिताग्निर्द्विज' इत्यारभ्य—'तथा कार्यं विचक्षणैः'-इत्यन्तेन ग्रन्थजातेन दर्शयति-

आहिताग्निर्द्विजः कश्चित् प्रवसन्[2] कालचोदितः ॥ १३ ॥
देहनाशमनुप्राप्तस्तस्याग्निर्वसते[3] गृहे ।
प्रेताग्निहोत्रसंस्कारः[4] श्रूयतामृषिपुङ्गवाः[5] ॥ १४ ॥
कृष्णाजिनं समास्तीर्य कुशैस्तु[6] पुरुषाकृतिम् ।
षट्शतानि शतं चैव पलाशानां च वृन्ततः[7] ॥ १५ ॥
चत्वारिंशत् शिरे दद्याच्छतं[8] कण्ठे तु विन्यसेत् ।

१. J reads मारणे for मरणे. २ C F and J read प्रव्रजन for प्रवसन ३ M reads वर्तते for वसते. ४ M. reads श्रौताग्नि- for प्रेताग्नि- ५ J substitutes मुनि-for ऋषि- and M सत्तमाः for -पुङ्गवाः. ६. K. substitutes त for तु ७ M reads वृन्तकम for वृन्ततः ८ J reads दश for शतं, while M. reads षष्टिं कण्ठे निनिर्दिशेत for शतं कण्ठे तु विन्यसेत

बाहुभ्यां शतकं दद्यादङ्गुलीषु दशैव तु ॥ १६ ॥
शतं तु जघने दद्याद् द्विशतं तूदरे तथा ।
दद्यादष्टौ वृषणयोः पञ्च मेढ्रे तु विन्यसेत् ॥१७॥
एकविंशतिमूरुभ्यां द्विशतं जानु-जङ्घयोः ।
पादाङ्गुलीषु षड् दद्याद् यज्ञपात्रं ततो न्यसेत्॥१८॥
शम्यां शिश्ने विनिःक्षिप्य अरणीं मुष्कयोरपि ।
जुहूं च दक्षिणे हस्ते वामे तूपभृतं न्यसेत् ॥१९॥
कर्णे चोलूखलं दद्याद् पृष्ठे च मुसलं न्यसेत् ।
उरसि क्षिप्य दृषदं तण्डुला-ऽऽज्य-तिलान् मुखे॥२०
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीं तु चक्षुषोः ।
कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं न्यसेत् ॥ २१॥

---

१. H. J K and L. read दशकं for शतकं and M reads च शत for the same. २. M reads—

शत चोरसि सन्दद्यात त्रिशच्चैवोदरे न्यसेत ।.

३. J reads कन्धरे for तूदरे ४ J. reads मेढ्रे for मेढ्रे. ५. M. reads जानु-जङ्घे च विंशतिम् for द्विशत जानु-जङ्घयो . ६ B C. D E F G. H K. and L read पादाङ्गुष्ठेषु for पादाङ्गुलीषु; while M reads the whole line as follows —

पादाङ्गुल्यो. शतार्धं च पात्राणि च तथा न्यसेत् ।.

७. M. reads वृषणे तथा for मुष्कयोरपि. ८. M. reads —

जुहू दक्षिणहस्तेन वामहस्ते तथोपसत ।

९ M reads तत for न्यसेत् १० All, except A. and M. read पृष्ठे तु for कर्णे च. ११ M reads क्षिपेत् for न्यसेत्.

अग्निहोत्रोपकरणमशेषं तत्र निःक्षिपेत्[1] ।
'असौ स्वर्गाय लोकाय स्वाहे'त्येकाहुतिं सकृत्[2] ॥२२॥
दद्यात् पुत्रोऽथवा भ्राताऽप्यन्यो[3] वाऽपि च बान्धवः।
यथा दहनसंस्कारस्तथा कार्यं विचक्षणैः ॥२३॥

इति । यदा प्रोषित आहिताग्निर्देशान्तरे म्रियते अग्निश्च स्वगृहे वसति तदानीमास्तीर्णे कृष्णाजिने पलाशवृन्तैः देहाकृतिं कुशबद्धां निर्माय तदवयवेषु यज्ञपात्राणि निःक्षिप्य 'असौ स्वर्गाय लोकाय स्वाहा' इत्येकामाज्याहुतिं जुहुयात्। यत्र द्रव्यानिर्देशेन होमस्तत्राज्यमेव होमद्रव्यम् । ततः कल्पोक्तप्रकारेण कृत्स्नं संस्कारं समापयेत् । ननु—अन्यथा पलाशवृन्तानां सङ्ख्या स्मृत्यन्तरे श्रूयते । तत्र हारीतः—

'देशान्तरगते विप्रे विपन्ने कालपर्ययात् ।
शरीरनाशे कल्पः स्यादाहिताग्नेर्विशेषतः॥
कृष्णाजिनं समास्तीर्य पुरुषाकृतिमेव च ।
त्रीणि षष्टिशतं वृन्तान् पालाशांस्तु समाहितः ॥
अशीत्यर्धं शिरे दद्याद् ग्रीवायां दश एव च ।
बाहुभ्यां तु शतं दद्यात् अङ्गुल्योर्दश एव च ॥
उरसि त्रिंशतं दद्यात् जठरे विंशतिस्तथा ।

---

१. B and D. substitute विन्यसेत् for निःक्षिपेत् and M. reads गात्रे शेषं प्रविन्यसेत् for अशेषं तत्र निःक्षिपेत्. २. A. reads स्वाहेति च पूर्णाहुतिं. for स्वाहेत्येकाहुतिं सकृत्, M. and I. read न्यसेत् for सकृत्. ३. M. reads ह्यन्ये वापि स्वधर्मिणः for अन्यो वाऽपि च बान्धवः. ४. I. prefixes प्रक्षिप्तं. ५ G and H. omit एकाम्. ६. This sentence does not appear in all except A and I. ७. I. reads षट्त्रिंशतं for षष्टिशतं.

अष्टौ वृषणयोर्दद्यात् पञ्च मेढ्रे तु कल्पयेत् ॥
ऊरुभ्यां तु शतं दद्यात् द्विशतं[1] जानु-जङ्घयोः ।
पादाङ्गुल्योर्दशैव स्यादेतत् प्रेतस्य कल्पनम्[2]॥

इति । बाढम् । अत्र व्यवस्थापकहेतोरभावाद्विकल्पो द्रष्टव्यः । स चैच्छिकः[3] ॥ १३-१४-१५-१६-१७-१८-१९-२०-२१-२२-२३ ॥

आहिताग्निसंस्कारस्य फलमन्वय-व्यतिरेकाभ्यां त्रिशदयति—

ईदृशं तु विधिं कुर्यात् ब्रह्मलोकगतिःस्मृता[4] ।
दहन्ति ये द्विजास्तं तु ते यान्ति परमां गतिम् ॥२४॥
अन्यथा कुर्वते कर्म[5] स्वात्मबुद्ध्या प्रचोदिताः
भवन्त्यल्पायुषस्ते वै पतन्ति नरके ऽशुचौ[6] ॥२५॥

# इति श्रीपराशरसंहितायां प्रायश्चित्त-काण्डे पञ्चमोऽध्यायः ॥ ५ ॥

इति । तत्र संस्कार्यस्याहिताग्नेः ब्रह्मलोकप्राप्तिः । संस्कर्तुर्यथोक्तकारिणः[7] परमा गतिः । अयथोक्तकारिणः पण्डितम्मन्यस्य नरकप्राप्तिः ॥ २४-२५ ॥

---

१ H substitutes विंशतिं for द्विशतं; while B. C. E. F G. and J. read त्रिशत for the same. २. Except A. and I. all कल्पनात for कल्पनम् ३ Except A. and I. all omit स चैच्छिकः ४. I. reads ध्रुवा for स्मृता and M. reads ब्रह्मलोके गतिर्ध्रुवम् for ब्रह्मलोकगति स्मृता. ५. M. reads किंचित् आत्मबुद्धिप्रबोधिता for कर्म स्वात्मबुद्ध्या प्रचोदिता. ६. M. reads ध्रुवम् for ऽशुचौ. ७. All, except A. and I. omit यथोक्तकारिण.

प्रकटयति विभक्तं यः प्रकीर्णाविशेषं
समधिकपरिबर्हं[1] संस्कृतिं चाहिताग्नेः ।
प्रकृतिगहनमेतं पञ्चमाध्यायमेवं
विशदमयमकार्षीत् व्याख्यया माधवार्यः ॥ १ ॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वरश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरव्याख्यायां पञ्चमोऽध्यायः ॥ ५ ॥

१. B. and E. read -परिहसश्रुत्रं for -परिबर्हं, G. reads -परिबर्हात and C. F. and H. read -परिबर्हं .

# पराशरसंहिता

## अथ षष्ठोऽध्यायः ।



ईश्वरं सर्वलोकानां भक्तानां भद्रदायकम् ।
जानकीवल्लभं रामं मन्महे मौनिलोचनम् ॥१॥

प्रकीर्णकप्रकाश[2]प्रायश्चित्तप्रसङ्गागताहिताग्निसंस्कारः पञ्चमाध्याये निरूपितः । अथ षष्ठेऽध्याये प्रकृतमेव प्रायश्चित्तमनुवर्त्तयिष्यमाणो मलिनीकरण-सङ्करीकरणोपपातकानां प्रायश्चित्तानि प्राधान्येन विवक्षुः प्रथमं प्रतिजानीते—

अतः परं प्रवक्ष्यामि प्राणिहत्यासु निष्कृतिम् ।
पराशरेण पूर्वोक्तां मन्वर्थेऽपि च विस्तृताम् ॥१॥

इति । अथ प्रकीर्णकप्रायश्चित्तकथनानन्तरं मलिनीकरणरूपासु प्राणिहत्यासु प्रायश्चित्तं प्रवक्ष्यामि । हत्यास्विति बहुवचनं मलिनीकरणाद्यवान्तरभेदाभिप्रायम् । मन्दबुद्धीनां स्मृत्यन्तरपर्यालोचने सत्यापाततो विरोधबुद्धिरुदेति । न्यायदर्शिनां तु न तथेति सूचयितुं ऋष्यन्तरसम्मत्युपन्यासः । पराशरशब्देन वृद्धपराशरो विवक्षितः । मन्वर्थे मनुप्रोक्ते धर्मशास्त्रे विस्तृताम् ॥ १ ॥

प्रतिज्ञातेष्वादौ मलिनीकरणविशेषस्य क्रौञ्चादिवधस्य प्रायश्चित्तमाह—

---

१. This verse does not appear in all except A. and I., while A. substitutes लोकानां for भक्तानां. २. B. and D. read -प्रकाशयक for -प्रकाश-, J. reads -प्रकाशक-; while I omits -प्रकाश-. ३. B. and D. omit प्रथम. ४. L. reads विस्तराम्. ५. A. reads सङ्करीकरणादि- for मलिनीकरणादि-. ६ All, except A. and I. omit विस्तृताम् and read मन्वर्थो मनुप्रोक्त धर्मशास्त्रम for मन्वर्थे मनुप्रोक्ते धर्मशास्त्रे.

क्रौञ्च-सारस-हंसाश्च चक्रवाक च कुक्कुटम् ।[1]
जालपादं च शरभमहोरात्रेण[2] शुद्ध्यति ॥ २ ॥

इति । क्रौञ्चादयः पक्षिविशेषाः प्रसिद्धाः । जालपाद-शरभौ यद्यप्यप्रसिद्धौ तथापि पक्षिभिः समभिव्याहारात्तावपि पक्षिविशेषौ द्रष्टव्यौ । अत्र हत्वेत्यध्याहारः कर्तव्यः[3] । अहोरात्रेण शुद्ध्यतीति अहोरात्रेणैकोपवासेनेत्यर्थः । तथा च संवर्त्तः—

'चक्रवाकं तथा क्रौञ्चं तित्तिरिं शुक-सारिके[4] ।
श्येनं[5] गृध्रमुलूकं च तथा पारावतानपि ॥
टिट्टिभं जालपादं च मद्गुं[6] कुक्कुटमेव च ।
एवं पक्षिषु सर्वेषु दिनमेकमभोजनम्' ॥
(सं. स्मृ. १४५–१४६)

इति । ननु—हंसादिवधे गोदानं मनुराह—
'हत्वा हंसं बलाकं[7] च बकं बर्हिणमेव च ।
वानरं श्येन-भासौ* च स्पर्शयेद्ब्राह्मणाय गाम्' ॥
(म. स्मृ. ११. १३९)

* भासः शतपत्राख्यपक्षीति सर्वज्ञनारायणः । इदं च प्रायश्चित्तं प्रत्येकवधे द्रष्टव्यम् । द्वन्द्वानिर्देशात् ।

१. M. reads—

हंस-सारस-क्रौञ्चांश्च चक्रवाकं सकुक्कुटम् ।
जालपादांश्च * * * * ॥

२ K. and L. read हत्वा ऽहोरात्रत. शुचि for अहोरात्रेण शुद्ध्यति. ३ G omits अहोरात्रेण शुद्ध्यतीति, I. also omits this with the preceding one word, कर्तव्य ।. ४ The text reads सारिका-शुक-तित्तिरिम for तित्तिरिं शुक-सारिके, while B and D. substitute -किष्कु- for -शुक-. ५. The text reads—

श्येन-गृध्रावुलूकं च कपोतकमथापि वा ।.

६ I. substitutes मञ्जु for मद्गु and the text reads कोकिल कुक्कुट तथा for मद्गु कुक्कुटमेव च. ७. All, except the text read बलाक for बलाकां, while the text substitutes चक्रं for बकं.

इति। याज्ञवल्क्योऽपि—

'हंस-श्येन-कपि-क्रव्याज्जलस्थलशिखण्डिनः* ।
भासं च हत्वा दद्याद्गामक्रव्यादस्तु वत्सिकाम्' ॥
( या. स्मृ. ३. २७२ )

इति। नायं दोषः। गोदानस्योपवासाशक्तधनिकविषयत्वात् ॥ २ ॥

बलाकादिषु पूर्वोक्तात् न्यूनं प्रायश्चित्तमाह—

बलाका-टिट्टिभौ वापि शुक-पारावतावपि ।
अहि-नक्रविघाती च शुद्ध्यते नक्तभोजनात् ॥ ३ ॥

इति। बलाका-टिट्टिभौ शुक-पारावतौ च यौ तयोर्हन्ता नक्तभोजनात् शुद्ध्यति-इति योजनीयम्। यत्तु संवर्तेनोक्तम्—

'हंसं बकं बलाकां च श्वाविधं बर्हिणं तथा ।
सारसं चाष-भासौ च हत्वा त्रीन् दिवसान् क्षपेत्' ॥
( सं. स्मृ. १४४ )

इति तत्सन्ततवधे द्रष्टव्यम् ॥ ३ ॥

---

* क्रव्यं अपक्वं मांसं तदत्तीति क्रव्यात् व्याघ्र-सृगालादिर्मृगविशेषः । कपिसाहचर्यात् । तथा श्येनसमभिव्याहारात् हंसः पक्षिविशेषः। जलचराः स्थलचराश्च बकादयः शिखण्डिनः पक्षिणः। विज्ञानेश्वरस्तु— 'जलशब्देन जलचरा बकादयः गृह्यन्ते। स्थलशब्देन स्थलचरा बकादयः। शिखण्डी मयूर'—इति व्याख्यानवान्।

---

१ Except A and the text all read अक्रव्यादाम्तु, while B. D and G. read वत्सकम् for वत्सिकाम्. २. I reads अन्य for न्यून. ३. Except A. all omit बलाका-टिट्टिभौ and च. ४. I. reads श्वापद for श्वाविध. ५. All, except A. G. and J. read चाष-भास for चाष-भासौ.

वृकादिषु न पूर्ववद्भोजनत्यागः । किन्तु प्राणसंयमः क-र्त्तव्य इत्याह—

वृक-काक-कपोतानां शारि-तित्तिरिघातकः ।
अन्तर्जल उभे सन्ध्ये प्राणायामेन शुद्ध्यति ॥ ४ ॥

इति । नात्र वृको ऽरण्यश्वा । मृगसमभिव्याहाराभावात् । पक्षिसमभिव्याहारात्तु पक्षिविशेषो द्रष्टव्यः । वृक-काक-कपोतानां हन्तेत्यध्याहारः । सन्ध्ये इति—

'अत्यन्तसंयोगे द्वितीया' ।

ततश्च प्राणायामेनेत्येकवचनश्रवणे ऽप्यावृत्तिर्लभ्यते । यावद्भिः प्राणायामैर्नैरन्तर्येण सन्ध्याद्वयं समाप्यते तावतः प्राणायामान् कुर्यादित्यर्थः । यत्तु मनुना तित्तिर्यादिवधे तिलद्रोणादिदानमुक्तम्—

'घृतकुम्भं वराहे तु तिलद्रोणं तु तित्तिरौ ।
शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायणम्' ॥

(म. स्मृ. ११. १३४)

इति । याज्ञवल्क्येनापि शुकादिवधे द्विहायनवत्सादिदानमुक्तम्—

'गजे नीलवृषाः पञ्च शुके वत्सो द्विहायनः ।

१. I reads प्राणायाम- for प्राणसंयमः. २ M. reads भास- for वृक-, but we follow here the majority. ३. H. substitutes ह्यावृत्ति for ऽप्यावृत्ति.. ४ All, except I. omit प्राणायामान; while G substitutes तावता for तावतः. ५. All, except A. I. and the text read वराहं for वराहे; तित्तिरिम् for तित्तिरौ and शुकं for शुके

*'खरा-ऽज-मेषेषु वृषो देयः क्रौञ्चे त्रिहायणः' ॥
(या. स्मृ. ३. २७१ )

इति तत् सर्वं पूर्ववत् धनिकविषयत्वेन वेदितव्यम् ॥ ४ ॥
गृध्रादिवधे सार्धदिनद्वयं व्रतचर्यामाह—

गृध्र-श्येन-शशादानामुलूकस्य च घातकः ।
अपक्काशी दिनं तिष्ठेत् त्रिकालं मारुताशनः ॥ ५ ॥

इति । श्येनः कपोतादीन् पक्षिणो निहन्ति । न तु शशमत्ति । अतः श्येन-शशादौ भिन्नजातीयौ । अपक्काशी वह्निपाकरहित-कन्द-मूल-फलादिकमेकस्मिन्दिनेऽश्नीयात् । ततः सार्धं दिनं मारुताशनः उपवसेदित्यर्थः । यत्तु काश्यप आह—

'बक-बलाक-हंस-सारस-कारण्डव-चक्रवाक-
कुक्कुट-गृध्र-श्येन-खञ्जरीट-टिट्टिभोल्लूक-शुक-

* खराज-मेषेषु एको वृषो देयः । क्रौञ्चे पक्षिणि त्रिहायणो वत्सो देय इति योजना । मनुना त्वत्र विशेष उक्तः—
'वासो दद्याद्धयं हत्वा पञ्च नीलान् वृषान् गजम् ।
अज-मेषावनड्वाहं खरं हत्वैकहायनम्' ॥
इति । एकहायनं वत्समित्यर्थ ।

१. M. reads—
गृध्र-श्येन-शिखि-माह वासोलुकनिपातने ।.

२. I substitutes शशमत्तीति शशाव for न तु शशमत्ति, G substitutes श्वयम for शशम्. ३ The text substitutes चाष- for बक- and adds -काक- before -बलाक- ४. The text omits -कपोत कुक्कट- and all except I. substitute -कुरर- for -कपोत-कुक्कट-.

सारिका-तित्तिरि[1]-मयूर-कुरर[2]-मुद्गक-मेचक-कलविङ्क-कपोत-पारावतादीनां[3] वधे प्रायश्चित्तं अहोरात्रोपोषितः सर्वबीजानि च दद्यात्[4] ।

(काश्य. स्मृ. ४. १)

इति तदिदमशक्तविषयम् ॥ ५ ॥

शक्तस्यापि वल्गुल्यादौ बलाकादिसदृशं प्रायश्चित्तं दर्शयति—

वल्गुली[5]-टिट्टिभानां च कोकिला-खञ्जरीटके ।
लाविका[6]-रक्तपक्षेषु शुद्ध्यते नक्तभोजनात् ॥ ६ ॥

इति । अत्राप्रसिद्धो ऽपि वल्गुलीशब्दः साहचर्यात् पक्षिविशेषवाची द्रष्टव्यः । यद्यपि टिट्टिभशब्दो बलाकादिवचने ऽपि पठितः तथाप्यवान्तरजातिभेदमाश्रित्य पौनरुक्त्यं परिहर्त्तव्यम् । वल्गुली[7]-टिट्टिभानां हन्ता कोकिल-खञ्जरीटके हते । रक्तपक्षेषु हतेष्विति शेषः । यत्त्वङ्गिरसा दर्शितम्—

'काके भासे[8] च गृध्रे च टिट्टिभे खञ्जरीटके ।
यथा गवि तथा हत्यां भगवानङ्गिरा ऽब्रवीत्' ॥

---

१. The text omits -तित्तिरि-. २. The text omits -कुरर and substitutes -काकमत्र- for -मुद्गक-मेचक- For the same B. and D read -कुक्कुर मूक-मेजनक-, C. E F. and H. -कुरर-मूका-मेजनक-, G. -कुवर-मूक-मेजनक- and J. कुवरय-शूक-मेजनक-. ३ The text reads -कापिञ्जलादीना for -पारावतादीना ४ The text reads वधेष्वहोरात्र for वधे प्रायश्चित्त and omits अहोरात्रोपोषित सर्वबीजानि च दद्यात. ५. M reads—

वल्गुणी चटकाना च कोकिला-खञ्जरीटकान ।
लावका-रक्तपादांश्च * * * * ॥-

G. reads वल्गुनी- for वल्गुली-. ६ I. reads नालिका- for लाविका-. ७. All, except H. and I. omit वल्गुली-. ८. I. reads श्येने for भासे

इति तत् सन्ततहन्तृविषयम् । अङ्गिराग्रहणेन वृद्धाङ्गिरा उच्यते ॥ ६ ॥

जलकाकादीनां वधे प्रायश्चित्तमाह—

कारण्डव-चकोराणां पिङ्गला-कुररस्य च ।
भारद्वाजादिकं हत्वा शिवं पूज्य[1] विशुद्ध्यति ॥७॥

इति । आदिशब्देन भारद्वाजविसदृशाः पक्षिविशेषा गृह्यन्ते । तेषां च वधे शैवमन्त्रकल्पोक्तविधानेन शिवं सम्पूज्य विशुद्ध्यति ॥ ७ ॥

पूर्वत्रानुक्तानां[2] पक्षिणां वधे साधारणं प्रायश्चित्तं दर्शयति-

भेरुण्ड-चाप-भासांश्च पारावत-कपिञ्जलौ[3] ।
पक्षिणां चैव सर्वेषामहोरात्रमभोजनम् ॥ ८ ॥

इति । टिट्टिभवत् पारावतेऽप्यवान्तरजातिभेदो द्रष्टव्यः । कपिञ्जलं हत्वा । पक्षिणां हत्यायामिति शेषः ।

यदिदं मलिनीकरणविशेषस्य पक्षिवधस्य साधारणं प्रायश्चित्तमभिहितं तस्य प्रदर्शनार्थत्वेनावशिष्टेऽपि मलिनीकरणे कृमि-कीटादिवधे मद्यानुगतभोजने च प्रायश्चित्तमुन्नेयम् । तच्च विष्णुना दर्शितम्—

१ K and L read सम्पूज्य शुद्ध्यति for पूज्य विशुद्ध्यति M reads this line as follows —

भारद्वाजनिहन्ता च शुद्ध्यते शिवपूजनात् ॥

२ G. reads पूर्वोक्तानुक्तानां पक्षिणां वधे साधारणं प्रायश्चित्तं दर्शयति ३ C E F. G H and I read -कपिञ्जलम् for -कपिञ्जलौ M. reads this sloka as follows:—

भेरुण्ड-श्येन-भासं च पारावत-कपिञ्जलान् ।
पक्षिणामेव सर्वेषामहोरात्रेण शुद्ध्यति ॥

while K and L substitute -कपिञ्जलान् for -कपिञ्जलौ and एकरात्रम् for अहोरात्रम्

'मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम् ।
कृच्छ्रातिकृच्छ्रमथ वा प्रायश्चित्तं विशोधनम्' ॥
(वि. स्मृ. ४१. ५)

इति । पक्षिषु कृम्यादिषु च सास्थ्यनस्थिभेदेन प्रायश्चित्त-विशेषः स्मृत्यन्तरे ऽभिहितः । तत्र मनुः—

'अस्थिमतां* तु सत्त्वानां सहस्रस्य प्रमापणे ।
पूर्णे[२] चानस्थ्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत्' ॥
(म. स्मृ. ११. १४०)

इति । याज्ञवल्क्यो ऽपि—

'अप्रदुष्टां† स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत् ।

---

* अस्थिमन्तः कृकलासादयः । अनस्थिमन्तो यूका-मत्कुण-दंश-मशकादयः । यद्यपि पशु-पक्ष्याद्यन्येषां प्राणिनामपि अस्थिमत्वात् 'अस्थिमतां' इत्यनेन तेषामपि ग्रहणं स्यात् तथाप्यत्र क्षोदिष्ठजन्तव एव विवक्षिताः । स्थविष्ठानां पश्वादीना वधस्य प्रायश्चित्तस्यान्यत्रोक्तत्वात् । तथा 'अनस्थिमताम्' इत्यनेनापि क्षोदिष्ठा एव जन्तवो ग्राह्याः । स्थविष्ठानस्थ्नां घुणादीनां तु—

'कृमि-कीट-वयो हत्या' ।

इत्यादिना मलिनीकरणीयेषु परिगणय्य—

'मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम्' ।

इति प्रायश्चित्तान्तरस्योक्तत्वात् ।

† अत्र 'स्त्रियं' इति सामान्येन निर्देशे ऽपि ब्राह्मणादिवर्णभेदेन प्रायश्चित्तभेदो द्रष्टव्यः । यथोक्तं प्रचेतसा—

'अनृतुमतीं ब्राह्मणीं हत्वा कृच्छ्राब्दं षण्मासान् वेति ।
क्षत्त्रियां हत्वा षण्मासान् मासत्रयं वेति । वैश्यां हत्वा
मासत्रयं सार्धमासं वेति । शूद्रां हत्वा सार्धमासं
सार्धद्वाविंशत्यहानि वेति' ।

इति । अप्रदुष्टा अप्रकर्षेण दुष्टा ईषद्व्यभिचारिणीति यावत् ।

---

१ G and J. read अस्थन्वतां for अस्थिमतां, and H. substitutes अस्थिवतां for the same. २. J. reads पूर्वे for पूर्णे. ३. G. reads अस्थन्वतां, also B C D E. and F. read the same. H. reads अस्थिवतां and J. अस्थन्वत

अस्थिमतां सहस्रं तु तथाऽनस्थिमतामनः' ॥
( या. स्मृ. ३. २६९ )

इति। शङ्ख-लिखितावपि—

'क्षुद्रजन्तूनामनस्थ्नामनसः प्रमापणे शूद्र-
वधोऽस्थिमतां सहस्रं प्रमाप्य शूद्रवधः'।

इति। अस्थिमत्सहस्रवधे शकटपरिमितानस्थिमद्वधे च वक्ष्यमाणशूद्रहत्याव्रतं चरेत्। प्रत्येकवधे मनुराह -

'किञ्चिदेव* तु विप्राय दद्यादस्थिमतां वधे।
अनस्थ्नां चैव हिंसायां प्राणायामेन शुद्ध्यति'॥
(म. स्मृ. ११. १४१)

इति ॥ ८ ॥

मलिनीकरणानां प्रायश्चित्तमभिधाय सङ्कीकरणानां[1] प्रायश्चित्तमाह—

**हत्वा मूषक[2]-मार्जार-सर्पा-ऽजगर-डुण्डुभान्।**
**कृसरं भोजयेद्विप्रान्[3] लोहदण्डश्च दक्षिणा ॥ ९ ॥**

इति। अत्र नकुलोऽपि द्रष्टव्यः। तथा च विष्णुः

'हत्वा मूषक-मार्जार-नकुल-मण्डूक-

---

* 'किञ्चित्' शब्देनात्र किञ्चिद्धनं पणो वा ग्राह्यः।
'अस्थिमता वधे पणो देयः'।
इति सुमन्तुस्मरणात्। प्राणायामलक्षणं तु आचारकाण्डे सन्ध्याप्रकरणे द्रष्टव्यम्।

---

१ All, except A. and I. read सङ्कीर्ण- for सङ्करी-. २ M substitutes नकुल- for मूषक-. ३ K reads विप्रो and लोहदण्ड च दक्षिणाम for विप्रान and लोहदण्डश्च दक्षिणा respectively.

डुण्डुभा-ऽजगराणामन्यतमं[1] कृसरान्
भोजयित्वा लोहदण्डं दक्षिणां दद्यात्' ।
(वि. स्मृ. ५०. ३१)

इति । कृसरं तिल-मुद्गमिश्रमन्नम् । लोहशब्देन काष्र्णायसमु[2]-च्यते । तथा च मनुः—

'अभ्रिं* काष्र्णायसीं दद्यात् सर्पं[3] हत्वा द्विजोत्तमः' ।
(म. स्मृ. ११. १३३)

इति । यत्तु शङ्खेनोक्तम्—

'हत्वा द्विजस्तथा सर्पान् जलेशय-बिलेशयौ ।
सप्तरात्रं तथा कुर्यात् व्रतं ब्रह्महतेस्तु[4] यत्' ॥
(शं. स्मृ. १७. ११)

इति । ब्रह्महणो[5] वक्ष्यमाणं यत् व्रतं तन्मध्ये सप्तरात्रोचितं व्रतमाचरेत् । यदपि संवर्त्तेनोक्तम्—

'मण्डूक[6]-नकुलौ हत्वा सर्पा-ऽजगर-मूषकान् ।
त्रिरात्रोपोषितः सम्यक् शुद्धो[7] ब्राह्मणभोजनात्' ॥
(सं. स्मृ. १४७)

* यद्यपि 'अभ्रिः स्त्री काष्ठकुद्दाल.' (अ. को. १. १०. १३) इति नाम-लिङ्गानुशासनात् अभ्रिशब्देन काष्ठकुद्दाल एव ग्राह्यः । तथापि काष्र्णायसीम्' इति विशेषणात् कार्ष्णायस एव कुद्दालो ऽत्र ग्राह्यः ।

१ The text inserts उपोषित· after अन्यतम २ I reads कान्तायसम् for काष्र्णायसम्, but the word कान्तायसम् is not met with elsewhere. ३ I. reads सर्पान् for सर्पं ४ The text reads तु ब्राह्मणस्तथा for ब्रह्महतेस्तु यत्. ५. B. and D. read ब्राह्मणो for ब्रह्महणो and -रात्रोषित for -रात्रोचित. ६ The text reads —

'मण्डूक चैव हत्वा च सर्प-मार्जार-मूषकम् ।
त्रिरात्रोपोषितस्तिष्ठेत् कुर्याद् ब्राह्मणभोजनम्' ॥.

७. C. and F. read शुद्ध्येत् for शुद्धो.

इति। यदप्युशनसोक्तम्[1]—

'सर्पहन्ता माषमात्रं दद्यात्'।

इति। यच्च वसिष्ठेनोक्तम्—

'श्व-मार्जार-नकुल-मण्डूक-सर्पा[2]ऽजगर-मूषकान्

हत्वा कृच्छ्रं द्वादशरात्रं चरेत् किञ्चिद्दद्यात्'।

(व. स्मृ. २१. २४)

इति तत्र सर्वत्र प्रायश्चित्तगौरव-लाघवपर्यालोचनया काम-कृताऽकामकृताऽभ्यासाऽनभ्यासादिविषयत्वमूहनीयम् ॥ ९ ॥

शिशुमारादीन् हत्वा दिनमेकं व्रतत्वेन वृन्ताकमात्रं भक्षयेदित्याह—

शिशुमारं[3]* तथा गोधां हत्वा कूर्मं च शल्यकम्[4]।
वृन्ताकफलभक्षी चा[5]ऽप्यहोरात्रेण शुद्ध्यति ॥ १० ॥

†शिशून् मारयतीति शिशुमारः जलजन्तुः।

'शिशुमारो ऽम्बुसम्भूतजन्तौ तारात्मकाच्युते'।

इति रान्तवर्गे मेदिनी।

*ननु—वृन्ताकस्याभोज्यत्वात् कथं तस्य पापशोधकत्वमिति चेन्न। न।

'सुरा पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्'।

(म. स्मृ. ११. ९०)

इत्यादौ निषिद्धस्यापि शुद्धिहेतुत्वदर्शनात्।

---

१ All, except A and I read यदप्युशनसोक्तम, but omit the quotation 'सर्पहन्ता माषमात्रं दद्यात' and यच्च वसिष्ठेनोक्तम Thus they show that the [illegible]otation of Vasishtha belongs to Uśanasa २ The text reads -सर्प-[illegible] -मण्डूक-सर्पा-ऽजगर-. ३ M. reads this śloka as follows —

[illegible]र्प-शशका-गोधा-मत्स्य-कूर्माभिघातने।

[illegible]क्ता च ह्यहोरात्रेण शुद्ध्यति'॥-

४. A. an[illegible] [illegible]कम for शल्यकम ५. I substitutes वा for च

इति। काश्यपस्तु लोहदण्डदानमप्याह—

'कृकलास-सर्प-नकुल-गोधा-शल्यकवधे ऽहोरात्रोषितश्चान्ते लोहदण्डं दद्यात्'।

(का. स्मृ. ५. ५)

इति। मनुस्तु पक्षान्तराण्याह—

*'मार्जार-नकुलौ हत्वा चाषं मण्डूकमेव च।
श्व-गोधोलूक-काकांश्च शूद्रहत्याव्रतं चरेत्॥
पयः पिबेत् त्रिरात्रं वा योजनं वाऽध्वनो व्रजेत्।
उपस्पृशेत् स्रवन्त्यां वा सूक्तं वाऽब्दैवतं जपेत्'॥

(म. स्मृ. ११. १३१–१३२)

इति। यमो ऽपि—

'श्व-नकुल-सर्प-मार्जार-मण्डूक-विकिर-किकीदि-विक-गोधा-गृध्रोलूक-वायस-मयूर-ग्रामचटक-सृगाल-मूषकान् हत्वा एकैकवधे शूद्रवधः'।

इति। याज्ञवल्क्यो ऽपि—

'मार्जार-गोधा-नकुल-मण्डूक-श्व-पतत्त्रिणः।

---

* 'मार्जारादीनामष्टाना कामतो वधे शूद्रहत्याव्रतं कार्यम्। अकामतस्तु पयःपानादीनि' इति सर्वज्ञनारायणादयः। 'अतिमहत्वात् प्रायश्चित्तस्य समुदायवध एवैतत्। पय.पानादीनि तु प्रत्येकवधे'—इति मेधातिथि-विज्ञानेश्वरौ। इदमेव युक्तं प्रतीमः। अतिमहतः शूद्रहत्याव्रतस्य पयःपानाद्यल्पस्य च पक्षान्तरत्वं न युक्तमिति भाति। 'स्रवन्ती' नदी। एतेन तडागादीनां निवृत्तिः।

---

१. The text reads -बिडाल-गो-ऽजावधे त्रिरात्रम्। (४) चीर्णान्ते लौहं for गोधा-शल्यक-वधेऽहोरात्रोषितश्चान्ते लोहदण्ड. २. B. and D. omit the quotation of Kâśyapa and इति। मनुस्तु पक्षान्तराण्याह They thus show that the next quotation of manu belongs to Kâśyapa E. G H and J. omit –दण्ड. ३ I. reads ऽधनो for ऽध्वनो. ४. H. reads प्रवन्त्यां for स्रवन्त्यां. ५. I reads वा दैवत and G. चाऽदैवतं for वाऽब्दैवतं.

हत्वा ऽयहं पिबेत् क्षीरं कृच्छ्रं वा पादिकं चरेत्' ॥
(या. स्मृ. ३. २७०)

इति । विष्णुरपि—

'गोधोलूक-चाष-काकवधे त्रिरात्रमुपवसेत्' ।
(वि. स्मृ. ५०. ३२)

इति । ईदृशानां सर्वेषां विसंवादिवचनानां साक्षाद्व्यवस्थापकं वचनान्तरं यत्र न लभ्यते । तत्र सर्वत्र विधीयमानप्रायश्चित्तानुसारेण संहतासंहत-बुद्धिपूर्वका-ऽबुद्धिपूर्वका-ऽभ्यासानभ्यासा-ऽऽपदनापदादिविषयत्वं कल्पनीयम् ॥ १० ॥

आरण्यश्वादीनां हन्तुरुपवासत्रयपूर्वकं तिलप्रस्थदानमाह—

**वृक-जम्बूक-ऋक्षाणां तरक्षु-श्वानघातकः ।**

**तिलप्रस्थं द्विजे दद्यात् वायुभक्षो दिनत्रयम् ॥११॥**

इति । अत्रोपवासत्रयं विष्णुरप्याह—

'श्वानं* हत्वा त्रिरात्रमुपवसेत्' ।
(वि. स्मृ. ५०. ३०)

इति । पैठीनसिरत्र शूद्रहत्याव्रतमाह—

'काकोलूक-कृकलास-कङ्क-खर-वृक-मृगाल-
भास-बर्हिण-शुक-मूषक-चक्रवाक-हंस-प्लव-

*कामविषयमिदम् । अकामे तु—

'तिलप्रस्थदानमेकाहमुपवासो वा' ।

इति सुमन्तूक्त द्रष्टव्यम् ।

---

१ The text omits -श्वाद- and inserts -श्व- after -हन्तु-. २ M. reads तरक्षूणां च घातने or तरक्षु-श्वानघातकः ३ J. omits शूद्र ४. We follow here A. G. and J., while all others omit -शुक-.

णिक-नकुल-मण्डूक-बिडाल-श्ववधे एते-
षामेकैकस्मिन् शूद्रवधवद्विहितम्' ।

इति । ननु—शूद्रहत्याव्रतं षाण्मासिकम् । तच्चात्यन्त-गुरुत्वाद्दृकादिहत्यायामयुक्तम् । नायं दोषः । अस्य व्रतस्य चिरकाल-नैरन्तर्यविषयत्वेन नेतव्यत्वात् ॥ ११ ॥

गजादिवधे त्रिकालस्नानयुक्तमेकोपवासमाह—

गजस्य च तुरङ्गस्य महिषोष्ट्रनिपातने ।
प्रायश्चित्तमहो-रात्रं त्रिसन्ध्यमवगाहनम् ॥१२॥

इति । मनुस्त्वत्र दानविशेषमाह—

'वासो दद्याद्धयं हत्वा पञ्च नीलान् वृषान् गजम् ।
अज-मेषावनड्वाहं खरं हत्वैकहायनम्' ॥

(म. स्मृ. ११. १३६)

इति । विष्णुरपि—

'गजं हत्वा पञ्च नीलवृषान् दद्यात् । (२५)
तुरङ्गं हत्वा वासः । (२६) एकहायनमनड्वाहं
खरवधे । (२७) मेषाजवधे सुवर्णकृष्णलम् ।
(२८) तिलमुष्ट्रवधे च' । (२९)

(वि. स्मृ. ५०. २५–२९ )

---

१. I. reads प्रवोणिक- for -प्रवेणिक-. २. Except A and I all read त्रिकालस्नानमुक्तम् for त्रिकालस्नानयुक्तम्, while J substitutes -पान- for -स्नान-. ३. M. reads गज-गवय-तुरङ्गाणां for गजस्य च तुरङ्गस्य. K. and L. substitute -उष्ट्रस्य घातने for -उष्ट्रनिपातने ४. M omits this line—

प्रायश्चित्तमहो-रात्र त्रिसन्ध्यमवगाहनम् ॥.

५. I. reads गय for हय. The reading is meaningless. ६. I. reads अज-मेषाननड्वाह for अज-मेषावनड्वाह ७. The text omits हत्वा. ८. The text reads मेषाजवधे च ( २८ ) । सुवर्णकृष्णलमुष्ट्रवधे ( २९ ) ।.

इति । एतत् त्रितयं धनिकविषयम् । धनरहितस्याऽऽवृत्तिविषयमभिप्रेत्य संवर्त्त आह—

'हस्तिनं तुरगं हत्वा महिषोष्ट्रौ कपिं तथा ।
एषु सर्वेषु कुर्वीत सप्तरात्रमभोजनम्' ॥

(सं. स्मृ. १४१)

इति । जाबालिरपि—

'हस्तिनं[1] तुरगं हत्वा महिषं गां तथैव च ।
कृच्छ्रं सान्तपनं कुर्यात् गो-भू-कन्यानृतेषु[2] च' ॥

इति ॥१२॥

कुरङ्गादिवधे ब्राह्मणभोजनसहितमुपवासत्रयमाह—

कुरङ्गं[3] वानरं सिंहं चित्रं व्याघ्रं तु घातयन् ।
शुद्ध्यते स[4] त्रिरात्रेण विप्राणां* तर्पणेन च॥१३॥

इति । चित्रो व्याघ्रसदृशमृगविशेषः† । तर्पणं भोजनम् । तथा च संवर्तः—

* अत्र ब्राह्मणसङ्ख्याया अनिर्दिष्टत्वात् 'अनिर्धारितसङ्ख्याविशेषं बहुवचनं त्रित्वे पर्यवस्यति' इति न्यायेन त्रयो विप्रा भोजनीया इति ज्ञेयम् ।

† 'चित्ता' इति भाषायां प्रसिद्धः । केचित्तु चित्रमिति व्याघ्रस्यैव विशेषणं मन्यन्ते ।

१. The text reads गजं च for हस्तिनं. २. I. reads गो-महिष्यनृतेषु च for गो-भू-कन्यानृतेषु च. ३ M. omits this line—

कुरङ्गं वानरं सिंहं चित्रं व्याघ्रं तु घातयन् ।.

४. M. reads सप्तरात्रेण for स त्रिरात्रेण.

'व्याघ्रं श्वानं खरं सिंहं मृगं सूकरमेव च ।
एतान् हत्वा द्विजः कुर्यात् ब्राह्मणानां तु भोजनम्'॥
(सं. स्मृ. १४२)

इति । जाबालिस्तु आवृत्तिं संघातं चाभिप्रेत्याह—
'सिंह-व्याघ्र-वृकाणां च मृग-खड्ग-रुरु-द्विपान् ।
हत्वा सान्तपनं कुर्यात् गो-भू-कन्याऽनृतेषु च' ॥

इति । गवादिविषयाण्यनृतानि गो-भू-कन्याऽनृतानि । सुमन्तुरपि—
'वानर-सिंह-मार्जार-मण्डूक-
मूषक-श्ववधे प्राजापत्यम्' ।

इति ॥ १३ ॥

मृगादिहत्यायामुपवासपूर्वकनीवारादिपारणमाह—

**मृग-रोहिद्वराहाणामवेर्बस्तस्य घातकः ।**
***अफालकृष्टमश्नीयादहो-रात्रमुपोष्य सः ॥ १४ ॥**

इति । कुरङ्गशब्दस्य मृगावान्तरजातिवाचकत्वात् सामान्यजातिवाची मृगशब्दो गो-बलीवर्दन्यायेन कुरङ्गेतरविषयो द्रष्टव्यः । युद्धयोग्यो मेषो बस्तः । धनिकस्यावृत्तिविषये कश्यप आह—

---

* अहो-रात्रं समुपोष्य द्वितीये दिवसे अफालकृष्टं नीवारादि अश्नीयात् ।

---

१. The text substitutes तथा for खरं and ऋक्ष for मृगं. २ The text reads कृच्छ्रं for कुर्यात् and च for तु. ३. I. omits तु ४ All, except A. and I. read -मृगाणां for -वृकाणां. ५. I. substitutes -शुक- for -मूषक-. ६. I. substitutes अजा- for अवे ७. I. reads अकाल- for अफाल-. ८. I. reads वृद्धयोग्य for युद्धयोग्यः.

'अजाविकवधे त्रिरात्रं [1]प्रायश्चित्तम्। (३४)
चीर्णान्ते हिरण्यं दद्यात् वस्त्रं च'। (३५)
(का. स्मृ. ३. ३४–३५)

इति ॥ १४ ॥

पूर्वत्रानुक्तानां मृगाणां वधे जपसहितमुपवासमाह—

**एवं चतुष्पदानां च सर्वेषां वनचारिणाम्।**
**अहो-रात्रोषितस्तिष्ठेज्जपे[2]द्वै *जातवेदसम् ॥ १५ ॥**

इति। न्यायतत्त्वविदा पापतारतम्यानुसारेण प्रायश्चित्ततारतम्यमूहनीयमिति विवक्षित्वा पूर्वोक्तानां प्रायश्चित्तविशेषाणां प्रदर्शनार्थत्वं द्योतयितुमेवमित्युक्तम्। [3]समूहनीयाः प्रायश्चित्तविशेषाः स्मृत्यन्तरेषु दर्शिताः। तत्र शङ्खः—

'पशून् हत्वा तथा ग्राम्यान् [4]मासं कुर्याद्विचक्षणः'।
(शं. स्मृ. १७. १०)

इति। शातातपो ऽपि—

'हस्त्यश्व-रासभवधे आरण्यपशुवधे च
मासेनैकेन शुद्ध्यति'।

इति। व्यासो ऽपि-

* 'जातवेदसं' 'जातवेदसे सुनुवाम सोमम्' इत्येतामृचं जपेदित्यर्थः। स च जपो ऽहो-रात्रोपोषणपूर्वक एव।

---

१. Except A. and I. all omit प्रायश्चित्तम्. The text has the following for this Sûtra:—

मेषवधे त्रिरात्रम्। (३४) चीर्णान्ते हिरण्यं दद्यात्। (३५).

२. K. L. and M. read जपन for जपेत्. ३. All, except A. and I. omit सम्- ४. G. and J. read क्षपेन्मासं for मासं कुर्यात्.

'सूकरोष्ट्र-खरान् हत्वा [१]त्र्यहमेतद्व्रतं चरेत् ।
सर्वांश्च प्राणिनः स्थूलान् मण्डूक-नकुलेष्व[२]हः' ॥

इति । कश्यपोऽपि—

'मृग[३]-महिष-वराह-कुञ्जर-गण्ड-शरभ-तरक्षु-वानर-सिंह-व्याघ्र-वृष[४]-चमर-शल्यकादीनामन्येषां च वधे अहो-रात्रोषितश्चीर्णान्ते घृतं दद्यात्'।

( का. स्मृ. ३. १ )

इति । तत्र सर्वत्र[५] प्रायश्चित्तगौरव-लाघवानुसारेण कामकृता-ऽकामकृताभ्यासा-ऽनभ्यासविषयत्वं ज्ञातव्यम् ॥ १९ ॥

स[६]ङ्करीकरण-मलिनीकरण-प्रकीर्णकानां प्रायश्चित्तमभिधायोपपातकानां प्रायश्चित्तं दर्शयति—

**शिल्पिनं *कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत् ।**
**प्राजापत्यद्वयं कृत्वा वृषैकादश दक्षिणा ॥ २६ ॥**

इति । शिल्पी चित्रकारादिः । कारुः सूपकारादिः । वृषः

---

* यद्यपि 'कारुः शिल्पी' (अ. को. २. १०. ५) इति नाम-लिङ्गानुशासनात् शिल्पिन एव कारुरिति नामान्तरं तथापि—

'तक्षा च तन्तुवायश्च नापितो रजकस्तथा ।
पञ्चमश्चित्रकारश्च कारवः शिल्पिनो मताः' ॥

इत्याद्युक्तत्वात् सूपकारस्यापि कारुत्वं कथञ्चिदवसेयम् । शूद्रस्तु जातिमात्र एव ग्राह्यः ।

---

१. G reads अहम् for त्र्यहम्. २. C. and F. read -ष्विह for -ष्वहः.
३. The text reads this Sûtra as follows :—

अथ मृग-महिष-गण्डक-वराह-शरभ-ऋक्ष-सिंह-व्याघ्र-मण्डूक -सूकर-मत्स्य-ग्राह-शिशुमारादीनां वधेष्वहो-रात्रम् । (१) चीर्णान्ते गां दद्यात् । (२).

४ I. omits -वृष-. ५. Except A. and I. all omit this sentence.
६. B D. E. G. and J. read सङ्कीर्णकरणादीनां and C. E. and H सङ्कीर्णकानां for सङ्करीकरण-मलिनीकरण-प्रकीर्णकानां.

एकादशो यासां गवां ता वृषैकादशाः । तद्रूपा दक्षिणा वृषैकादशदक्षिणा । देयेति शेषः । अत एव गौतमः शूद्रवधं प्रकृत्याह—

'ऋषभैकादशाश्च गा दद्यात्' ।

(गौ. स्मृ. २२. १६)

इति । मनुरपि—

'प्रमाप्य शूद्रं षण्मासानेतदेव व्रतं चरेत् ।[1]
वृषभैकादशा वाऽपि[2] दद्याद्विप्राय गाः सिताः' ॥

(म. स्मृ. ११. १३०)

इति ॥ १६ ॥

क्षत्त्रिय-वैश्ययोर्वधे पूर्वस्मादधिकं प्रायश्चित्तमाह—

**वैश्यं वा क्षत्त्रियं वाऽपि निर्दोषं योऽभिघातयेत्[3] ।**
**सोऽपि[4] कृच्छ्रद्वयं कुर्यात् गोविंशद्दक्षिणां ददेत्[5] ॥ १७ ॥**

इति । निर्दोषमिति विशेषणात् सदोषवधे न्यूनं प्रायश्चित्तं द्रष्टव्यम् । तच्च चतुर्विंशतिमते दर्शितम्—

'क्षत्त्रियस्य वधं कृत्वा चरेच्चान्द्रायणत्रयम् ।
वैश्यस्य तु द्वयं कुर्यात् शूद्रस्यैन्दवमेव च' ॥

इति । यत्तु संवर्त्तेन ततोऽपि न्यूनं प्रायश्चित्तमुक्तम्—

'निर्हत्य[6] क्षत्त्रियं मोहात् त्रिभिः कृच्छ्रैर्विशुद्ध्यति ।

---

१. The text reads this line as follows:—
एतदेव व्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत् ।
२. All, except A. I and the text substitute च for वा and thus give a different sense. ३. K. and L. read यस्तु for योऽभि- and for the same M. substitutes अभि. ४. I. reads ऽति- for ऽपि. ५. I. reads ददत. for ददेत्. ६. The text reads क्षत्त्रियस्य वधं कृत्वा for निर्हत्य क्षत्त्रियं मोहात्.

कुर्यादेवानुपूर्व्येण त्रीन् कृच्छ्रांस्तु यथाविधि* ॥
वैश्यहत्यां तु सम्प्राप्य कथंचिन्मूढचेतनः ।
कृच्छ्रातिकृच्छ्रौ कुर्वीत स नरो वैश्यघातकः ॥
कुर्यात् शूद्रवधे विप्रः कृच्छ्रं सान्तपनं तथा' ।
(सं. स्मृ. १२६–१२८)

इति एतत् सदोषस्याकामकृतवधे प्रोक्तमित्यविरोधः । ननु—निर्दोषस्य वधे सदक्षिणातिकृच्छ्रद्वयाधिकं प्रायश्चित्तं मनुना दर्शितम्—

'अकामतस्तु† राजन्यं विनिपात्य द्विजोत्तमः ।
वृषभैकसहस्रा गा दद्यात् शुद्ध्यर्थमात्मनः ॥
त्र्यब्दं‡ चरेद्वा नियतो जटी ब्रह्महणो व्रतम् ।
वसन् दूरतरे ग्रामे वृक्षमूलनिकेतनः ॥

* इदमकामतो जातिमात्रक्षत्रियवधे द्रष्टव्यम् ।
'अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः' ।
इति प्रक्रम्य मनुना एतेषामेव प्रायश्चित्तानां विधानात् ।

† पूर्वस्मिन् श्लोके 'तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे' इत्युक्त्वा—'इदमपरं दानप्रायश्चित्तं सम्भवद्वित्तस्य । अकामत इति न निदर्शनम् । महत्वात् प्रायश्चित्तस्य । अथवा सवनगतयोरेव अकामत इति कल्पनीयम्'—इति मेधातिथिः ।

‡ आद्यो ऽर्धश्लोकः 'तुरीयो' (म. स्मृ. ११. १२६) इत्यस्यानुवादः । जटीति चीरादिनिवृत्त्यर्थम् ।

१. The text reads—
कुर्याच्चैवानुरूपेण त्रीणि कृच्छ्राणि संयत ।.
२. The text reads सम्प्राप्तः and काममोहित for सम्प्राप्य and मूढचेतनः respectively. ३ The text reads कृच्छ्रातिकृच्छ्रं कुर्वीत. ४. The text reads this line as follows:—
कुर्याच्छूद्रवधे प्राप्तस्तप्तकृच्छ्रं यथाविधि ।.
५. A. and the text read सुचरितव्रत for शुद्ध्यर्थमात्मन ६. The text reads ग्रामात् for ग्राम.

एवमेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः।
प्रमाप्य वैश्यं वृत्तस्थं दद्यादेकशतं गवाम्'॥
(म. स्मृ. ११. १२८–१३०)

इति। याज्ञवल्क्येनापि–

'वृषभैकसहस्रा गा दद्यात् क्षत्त्रवधे पुमान्।
ब्रह्महत्याव्रतं वाऽपि वत्सरत्रितयं चरेत्॥
वैश्यहाऽब्दं चरेच्चैवं दद्याद्वैकशतं गवाम्।
षण्मासान् शूद्रहाऽप्येतद्धेनूर्दद्याद्दशाऽथ वा'॥
(या. स्मृ. ३. २६६–२६७)

इति। त्रैवार्षिकादप्यधिकं गौतम आह–

'राजन्यवधे षड्वार्षिकं प्राकृतं ब्रह्मचर्य-
मृषभैकसहस्राश्च गा दद्यात्। (१४)
वैश्ये त्रैवार्षिकमृषभैकशताश्च गा दद्यात्।
(१५) शूद्रे संवत्सरमृषभैकादशाश्च गा
दद्यात्। (१६) अनात्रेय्यां चैवम्'। (१७)
(गौ. स्मृ. २२. १४–१७)

इति। शङ्ख-लिखितावपि–

'पूर्ववदमतिपूर्वं त्रिषु वर्णेषु प्रमाप्य द्वादश-नव-षट्-
त्रीन् संवत्सरान् व्रतान्यादिशेत्। तेषामन्ते गो-
सहस्रं ततोऽर्धं तस्यार्धं दद्यात् सर्वेषामानुपूर्व्येण'।

इति। शातातपोऽपि–

१. The text reads एतदेव for एवमेव. २. The text inserts च after दद्यात्. ३ The text reads चरेत्तत् for चरेच्चैव and I. omits च. ४. All, except A. II. and the text read आत्रेय. ५. I. omits चैव.

'राजन्य-वैश्य-शूद्राणां षट् त्रीण्येकं चरेत् वधे ।
वर्षाणि ब्रह्मचर्यं तु विशुद्धयर्थं क्रमेण तु ॥
गोदानं* तु व्रतस्यान्ते ब्राह्मणानां च भोजनम् ।
कार्यं सदक्षिणं सम्यक् विशुद्धयेत यथाविधि '॥

इति । हारीतोऽपि–

'ब्राह्मणः क्षत्त्रियं हत्वा षड्वर्षाणि व्रतं चरेत् ।
वैश्यं हत्वा चरेदेवं व्रतं त्रैवार्षिकं द्विजः ॥
शूद्रं हत्वा चरेदेकं †वृषभैकादशाश्च गाः' ।

इति । उशना अपि–

' राजन्यवधे षड्वार्षिकं ब्रह्महत्याव्रतम् ।
तस्यान्ते वृषभैकसहस्रगोदानं च ' ।

इति । वसिष्ठस्तु षड्वार्षिकादधिकमष्टवार्षिकमाह–

'एवं राजन्यं ऽहत्वाऽष्टौ वर्षाणि चरेत् ।
षड् वैश्यम् । त्रीणि शूद्रम्' ।

(व. स्मृ. २०. ३१-३३)

इति । बौधायनस्तु नववार्षिकमाह–

'नव समा राजन्यस्य । तिस्रो वैश्यस्य । संव-
त्सरं शूद्रस्य स्त्रीणां च । ब्राह्मणवदात्रेय्याः' ।

|. स्मृ. २. १. १. ८ १२)

---

* अत्र गोदानस्य सङ्ख्या नोक्ता तथापि अग्रे हारीतोक्ता वृषभैकादशा उशनसोक्ता वृषभैकसहस्राश्च ग्राह्याः । तत्रापि आचार्येण वक्ष्यमाणा व्यवस्था अनुसंधेया ।

† 'एकं' एकवर्षं व्रतं चरेदित्यर्थः । एवमेव गोदानमपि वर्णक्रमेण न्यूनं कर्तव्यम् ।

---

१. Some of the MSS. omit इति. २. We follow here only A and the text, while others read नव सम वा राजन्ये । तिस्रो वैश्ये । सवत्सरं शूद्रे । स्त्रीणां च ब्राह्मणवदाख्येयम्. ३. I. inserts कुर्यात् before शूद्रस्य.

इति । विष्णुर्द्वादशवार्षिकमाह–

'एतन्महाव्रतम् ।* (५) ब्राह्मणं हत्वा द्वादशसंवत्सरम्[१] । (६) यागस्थं क्षत्रियं वैश्यं वा । (७) गर्भिणीं[२] रजस्वलां चाऽत्रिगोत्रां वा' ।

(वि. स्मृ. ५०. ५–८)

इति । यमः–

'हत्वा सवनिनं[३] वैश्यं राजन्यमपि दीक्षितम् ।
हत्वा तु ब्रह्महत्यैव तथाऽऽत्रेयीं च ब्राह्मणीम्[४]' ॥

इति । शङ्खोऽपि–

'यागस्थं क्षत्रियं हत्वा वैश्यं हत्वा तु यागगम्[५] ।
एतदेव †व्रतं कुर्यादात्रेयीविनिषूदकः[६]' ॥

(शं. स्मृ. १७. ४)

---

* 'एतत्' पूर्वोक्तं 'महाव्रतम्' महापातकव्रतम्–

'वने पर्णकुटीं कृत्वा वसेत् । (१) त्रिषवणं स्नायात् । (२) स्वकर्म चाचक्षाणो ग्रामे ग्रामे भैक्षमाचरेत् । (३) तृणशायी च स्यात्' । (४)

(वि. स्मृ. ५०. १—४)

इति पूर्वोक्तलक्षणम् ।

† 'एतदेव' इत्यनेन पूर्वोक्तं ब्रह्महत्यादिमहापातकव्रतमुच्यते । तच्च–

'नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीं वने ।
अधःशायी जटाधारी पर्ण-मूल-फलाशनः ॥
ग्रामं विशेत भिक्षार्थी स्वकर्म परिकीर्तयन् ।
एककालं समस्थानो वर्षे च द्वादशे गते' ॥

(शं. स्मृ. १७. १-२)

इत्युक्तमत्रानुसन्धेयम् ।

१. The text reads कुर्यात् after संवत्सरम् २ The text reads गुर्विणीं for गर्भिणीं, while all except A. and the text do not insert वा after वैश्यं. ३ I reads सवणिजं for सवनिनं ४ B. and D. read ऽऽत्रेयं च ब्राह्मणम् for ऽऽत्रेयीं च ब्राह्मणीम् ५. The text reads यागकम् for यागगम्. ६. I. reads विनिघातुक for विनिषूदकः.

इति। अत्रैतेषु उदाहृतेषु वचनेषु त्रैवार्षिक-षड्वार्षिक-अष्टवार्षिक-नववार्षिक-द्वादशवार्षिकरूपाः पञ्च पक्षा भान्ति। आचार्योक्तश्चातिकृच्छ्रद्वयपक्ष एकः। तत्रैवं विषयव्यवस्था—वध्यो हि[1] निर्दोषः क्षत्त्रियस्त्रिविधः। उत्तमो मध्यमोऽधमश्चेति[2]। तत्र राज्यपरिपालनादियुक्तः सवनस्थ उत्तमः। सवनरहितः परिपालको मध्यमः। उभयरहितो जातिमात्रक्षत्त्रियोऽधमः। तत्रैकैकस्य वधे बुद्धिपूर्वाऽबुद्धिपूर्वभेदेन द्वे द्वे प्रायश्चित्ते योजनीये। एषु वचनेषु क्वचित् गोदानं श्रूयते क्वचिन्न। तत्र धनिकाऽधनिकविषयभेदेन[3] व्यवस्था द्रष्टव्या। एतेनैव न्यायेन व्यवस्थितविकल्पमभिप्रेत्य याज्ञवल्क्येन—

'ब्रह्महत्याव्रतं वाऽपि'।

(या. स्मृ. ३. २६६)

इत्युक्तम्। वैश्य-शूद्रयोरपि उत्तम-मध्यमा-ऽधमभेदेन[4] प्रायश्चित्तव्यवस्था योजनीया। यथा हन्तव्यभेदेन प्रायश्चित्ततारतम्यमुक्तं तथा हन्तृभेदेऽप्यवगन्तव्यम्। अत एव विष्णुः—

'विप्रे तु सकलं देयं पादोनं क्षत्त्रिये स्मृतम्।
वैश्येऽर्धं पादमेकं तु शूद्रजातिषु शस्यते'॥

इति। कवषोऽपि[5]—

'विप्रार्धं क्षत्त्रिये[6] प्रोक्तं तदर्धं वैश्यजातिषु।
तदर्धमेव शूद्राणां प्रायश्चित्तं विदुर्बुधाः'॥

१. I omits वध्यो हि. २. I. omits इति. ३. I reads -पुरुषविशेषभेदेन for -विषयभेदेन, while B and D omit विषय-. ४. Except A. and I. all omit -मध्यम-. ५. C and F read कश्यपोऽपि, II. reads कवषोऽपि, but has कश्यपोऽपि as marginal correction and I reads देवलोऽपि for कवषोऽपि. ६ A reads—

'विप्रार्धं क्षत्त्रियस्य स्यात् वैश्यानां च तदर्धकम्।

for——विप्रार्धं क्षत्त्रिये प्रोक्तं तदर्धं वैश्यजातिषु।.

इति । एतच्चाकामकृते द्रष्टव्यम् । विष्णुप्रोक्तान्न्यूनत्वात् । ननु—आचार्येण स्त्रीवधे प्राजापत्यद्वयं वृषभैकादशगोदानसहितं यत् प्रायश्चित्तमुक्तं तदयुक्तम् । स्मृत्यन्तरेषु न्यूनाधिक-प्रायश्चित्तयोर्दर्शनात् । तत्र मनुः न्यूनं दर्शयति—

'*जीनं-कार्मुक-बस्तावीन् पृथग्दद्याद् विशुद्धये ।
चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः' ॥
(म. स्मृ. ११.१३८)

इति । जीनं चर्ममयमुदकपात्रम् । अनवस्थिताः स्वैरिण्यः । याज्ञवल्क्योऽपि—

'दुर्वृत्ता ब्रह्म-विट्-क्षत्त्र-शूद्रयोषाः प्रमाप्य तु ।
दृतिं धनुर्बस्तमविं क्रमाद् दद्याद्विशुद्धये' ॥
(या. स्मृ. ३. २६८)

इति । व्याघ्रोऽपि—

'चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः ।
शङ्ख-शुक्त्यज-मेषांश्च क्रमात् दद्याद्विशुद्धये' ॥

---

* 'जीनं चर्मपुटं मुकुटाधारादिप्रयोजनम्'—इति मेधातिथिः । 'जीनं धृतजलाधारं चर्मकोशम्'—इति रामचद्रः । इदमेव युक्तमिति प्रतिभाति । क्वचित् 'जिनम्' इत्यपि पाठः । स च प्रामादिक इव दृश्यते । दीर्घस्य नियतत्वात् । 'अनवस्थिताः' अत्यन्तव्यभिचारिणीः वेश्यावृत्तमाचरन्त्य इति यावत् । उत्तरत्र याज्ञवल्क्यवचने 'दृति'शब्दोऽस्यैव चर्मपुटस्य वाचकः । 'मसक' इति भाषायां प्रसिद्धः ।

१. G. reads विप्रोक्तात् for विष्णुप्रोक्तात्. २. All, except A. I. and the text substitute जाल - for जीन- ३ I. reads वद्याद्य- for पृथग्दद्यात्. ४. All, except A. and I. read जाल for जीन. ५. The text reads दुर्वृत्त- for दुर्वृत्ता.

इति। एतानि वचनानि मूलवचनेन न विरुध्यन्ते सदोषस्त्रीविषयतायास्तेषु स्पष्टत्वात्। मूलवचनं तु निर्दोषक्षत्त्रियादिसंनिधिपाठात्[1] निर्दोषस्त्रीविषयम्। ननु—निर्दोषस्त्रीवधे अधिकं प्रायश्चित्तमाह याज्ञवल्क्यः—

'अप्रदुष्टां *स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत्'।

(या. स्मृ. ३. २६९)

इति। नैवम्। तस्य कामकृतविषयत्वेन व्यवस्थापनीयत्वात्। यत्त्वङ्गिरसा दर्शितम्—

'आहिताग्नेर्द्विजाग्र्यस्य हत्वा पत्नीमनिन्दिताम्।
ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च' ॥

इति तत्र ब्रह्महत्याव्रतस्याहिताग्निस्त्रीविषयत्वाभिधानात् स्त्रीजातिमात्रविषयेण मूलवचनेन नास्ति विरोधः। वसिष्ठस्तु स्त्रीवधे राजन्यव्रतमाह—

'†अनात्रेयीं राजन्यहिंसायाम्। (३७) राजन्यां वैश्यहिंसायाम्[2] (३८) वैश्यां शूद्रहिंसायाम्। (३९) शूद्रां हत्वा संवत्सरम्'। (४०)

(व. स्मृ. २०. ३७–४०)

---

* विज्ञानेश्वरस्तु—'यदा तु अप्रकर्षेण दुष्टामीषद्व्यभिचारिणीं ब्राह्मण्यादिकां व्यापादयति तदा शूद्रहत्याव्रतं षाण्मासिकं कुर्यात्। यद्वा दश धेनूर्दद्यात्। इदं च षाण्मासिकमकामतो ब्राह्मण्या व्यापादने। क्षत्त्रियावधे तु कामकृते द्रष्टव्यम्। कामतो वैश्यावधे दश धेनूर्दद्यात्। कामतः शूद्रावधे तु उपपातकसाधारणं मासं पञ्चगव्याशनम्'—इत्याह।

† अत्र पूर्वत्रोक्तं—'षड्वर्षाणि राजन्ये प्राकृतं ब्रह्मचर्यम्। (१०) त्रीणि वैश्ये। (११) सार्धं शूद्रे'। (१२)

इति सूत्रत्रयमनुसन्धेयम्।

---

१ I reads -सन्निधितया- for -सन्निधिपाठात् २. B. and D. omit वैश्यां शूद्रहिंसायाम्, while J. omits वैश्यहिंसायाम्.

इति। अनात्रेयीं हत्वा राजन्यहिंसायां यद्व्रतं तदाचरेदिति योजनीयम्। हारीतोऽपि[1]-

*'क्षत्त्रियवद्ब्राह्मणीषु। (१३) वैश्यवत् क्षत्त्रियासु[2] शूद्रवत् वैश्यायाम्। (१४) शूद्रां हत्वा नव मासान्'। (१५)
(हा. स्मृ. २०. १३-१५)

इति। इदं राजन्यव्रतमाहिताग्निपत्नीं गुणवतीं कामतो घातुकस्य द्रष्टव्यम्। प्रामादिकविषये तु व्यास आह-

'अकामतः स्त्रियं हत्वा ब्राह्मणीं वैश्यवच्चरेत्।
कामतो द्विगुणं प्रोक्तं प्रदुष्टां तु न किञ्चन'॥

इति। अनात्रेयीवधे राजन्यव्रतस्याभिहितत्वात् आत्रेयीवधे ब्रह्महत्याव्रतमिति गम्यते। तथा च यमः[3]—

'हत्वा सवनिनं[4] वैश्यं राजन्यमपि दीक्षितम्।
हत्वा तु ब्रह्महत्येव तथाऽत्रेयीं च ब्राह्मणीम्'॥

इति। आत्रेयीलक्षणं च[5] स एवाह—

'जन्मप्रभृतिसंस्कारैः संस्कृता ब्रह्मचर्यया।
गर्भिणी वा[6]ऽथ वा या स्यात्तामात्रेयीं विनिर्दिशेत्'॥

इति। वसिष्ठोऽपि—

* आत्रेयीव्यतिरिक्तब्राह्मणीवधे राजन्यहिंसायामुक्तमष्टवार्षिकं, क्षत्त्रियावधे वैश्यहिंसायामुक्तं षड्वार्षिकं, वैश्यावधे शूद्रहत्यायामुक्तं त्रैवार्षिकं, शूद्रावधे संवत्सरं व्रतमनुतिष्ठेयमिति योजनीयम्। एतान्यपि सकामेऽतिदिष्टानि। अकामे त्वापस्तम्बोक्तातिदिष्टं ज्ञेयम्।

१. B and D. omit हारीतो ऽपि. २. I. reads क्षत्त्रियायां for क्षत्त्रियासु. ३. II. substitutes पद्म: for यमः. Probably this is a mistake. ४. I. reads सर्वानृत for सवनिनं ५. B. and D. omit च. ६. E G. and II. read या तथा for वा ऽथ वा.

'रजस्वलामृतुस्नातामात्रेयीमाहुः ।
अत्र * ह्येष्यदपत्यं भवतीति ' ।
( व. स्मृ. २०. ३५-३६ )

इति[२] । अनृतुमत्या वधे जातिभेदेन भिन्नं प्रायश्चित्तमाह प्रचेताः—

'अनृतुमतीं ब्राह्मणीं हत्वा कृच्छ्राब्दं †षण्मासान् वेति । क्षत्त्रियां हत्वा षण्मासान् मासत्रयं वेति । वैश्यां हत्वा मासत्रयं सार्धमासं वेति । शूद्रां हत्वा सार्धमासं सार्धत्रयोविंशतिदिनानि वेति' ।

इति । प्रतिलोमपुरुषसंसर्गेणापत्यं लब्धवतीनां वधे ब्रह्मगर्भ आह—

*'हि' यस्मात् 'अत्र' चतुर्थदिनादारभ्य षोडशदिनपर्यन्तम् 'एष्यन्' गमिष्यन् चेत् 'अपत्यं भवति' अतो रजस्वलां ऋतुस्नातामात्रेयीमाहुरिति भावः।

†अत्रापि गुणवत्यगुणवत्यादिभेदेन कृच्छ्राब्द-षण्मासयोर्व्यवस्था । एवमग्रेऽपि षण्मास-मासत्रयादीनाम् ।

१. B. and D. read ह्येष दम्पत्यं, C. E. F. G. and H. तैलदपत्यं, I. यांसृष्टापत्यं and the text ह्येष्यदम्पत्यं for ह्येष्यदपत्यं. E. and H. give a reading in the margin which we have followed. २. B. and D. omit the following portion—इति । अनृतुमत्या वधे जातिभेदेन भिन्नं प्रायश्चित्तमाह प्रचेताः—

'अनृतुमती ब्राह्मणी हत्वा कृच्छ्राब्द षण्मासान वेति । क्षत्त्रियां हत्वा षण्मासान् मासत्रयं वेति। वैश्यां हत्वा मासत्रयं सार्धमास वेति । शूद्रां हत्वा सार्धमासं सार्धत्रयोविंशतिदिनानि वेति' ।

इति । प्रतिलोमपुरुषसंसर्गेणापत्यं लब्धवतीनां वधे.

३. G. substitutes क्षत्त्रियां हत्वा अतिशूद्रां हत्वा सार्धमासं त्रयोविंशतिदिनानि चेति for क्षत्त्रियां हत्वा षण्मासान मासत्रयं वेति। वैश्यां हत्वा मासत्रयं सार्धमासं वेति । शूद्रां हत्वा सार्धमासं सार्धत्रयोविंशतिदिनानि वेति।.

'प्रतिलोमप्रसूतानां स्त्रीणां मासा वधे स्मृताः ।
अन्तरप्रभावाणां च सूतादीनां चतुर्द्वि-षट्' ॥

इति । ब्राह्मण्या वधे षण्मासाः क्षत्त्रियायाश्चत्वारः वैश्याया द्वाविति योजनीयम् । सूत-वैदेहक-चण्डालानां वधेऽप्येषैव योजना द्रष्टव्या ॥ १७ ॥

इदानीं वैश्यादिवधे प्रकारान्तरेण प्रायश्चित्तमाह—

वैश्यं शूद्रं[2] क्रियाऽऽसक्तं विकर्मस्थं द्विजोत्तमम् ।
हत्वा[3] चान्द्रायणं तस्य त्रिंशद्गाश्चैव[4] दक्षिणाम् ॥१८॥

इति । नन्वेतद्वैश्यवधप्रायश्चित्तं[5] व्याहतम् । तथा हि । विट्शब्देनात्र किं सदोषो विवक्ष्यते ? उत निर्दोषजातिमात्रः ? अथवा गुणवान् ?—इति । तत्र प्रथमे न्यूनप्रायश्चित्ताभिधायिभ्यां पूर्वोदाहृताभ्यां चतुर्विंशतिमत-संवर्त्तवचनाभ्यां व्याहन्येत । द्वितीये निर्दोषजातिमात्रविषयेण समनन्तरपूर्वोक्तमूलवचनेनैव विरोधः । तृतीये तु—

'यागस्थक्षत्त्र-विड्घाती चरेद्ब्रह्महणि व्रतम्' ।
(या. स्मृ. ३. २५१)

इत्यनेनैव विरोधः । मैवम् । ईषत्सुवृत्तस्य वैश्यस्यात्र विवक्षितत्वात् । अत एवात्यन्तसुवृत्तेन विहितसकलक्रियाऽऽसक्तेन

---

१. B. and D. read मासावधि स्मृत·, C. and F. मासावधेः स्मृत, H. मासोऽवधि स्मृतः and J. मासेऽवधिः स्मृत. for मासा वधे स्मृताः. २. We follow here all, except I. and M., I. reads शूद्रक्रियाऽऽसक्तं and M शूद्रक्रियासुक्त. ३. L. reads हत्वा for हत्वा. ४. Except I. and L. read दक्षिणा for दक्षिणाम्, while M. reads कुर्यादथाद् गांस्त्रिंशद्दक्षिणाम् for तस्य त्रिंशद्गाश्चैव दक्षिणाम्. ५. C. and F. do not insert एतत् before वैश्य-; while E. and H. substitute एतद्विधस्य for एतद्वैश्य-. J. reads वैश्यवधं for वैश्यवध-.

शूद्रेण साहचर्यमविरुद्धम् । द्विजोत्तमशब्दो[1] विप्रे प्रसिद्धः। क्षत्रिये ऽपि कथंचित् वर्त्तयितुं शक्यः । द्विजशब्दाभिधेयं वैश्यमपेक्ष्य तस्योत्तमत्वात् । तत्र क्षत्रियपक्षे-विकर्मणि कस्मिंश्चिद्ब्रह्मघातादौ तिष्ठतीति विकर्मस्थः । विप्रपक्षे तु विकर्मस्थब्रह्मघातादिषु तिष्ठतीति विकर्मस्थः । एवं च सति चतुर्वर्णविषयकमेकं[2] प्रायश्चित्तं न्यायदर्शिनामेतत् सम्पद्यते । हत्वा तौ[3] यो वर्त्तते तस्य—इति योजनीयम् । दक्षिणां निर्दिशेदिति शेषः ॥ १८ ॥

चा[4]तुर्वर्ण्यकर्तृके चण्डालवधे क्रमेण प्रायश्चित्तमाह—

चण्डालं हतवान् कश्चिद् ब्राह्मणो यदि कञ्चन ।
प्राजापत्यं चरेत् कृच्छ्रं गोद्वयं दक्षिणां दद[5]त् ॥१९॥
क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेण वा ।
च[6]ण्डालस्य वधे प्राप्ते कृच्छ्रार्धेन विशुद्ध्यति ॥ २०॥

इति । वृ[7]त्तिभेदेन ब्राह्मणानां भेदेऽपि न प्रायश्चित्तभेद इति विवक्षितत्वात् कश्चित्— इत्युक्तम् । एवं चण्डाले ऽपि कञ्चनेति विशेषणं योजनीयम् । इतरो मूर्धावसिक्त-सूतादिः । अङ्गिरास्त्वत्रैव समानं प्रायश्चित्तान्तरमाह–

'अन्त्यजानां *तु गमने भोज[8]ने च प्रमापणे ।
पराकेण विशुद्धिःस्याद्भगवानङ्गिरा ऽब्रवीत्' ॥

इति । हारीतो ऽपि–

---

* अन्त्यजाना स्त्रीषु गमने अन्त्यजान्नभोजने अन्त्यजमारणे च वर्णचतुष्टयस्य पराकरूपं समानमेव प्रायश्चित्तम् । अन्त्यजशब्देनाऽत्र चण्डाल एव ग्राह्यः । न रजकादयः सप्ताऽन्त्यजशब्दवाच्या ग्राह्याः ।

---

१. I. reads -शब्देन विप्र. for -शब्दो विप्रे. २. All, except A. and I. omit एक. ३. I. omits तौ. ४. M. omits the next śloka. ५. K. and L read ददेत् for ददत्. ६. A. reads चाण्डालवधसम्प्राप्त for चण्डालस्य वधे प्राप्ते. ७. All, except A. and I read वृत्त-for वृत्ति-. ८. B. and D. read भाजने.

'चाण्डालवधसम्प्राप्तिर्ब्राह्मणेन भवेद् यदि ।
कारयेद्द्वादशं *कृच्छ्रं तप्तकृच्छ्रं[1] ततो भवेत्' ॥
(हा. स्मृ. २०. ७१)

इति । एतच्च ज्ञानपूर्वके द्रष्टव्यम् । अज्ञानपूर्वके तु चान्द्रायणम् । तदाह लौगाक्षिः—

'हनने प्रतिलोमानां शूद्रजानां कथं भवेत्? ।
ज्ञानपूर्वे पराकः स्यादज्ञाने चैन्दवं तथा[2]'॥

इति । सूतादिवधेऽप्येतदेव । तदाह याज्ञवल्क्यः—

'चान्द्रायणं चरेत् सर्वानपकृष्टान्[3] निहत्य तु' ।
(या. स्मृ. ३. २६२)

इति । कृच्छ्रार्धेनेत्यर्धग्रहणं पादस्य पादत्रयस्य चोपलक्षणम् । अत एव लौगाक्षिः—

'सर्वमर्धं त्रिपादं च पादं चैव व्रतं चरेत् ।
वर्णक्रमादन्तरजहिंसा-गमन-भोजने' ॥

इति ॥ १९-२० ॥

यदि चण्डाल-श्वपाकौ चौरौ स्यातां, तदा तयोर्वधे स्वल्पं प्रायश्चित्तमाह—

**[4]चौरौ श्वपाक-चण्डालौ विप्रेणाभिहतौ यदि ।**
**अहो-रात्रोषितः स्नात्वा पञ्चगव्येन शुद्ध्यति ॥२१॥**

---

* द्वादशकृच्छ्र–तप्तकृच्छ्रयोरत्र विकल्पोऽनुसन्धेयः ।

---

१. B. and D. read तत शुद्धो भवेदिति for तप्तकृच्छ्रं ततो भवेत २. I. substitutes भवेत for तथा ३ The text reads अवकृष्टान् for अपकृष्टान्. ४. M reads this sloka as follows :—

चौरा. श्वपाक-चाण्डाला विप्रेणापि हता यदि ।
अहो-रात्रोपवासेन प्राणायामेन शुद्ध्यति ॥.

and B. C D. E. F. G H I. J. K. and L. read the first line of this śloka as follows :—

चौरः श्वपाकश्चण्डालो विप्रेणाभिहतो यदि ।.

इति। यदि विप्रेणाभिहतस्तदा स विप्रः शुद्ध्यतीति योजना। यद्यपि चण्डालवधो नोपपातकेषु परिगणितः तथापि मनुष्य-वधसामान्येन तत्रान्तर्भावमभिप्रेत्य तत्प्रकरणे प्रायश्चित्त-मुक्तम् ॥ २१ ॥

चण्डालप्रसङ्गात् तद्विषयाणां प्रकीर्णकानामपि केषाञ्चित् प्रायश्चित्तमत्राभिधीयते। तत्र सम्भाषणे प्रायश्चित्तमाह—

**श्वपाकं वाऽपि चण्डालं विप्रः सम्भाषते यदि।**
**द्विजसम्भाषणं कुर्यात् सावित्रीं[1] तु सकृज्जपेत् ॥ २२ ॥**

इति। द्विजशब्देनानूचानो विप्रो विवक्षितः। नीचविप्र-सम्भाषणस्य प्रायश्चित्तरूपत्वासम्भवात्। द्विजसान्निध्याभावे गायत्रीजपः— इत्यनुकल्पो द्रष्टव्यः। अत एव हारीतो विकल्पमाह—

> 'चाण्डालैः सह सम्भाष्य द्विजसम्भाषणात् शुचिः।
> सावित्रीं व्याहरेद्वाऽपि इति धर्मो व्यवस्थितः' ॥
> (हा. स्मृ. २०. ६८)

इति। सम्भाषमाणो विप्रो यद्युच्छिष्टः स्यात् तदा त्रि-रात्रोपवासमाह स एव—

> 'उच्छिष्टः[2] सह सम्भाषेत् त्रिरात्रेणैव शुद्ध्यति'।
> (हा. स्मृ. २०.६९)

इति ॥ २२ ॥

एकशय्यास्वापे सहमार्गगमने च[3] पृथक् प्रायश्चित्तमाह—

**चण्डालैः सह सुप्तं[4] तु त्रिरात्रमुपवासयेत्।**
**चण्डालैकपथं गत्वा गायत्रीस्मरणात् शुचिः ॥ २३ ॥**

---

१. M. reads गायत्रीं वा for सावित्रीं तु. २ E. G. H. and J read उच्छिष्टैः सह सम्भाषे ३. Except A. and I. all omit च. ४. K and L read सुप्ते तु for सुप्तं तु

इति। स्पष्टोऽर्थः ॥ २३ ॥

दर्शन-स्पर्शनयोः पृथक् प्रायश्चित्तमाह–

चण्डालदर्शने[1] सद्य आदित्यमवलोकयेत्।
चण्डालस्पर्शने चैव सचैलं स्नानमाचरेत् ॥ २४॥

इति। एतदेवापस्तम्बोऽप्याह[2]–

'चण्डालस्पर्शने सम्भाषायां दर्शने च[3] दोषः। तत्र प्रायश्चित्तमवगाहनमपामुपस्पर्शनं सम्भाषायां ब्राह्मणसम्भाषा दर्शने ज्योतिषां दर्शनम्'।

इति। सुमन्तुरपि–

'चण्डालदर्शने सूर्यदर्शनम्। सम्भाषणे ब्राह्मणाभिव्याहारः। संस्पर्शने सचैलं स्नानमाचरेत्'।

इति। देवलोऽपि–

'श्वपाकं पतितं व्यङ्गमुन्मत्तं शवदाहकम्।
सूतिकं सूतिकां नारीं रजसा च परिप्लुताम् ॥
श्व-कुक्कुट-वराहांश्च ग्राम्यान् संस्पृश्य मानवः।
सचैलः सशिराः[5] स्नात्वा तदानीमेव शुद्ध्यति'॥

इति। अवस्थाविशेषेण स्पर्शने विशेषमाह शातातपः[6]–

---

१ M reads चण्डालदर्शनेनैव for चण्डालदर्शने सद्यः. २. H substitutes तदेव for एतदेव. ३. These quoted two Sûtras are not found in the printed copy of Âpstamba, but in the Telugû manuscript, they are apparent with slightest difference The manuscript reads as —

'चण्डालस्पर्शन-भाषा-दर्शनेषु दोषः।
तत्रावगाहन ब्राह्मणसम्भाषा ज्योतिषां
दर्शन च प्रायश्चित्तम्'।

४. All, except A and I omit च ५ B. D. G. and J. read सचैलमभ्विरात and I सचैल शिरति for सचैल सशिरा . ६ B. and D. omit शातातप .

'येन केनचिदभ्यक्तः चण्डालं संस्पृशेद्यदि ।
अहो-रात्रोषितः स्नात्वा पञ्चगव्येन शुद्ध्यति ॥
अशुद्धान् स्वयमप्येतानशुद्धश्च यदि स्पृशेत् ।
विशुद्ध्यत्युपवासेन त्रिरात्रेण ततः शुचिः ॥
उच्छिष्टः संस्पृशेद्विप्रो मद्यं शूद्रं शुनोऽशुचीन् ।
अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुद्ध्यति' ॥

इति । यत्तु देवलेनोक्तम्—

'अशुद्धान् स्वयमप्येतान् शुद्धश्च यदि संस्पृशेत् ।
विशुद्ध्यत्युपवासेन त्रिरात्रेण ततः शुचिः ॥
उच्छिष्टं संस्पृशेद्विप्रः पुनः कृच्छ्रेण शुद्ध्यति' ।

इति तत् सहोपवेशन-शयनादिना चिरस्पर्शविषयम् । यदि स्पृष्टो मूत्रादिकं कुर्यात् तदा त्रिरात्रोपवासः । भुक्तोच्छिष्टो यदि स्पृशेत् तदा षड्रात्रोपवासः— इति । तदाह शातातपः—

'चण्डालैः श्वपचैः स्पृष्टे विण्मूत्रे कुरुते द्विजः ।
त्रिरात्रं तत्र कुर्वीत भुक्तोच्छिष्टः षडाचरेत्' ॥

---

१. B. and D read अभ्यक्त for अभ्यक्त: . २. G. and J. read अशुचिः for अशुद्धान्. This and the following lines are omitted by B and D. —

अशुद्धान् स्वयमप्येतानशुद्धश्च यदि स्पृशेत् ।
विशुद्ध्यत्युपवासेन त्रिरात्रेण ततः शुचिः ॥
उच्छिष्टः संस्पृशेद्विप्रो मद्यं शूद्रं शुनोऽशुचीन् ।
अहो-रात्रोषितः स्नात्वा पञ्चगव्येन शुद्ध्यति' ॥

इति । यत्तु देवलेनोक्तम —

३. I. reads कया शुचि (?) for शुनोऽशुचीन. ४. I reads अशुद्धश्च यदि स्पृशेत् for शुद्धश्च यदि संस्पृशेत. ५. All, except I. omit the second Charana of the preceding line and the first of this line and thus forms one line of them, which is—

विशुद्ध्यत्युपवासेन पुनः कृच्छ्रेण शुद्ध्यति ।

इति। चण्डालवत् चित्यादिस्पर्शेऽपि सचैलं स्नानम्। तदुक्तं चतुर्विंशतिमते—

'चितिं च चितिकाष्ठं च यूपं चण्डालमेव च।
स्पृष्ट्वा देवलकं *चैव सवासा जलमाविशेत्'॥

इति॥ २४॥

चण्डालस्वामिकवाप्युदकपाने ज्ञानाज्ञानकृते पृथक् प्रायश्चित्तमाह—

**चण्डालखातवापीषु पीत्वा सलिलमग्रजः।**
**अज्ञानाच्चैकभक्तेन[1] त्वहो-रात्रेण शुद्ध्यति॥ २५॥**

इति। अज्ञानकृतस्यैकभक्तम्। ज्ञानकृतस्य तूपवासः। अत एवापस्तम्बः चण्डालवापीं प्रकृत्याह—

'तत्तोयं यः पिबेद्विप्रः कामतो ऽकामतो ऽपि वा।
अकामात् नक्तभोजी स्यादहोरात्रेण †कामतः'॥

इति। तत्रैवाभ्यासविषयमभिप्रेत्याऽऽपस्तम्ब आह—

'अन्त्यजैः खानिताः कूपास्तडागा वाप्य एव च।
एषु स्नात्वा च पीत्वा च प्राजापत्येन शुद्ध्यति'॥

इति। यत्तु तेनैवोक्तम्—

* देवलकस्पर्शप्रायश्चित्तं तु क्षुद्रदेवतापूजकस्य पश्वादिबलिदानकर्तुर्देवलकस्य भाषाया 'गुरव—घाडी' इत्यादिसंज्ञकस्यैव हीनजातेः स्पर्शे वेदितव्यम्। न पुनः शिव—विष्ण्वादिदेवतापूजकस्य उत्तमजातेर्देवलकस्य इति सुधियो विदाकुर्वन्तु।

† अहो-रात्रेण अहोरात्रोपवासेनेत्यर्थः।

१. M. reads एव नक्तेन for एकभक्तेन.

'प्रपास्वरण्ये कटके च सौरे
द्रोण्यां जलं केशविनिःसृतं वा ।
श्वपाक-चण्डालपरिग्रहेषु
पीत्वा जलं पञ्चगव्येन शुद्ध्येत्' ॥
(आ. स्मृ. २. २)

इति तदशक्तविषयम् ॥ २५ ॥

चण्डालभाण्डस्पृष्टस्य कूपस्थजलस्य पानेऽधिकं प्रायश्चित्तमाह—

चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्रात् शुद्धिमाप्नुयात् ॥२६॥

इति । चण्डालो भाण्डेनोदकं यस्मात् कूपादानयति तत्कूपस्योदकं पीत्वा गोमूत्रसहितयवपिष्टादिकं दिनत्रयमाहारत्वेन स्वीकुर्यात् ॥ २६ ॥

तदीयभाण्डस्थोदकपाने जरणाजरणभेदेन प्रायश्चित्तमाह—

चण्डालघटसंस्थं तु यत्तोयं पिबति द्विजः ।
तत्क्षणात् क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥२७॥
यदि न क्षिपते तोयं शरीरे यस्य जीर्यति ।
प्राजापत्यं न दातव्यं कृच्छ्रं सान्तपनं चरेत् ॥२८॥

---

१. I. reads घटके for कटके. For the same the text of Âpastamba Smṛti reads -षु जलेऽथ and B. D. and the text read सीरे for सौरे. २. The text reads यच्च विनिःसृत भवेत् for केशविनि सृतं वा. ३. The text reads शुद्धि. for शुद्ध्येत्. ४. B. and D. omit चण्डाल-. ५. B. D. and I. read चण्डालभाण्डेन for चण्डालो भाण्डेन. ६. I. reads जीर्ण-निगरण- for जरणाजरण-. ७. M. reads this line as follows:—

चाण्डालोदकभाण्डे तु अज्ञानात् पिबते जलम् ।.

८. K. and L. read कर्तव्यं for दातव्य.

इति । प्रथममज्ञानात् पीत्वा पश्चात्तदानीमेव विज्ञाय यदि वमेत् तदा प्राजापत्यम् । तज्जरणे[1] सान्तपनं कृच्छ्रं परिषदा दातव्यम् । न तु प्राजापत्यम् । तस्याज्ञानविषयत्वमङ्गिरा दर्शयति—

'चण्डालपरिगृहीतं यदज्ञानादुदकं पिबेत्*।
तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यशः[2] ॥
यस्तु चण्डालसंस्पृष्टं पिबेत् किञ्चिद्धि कामतः[3] ।
स तु सान्तपनं कृच्छ्रं[4] चरेत् शुद्ध्यर्थमात्मनः' ॥

इति । यत्तु देवलेनोक्तम्—

'यस्तु चाण्डालभाण्डस्थमज्ञानादुदकं पिबेत् ।
स तु त्र्यहेण शुद्ध्येत्तु शूद्रस्त्वेकेन शुद्ध्यति' ॥

इति तदापद्विषयम् ॥ २७–२८ ॥

बुद्धिपूर्वकं तत्पाने वर्णभेदेन प्रायश्चित्तभेदमाह[5]—

**चरेत् सान्तपनं विप्रः प्राजापत्यमनन्तरः[6] ।**
**तदर्धं तु चरेद्वैश्यः पादं शूद्रस्तदाचरेत्[7] ॥ २९ ॥**

इति । अनन्तरः क्षत्रियः । एतस्य बुद्धिपूर्वविषयत्वमापस्तम्ब आह—

---

* भगवता पराशरेण चण्डालघटसंस्थजलस्याजरणे प्राजापत्यं जरणे कृच्छ्रं सान्तपनं चोक्तम् । अङ्गिरसा तु तदेव प्रायश्चित्तद्वयं ज्ञानाज्ञानभेदेनोक्तमिति विशेषः ।

१. I. reads तज्जीर्णे for तज्जरणे. २. B. and D. read शुद्ध्यति for नित्यशः. ३ I reads किञ्चिदकामतः for किञ्चिद्धि कामतः. ४. All, except A. and I. substitute कृत्वा for कृच्छ्रं. ५. I. omits -भेदम. ६. M. reads प्राजापत्यं तु क्षत्रियः for प्राजापत्यमनन्तरः. ७. Except A. K. and L. all read शूद्रस्थै ज्ञापयेत् for शूद्रस्तदाचरेत्.

[1]चण्डालकूपभाण्डस्थं [2]नरः कामाज्जलं पिबेत् ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत्?॥
चरेत् सान्तपनं विप्रः प्राजापत्यं तु भूमिपः ।
तदर्धं तु चरेद्वैश्यः [3]शूद्रे पादं विनिर्दिशेत्' ॥
(आ. स्मृ. ४.१-२)

इति ॥ २९ ॥

चण्डालभाण्डोदकपानप्रसङ्गादितरान्त्यजभाण्डोदकादिपानेऽपि प्रायश्चित्तमाह—

भाण्डस्थमन्त्यजानां तु जलं दधि पयः पिबेत् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥ ३० ॥
ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः ।
शूद्रस्य चोपवासेन तथा दानेन शक्तितः ॥ ३१ ॥

इति । अन्त्यजा रजकादयः ।

'रजकश्चर्मकारश्च नटो *बुरुड एव च ।
कैवर्त-मेद-भिल्लाश्च सप्तैते [4]चान्त्यजाः स्मृताः' ॥

इति स्मरणात् । ब्रह्मकूर्चमाचार्य एवोपरिष्टाद्वक्ष्यति । तत्सहित उपवासः त्रैवर्णिकस्य । [5]तद्रहितश्चतुर्थस्य । ब्रह्म-

* नटशब्देनात्र कुलपरम्परायातक्रमेण नाटकप्रयोगादौ भूमिकाग्रहणेनाजीव्यमानो नटो ग्राह्यः । नतु कश्चित्प्रसङ्गविशेषेषु भूमिकाग्रहणकर्ता । नहि तस्यान्त्यजत्वम् । प्रायश्चित्तेनैव तस्य शुद्ध्यभिधानात् ।

१. I. reads -भाण्डकप्रस्थ and the text -कूपभाण्डेषु for -कूपभाण्डस्थ. २. B and D. read अज्ञानादुदकं पिबेत, I. जलं यः ज्ञानतः पिबेत and the text योऽज्ञानात् पिबते जलम् for नरः कामाज्जलं पिबेत ३. The text reads पादं शूद्रस्य दापयेत for शूद्रे पादं विनिर्दिशेत. ४. B. and D. read चान्त्यजातय- for चान्त्यजाः स्मृताः. ५. I. reads तद्रहितस्य for तद्रहितः and does not show this sentence to be separate from the next one.

कूर्चस्थाने यथाशक्ति दानं द्रष्टव्यम् । आमादिषु भाण्डान्तर[1]-प्रक्षिप्तेषु नास्ति कश्चिद्दोषः । तथा च चतुर्विंशतिमते—

'आमं मांसं[2] घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ।
*अन्त्यभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयः स्मृताः' ॥

इति । महत्सु तु तटाकादिषु चण्डालादिसम्बन्धेऽपि नास्ति कश्चिद्दोषः । अल्पेषु तु कूपन्यायः[3] । तदाह विष्णुः—

'जलाशयेष्वथाल्पेषु स्थावरेषु महीतले ।
कूपवत् कथिता शुद्धिर्महत्सु तु न दूषणम्' ॥

इति ॥ ३०–३१ ॥

अज्ञानपूर्वके चण्डालान्नभोजने प्रायश्चित्तमाह—

**भुङ्क्ते[4]ऽज्ञानात् द्विजश्रेष्ठश्चण्डालान्नं कथञ्चन ।
गोमूत्रयावकाहारो दशरात्रेण शुद्ध्यति ॥ ३२ ॥**

इति । स्पष्टम्[5] ॥ ३२ ॥

तत्र[6] †प्रमाणमाह—

**एकैकं ग्रासमश्नीयाद् गोमूत्र[7]यावकस्य च ।**

---

* अन्त्यभाण्डं अन्त्यजस्य भाण्डमित्यर्थः ।

† तत्र तस्मिन् गोमूत्रयावकाहारे इत्यनुसन्धेयम् ।

---

१. I. reads भाण्डान्तर for भाण्डान्तर-. २. I. reads आममांस for आम मासं. ३. B. and D. read कूपन्यासः and I. and J. कूपवत न्यायः for कूपन्यायः, while G. and J. substitute अन्येषु for अल्पेषु ४. M reads—

ब्राह्मणोऽज्ञानतो भुङ्क्ते चाण्डालान्नं कदाचन ।
गोमूत्रयावकाहारात * * * * ॥.

५. All, except I. omit this word. ६. I. substitutes सत् for तत्र. ७. We follow here A. B and D.; while C. F. K. and L. read गोमूत्रे for गोमूत्र- and for the same E. G. H. I. J. and M. read गोमूत्रं; while C. E. F. G. H and J. substitute -यावकेन for -यावकस्य.

दशाहं नियमस्थस्य व्रतं तत्तु विनिर्दिशेत् ॥ ३३ ॥

इति । गोमूत्रेण पाचितं यद् यवमयमन्नं तस्य ग्रासमेकैकस्मिन् दिने भुञ्जीत । नियमः स्नान-मौनादिः । तदाह याज्ञवल्क्यः—

'स्नानं *मौनोपवासेज्या-स्वाध्यायोपस्थनिग्रहाः ।
नियमा गुरुशुश्रूषा-शौचा-ऽक्रोधा-ऽप्रमादिताः' ॥
(या. स्मृ. ३. ३१४)

इति । ईदृशनियमनिष्ठस्य तद् यावकाहारव्रतं निर्दिशेत् । बुद्धिपूर्वके त्वङ्गिरा आह—

†'अन्त्यावसायिनामन्नमश्नीयाद्यस्तु कामतः ।
स तु चान्द्रायणं कुर्यात् तप्तकृच्छ्रमथापि वा' ॥

इति । अन्त्यावसायिनश्चण्डालादयः । तांश्च स एवाह—

'चण्डालः श्वपचः क्षत्ता सूतो वैदेहकस्तथा ।
मागधा-ऽऽयोगवौ चैव सर्वे ह्यन्त्यावसायिनः' ॥

इति । आम-पक्वयोश्चण्डालान्नयोर्व्रतभेदमाह विष्णुः—

---

* 'ब्रह्मचर्यं' इत्यादिना यमाः पूर्वमुक्ताः । स्नानादयो दश नियमशब्दवाच्याः ।

[illegible]यत । अमरसिंहस्तु [illegible]
मवसातुं शीलमस्येत्यन्तावसायीति साधुरिति प्रतिभाति । क्वचित् 'अन्तेऽवसायी' इत्यपि दृश्यते ।

---

१. I. and M. read तत्र and J. न तु for तत्तु. २. I. omits -मौन-, while B. and D. omit—

नियम स्नान-मौनादि.। तदाह याज्ञवल्क्य·—
'स्नान मौनोपवासेज्या-स्वाध्यायोपस्थनिग्रहाः।.

३. J. reads स्नान- for स्नानं. ४. I. does not pluralize -ऽप्रमादिताः; while J reads -ऽप्रमादिता·. ५. B. C. and F. substitute तच for तांश्च

'चाण्डालान्नं भुक्त्वा[1] त्रिरात्रमुपवसेत् ।
(५७) सिद्धं भुक्त्वा पराकः'। (५८)
(वि. स्मृ. ५१. ५७-५८)

इति । अत्र मूलवचनोक्तो गोमूत्रयावकाहारः सिद्धान्नविषयो भविष्यति । यावकसहितस्य दशरात्रोपवासस्य पराकसमत्वात् । यत्तु हारीतेनोक्तम्—

'चण्डालान्नं प्रमादेन यदि भुञ्जीत वै[2] द्विजः । (७३)
ततश्चान्द्रायणं कुर्यात् मासमेकं व्रतं चरेत् ॥
शूद्रो वाऽप्यर्धमासं वै भुक्त्वा चैव जितेन्द्रियः । (७४)
त्रिरात्रमुपवासी[3] च ब्राह्मणांस्तर्पयेत् शुचिः' ॥ (७५)
(हा. स्मृ. २. ७३-७५)

इति तद्गोमूत्रयावकाहाराशक्तविषयम्[4] । बुद्धिपूर्वकस्य चिरकालानुवृत्तौ मनुनोक्तं द्रष्टव्यम्—

'चण्डाला-ऽन्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य[5] च ।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति' ॥
(म. स्मृ. ११. १७५)

इति । अत्र चीर्णव्रतस्य पुनरुपनयनं कूर्मपुराणे दर्शितम्—

'चाण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत् ।
बुद्धिपूर्वे तु कृच्छ्राब्दं पुनः संस्कारमेव च' ॥

इति । वसिष्ठो ऽपि—

---

१ H. reads -ऽन्नभोक्ता for -ऽन्नं भुक्त्वा. २. C. E F. G H. I. and J. substitute य. for वै. ३ C. E. F. H. and I. read उपवासं for उपवासी. ४. I. reads -ऽऽहारासक्तविषयम्. ५. G. reads परिगृह्य च.

'चण्डाल-पतितान्नभोजने पुनरुपनयनम्' ।

(व. स्मृ. २०. १७)

इति ॥ ३३ ॥

अथ कञ्चित्कालमेकस्मिन् गृहे चण्डालेन सह व्यवहर्त्तुः 'अविज्ञातस्तु चण्डाल' इत्यादिना 'भूमिर्दोषो न विद्यते'-इत्यन्तेन श्लोकसमूहेन प्रायश्चित्तमाह—

अविज्ञातस्तु[2] चण्डालो यत्र वेश्मनि तिष्ठति ।
विज्ञाते[3] तूपसन्नस्य द्विजाः कुर्वन्त्यनुग्रहम्[4] ॥ ३४ ॥

इति । अनेन श्लोकेन परिषदुपसत्तिर्विहिता । यद्यपि सर्वेषु प्रायश्चित्तेषु परिषदुपसत्तिः समाना[5] तथापि प्रकटपापेष्वेव सा । न तु रहस्येषु । अत्र तु रहस्यमपि प्रकटीकर्त्तव्यमित्यभिप्रेत्य प्रातिस्विकमुपसत्त्यभिधानम्[6] । अनुग्रहश्चरितव्यप्रायश्चित्तविशेषोपदेशः ॥ ३४ ॥

उपसदनयोग्यं परिषद्विशेषं दर्शयितुं द्विजान् विशिनष्टि—

मुनिवक्त्रोद्गतान्[7] धर्मान् गायन्तो वेदपारगाः ।
पतन्तमुद्धरेयुस्तं[8] धर्मज्ञाः पापसङ्करात्[9] ॥ ३५ ॥

---

१. The text reads -भोजनेषु for -भोजने and inserts ततः after it. २. M. reads—

अविज्ञातश्च चाण्डालः सन्तिष्ठेत्तस्य वेश्मनि ।,

K. and L. substitute च for तु. ३. B. D. K. and L. read विज्ञातरूपं सन्न्यस्य for विज्ञाते तूपसन्नस्य; while C. E. F. H. and J. substitute -सन्न्यस्य for -सन्नस्य. ४. K. and L. read कुर्युः for कुर्वन्ति. ५. H. reads आम्नाता for समाना. ६. I reads उपपत्त्यभिधानम्. ७. M. reads—

ऋषिवक्त्राच्छ्रुता धर्मास्तायन्ते वेदपावनाः ।.

८ M reads ते for तं. ९. K. L. and M. substitute -सङ्गदात् for -सङ्करात्.

इति। वक्ष्योद्गतान् गायन्त इत्यनेन धर्मशास्त्रमुच्चार्य प्रायश्चित्तं विधेयमित्युक्तं भवति। युक्तं चैतत्। तथा सति प्रामादिकान्यथाऽभिधानशङ्काऽनुदयात्। यद्यपि चण्डालसहवास एकमेव पापं तथापि तस्मिन् सत्यनुष्ठितानां नित्य-नैमित्तिकानां बहूनां वैकल्यसम्भवमभिप्रेत्य पापसङ्करादित्युक्तम्॥ २५॥

परिषदाऽभिधेयं[1] व्रतविशेषं दर्शयति—

दध्ना च सर्पिषा चैव क्षीर-गोमूत्रयावकम्।
भुञ्जीत सह सर्वैश्च[2] त्रिसन्ध्यमवगाहनम्॥ २६॥

इति। दध्ना सर्पिषा च संयुक्तमिति शेषः। गृहस्वामिवद्गृहवासिनो बाल-वृद्धादयः सर्वेऽपि यावकभोजन-त्रिसन्ध्यावगाहने कुर्युः॥ २६॥

तत्र दध्यादीनां सर्वेषां समाहारप्रसक्तौ विभजति[3]—

त्र्यहं[4] भुञ्जीत दध्ना च त्र्यहं भुञ्जीत सर्पिषा।
त्र्यहं[5] क्षीरेण भुञ्जीत एकैकेन दिनत्रयम्॥ २७॥

इति। दध्ना संयुक्तं गोमूत्रयावकं दिनत्रयं भुञ्जीत। घृतक्षीरयोरप्येवमेव योज्यम्। तथा सति नव दिनानि सम्पद्यन्ते। पुनरप्येकैकेन दध्यादिना संयुक्तमेकैकस्मिन् दिने भुञ्जीतेति दिनत्रयं सम्पद्यते। एतत् सर्वं मिलित्वा द्वादशरात्रं भवति॥ २७॥

यावके वर्ज्यमाह—

---

१ I reads वर्द्द्यः for विधेयम २ All, except A. and M. read भृत्यैश्च for सर्वैश्च, But the author does not agree with it. ३. I. reads विभजते. ४. II. reads अह for त्र्यह. ५. II. reads अहं for त्र्यहं.

भावदुष्टं न भुञ्जीत[1] नोच्छिष्टं कृमिदूषितम् ।

इति । भावेन दुष्टं भावदुष्टम् । यस्मिन्नन्नवलोकिते सति अत्यन्तसादृश्येन तस्मिन्नन्नमेध्यादिभावः सहसा बुद्धिमारोहेत् तादृशं न भोक्तव्यम् ॥

दध्यादीनां त्रयाणां परिमाणमाह—

दधि-क्षीरस्य त्रिपलं पलमेकं घृतस्य तु[2] ॥ ३८ ॥

इति । दधि क्षीरं चेति दधि-क्षीरे तयोः प्रत्येकं पलत्रयं परिमाणम् । यावकस्य परिमाणं ग्रासमात्रं पूर्वोक्तन्यायेन वेदितव्यम् ॥ ३८ ॥

चेतनानां शुद्धिहेतुमभिधायाऽचेतनानामप्याह—

भस्मना तु भवेत् शुद्धिरुभयोस्ताम्र-कांस्ययोः ।
जलशौचेन वस्त्राणां परित्यागेन मृण्मयम्[3] ॥३९॥

इति । मृण्मयस्य भाण्डस्य परित्याग एव कर्त्तव्यः । शुद्धिस्तु नास्तीत्यभिप्रायः ॥ ३९ ॥

गृहस्य दाहः कर्त्तव्य इत्याह—

कुसुम्भ-गुड[4]-कार्पास-लवणं तैल-सर्पिषी ।
द्वारे कृत्वा तु धान्यानि दद्याद्वेश्मनि पावकम्[5] ॥४०॥

इति । कुसुम्भं तैलसाधनधान्यम् । कुसुम्भादीनि धान्यान्यतिदाह्यत्वेन[6] द्वारि स्थापनीयानि ॥ ४० ॥

गृहदाहाद्यनन्तरं कर्त्तव्यमाह—

---

१. M. reads भुञ्जीयात् for भुञ्जीत. २. M. reads—

त्रिपल दधि-दुग्धस्य पलमेकं तु सर्पिष. ॥.

३ I. reads मृण्मये. ४. I reads -कुङ्कुम -for -गुड-. ५. M. reads गेहं दद्याद्धुताशनम् for दद्याद्वेश्मनि पावकम् ६. Except A. and I. all omit धान्यान्यति-.

एवं शुद्धस्ततः पश्चात् कुर्यात् ब्राह्मणतर्पणम्[1] ।
त्रिंशतं गो-वृषं चैकं[2] दद्याद्विप्रेषु दक्षिणाम् ॥४१॥

इति । स्पष्टम्[3] ॥ ४१ ॥

भाण्डवद्भूमेर्न परित्यागः । किन्तु लेपनादिकं कर्त्तव्यमित्याह—

पुनर्लेपन-खातेन[4] होम-जप्येन शुद्ध्यति ।
आधारेण च विप्राणां भूमिदोषो न विद्यते ॥ ४२ ॥

इति । लेपनं कुड्यस्य । खननं स्थलस्येति यथायोगमवगन्तव्यम् । तदुभयं कृत्वा ब्राह्मणान् प्रवेश्य शान्तिकजप-होमौ[5] कुर्यात् । तावता भूमिः शुद्ध्यति । न तु[6] भाण्डवदत्यन्तदोषो भूमेर्विद्यते । यदा पुनर्दीर्घकालं चण्डालो निवसेत् तदा हारीतोक्तं द्रष्टव्यम्—

'चण्डालैः सह संवासं दीर्घकालमकामिकम् ।
विज्ञानान्मृण्मयं पात्रं सर्वं त्यजति तद्गृहे ॥
बालकृच्छ्रं ततः कुर्यात् तप्तकृच्छ्रं तथैव च ।
ब्राह्मणांस्तर्पयेत् पश्चात् ब्रह्मकूर्चेन[7] शुद्ध्यति'॥

(हा. स्मृ. २०. १९-२१)।

इति । तत्र च गोशतं दक्षिणा । तदाह च्यवनः—

'चण्डालसङ्करे स्वभवनदहनम् । सर्वमृण्मयभाण्ड-

---

१. M. reads -भोजनम for -तर्पणम. २. K. and L. read विंशति गा वृष, J त्रिरात्र गो-वृष and M. त्रिशतं गा वृषं for त्रिशत गो-वृष ; while I. substitutes एव for एकं. ३ All, except A omit स्पष्टम. ४. K. and L. read -खानेन and M. -वासेन for -खातेन. ५. I. reads -होमान for -होमौ. ६. E. and K. substitute नं तु for न तु. ७. G. reads गृहकूर्चेन for ब्रह्मकूर्चेन.

भेदनम्। दारवाणां तु तक्षणम्। शङ्ख-शुक्ति-सुवर्ण-रजत-चैलानामद्भिःप्रक्षालनम्। कांस्य-ताम्रपात्राणामाकरेण* शुद्धिः। सौवीर-पयो-दधि-तक्राणां परित्यागः। गोमूत्रयावकाहारो मासं क्षपयेत्। बाल-वृद्ध-स्त्रीणामर्धं प्रायश्चित्तम्। आ षोडशाद्बालाः। सप्तत्यूर्ध्वंगता वृद्धाः। चीर्णे प्रायश्चित्ते ब्राह्मणभोजनं गोशतं दद्यात्। अभावे सर्वस्वम्'।

इति ॥ ४२ ॥

गृहव्यतिरिक्तक्षेत्राराम-ग्रामान्तर-यात्रादावज्ञानेन चण्डालसङ्करे प्रायश्चित्तमाह—

चण्डालैः सह सम्पर्के मासं मासार्धमेव वा।
गोमूत्रयावकाहारो मासार्धेन विशुद्ध्यति ॥ ४३ ॥

इति। मासं च अर्धमासं च मासार्धम्। तेन विशुद्ध्यति। माससङ्करे मासव्रतेन शुद्ध्यति। अर्धमाससङ्करे अर्धमासव्रतेन विशुद्धिरित्यर्थः। सम्पर्कं करोति चेदिति शेषः। चण्डालशब्देन पुल्कसादयो ऽप्युपलक्ष्यन्ते। अत एव संवर्त्तः—

'चण्डालैः सङ्करे विप्रः श्वपाकैः पुल्कसैरपि।
गोमूत्रयावकाहारो मासार्धेन विशुद्ध्यति' ॥

(सं. स्मृ. १८०)

---

* 'कृ—विक्षेपे' इत्यस्माद्धातोरुत्पन्नेनाकरशब्देनात्र परमाणुरूपत्व रसरूपत्वं च ग्राह्यम्। कास्यताम्रपात्राणां रसं कृत्वा अनन्तर पुनः पात्राणि कर्तव्यानीति 'आकरेण शुद्धिः' इत्यस्यार्थो ऽवगम्यते।

---

१ K. and L. read सम्पर्के and substitute च for वा M. omits the whole S'loka. २. The text reads पुल्कसैः श्वपचैस्तथा for श्वपाकैः पुल्कसैरपि.

इति। उक्तकालाधिककालसङ्करे हारीतोक्तं द्रष्टव्यम्–

चण्डालैः सह संयोगे[1] प्राजापत्येन शुद्ध्यति।
विप्रान् देशावरान्[2] कृत्वा तैरनुज्ञाप्य शासनात्॥
आ कण्ठस्य प्रमाणं तु कुर्याद्गोमयकर्दमम्।
तत्र स्थित्वा त्वहोरात्रं वायुभक्षः समाहितः॥
बालकृच्छ्रं ततः कुर्यात् गोष्ठे वसति सर्वदा[3]।
सकेशवपनं कुर्यात् परमां शुद्धिमाप्नुयात्'॥

(हा॰ स्मृ॰ २०. ३०–३२)

इति॥ ४३॥

रजक्यादिभिः सह संवासे चण्डालसंवासात्[4] न्यूनं प्रायश्चित्तमाह—

**रजकी चर्मकारी च लुब्धकी *वेणुजीविनी।**
**चातुर्वर्ण्यस्य च गृहे त्वविज्ञाता तु तिष्ठति[5]॥ ४४॥**
**ज्ञात्वा तु निष्कृतिं कुर्यात् पूर्वोक्तस्यार्धमेव †च[6]।**

---

* 'लुब्धकी' लुब्धकस्य व्याधस्य स्त्री। 'वेणुजीविनी' वेणुभिः वेणुपात्रादिभिः जीवनकर्त्री बुरुडजातीया स्त्रीत्यर्थः। यत्तु केचन—वेणुजीविनी वेणुवादनेन जीवन्तीति मन्यन्ते तन्न साधु।

'रजकश्चर्मकारश्च नटो बुरुड एव च'।

इत्यत्र सप्तस्वन्त्यजेषु बुरुडस्यैव परिगणितत्वात् अन्त्यजत्वेन बुरुड्या एव गृहे निवासानर्हत्वादिति दिक्।

† 'पूर्वोक्तस्य' द्वादशाहसाध्यस्य अर्धं षड्रात्रं व्रत गृहदाहं विना सर्वं कर्म कुर्यादिति भावः।

१. I. reads सम्पर्के for संयोगे. २. I. reads दश वरान्. ३. B. C. D. F. and H. read सर्वथा. ४. I. reads चण्डालसहसंवासात्. ५ M. reads –

* * * लुब्धकस्य च पुल्कसी।
चातुर्वर्ण्ये गृहे यस्य त्वज्ञानादधितिष्ठति॥.

६. I. reads तु for च.

गृहदाहं न कुर्वीत शेषं सर्वं च कारयेत् ॥ ४५ ॥

इति। दध्ना च सर्पिषा चेत्यादिकं पूर्वोक्तम् ॥ ४४-४५ ॥

इदानीं चण्डालस्य सकृद्गृहप्रवेशे कर्त्तव्यां शुद्धिमाह—

गृहस्याभ्यन्तरं गच्छेत् चण्डालो यदि कस्यचित् ।
तमगारादिविनिर्वास्य मृद्भाण्डं तु विसर्जयेत् ॥ ४६ ॥
रसपूर्णं तु यद्भाण्डं न त्यजेत्तु कदाचन ।
गोमयेन तु सम्मिश्रैर्जलैः प्रोक्षेद्गृहं तथा ॥ ४७ ॥

इति। कस्यचिदिति ब्राह्मणादीनामन्यतमस्य। प्रोक्ष्य अजां गां वा गृहं प्रवेशयेत्। तदाह हारीतः—

> गृहस्याभ्यन्तरे यस्य चण्डलो यदि गच्छति ।
> पार्थिवानां हि पात्राणां त्यागः सद्यो हि सर्वशः ॥
> अनष्टरसभाण्डानां गृहवन्मन्यते यथा ।
> अजस्य गोः प्रवेशाद्धि शुद्ध्यते नात्र संशयः' ॥
> (हा. स्मृ. २०. ३५—३६)

इति। अनष्टरसानि रसपूर्णभाण्डानि। यः पुनः गृहान्तरवासी सन्नपि चण्डालप्रवेशवति गृहे कदाचिद्भुङ्क्ते, भुक्तवतस्तस्यापि गृहे योऽन्यो गृहान्तरवासी समागत्य भुङ्क्ते तयोरुभयोः प्रायश्चित्तमापस्तम्बो दर्शयति—

---

१ M. reads कुर्वीताऽप्यन्यत् for कुर्वीत शेष. २. I. reads समाचरेत् for च कारयेत्. ३. M reads:—

गृहस्याभ्यन्यरे गच्छेच्चण्डालो यस्य कस्यचित् ।
तस्माद्गृहाद्विनि सृत्य गृहभाण्डानि वर्जयेत ॥.

४ I. and L read तमागारात् for तमगारात्; while K. and L. read विनि.सार्य for विनिर्वास्य. ५. All, except A. and M. read मृद्भाण्ड for यद्भाण्ड. ६. M. reads गोरसेन for गोमयेन.

'अविज्ञातश्च[1] चण्डालस्तिष्ठते यत्र[2] वेश्मनि।
स विज्ञातस्तु कालेन तत्र कार्यं विशोधनम् ॥
प्राजापत्यं तु शूद्राणां तेषां तदनुसारतः।
यैस्तत्र भुक्तं पक्वान्नं कृच्छ्रार्धं तेषु दापयेत्[3] ॥
तेषामपि तु यैर्भुक्तं पादमेकं विधीयते।
कूपैकपानैर्दुष्टानां[4] स्पर्श-सम्पर्कदूषितः ॥
नरो ह्येकोपवासेन पञ्चगव्येन शुद्ध्यति।
बालापत्या तथा रोगी गर्भिणी या तु दूषिता ॥
तेषां नक्तं प्रदातव्यं बालानां प्रहरद्वयम्'।
(आ. स्मृ. ३. १-९)

इति ॥ ४६-४७ ॥

अथ कृम्युपहतदेहस्य वर्णभेदेन भिन्नां शुद्धिमाह-

---

१ The text reads these ślokas as follows —
अन्त्यजातिमविज्ञातो निवसेद्यस्य वेश्मनि।
सम्यग ज्ञात्वा तु कालेन द्विजाः कुर्वन्त्यनुग्रहम ॥
चान्द्रायणं पराकों वा द्विजातीनां विशोधनम्।
प्राजापत्य तु शूद्रस्य शेष तदनुसारत ॥
यैर्भुक्त तत्र पक्वान्नं कृच्छ्र तेषां प्रदापयेत।
तेषामपि च यैर्भुक्तं कृच्छ्रपाद प्रदापयेत् ॥
कूपैकपानैर्दुष्टाना स्पर्शन शवदूषणाम्।
तेषामेकोपवासेन पञ्चगव्येन शोधनम् ॥
बालो वृद्धस्तथा रोगी गर्भिणी वापि पीडिता।
तेषा नक्त प्रदातव्य बालाना प्रहरद्वयम् ॥

The third line of this quotation, though necessary is omitted by all. The readings of the text are better than all others.
२ I. reads यस्य for यत्र. ३. I reads यैस्तेषामपि विर्भुक्तं and C. and F नेषामापवि यैर्भुक्तं for तेषामपि तु यैर्भुक्तं. ४. C. and F. read-दृष्टान्त. स्पर्श-, B. D. E. G and H. -दृष्टान्तस्पर्श- and I. -दृष्टान्नस्पर्श- for दुष्टानां स्पर्श-, But the corresponding line in the text gives a better sense; while J. substitutes -पाते-for पाने-.

ब्राह्मणस्य व्रणद्वारे पूय-शोणितसम्भवे ।
कृमिरुत्पद्यते यस्य[1] प्रायश्चित्तं कथं भवेत्? ॥ ४८ ॥
गवां मूत्र-पुरीषेण दध्ना क्षीरेण[2] सर्पिषा ।
त्र्यहं स्नात्वा च पीत्वा च कृमिदुष्टः शुचिर्भवेत् ॥४९॥
क्षत्रियोऽपि सुवर्णस्य पञ्च माषान् प्रदाय[3] तु ।
गोदक्षिणां तु वैश्यस्याप्युपवासं विनिर्दिशेत् ॥५०॥
शूद्राणां नोपवासः स्यात् शूद्रो दानेन शुद्ध्यति ।

इति । यद्यपि कृम्युत्पत्तिर्विहितातिक्रम-प्रतिषिद्धाचरणरूपा न भवति तथापि जन्मान्तरसञ्चितदुरितफलरूपायास्तस्या विहितकर्मानुष्ठानाधिकारविरोध्यशुद्ध्यापादकत्वात् तन्निवृत्तयेऽवश्यं शुद्धिः कर्त्तव्या । सा च शुद्धिः प्रायश्चित्तसमानत्वात् प्रायश्चित्तप्रकरणे वक्तुमुचिता । प्रायश्चित्तसाम्यमभिप्रेत्य प्रश्नवाक्ये प्रायश्चित्तशब्देन व्यवहारः । मुख्यप्रायश्चित्ताभावं द्योतयितुं सन्देहद्योतकः कथंशब्दः *प्रयुक्तः । तत्र ब्राह्मणस्य दिनत्रयं पञ्चगव्यस्नान-पाने । क्षत्रियस्य पञ्चमाषपरिमितं सुवर्णदानं च † । पञ्चकृष्णलात्मको माषः । तदाह याज्ञवल्क्यः—

---

* धरणीधरस्तु—
'स्मृत्यन्तरोक्तप्रायश्चित्तविप्रतिपत्तिव्यवस्थापनार्थः कथं कुर्यादित्युपक्षेपः' इत्याह ।

† एतदप्युपवासान्ते एव ।

---

१. I. substitutes तस्य for यस्य. २. Except A. and M all read दधिक्षीरेण for दध्ना क्षीरेण. ३. I. reads प्रदापयेत्तु for प्रदाय तु.

'जालसूर्यमरीचिस्थं त्रसरेणूरजः स्मृतम् ।
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥
गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश' ॥
(या. स्मृ. १. ३६२–३६३)

इति । वैश्यस्य गोदानोपवासौ । शूद्रस्य गोदानमेव । एतच्च नाभेरधोभागे द्रष्टव्यम् । उपरिभागे तु मनुराह—

'ब्राह्मणस्य व्रणद्वारे पूय-शोणितसम्भवे ।
कृमिरुत्पद्यते यस्य[1] प्रायश्चित्तं कथं भवेत् ? ॥
गवां मूत्र-पुरीषेण त्रिसन्ध्यं स्नानमाचरेत् ।
त्रिरात्रं पञ्चगव्याशी त्वधोनाभ्या विशुद्ध्यति ॥
नाभि-कण्ठान्तरोद्भूते व्रणे चोत्पद्यते कृमिः ।
षड्रात्रं तु तदा प्रोक्तं प्राजापत्यं शिरोव्रणे' ॥

इति । यत्तु च्यवनेनोक्तम्—

'कृमिदर्शने सान्तपनं वृषभो दक्षिणा' ।

इति । तद्युगपत् बहुप्रदेशविषयम् ॥ ४८–४९–५० ॥

चर्यमाणे प्रायश्चित्ते न्यूनातिरेकदोषोपशान्तिर्विप्रवाक्याद्भवतीत्याह—

**अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ॥५१॥**

**प्रणम्य शिरसा ग्राह्यम्[3] अग्निष्टोमफलं हि तत् ।**

इति । विप्रवाक्यस्य छिद्रपरिपूरकत्वं सम्भावयितुमग्निष्टोम-

१ I reads यत्र- for यवो. २. C. E. F. G. and H. read यस्तु for यस्य.
३ M reads धार्यम् for ग्राह्यम्.

साम्येन तद्वाक्यं प्रशस्यते। अन्वय-व्यतिरेकाभ्यां विप्रवाक्य-स्य प्रयोजकत्वमाहापस्तम्बः—

'पूर्णेऽपि कालनियमे न शुद्धिर्ब्राह्मणैर्विना।
अपूर्णेष्वपि कालेषु शोधयन्ति द्विजोत्तमाः'॥
(आ. स्मृ. ३. १०)

इति ॥ ६१ ॥

महाफलसाधनेषु यज्ञादिष्वपि छिद्रपूर्त्तिर्विप्रवाक्यसाध्या। किमुतास्मिन् प्रायश्चित्तव्रते इत्यभिप्रेत्याह—

जपच्छिद्रं तपच्छिद्रं यच्छिद्रं यज्ञकर्मणि ॥६२॥
सर्वं भवति निश्छिद्रं ब्राह्मणैरुपपादितम्।

इति। यद्यपि विप्रवाक्यस्य समस्तव्रतशेषत्वादिदं प्रायश्चि-त्तप्रकरणान्ते वक्तुमुचितम् तथापि द्रव्यशुद्धिप्रकरणस्यात्रापि स्वीकृतत्वादवान्तरप्रायश्चित्तप्रकरणस्य समाप्ताविदमुक्तमित्य-विरोधः ॥ ६२ ॥

आपत्काले स्वयं व्रतं कर्त्तुमशक्तश्चेत् तदा ब्राह्मणैः कार-येदित्याह—

व्याधिव्यसनिनि श्रान्ते दुर्भिक्षे डामरे *तथा ॥६३॥

* दुर्भिक्षे इति दैविकदोषोपलक्षणम्। डामरः चौरलुण्ठनादिः 'डिम्बे डमर-विप्लवौ'- इति नामलिङ्गानुशासनात्। क्षीरस्वामी तु 'अशस्त्रकलह' इत्याह। डमर एव डामरः तस्मिन्। इदं च राजि-कमात्रोपक्षणम्।

१ I reads प्रयोजनकत्वम् and has प्रयोजनवत्त्वम in the footnote as a correct reading २. These two lines of the text are given in M. before the 61st Sloka. ३ K. and L. read, उपपादितं.

उपवासो व्रतं होमो द्विजसम्पादितानि वै[2]।

इति। व्याधिना व्यसनी राजयक्ष्मादिप्रबलरोगग्रस्तः। श्रान्त आहवा-ऽध्वगमनादिना*। तयोरुभयोः व्रतं पुत्रादिरनुतिष्ठेत्। तदाह आपस्तम्बः—

'अशक्तस्यापि बालस्य पिता वा यदि वा गुरुः।
तद्व्रतं तस्य गृह्णीयात् ततो मुच्येत किल्बिषात्'॥

इति। दुर्भिक्षं दैविको दोषः। डामरं परराजाद्युपप्लवः। तत्रोभयत्रावश्यकबहुकुटुम्बभरणाद्यवरुद्धः तदनवरुद्धेन सख्यादिना व्रतं कारयेत्॥ ५३॥

अत्यन्तापदमभिप्रेत्य पक्षान्तरमाह—

अथवा ब्राह्मणास्तुष्टाः सर्वे कुर्वन्त्यनुग्रहम्॥५४॥
सर्वान् कामानवाप्नोति द्विजसम्पादितैरिह।

इति। ब्राह्मणा वेदपारगा महान्तः पूर्वकृतोपकारादिना तुष्टाः सन्तोऽस्यामापदि निर्दोषस्त्वमित्यनुगृह्णन्ति तदा तावतैवास्य विशुद्धिः। अनुष्ठानमन्तरेणापि महापुरुषवचनमात्रसम्पादितैराशीर्विशेषैरशेषकामप्राप्तिर्भवति। तत्र पापक्षयो भवतीति को विस्मयः। महापुरुषस्य गुरु-पित्रादेः सङ्कल्पमात्रादेव कामप्राप्तिराथर्वणे श्रूयते—

* 'पितृशुश्रूषादिना' इत्यपि केचनाहुः।

१. This fifty-fourth Sloka appears in M after the sixtieth Sloka of the text. २. K. L. and M. read वा for वै. ३. I. reads पित्रादि for पुत्रादि. ४. B. and D. substitute यत्र for उभयत्र and अविरुद्ध for अवरुद्ध. ५. M. reads—

सर्वधर्ममवाप्नोति द्विजैः संवर्धिताशिषा।

'यं यं लोकं मनसा संविभाति*
विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामान्
तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' ॥

(मुं. उ. ३. १. १०)

इति ॥ ५४ ॥

अन्वय-व्यतिरेकाभ्यां महदनुग्रहस्य विषयं दर्शयति—

दुर्बलेऽनुग्रहः प्रोक्तस्तथा वै बाल-वृद्धयोः ॥५५॥
अतोऽन्यथा भवेद्दोषः तस्मान्नानुग्रहः स्मृतः ।

इति । दुर्बलः पूर्वोक्तव्याधिग्रस्तादिः† । दुर्बल-बाल-वृद्धानामनुग्रहणे योग्या महान्तो देवलेन दर्शिताः—

'प्रायश्चित्तं यथोद्दिष्टमशक्यं दुर्बलादिभिः ।
इष्यतेऽनुग्रहस्तेषां लोकसङ्ग्रहकारणात् ॥

* 'संविभाति' मह्यमन्यस्मै वा भवेदिति सङ्कल्पयति । 'विशुद्धसत्त्वः' क्षीणक्लेशः आत्मवित् निर्मलान्तःकरणः । 'तं तं लोकं तांश्च कामान् जयते' प्राप्नोति 'तस्मात् विदुषः सत्यसङ्कल्पत्वात् । 'आत्मज्ञं' आत्मज्ञानेन विशुद्धान्तःकरणम् ।

† 'धन-विद्याऽभिजनहीनो दुर्बल'—इति धरणीधरः । बाल-वृद्धौ-

'अशीतिर्यस्य वर्षाणि बालो वा ऽप्यूनषोडशः' ।

इत्युक्तलक्षणौ । 'सप्तत्यूर्ध्वगतो बाल '—इति केचित् । 'तथा' शब्देनात्र 'स्त्रिया अपि सङ्ग्रहः कार्य'—इति धरणीधरः । युक्तं चैतत् । तासामबलात्वात् ता अपि अनुग्रहार्हा एव ।

१. K. L and M. read कार्यः for प्रोक्तः. २. Except M. all read मतो for अतो.

एको नार्हति तत् कर्तुमज्ञो वा नाऽप्यनुग्रहम् ।
धर्मज्ञा बहवो विप्राः कर्तुमर्हन्त्यनुग्रहम्' ॥

इति । अतोऽन्यथा प्रबलस्यानुग्रहे प्रत्यवायः । तस्मात्तान्नानुगृह्णीयात् ॥ ५५ ॥

प्रबलं युवानमनुगृह्णतः प्रत्यवायं[1] विशदयति—

**स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा ॥ ५६ ॥**
**कुर्वन्त्यनुग्रहं ये तु[2] तत्पापं तेषु गच्छति ।**

इति । स्नेहादनुग्रहः पुत्र-मित्रादिषु । लोभाद्धनिकेषु । अज्ञानाद्दुर्बलेष्वनुग्रह इति शास्त्रमज्ञात्वा पण्डितम्मन्यतया यस्मिन् कस्मिंश्चिदनुग्रहः । यद्यपि परकीयं पापमितरस्मिन्न संक्रामति तथापि परीक्षामकृत्वा प्रायश्चित्तं विधातुरयथाशास्त्रानुष्ठाननिमित्तं पापान्तरमुदेतीत्यभिप्रेत्य तत्पापं तेषु गच्छतीत्युक्तमिति ।

एवं प्रायश्चित्ताधिकारिणं सम्यक् परीक्ष्य प्रायश्चित्तं विधेयम् । तदाह देवलः—

'कर्त्तारं देश-कालौ च प्रमाणं कारणं क्रियाम्[3] ।
अवेक्ष्य च बलं चैव प्रायश्चित्तं विधीयते' ॥

इति । बौधायनोऽपि—

'शरीरं बलमायुश्च वयः कालं च कर्म च ।
परीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तं प्रकल्पयेत्' ॥
(बौ. स्मृ. १. १. १. १९)

इति ॥ ५६ ॥

---

१. I. reads प्रत्यवायः for प्रत्यवायं. २ M. reads वै for तु and B. and D. read तस्य for तेषु. ३. J reads क्रिया for क्रियाम्.

अनुग्रहमनर्हतः प्रबलस्यानुग्रहे यथा प्रत्यवायः तथाऽनुग्रहयोग्यस्य दुर्बलस्य नियमविधानेऽपि प्रत्यवाय इत्याह—

शरीरस्यात्यये प्राप्ते[1] वदन्ति नियमं तु ये ॥५७॥
महत्कार्योपरोधेन[2] न स्वस्थस्य कदाचन ।

इति । शरीरस्यात्ययो[3] मुमूर्षोर्भूम्यां शयनम् । तस्मिन् प्राप्ते सति तेन[4] कर्त्तुमशक्यं प्रायश्चित्तव्रतादिनियमं कर्त्तव्यत्वेन ये वदन्ति तेषु तत्पापं गच्छतीति पूर्ववाक्यादनुषज्ज्यते । तत्र हेतुः । महत्कार्योपरोधेनेति । महतां देवतोपासकानां योगिनां कार्यं महत्कार्यम् । अन्तकाले देवतास्मरणादि । तस्योपरोधः प्रतिबन्धः । मुमूर्षुर्हि परिसरवर्त्तिभिराप्तैर्बोधितो देवतां स्मर्त्तुमुद्युङ्क्ते तदानीमेतां[5] तदुक्तव्रतकर्त्तव्यतां श्रुत्वा कर्त्तुमशक्नुवन् व्याकुलचित्तः पूर्वमुद्युक्तां देवतास्मृतिमपि परित्यजति । सोऽयं पुरुषार्थप्रतिबन्धः । तस्य च निमित्तं प्रायश्चित्तविधातार इति युक्तस्तेषां प्रत्यवायः । एवं तर्हि सर्वत्र प्रायश्चित्तं विधातुं भीताः स्युरित्याशङ्क्योक्तं न स्वस्थस्य कदाचनेति । स्वस्थशरीरस्य[6] पूर्वोक्तः कार्योपरोधः कदाचिदपि नास्तीति तत्प्रति प्रायश्चित्तं विधातुं न भेतव्यमिति भावः ॥ ५७ ॥

'व्याधिव्यसनिनि' (६,५२) इत्यत्र प्रतिनिधित्वेन व्रतमनुष्ठेयमित्युक्तम् । इदानीं तस्य व्यतिरेकमाह—

---

१ B and D. substitute मूढा for प्राप्ते. २. K. and L. read -उपरोधे च for -उपरोधेन ३. B. D. I. and J. read अत्यये for अत्ययो. ४. G. and H read तत्कर्तुम् for तेन कर्तुम्. ५. I. reads एव for एतां. ६. G. and H. read -शरीरे for -शरीरस्य.

स्वस्थस्य मूढाः कुर्वन्ति वदन्त्यनियमं* तु ये ॥५८॥
ते तस्य विघ्नकर्त्तारः पतन्ति नरकेऽशुचौ।

इति। ये तु मूढा व्याध्यादिग्रस्तस्यैव प्रतिनिधिरिति शास्त्ररहस्यमजानन्तः स्वस्थस्य कस्यचित् परिवृढादेः दाक्षिण्यादिना तदीयं व्रतनियममनुतिष्ठन्ति तस्य च नियमाभावं शास्त्रीयत्वेन वदन्ति। ते प्रतिनिधित्वेनानुतिष्ठन्तः शास्त्रार्थं चान्यथा वदन्तः तस्य स्वस्थस्य पापनिवृत्तिविघ्नं चरन्तो रौरवादिके नरके पतन्ति ॥ ५८ ॥

इदानीं पण्डितम्मन्यतया विप्रवाक्यमवज्ञाय स्वेच्छयैव किञ्चिद्व्रतं शास्त्रीयत्वेन परिकल्प्यानुतिष्ठतो न पापनिवृत्तिरित्याह—

स्वयमेव व्रतं[1] कृत्वा ब्राह्मणं योऽवमन्यते ॥ ५९ ॥
वृथा तस्योपवासः स्यान्न स पुण्येन युज्यते[2]।

इति। स्वकपोलकल्पितव्रतस्य पापनिवर्त्तकत्वाभावः शातातपेन स्पष्टीकृतः—

* अत्र आन्ध्राक्षरातिरिक्तसर्वेष्वप्यादर्शपुस्तकेषु 'वदन्ति नियमं' इति वर्त्तते। परं श्रीमता माधवाचार्येण—'तस्य च नियमाभाव शास्त्रीयत्वेन वदन्ति' इति व्याख्यातत्वात् 'वदन्त्यनियम' अयमेव पाठस्तस्य सम्मत इति स्पष्ट प्रतिभाति।

१. We follow here A. K. and L., while B. C. D. E. F. G. H. I. and J. read स एव नियमं त्यक्त्वा M. स एव नियमन्त्याज्यां- for स्वयमेव व्रतं कृत्वा. २. K. and L. read लिप्यते for युज्यते.

'यद् विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते ।
न तेन शुद्धिमाप्नोति प्रायश्चित्ते कृतेऽपि सः' ॥

इति ॥ ५९ ॥

व्यतिरेकमुक्त्वाऽन्वयमाह—

स एव नियमो ग्राह्यो यद्येकोऽपि वदेद् द्विजः ॥६०॥
कुर्याद्वाक्यं द्विजानां तु अन्यथा भ्रूणहा भवेत् ।

इति । धर्मरहस्येऽभिज्ञानां बहूनां द्विजानां प्रायश्चित्तविधानं मुख्यः कल्पः । एकस्य विधायकत्वमनुकल्पः । उभयथा ऽपि विप्रेणानुज्ञात एवेति नियमो ज्ञातव्यः । अन्यथा द्विजानुज्ञामन्तरेण स्वयमेव शास्त्रं पर्यालोच्य प्रकटपापस्य प्रायश्चित्तं कुर्वन् प्रत्यवायी स्यात् ॥ ६० ॥

विप्रवाक्यस्य प्रायश्चित्तप्रयोजकत्वं प्रतिपादयति—

ब्राह्मणा जङ्गमं* तीर्थं तीर्थभूता हि साधवः ॥ ६१ ॥
तेषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ।

इति । साधूनां तीर्थरूपत्वं शुद्धस्वरूपत्वात् । तथा च श्रूयते—

* पुष्करादीनि तीर्थानि तु प्रतिनियतस्थल एव वर्तन्ते । इदं तु तद्विलक्षणं जङ्गमं तीर्थम् । तानि च नियतकालमज्जनादिना शुद्धिं प्रयच्छन्ति इदं तु वाक्यरूपेणोदकेन तत्कालमेव पावित्र्यापादकम् । अतः सर्वथा इतरविलक्षणमेतदिति भावः ।

१. M. reads य यं कोऽपि for यद्येकोऽपि. २. M. reads च अकुर्वन् ब्रह्महा for तु अन्यथा भ्रूणहा. ३. B. and D read रहस्याभिज्ञानां for रहस्येऽभिज्ञानां ४ I. omits इति and reads नियमोऽनुष्ठातव्यः for नियमो ज्ञातव्यः. ५. M. reads निर्जलं सर्वकामदम् for तीर्थभूता हि साधवः.

'अग्निः शुचिव्रततमः[1] शुचिर्विप्रः शुचिः कविः'।

(ऋ. सं. ६. ६. ४०. १)

इति ॥ ६१ ॥

विशिष्टमाता-पितृजन्यत्वं ब्राह्मणत्वम्। न केवलं तावतैव ब्राह्मणवाक्यस्य प्रशस्तत्वम्। किन्त्वनेकदेवताप्रतिपादकानां वैदिकमन्त्राणां धारणया सर्वदेवतात्मकत्वेनापि तद्वाक्यं प्रशस्तमित्याह—

**ब्राह्मणा यानि* भाषन्ते मन्यन्ते[2] तानि देवताः॥ ६२॥**

**सर्वदेवमयो[3] विप्रो न तद्वचनमन्यथा।**

इति। ब्रह्म वेदः। निरन्तरं तन्निष्ठाः सन्तस्तदर्थं यथावद् ब्रुवाणा ब्राह्मणाः। अतो वेदविद्वचनं देवता अनुमन्यन्ते। तस्य च सर्वदेवमयत्वं श्रूयते—

'यावतीर्वै देवतास्ताः सर्वा वेदविदि[4] ब्राह्मणे वसन्ति'।

इति। अङ्गिरा अपि—

'ब्राह्मणो[5] देवताः सर्वाः स च सर्वस्य दैवतम्'।

इति ॥ ६२ ॥

---

* 'यानि' शुभान्यशुभानि वा वचांसि ब्राह्मणा वदन्ति तानि देवता अनुमन्यन्ते इत्यर्थः।

---

१ All, except A and the text of Rik Samhitâ read. शुचिव्रततमः Also the Vaidic Pâtha is शुचिव्रततम. २. M. reads भाषन्ते for मन्यन्ते. ३. K. reads सर्वदेवमया विप्राः and M. सर्वदेवमया विप्राः. ४. I. reads वदविद् for वेदविदि, but the Vaidic Pâtha does not agree with it. ५. All, except A. I. and J. read ब्राह्मणा for ब्राह्मणो.

"*यदेव विद्यया * * * करोति तदेव वीर्यवत्तरं भवति'।
(छा. उ. १. १. १०)

इति श्रुतौ विद्यासंयुक्तं कर्म केवलात् कर्मणः प्रशस्तमिति श्रुतम्। तेनैव न्यायेन विद्यासंयुक्तं व्रतं केवलाद्व्रतात् प्रशस्तमित्याह—

उपवासो[2] व्रतं चैव स्नानं तीर्थं जपस्तपः ॥ ६३ ॥
विप्रसम्पादितं यस्य सम्पूर्णं तस्य तत्फलम् ।

इति। विप्रसम्पादितं विप्रैरनुज्ञातं उपवासादिकम्। फलसम्पूर्त्तिर्निःशेषेणाशुद्धिनिवृत्तिः ॥ ६३ ॥

कृम्युपहतस्य देहस्य शुद्धिमुक्त्वा तादृशस्यैवान्यस्य शुद्धिमाह—

अन्नाद्ये कीटसंयुक्ते मक्षिका-केश[3]दूषिते ॥ ६४ ॥
तदन्तरा[4] स्पृशेच्चापस्तदन्नं भस्मना स्पृशेत् ।

इति। अत्तुं योग्यमद्यम्। अन्नं च तदद्यं च अन्नाद्यं पक्वमन्नम्। न त्वाममित्यर्थः। तद् यदि भोजनपात्रे भाण्डे वा कीटेन

---

* तस्मात् यदेव 'विद्यया' विज्ञानेन 'करोति' तदेव कर्म 'वीर्यवत्तरं अविद्वत्कर्मणो ऽधिकफलं भवति इत्यर्थः।

१. After this word the text has श्रद्धयोपनिषदा, but the author omits it as it is unnecessary here. २ D. omits these two lines of the text—
उपवासो व्रत चैव स्नान तीर्थं जपस्तप ॥ ६३ ॥
विप्रसम्पादित यस्य सम्पूर्णं तस्य तत्फलम् ।
३. M. reads-कीट- for-केश-. ४. M reads अन्तरा संस्पृशेत् for तदन्तरा स्पृशेत्.

मक्षिकया केशेन वा संयुज्यते तदा तत् कीटादिकमपनीय तस्यान्नस्याभ्यन्तरेऽद्भिः सम्प्रोक्ष्य किञ्चिद्भस्म प्रक्षिपेत्। मक्षिकादिदूषितत्वं गोघ्रातत्वादीनामुपलक्षणम्। अत एव बृहस्पतिः—

'गोघ्राते च क्षुते वान्ते[1] मक्षिका-केशदूषिते।
मृद्भस्म-सलिलं चैव प्रक्षेप्तव्यं विशुद्धये'॥

इति। मनुरपि—

'पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्।
दूषितं केश-कीटैश्च मृत्प्रक्षेपेण विशुद्ध्यति'[2]॥

(म. स्मृ. ५. १२५)

इति। वस्त्रावधूननरेणुस्पृष्टमवधूतम्। क्षुतोत्पन्नबिन्दुस्पृष्टमवक्षुतम्। यत्तु गौतमेनोक्तम्—

'नित्यमभोज्यं केश-कीटावपन्नम्'।

इति तत् केश-कीटादिभिः सह पक्वविषयम्॥ ६४॥

केश-कीटादिदूषितान्नशोधनप्रसङ्गेन बुद्धिस्थं भोजनकालीनं कञ्चिन्नियमविशेषमाह[3]—

भुञ्जानश्चैव यो[4] विप्रः पादं हस्तेन संस्पृशेत्॥६५॥
स्वमुच्छिष्टमसौ[5] भुङ्क्ते पाणिना मुक्तभाजने[6]।

---

१. I. reads वाऽन्ते for वान्ते. २. The text reads मृत्प्रक्षेपेण शुद्ध्यति. ३. I reads किञ्चित् for कञ्चित् ४. M. reads भुञ्जानो वाऽथ वा for भुञ्जानश्चैव यो. ५ M. reads उच्छिष्ट हि स वै for स्वमुच्छिष्टमसौ. ६. B. D. E. G. J. and M. read यो भुङ्क्ते भुक्तभाजने for पाणिना मुक्तभाजने, H. I. and K. read यो भुङ्क्ते for पाणिना, K. reads मुक्तभाजनः and L मुक्तभाजनैः for मुक्तभाजने.

**पादुकास्थो न भुञ्जीत पर्यङ्के[1] संस्थितोऽपि वा ॥ ६६ ॥**

**श्वान[2]-चण्डालदृष्टौ च भोजनं परिवर्जयेत् ।**

इति । वामहस्तेन पादसंस्पर्शे सति स्वोच्छिष्टभोजने यावान् प्रत्यवायः तावानेव भवति । वामहस्तेन पात्रमनालभ्य भोजनेऽपि तावानेव प्रत्यवायः । पीठे समुपविष्टः पद्भ्यां पादुके आक्रम्य न भुञ्जीत । तथा पर्यङ्के स्थित्वा वोर्ध्वं स्थित्वा वा न भुञ्जीत । भोजनमध्ये श्वादिदर्शने भोजनमेव परित्यजेत् । पादुकास्थ इत्येतावद्भिन्नासनगतादीनामप्युपलक्षणम् । अत एव व्यासः—

> 'न[3] च भिन्नासनगतो न शयान[4]ः स्थितोऽपि वा ।
> न पादुकास्थितो वाऽपि न हसन् विलपन्नपि '॥

इति ॥ ६५–६६ ॥

'अन्नाद्य' (६,६४) इत्यनेन प्रासङ्गिकमन्नशोधनमुक्तम् । इदानीं प्राधान्येन शुद्धिप्रकरणमेवानुवर्त्तयितुमिच्छन्[5] प्रतिजानीते—

**यद[6]न्नं प्रतिषिद्धं स्यादन्नशुद्धिस्तथैव च ॥ ६७ ॥**

---

१. Except A. and M. read पर्यङ्के सस्थितोऽपि वा and K. and L read न पर्यङ्कास्थितोऽपि वा. for पर्यङ्के सस्थितो ऽपि वा. २. B. C. D. E. F. G H. J. and L. read श्वान-चाण्डालवृक चैव and M. शुना चाण्डालदृष्टो वा for श्वान-चण्डालदृष्टौ च. ३. B. and D. read नाव- for न च ४. J. reads शय्यायां for शयान-. ५ H. reads इच्छुः for इच्छन्; while. I. omits both. ६. M. reads पक्वान्न च निषिद्धं यत् for यदन्नं प्रतिषिद्धं स्यात्.

यथा पराशरेणोक्तं तथैवाहं वदामि वः ।

इति । यदन्नं प्रतिषिद्धं तथैव या चान्नस्य शुद्धिः तत्सर्वं वृद्धपराशरेण पूर्वकल्पीयस्मृतिकर्त्रा यथोक्तं* तथा वदामि । तत्र तत्र वचने पराशरपरामर्शस्यायमभिप्रायः[1]—

'धाता यथापूर्वमकल्पयत्'।

(ऋ. सं. ८. ८. ४८. ३)

इति ।

'यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु' ॥[2]

(म. स्मृ. १. ३०)

इत्यादि श्रुति-स्मृतिभ्यां प्रतिकल्पमधिकारिपुरुषाणां मनु-वसिष्ठादीनां समानसृष्टिप्रतिभानात् कलियुगधर्मशास्त्राधिकारी पराशरोऽपि तस्मिंस्तस्मिन् कल्पे सृज्यते । अतोऽस्मिन्नपि कल्पे कलियुगधर्मेषु मदुक्तस्य ग्रन्थस्य प्राधान्यं न विस्मर्त्तव्यमिति ॥ ६७ ॥

प्रतिज्ञाते प्रतिषिद्ध-शुद्धी[3] दर्शयति—

शृतं[4] द्रोणाढकस्यान्नं काक-श्वानोपघातितम् ॥ ६८ ॥

---

* 'तत्र या पूर्वकलिधर्मप्रवचने पराशरेण शुद्धिरुक्ता तामेवास्मिन् कलियुगे ऽहं वदामि । पुनः पराशरपरामर्शः सम्प्रदायाविच्छेदनार्थः' इति धरणीधरः ।

१ B and D. omit -परामर्शस्य.　२ The text reads—
यथर्तुलिङ्गान्यृतव· स्वयमेवर्तुपर्यये ।
स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिन· ॥.

३. A. reads प्रतिज्ञातां प्रतिषिद्धशुद्धिं.　४. M. reads मितं for शृतं.

केनेदं[1] शुद्ध्यते[2] चेति ब्राह्मणेभ्यो निवेदयेत् ।

इति । द्रोणा-ऽऽढकशब्दयोरर्थं वक्ष्यति । द्रोणेनाढकेन वा परिमितस्य व्रीहि-यवादिद्रव्यस्य सम्बन्धि पक्कमन्नं श्व-काकाभ्यां यदि लेहनादिनोपघातितं स्यात् तदा स्वयं शास्त्रज्ञोऽपि तच्छुद्धिसिद्धये धर्मज्ञान् ब्राह्मणान्वाचयितुं केनेदं शुद्ध्यतीति पृच्छेत् ॥ ६८ ॥

ततो धर्मरहस्यविद्ब्राह्मणनिर्दिष्टां शुद्धिं चिकीर्षुस्तदन्नं संगृह्णीयात् न तु परित्यजेत् इत्याह—

काक-श्वानावलीढं तु[3] द्रोणान्नं न परित्यजेत् ॥६९॥

इति । द्रोणशब्देना-ऽऽढकोऽप्युपलक्ष्यते ॥ ६९ ॥

इदानीं द्रोणा-ऽऽढकयोः परिमाणमाह—

वेद-वेदाङ्गविद्विप्रैर्धर्मशास्त्रानुपालकैः ।
प्रस्था द्वात्रिंशतिर्द्रोणः स्मृतो द्विप्रस्थ आढकः[4] ॥७०॥

इति । नानादेशीयैर्विद्वद्भिस्तात्कालिकस्वस्वव्यवहारनिर्वाहाय स्वेच्छयैव द्रोणादिपरिमाणानि निर्णीयन्ते । तानि नाऽशास्त्रीयाणीत्यभिप्रेत्य वेद-वेदाङ्गेत्यादिना विशेषितम् ॥ ७० ॥

---

१ M. reads केनैतत् for केनेदं. २. Except K. and L. all read चान्नं for चेति. ३. K. and L. read सत् for तु. ४. Except A. K. L. and M. all read -माढकम् for आढक.

यववराहाधिकरणन्यायेन *शास्त्रज्ञप्रसिद्ध एव शास्त्रार्थो ऽत्र[1] ग्रहीतव्यो न तु म्लेच्छप्रसिद्ध इत्याह—

**ततो द्रोणा-ऽऽढकस्यान्नं श्रुति-स्मृतिविदो विदुः ।**

इति । ततस्तस्मात् शास्त्रीयपरिमाणात् परिमितं यत् द्रोणा-ऽऽढकस्यान्नं तदेवात्र शुद्धमिति शास्त्रे विवक्षितमिति श्रुति-स्मृतिकुशला मन्यन्ते । ननु—शास्त्र एव द्रोणा-ऽऽढकपरिमाणमन्यथाऽभिहितम् । तथा च भविष्यत्पुराणम्—

'पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥
आढकैस्तैश्चतुर्भिस्तु द्रोणस्तु कथितो बुधैः ।
कुम्भो द्रोणद्वयं प्रोक्तं खारी द्रोणास्तु षोडश' ॥

इति । नैष दोषः । देशभेदेन शास्त्रद्वयस्य व्यवस्थापनीयत्वात् ॥

द्रोणा-ऽऽढकशब्दव्यावर्त्त्यमाह—

**काक-श्वानावलीढं तु गवाघ्रातं खरेण वा ॥ ७१ ॥**
**स्वल्पमन्नं त्यजेद्विप्रः शुद्धिर्द्रोणा-ऽऽढके भवेत् ।**

---

* इदं चाधिकरणम्—

'चोदितं तु प्रतीयेताविरोधात् प्रमाणेन' ।

(मी. सू. १. ३. १०)

इत्यस्मिन् सूत्रे जैमिनीयन्यायमालायां द्रष्टव्यम् । विस्तरस्तु एतस्मिन्नेव सूत्रे तन्त्रवार्तिके ऽवगन्तव्यः ।

१. I. omits अत्र.

इति। धनिकविषयं द्रोणपरिमाणम्। निर्धनविषयमाढकपरिमाणम्। तत्र यथायथं द्रोणा-ऽऽढकाच्च स्वल्पमन्नं काकादिभिरवलीढं चेत् तत् परित्याज्यमेव। विवक्षिता शुद्धिर्द्रोणा-ऽऽढकविषयेति द्रष्टव्यम्॥ ७१॥

तां शुद्धिं दर्शयति—

अन्नस्योद्धृत्य तन्मात्रं यच्च लालोहतं भवेत्॥७२॥
सुवर्णोदकमभ्युक्ष्य हुताशेनैव तापयेत्।
हुताशनेन संस्पृष्टं सुवर्णसलिलेन च॥ ७३॥
विप्राणां ब्रह्मघोषेण भोज्यं भवति तत्क्षणात्।

इति। द्रोणा-ऽऽढकपरिमितस्यान्नस्य मध्ये यावति भागे संस्पर्शसम्भावना तावन्तं भागमपनयेत्। अवशिष्टेऽपि यावति लालास्पर्शः सम्भावितः तावदपनयेत्। इतरत् सर्वं सुवर्णयुक्तेनोदकेन सम्प्रोक्ष्य सकृत् वह्नौ तापयेत्। ताभ्यां सुवर्णोदक-वह्निभ्यां संस्कृतं पुनः शुद्धिहेतूनां पवमानसूक्तादीनां घोषेण संस्कृत्य विप्रैरनुज्ञातं तद्भुञ्जीत। अत एव बौधायनः—

'सिद्धहविषाम्। (१४) महतां श्व-वायस-प्रभृत्युपहतानां तदग्रं पिण्डमात्रमुद्धृत्य पवमानः सुवर्जन इत्यनेनाभ्युक्षणम्। (१५) मधूदके

१. I. reads तच्च for तत्र and द्रोणा-ऽऽढकपरिमाणाच्च for द्रोणाढकाच्च.
२. M. reads नोपहत for लालाहत

पयोविकारे पात्रात् पात्रान्तरानयनेन शौचम्।
एवं तैल-सर्पिषी'।

(बौ. स्मृ. १. ६. १४. १४–१६)

इति। जमदग्निरपि—

'शृतान्नं द्रोणमात्रस्य श्व-काकाद्युपघातितम्।
ग्रासमुद्धृत्याग्नियोगात् प्रोक्षणं तत्र शोधनम्॥
अन्नमेकाढकं पक्कं श्व-काकाद्युपघातितम्।
केश-कीटावपन्नं च तदप्येवं विशुद्ध्यति॥
क्रीतस्यापि विनिर्दिष्टं तद्वदेव मनीषिभिः'।

इति। शातातपो ऽपि—

'केश-कीट-शुना स्पृष्टं वायसोपहतं च यत्।
क्लीबा-ऽभिशस्त-पतितैः सूतिकोदक्य-नास्तिकैः॥
दृष्टं वा स्याद् यदन्नं तु तस्य निष्कृतिरुच्यते।
अभ्युक्ष्य किञ्चिदुद्धृत्य तद्भुञ्जीत विशेषतः॥
भस्मना वाऽपि संस्पृश्य संस्पृशेदुल्मुकेन वा।
सुवर्ण-रजताभ्यां वा भोज्यं प्रातर्मजेन च'॥

इति। हारीतो ऽपि—

'श्व-काक-गृध्रोपघाते केश-कीट-पिपीलिका-
दिभिरन्नाद्युपघाते काञ्चन-भस्म-रजत-ताम्र-
वज्र-वैडूर्य-गोवाला-ऽजिनेभदन्तानामन्यत-

१ I. reads मुखेन गोः for अजेन च.

मेनाद्भिः संस्पृष्टं मन्त्रप्रोक्षण-पर्यग्निकरणा-
दित्यदर्शनात् शुद्धिर्भवति' ।

(हा. स्मृ. २०. ४६)

इति ॥ ७२–७३ ॥

अन्नस्य शुद्धिमुक्त्वा रसस्य शुद्धिमाह—

स्नेहो[1] वा गोरसो वाऽपि तत्र शुद्धिः कथं भवेत्?॥७४॥
अल्पं परित्यजेत् तत्र स्नेहस्योत्पवनेन च ।
अनलज्वालया शुद्धिर्गोरसस्य विधीयते ॥ ७५ ॥

## इति श्रीपराशरसंहितायां प्रायश्चित्त-काण्डे षष्ठोऽध्यायः ॥ ६ ॥

इति । स्नेहस्तैलादिः । गोरसः क्षीरादिः । तत्राल्पं चेत् श्वादिभिरुपहतं तत् त्याज्यमेव । अनल्पस्य[2] स्नेहस्य पाकेन शुद्धिः । अनल्पस्य[3] गोरसस्य वह्निज्वालया पर्यग्निकरणेन शुद्धिः । तदाह लौगाक्षिः—

'पयो-दधिविकारादि शुचि पात्रान्तरे स्थितम् ।
प्लावनोत्पवनाभ्यां च पर्यग्निकरणेन च' ॥

इति । प्लावनं[4] प्रोक्षणम् । शङ्खोऽपि—

---

१. These three lines of the text do not appear in M. २. B. D. and I. read अल्पस्य for अनल्पस्य. ३. Here also B. D. and I. read अल्पस्य. ४. C. F. H. and I. omit प्लावनं प्रोक्षणम्.

'प्लावनं घृत-तैलानां पाचनं गोरसस्य च।
भाण्डानि प्लावयेदद्भिः शाकं मूल-फलानि च॥
सिद्धमन्नं तथा सर्पिः क्षीरं च दधि चाऽम्बु च।
एषां शुनाऽवलीढानां तेजसा शुद्धिरिष्यते'॥

इति। शातातपस्तु विलीनाऽविलीनभेदेन व्यवस्थितां शुद्धिं दर्शयति—

'तापनं घृत-तैलानां मधुनो गोरसस्य च।
तन्मात्रमुद्धृतं शुद्ध्येत् कठिनं तु पयो दधि॥
अविलीनं तथा सर्पिर्विलीनं पेचनेन तु'।

इति। क्वचित्तु दोषाभावमाह शङ्खः—

'घृत-दधि-पयस्तक्राणामपवरकभाण्डे
स्थितानामदोषः। आधारदोषे तु
नयेत् पात्रात् पात्रान्तरं द्रव्यम्।
घृतं तु पायसं क्षीरं तथैवेक्षुरसो गुडः।
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति'॥

इति। यमोऽपि—

'देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च।
काकैः श्वभिस्तु संस्पृष्टमन्नं न तु विसर्जयेत्'॥

इति। देवद्रोणी देवयात्रा। शातातपोऽपि—

१. A. reads पवने and I. पावनं for पाचनं. २ Except A. and H. all read पवनेन for पचनेन ३. B. and D. read अपचरक- for अपवरक-. For the same C. and F. read आरकं G. and H. आकर- and I. आधार-.

'गोकुले यज्ञशालायां तिलचक्रेक्षुयन्त्रणे ।
न मीमांस्यानि शौचानि स्त्रीषु बालातुरेष्वपि' ॥

इति ॥

प्रकीर्णकरणाभिधे मलिनतावहाख्याधरे
वदन्तमुपपातकेऽप्युचितसत्क्रियां निष्कृतिम् ।
रसा-ऽन्नपरिशुद्धिमप्यकृत षष्ठमध्यायम-
प्युदारविवृत्तिं वशी मधुरवाङ्मयो माधवः ॥१॥

इति श्री-महाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां षष्ठोऽध्यायः ॥ ६ ॥

१. G. reads -क्रियानिष्कृतिम्.

# पराशरसंहिता

## अथ सप्तमोऽध्यायः ।

अन्न-रसयोः शुद्धिः षष्ठाध्याये वर्णिता । सप्तमाध्यायेऽवशिष्टानां द्रव्याणां शुद्धिं विवक्षुर्महाप्रकरण*प्राप्तप्रायश्चित्तशङ्काव्युदासाय प्रतिजानीते—

**अथातो द्रव्यशुद्धिस्तु[२] पराशरवचो यथा ।**

इति । अवान्तरप्रकरणमारभ्यान्न-रसशुद्धिकथनानन्तरं यस्मादितरद्रव्यशुद्धिर्बुद्धिस्था[३], यस्माच्चान्तरेण द्रव्यशुद्धिं महाप्रकरणगतप्रायश्चित्तव्रतचर्य्याया नित्यकर्मादीनां चानुष्ठानं निपुणं न भवति ततस्तत्साद्गुण्यहेतुद्रव्यशुद्धिरभिधीयते ॥ तत्र दर्वी-स्रुक्-स्रुवादीनामुच्छिष्टामेध्यादिदूषितानां शुद्धिमाह—

**दारवाणां तु पात्राणां तक्षणात्[४] शुद्धिरिष्यते ॥१॥**

इति । मूत्र-पुरीषादिप्रदेशे चिरावस्थानेन दृढवासितौ गन्ध-लेपौ[५] यदि मृज्जलप्रक्षालनेन नापगच्छेयातां तदा वास्यादिना दारवाणि तक्षणीयानि । तक्षणेनाप्यनपगमे परित्यागः । तदाह बौधायनः—

* महाप्रकरणं प्रायश्चित्तप्रकरणम् । द्रव्यशुद्ध्यादीन्यवान्तरप्रकरणानीति तात्पर्यम् ।

१ Except A. I and J. all read अन्न-रसशुद्धि २. B. and D. read स्यात् for तु and M. reads द्रव्यसशुद्धि for द्रव्यशुद्धिस्तु. ३. B. and D. read स्यात् तस्मादवान्तरेण for बुद्धिस्था यस्माच्चान्तरेण, while H. substitutes तस्मात् for यस्मात्. ४ L. and M. read तक्षणात् for तक्षणात् ५ I. reads गन्धलेपो for गन्ध-लेपौ and नापगच्छेत for नापगच्छेयातां.

'दारुमयाणां पात्राणामुच्छिष्टसमन्वारब्धा-
नामवलेखनम्* । (२) उच्छिष्टलेपोपहतानां
तक्षणम्' (२७) ।

(बौ. स्मृ. १. ६. १३. २६. २७)

इति । मूत्र-पुरीष-रेतःप्रभृतीनामल्पकालसंस्पर्शे तु गन्ध-लेपयोरपनेतुं शक्यत्वात् तदपनयनपर्यन्तं मृज्जलाभ्यां प्रयत्नेन प्रक्षालनीयानि ।

'यावन्नापैत्यमेध्याक्तात्† गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि देयं स्यात् सर्वासु द्रव्यशुद्धिषु' ॥

( म. स्मृ. ५. १२६ )

इति स्मरणात् । यत्र तु गन्ध-लेपपर्यन्तः संसर्गो नास्ति किन्तु केवलं संस्पर्शमात्रं तत्र प्रोक्षणात् शुद्धिः । एतदेवाभिप्रेत्य मनुराह—

'‡स्फ्य-शूर्प-शकटानां च मुसलोलूखलस्य च ॥
अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्य-वाससाम्' ।

(म. स्मृ. ५. ११७—११८)

* 'अवलेखनं' घर्षणपूर्वकं प्रक्षालनमित्यर्थः ।

† अमेध्यमस्पृश्यम् । तच्च यद्यस्य अभोज्यं तस्य तदशुद्धिहेतुः । यथा ब्राह्मणस्य सुरा-मद्यम् । शूद्रस्य तदयुक्तम् । प्राग्घोमात् हवींष्यभोज्यानि न च तान्यस्पृश्यानि । सुरा-मद्ये तु स्पर्शेऽपि प्रतिषिद्धानि ब्राह्मणस्य । तस्माद्यस्यैव स्पर्शः प्रतिषिद्धः स एव संसर्गेणाशुचित्वमापादयति । अतो नायं नियमो यदभोज्यं तदस्पृश्यं यदस्पृश्यं तदभोज्यमिति ।

‡ 'स्फ्यः' वज्रः यज्ञाङ्गभूतः काष्ठखड्गः । इयं च उदकप्रोक्षणरूपा शुद्धिः केवलं यज्ञकर्मण्येव नान्यत्रेति ध्येयम् ।

१. I reads -समार- for -समन्वार-. २. The text reads अवतक्षणम् for तक्षणम्. ३. I. omits -रेत-. ४. I. reads अमेध्याक्ते and B. C. D. E. F, G. H and J. अमेध्याक्तो for अमेध्याक्तात्. ५. The text reads तावन्मृद्वारि चादेयं for तावन्मृद्वारि देयं स्यात्. ६. Except D. and I. all omit तु.

इति। यज्ञकाले तु स एव विशेषमाह[1]—

'मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि।
चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन तु॥
चरूणां स्रुक्-स्रुवाणां च शुद्धिरुष्णेन वारिणा'।
(म. स्मृ. ५. ११६–११७)

इति। पात्रलग्नस्नेहनिवृत्त्यर्थमुष्णोदकम्। अत एव[2] याज्ञवल्क्यः—

'चरु-स्रुक्-स्रुव-सस्नेहपात्राण्युष्णेन वारिणा'॥
(या. स्मृ. १. १८३)

इति॥ १॥

कांस्य-ताम्रयोरल्पोपहतयोः शुद्धिमाह—

भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यति।

इति। अम्लं क्षारस्याप्युपलक्षणम्। अत एव याज्ञवल्क्यः—

'त्रपु-सीसक-ताम्राणां क्षारा-ऽम्लोदक-वारिभिः'।
(या. स्मृ. १. १९०)

इति। ताम्रादीनां तैजसानामुपघाततारतम्येन शुद्धिविशेषमाह बौधायनः—

तैजसानां मूत्र-पुरीषा-ऽसृङ्-मद्यैरत्यन्तमाहतानामावर्त्तनम्। अल्पसंसर्गे तु परिलेखनम्। स्पर्शमात्रोपघाते तु त्रिःसप्तकृत्वो भस्मना परिमार्जनम्। अतैजसानामेवम्भूतानामुत्सर्गः[3]।
(बौ. स्मृ. १. ६. १३. ३२–३५)

---

१. B and D. omit विशेषम् २ B and D omit अत एव याज्ञवल्क्य..
३. The text of Baudhâyana has interpolations in these four Sutras, so we do not give the different readings. ४. H. reads -सृक्ष्य-मद्यै and I. -सृक्कणाद्यै. for -सृङ्-मद्यै Both the readings are meaningless.

इति ॥

स्त्रिया जारसम्पर्कोपहतौ शुद्धिमाह–

**रजसा शुद्ध्यते नारी विकलं या न गच्छति ॥ २ ॥**

इति । विकलं वैकल्यं गर्भधारणम् । तस्मिन् सति परित्याग एव । न तु शुद्धिः । तदाह याज्ञवल्क्यः–

*'व्यभिचारादृतौ शुद्धिः गर्भे त्यागो विधीयते' ।
(या. स्मृ. १. ७२)

इति । एतत् शूद्रगर्भविषयम् । तदाह वसिष्ठः–

'ब्राह्मण-क्षत्त्रिय-विशां स्त्रियः शूद्रेण सङ्गताः ।
अप्रजाता विशुद्ध्यन्ति प्रायश्चित्तेन नेतराः' ॥
( व. स्मृ. २१. १२ )

इति । वर्णान्तरगर्भे तु प्रायश्चित्तेन शुद्धिरस्ति । तदुक्तं चतुर्विंशतिमते–

'विप्रगर्भे पराकः स्यात् क्षत्त्रिये तु तथैन्दवम् ।
वैश्ये तदेव कर्त्तव्यं पराकेण समन्वितम् ॥
शूद्रगर्भे तु सन्त्यागस्तत्र चाण्डालदर्शनात्' ।

इति । गर्भपर्यवसानहीनोऽपि व्यभिचारस्त्रिविधः । कायिको मानसो वाचिकश्चेति । तत्र कायिके प्रचेता आह–

'विप्रा शूद्रेण संयुक्ता न चेत्तस्मात् प्रसूयते ।

* 'अप्रकाशितात् मनोव्यभिचारात् पुरुषान्तरसम्भोगसङ्कल्पात् यदपुण्यं तस्य ऋतौ रजोदर्शने शुद्धिः'— इति विज्ञानेश्वरः ।

१. B. and D omit न तु and I. तु. २. I. inserts -कृत- after शूद्र-. ३ J. reads -गमने for -गर्भे ४. B. and D. substitute इति for तदुक्त and J. omits चतुर्विंशतिमते ५ J. reads संन्यासः for सन्त्याग-.

प्रायश्चित्तं स्मृतं तस्याः कृच्छ्रं चान्द्रायणत्रयम् ॥
चान्द्रायणे द्वे कृच्छ्रस्य विप्राया वैश्यसङ्गमे ।
कृच्छ्र-चान्द्रायणे स्यातां तस्याः क्षत्त्रियसङ्गमे ॥
क्षत्त्रिया शूद्रसम्पर्के कृच्छ्रं चान्द्रायणद्वयम् ।
चान्द्रायणं सकृच्छ्रं तु चरेद्वैश्येन सङ्गता ॥
शूद्रं गत्वा चरेद्वैश्या कृच्छ्रं चान्द्रायणोत्तरम् ।
आनुलोम्येन कुर्वीत कृच्छ्रं पादावरोपितम्'[1] ॥

इति । एतदभ्यासविषयम् । अनभ्यासे तु चतुर्विंशतिमते दर्शितम्—

'रजसा शुद्ध्यते नारी परपुंसाऽभिगामिनी ।
तथापि मुनिना[2] प्रोक्तं प्रायश्चित्तं समाचरेत् ॥
कृच्छ्रार्धं[3] ब्राह्मणी कुर्यात् विप्रस्य गमने सति ।
क्षत्त्रियस्य चरेत् कृच्छ्रं वैश्ये सान्तपनं चरेत् ॥
शूद्रस्य गमने चैव पराकं तु समाचरेत्' ।

इति । वाचिक-मानसयोर्वसिष्ठ आह—

'मनसा भर्त्तुरतिचारे त्रिरात्रं यावकं क्षीरोदनं च[4]

---

१. B. and D. omit this and the next two lines—
चान्द्रायणं सकृच्छ्रं तु चरेद्वैश्येन सङ्गता ॥
शूद्रं गत्वा चरेद्वैश्या कृच्छ्रं चान्द्रायणोत्तरम् ।
आनुलोम्येन कुर्वीत कृच्छ्रं पादावरोपितम्' ॥.

२ H. substitutes मनुना for मुनिना  ३. B and D. omit this and the next two lines—
कृच्छ्रार्धं ब्राह्मणी कुर्यात विप्रस्य गमने सति ।
क्षत्त्रियस्य चरेत् कृच्छ्रं वैश्ये सान्तपनं चरेत् ॥
शूद्रस्य गमने चैव पराकं तु समाचरेत' ।.

४. The text substitutes वा for च.

भुञ्जानाऽधः शयीत। (६) ऊर्ध्वं त्रिरात्रादप्सु निमग्नायाः सावित्र्यष्टशतैः शिरोभिर्जुहुयात् पूता भवतीति विज्ञायते । (७) वाक्सम्बन्धे एतदेव मासं चरित्वा ऊर्ध्वं मासादप्सु निमग्नायाः सावित्र्याश्चतुर्भिरष्टशतैः शिरोभिर्जुहुयात्' ।

(व. स्मृ. २१. ६–८)

इति । मानसे यदिदं प्रायश्चित्तमुक्तं तदृतुदर्शनादर्वाग् व्यवहार्यत्वसिद्ध्यर्थम् । ऋतुदर्शनानन्तरं तु तेनैव व्यवहार्यत्वसिद्धिः । तदाह मनुः—

'मृत्तोयैः शुद्ध्यते शोध्यं नदी वेगेन शुद्ध्यति ।
रजसा स्त्री मनोदुष्टा सन्न्यासेन द्विजोत्तमः' ॥

(म. स्मृ. ५. १०८)

इति । तदेतत्सर्वमभिप्रेत्य 'रजसा शुद्ध्यते नारी' इत्याचार्येणोक्तम् ॥ २ ॥

नद्या उपरिभागे रथ्योदकादीनां उपहतौ शुद्धिमाह—

**नदी वेगेन शुद्ध्येत लेपो यदि न दृश्यते ।**

इति । प्रवहन्त्यां नद्यां पतितान्युच्छिष्टामेध्यादीनि यदा प्रवाहवेगेन स्नानतीर्थमतिक्रम्य गच्छन्ति तदा तस्मिंस्तीर्थे लेपश्लेषो यावत् दृश्यते तावन्नास्ति शुद्धिः । तददर्शने तु स्नानपानादिकमार्थं शुद्धैवेयं नदी । सत्यपि लेपे यद्यक्षोभ्योदकयुक्ता सा नदी तदा लेपयुक्तं तत्तीर्थमात्रं वर्ज्यम् । इतरप्रदेशेषु सा नदी शुद्धा । तदाह देवलः—

---

१ The text reads अष्टशतेन for अष्टशतैः. २. I. reads वाक्संम्भवे for वाक्सम्बन्धे. B. and D. omit this Sûtra.

'अक्षोभ्यानि तडागानि नदी-वापी-सरांसि च ।
कश्मला-ऽशुचियुक्तानि तीर्थं* तत् परिवर्जयेत्' ॥

इति । नदीशुद्धिमुक्त्वा कूपादिशुद्धिमाह—

**वापी-कूप-तडागेषु दूषितेषु कथञ्चन ॥ ३ ॥**
**उद्धृत्य वै घटशतं पञ्चगव्येन शुद्ध्यति ।**

इति । कूपादिदूषणं द्विधा श्रूयते । श्व-मार्जारादीनां तत्र पतितानां मरणात् मृतशवानां तत्रैव चिरं जरणाच्च । तत्र मरणमात्रविषयमिदं विशोधनम् । एतदेव हारीतोऽप्याह—

'वापी-कूप-तडागेषु दूषितेषु विशोधनम् ।
घटानां शतमुद्धृत्य पञ्चगव्यं क्षिपेत्ततः' ॥
( हा. स्मृ. ११. ३ )

इति । संवर्त्तोऽपि—

'वापी-कूप-तडागानां दूषितानां च शुद्धये ।
अपां घटशतोद्धारः पञ्चगव्येन शोधनम्' ॥
( सं. स्मृ. १८६ )

इति । इयमेव शुद्धिरुपानदादिदूषणेऽपि । तदाह आपस्तम्बः—

'उपानच्छ्लेष्म-विण्मूत्रं स्त्रीरजो मद्यमेव च ।
पतितैर्दूषिते कूपे कुम्भानां शतमुद्धरेत्' ॥
( आ. स्मृ. २. १२ )

---

* 'तीर्थं' तीरप्रदेशः । 'निपानागमयोस्तीर्थम्' इति कोशात् ।

१. K and L. read कुम्भशत for घटशत. २. Except A. and I all omit श्रूयते and some read द्वेधा for द्विधा. ३. I. reads क्षरणात for जरणात. ४. The text reads पञ्चगव्य च निःक्षिपेत् for पञ्चगव्येन शोधनम्. ५. I. reads ऽमेध्य-for मद्य-. ६. I. reads पतिते for पतितैः.

इति । मृतशरीरजरणकृतायामत्यन्तोपहतौ विष्णुराह—

'मृतपञ्चनखात् कूपादत्यन्तोपहतात्तथा ।
अपः समुद्धरेत् सर्वाः शेषं शास्त्रेण *शोधयेत् ॥
वह्निप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते ।
पञ्चगव्यं न्यसेत्तत्र नवतोयसमुद्भवे' ॥
(वि. स्मृ. ३. ४३)

इति । मनुष्यशरीरजरणेऽप्येवमेव शुद्धिः । तदाह हारीतः—

'वापी-कूप-तडागेषु मानुषं शीर्यते यदि ।
अस्थि चर्मविनिर्मुक्तं दूषितं श्व-खरादिभिः॥
उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनम्' ।
(हा. स्मृ. ९. २३–२४)

इति । प्रौढेषु नास्ति दोषः । तदाह विष्णुः—

'जलाशयेषु स्वल्पेषु स्थावरेषु महीतले ।
कूपवत् कथिता शुद्धिर्महत्सु च न दूषणम्'॥
(वि. स्मृ. ३. ४८)

इति । देवलोऽपि—

'अक्षुद्राणामपां नास्ति प्रभूतानां च दूषणम् ।
स्तोकानामुद्धृतानां च कश्मले दूषणं भवेत्'॥

---

* 'शास्त्रेण' शास्त्रोक्तेन प्रकारेण । स च 'वह्निप्रज्वालन' इत्यादिना दर्शितः ।

---

१. C. and F. read -क्षतायाम् for -कृतायाम्. २. I reads मानुष्यं for मानुषं. ३ All, except A. and I. read -विनिर्मुक्तैः for -विनिर्मुक्तं. ४. I. reads जलाशयेष्वथाल्पेषु for जलाशयेषु स्वल्पेषु. ५. A. reads नहि for च न ६. B. D. and E read कश्मल for कश्मले.

इति। अल्पोदकेष्वपि पूर्वोदाहृताद्दोषादल्पे दोषे विष्णुराह—

'अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम्।
सोम-सूर्यांशुपातेन मारुतस्पर्शनेन च॥
गवां मूत्र-पुरीषेण शुद्ध्यन्त्याप इति स्मृताः'।
(वि. स्मृ. ३. १३–१४)

इति। उच्छिष्टाद्युपघाताभावेऽपि गवां पानाद् यदुदकं न क्षीयते तदेव शुद्धम्। न तु ततोऽल्पम्। तदाह देवलः—

'अविगन्धा रसोपेता निर्मलाः पृथिवीगताः।
अक्षीणाश्चैव *गोपानादापः शुद्धिकराः स्मृताः'॥

इति। मनुरपि—

'आपः शुद्धा †भूमिगता वैतृष्ण्यं यासु ‡गोर्भवेत्।
अव्याप्ताश्चेदमेध्येन गन्ध-वर्ण-रसान्विताः'॥
(म. स्मृ. ५. १२८)

इति। नवोदके कालात् शुद्धिमाह यमः—

---

* 'गोपानात्' गोपानेन अक्षीणाः। परिमाणोपलक्षणार्थमेतत्।

† अत्र भूमिग्रहणमुपलक्षणार्थम्। तेन प्रणालिकागता अपि शुचय एव। स्वभावशुचयो हि आपः भूमिगता आकाशगताश्च शुद्धा इत्यर्थः। यत्तु—'नतु शिला-काष्ठादिस्थाः' इति सर्वज्ञनारायणेनोक्तं तत्स्वभावतोऽशुद्धजलविषयम्।

‡ प्राचीनैरिदमेवं व्याख्यायते—'लिङ्गदर्शनेन यथा वै गो. सास्ना अम्भसि प्लाव्येत' इति। यत्र गोः सास्ना निमज्जति तृष्णा च विच्छिद्यते तावत्य आपः शुद्धा इत्यर्थः।

'अजा गावो महिष्यश्च नारी चैव प्रसूतिका।[1]
दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम्' ॥
(व. स्मृ. ५. १९)

इति। उद्धृतोदकं प्रति देवल आह—

'उद्धृताश्चापि शुद्ध्यन्ति शुद्धैः पात्रैः समुद्धृताः।
एकरात्रोषिताश्चापस्त्याज्याः शुद्धा अपि स्वयम्' ॥

इति। यमोऽपि—

'अपो निशि न गृण्हीयात् गृण्हन्नपि कदाचन।
निधायाग्निमुपर्यासां 'धाम्नो धाम्न' इतीरयेत्' ॥
(व. स्मृ. ५. ४१)

इति ॥ ३ ॥

पूर्वं 'रजसा शुद्ध्यते नारी' (७.२)—इत्यत्र योषितो विवाहोत्तरकालीना शुद्धिर्विवेचिता। इदानीं विवाहात् प्राचीनां शुद्धिं विविनक्ति—

**अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ॥ ४ ॥**
**दशवर्षा भवेत् कन्या अत ऊर्ध्वं रजस्वला।**

इति। गौर्यादयस्तिस्र उद्वाहाय शुद्धाः। तद्दातुः फलविशेषस्मरणात्। रजस्वलात्वशुद्धा। तद्दानस्य निन्दितत्वात्। तत्र फल-निन्दे दर्शयति बृहस्पतिः—

'गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम्'॥
(बृ. स्मृ. २. ३७)

---

१. C F. and G. read ब्राह्मण्यश्च प्रसूतिका for नारी चैव प्रसूतिका.

इति । यद्यप्येकादशे वर्षे रजोदर्शनं न प्रतिनियतं तथापि कासुचिद्दर्शनात् तत्सम्भावनया रजस्वलेति निर्देशः। तां ददद्रौरवं नरकं प्राप्नोति इति शेषः ॥ ४ ॥

कन्यायामशुद्धिमभिप्रेत्य 'अत ऊर्ध्वं रजस्वला' इत्युक्तम् । तामेवाशुद्धिं प्रदर्शयितुमदातारं निन्दति—

**प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ॥ ५ ॥**
**मासि मासि रजस्तस्याः पिबन्ति पितरः स्वयम् ।**

इति । ऋतुदर्शनमुपलक्षयितुं द्वादशे वर्षे इत्युक्तम् । अत एव गौतमेन—

'प्रदानं प्रागृतोः'[१] ।

( गौ. स्मृ. १८. २१ )

इत्युक्तम् । यमोऽप्येतदेव आह—

'तस्मादुद्वाहयेत् कन्यां यावन्नर्तुमती भवेत्' ।

( य. स्मृ. ३. २३ )

इति । अतश्च ऋतुदर्शनात् प्राग्यो न प्रयच्छति तस्य पितरः प्रतिमासं तद्रजः पिबन्ति । असत्यृतुदर्शने द्वादशेऽपि वर्षे कन्यादान-प्रतिग्रहौ न निषिद्धौ । अत एव मनुः—

'*त्रिंशद्वर्षोद्वहेत् कन्यां हृद्यां द्वादशवार्षिकीम् ।

---

* 'इयता कालेन यवीयसी कन्या वोढव्या । न पुनरेतावद्वयस एव विवाह इत्युपदेशार्थः । अथापि न यथाश्रुतवर्षसङ्ख्यैव । किं तर्हि । बहुना कालेन यवीयसी वोढव्या। न ह्येतद्विवाहप्रकरणे श्रुतम् । येन दशादिवर्षां पञ्चविंशत्यादिवर्षं च निवर्तयेत्' इत्ययं मेधातिथेराशयोऽत्रानुसन्धेयः ।

---

१ I. reads प्रागृतुदर्शनात् for प्रागृतोः.

ज्येष्ठवर्षो ऽष्टवर्षां वा धर्मे सीदति सत्वरः'॥
(म. स्मृ. ९. ९४)

इति ॥ ५ ॥

ऋतुदर्शने सत्यप्रदाता न केवलं पितॄनेव नरके पातयति किन्तु स्वयमपि सकुटुम्बः पतेदित्याह—

**माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ॥ ६ ॥**
**त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ।**

इति । मात्रादयस्त्रयः कन्याप्रदानाधिकारिणः सर्वानुपलक्षयन्ति । ते च पूर्वमेव—

'पिता पितामहः' ।

इत्यादिवचनोदाहरणेन विवाहप्रकरणे प्रदर्शिताः ॥ ६ ॥

रजोदर्शनात् प्रागदानं यथा नरकहेतुः तथा रजस्वलोद्वाहोऽपि नरकहेतुरित्याह—

**यस्तां समुद्वहेत् कन्यां ब्राह्मणो मदमोहितः ॥ ७ ॥**
**असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ।**

इति । तां दृष्टरजसम् । असम्भाष्यत्वा-ऽपाङ्क्तेयत्वयोर्हेतुर्वृ-

---

१. B. D. and H. read अष्ट- for ऽष्ट-. For the same C. F and J. read वृद्ध- २ C. F. and H. read मात्रादिभि. for मात्रादयस्त्रय and uses the singular form of उपलक्षयन्ति, while B. D. and J. read मात्राद्य· and omit त्रय ३. B. D. and J omit सर्वानुपलक्षयन्ति । ते च. ४ Except A. and I. all omit विवाहप्रकरणे. ५. M. reads ऽज्ञान- for मद-. ६. This and the next three lines are not found in B. and D—

तां दृष्टरजसम् । असम्भाष्यत्वापाङ्क्तेयत्वयोर्हेतुर्वृषलीपतित्वम् । विवाहात्पूर्वं दृष्टरजस्का वृषली । तथा च मनु —

'पितुर्गृहे तु या कन्या रज पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥.

षलीपतित्वम्। विवाहात् पूर्वं दृष्टरजस्का वृषली। तथा च मनुः–

'पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः' ॥
(म. स्मृ. ३. १९)

इति ॥ ७ ॥

यस्तु मद-मोहादिनाऽतिक्रान्तनिषेधस्तामुद्वाह्य सकृद्भुक्त्वा कथञ्चिद्दैवयोगादनुतप्येत् तदा तस्य शुद्धिप्रकारमाह–

यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ॥८॥
स भैक्षभुग् जपन् नित्यं त्रिभिर्वर्षैर्विशुद्ध्यति।

इति। जप्यविशेषानभिधानात् सामान्यप्राप्ताया गायत्र्या जप्यत्वमत्रावगन्तव्यम् ॥ ८ ॥

रात्रौ चण्डालादिस्पर्शे शुद्धिं प्रश्नपूर्वकमाह–

अस्तङ्गते यदा सूर्ये चण्डालं पतितं स्त्रियम् ॥९॥
सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते?।
जातवेदः-सुवर्णं च सोममार्गं विलोक्य च ॥१०॥
ब्राह्मणानुमतश्चैव स्नानं कृत्वा विशुद्ध्यति।

इति। जातवेदाश्च सुवर्णं च जातवेदः-सुवर्णम्। शुक्लपक्षे सो-

---

१. K. reads यत् for य.. २. We follow here A. J. K. and L; while M. reads जातवेद for जातवेद ३. E G. H. I. and M. read -नुगत: for -नुमत: and B. C. D. and F. omit this and the preceding one line—

ब्राह्मणानुमतश्चैव स्नानं कृत्वा विशुद्ध्यति।
इति। जातवेदाश्च सुवर्णं च जातवेद -सुवर्णम्।.

मदर्शनसम्भवे सोमो विलोकनीयः। तदलाभे वह्निः। तस्याप्यभावे सुवर्णम्। तस्याप्यभावे सोममार्गः। एतेषामन्यतमं विलोक्य विप्रैरनुज्ञातः स्नायात् ॥ ९-१० ॥

रजस्वलयोर्योषितोरन्योन्यसंस्पर्शे वर्णक्रमेण शुद्धिमाह-

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी ब्राह्मणी तथा ॥११॥
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुद्ध्यति।
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्त्रिया तथा।
अर्धकृच्छ्रं चरेत् पूर्वा पादमेकमनन्तरा।
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजा तथा ॥१३॥
[1]पादहीनं चरेत् पूर्वा पादमेकमनन्तरा।
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजा तथा ॥१४॥
कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानेन शुद्ध्यति।

इति। द्वयोर्ब्राह्मण्यो रजस्वलयोरन्योन्यं स्पर्शे सति तत आरभ्य स्नानपर्यन्तमुभयोराहारत्यागः। त्रिरात्रकृच्छ्रं चरेत्। एतच्च सहशयनादिचिरस्पर्शविषयम्। सकृत् स्पर्शे तु काश्यपोक्तं द्रष्टव्यम्-

'रजस्वला च संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि।
एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति' ॥

इति। ब्राह्मणी-क्षत्त्रिययोः स्पर्शे ब्राह्मण्याः कृच्छ्रार्धं क्षत्त्रियायाः पादकृच्छ्रम्। ब्राह्मणी-वैश्ययोः स्पर्शे ब्राह्मण्याः पादो-

---

१. M. reads—
पादोनं चैव पूर्वाया. परायाः कृच्छ्रपादकम्।.

नकृच्छ्रं वैश्यायाः पादकृच्छ्रम् । ब्राह्मणी-शूद्रयोः स्पर्शे ब्राह्मण्याः प्राजापत्यं शूद्रायाः पादोनम् । एतत्सर्वं कामकारविषयम् । तथा च वृद्धवसिष्ठः—

'स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजाऽपि च ।
कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानेन शुद्ध्यति ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजाऽपि च ।
पादहीनं चरेत् पूर्वा कृच्छ्रपादं तथोत्तरा ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा ।
कृच्छ्रार्धात् शुद्ध्यते पूर्वा उत्तरा तु तदर्धतः ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया शूद्रजाऽपि च ।
उपवासैस्त्रिभिः पूर्वा त्वहोरात्रेण चोत्तरा ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया वैश्यजाऽपि च ।
त्रिरात्रात् शुद्ध्यते पूर्वा त्वहोरात्रेण चोत्तरा ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्या शूद्री तथैव च ।
त्रिरात्रात् शुद्ध्यते पूर्वा उत्तरा तु दिनत्रयात् ॥
वर्णानां कामतः स्पर्शे विधिरेष सनातनः' ।

इति । अकामतस्तु वृद्धविष्णुनोक्तम् ।

'रजस्वला हीनवर्णां रजस्वलां स्पृष्ट्वा न तावद् इनीयात् यावन्न शुद्धिः स्यात् । (७३) सवर्णामन्यवर्णां वा स्पृष्ट्वा सद्यः स्नात्वा शुद्ध्यति' । (७४)

( वि. स्मृ. २२. ७३-७४ )

१. All, except I and G, omit this line—
स्पृष्ट्वा रजस्वला ऽन्योन्यं ब्राह्मणी वैश्यजा ऽपि च ।

इति । रजस्वलायाः चण्डालादिस्पर्शे विशेषो वृद्धवसिष्ठेनोक्तः—

'चण्डालाद्यैः श्वपाकेन संस्पृष्टा चेद्रजस्वला ।
तान्यहानि त्वतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
प्रथमेऽह्नि त्रिरात्रं स्यात् द्वितीये द्व्यहमेव तु ।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥
शूद्रयोच्छिष्टया स्पृष्टा[२] शुना तु द्व्यहमाचरेत् ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत्' ॥

इति । व्यतिक्रम्येति अनशनेन तीर्त्वेत्यर्थः । एतद्बुद्धिपूर्वकस्पर्शविषयम् । अबुद्धिपूर्वे तु बौधायनोक्तं द्रष्टव्यम्—

'रजस्वला तु संस्पृष्टा चण्डाला-ऽन्त्य-श्व-वायसैः ।
तावत्तिष्ठेन्निराहारा यावत्कालेन शुद्ध्यति' ॥

इति । भोजनकालस्पर्शे बौधायन आह—

'रजस्वला तु भुञ्जाना श्वा-ऽन्त्यजातीन् स्पृशेद् यदि ।
गोमूत्रयावकाहारा षड्रात्रेण विशुद्ध्यति ॥
अशक्ता काञ्चनं दद्यात् विप्रेभ्यो वाऽपि भोजनम्' ।
(बौ. स्मृ. १. ३.४–९ )

इति । यदा तूच्छिष्टयोः परस्परस्पर्शो भवति तदाऽत्रिणा विशेषः प्रदर्शितः—

---

१ I reads व्यतिक्रम्य for त्वतिक्रम्य २ Some read स्पृष्टा for स्पृष्टा, while J omits this line—

शूद्रयोच्छिष्टया स्पृष्टा शुना तु द्व्यहमाचरेत् ।.

३. B. and D. read यावत्कालेन for षड्रात्रेण.

'उच्छिष्टोच्छिष्टसंस्पर्शा कदाचित् स्त्री रजस्वला।
कृच्छ्रेण शुद्ध्यते पूर्वा* शूद्रा दानैरुपोषिता' ॥
(अ. स्मृ. ५. ७)

इति। उच्छिष्टद्विजसंस्पर्शे मार्कण्डेय आह—

'द्विजान् कथञ्चिदुच्छिष्टान् रजःस्त्री यदि संस्पृशेत्।
अधोच्छिष्टे त्वहोरात्रमूर्ध्वोच्छिष्टे त्र्यहं जपेत्' ॥

इति। भोजनकाले रजस्वलाऽन्तरदर्शने आपस्तम्ब आह—

'उदक्या यदि वा भुङ्क्ते दृष्ट्वाऽन्यां तु रजस्वलाम्।
आ स्नानकालं नाश्नीयाद्ब्रह्मकूर्चं ततः पिबेत्' ॥
(आ. स्मृ. ७. १९)

इति। चण्डालदर्शने त्वत्रिराह—

'रजस्वला तु भुञ्जाना चण्डालं यदि पश्यति ॥
उपवासत्रयं कुर्यात् प्राजापत्यं तु कामतः'।
(वृ. आत्रे. स्मृ. ५. ५५ ५६)

इति। शवादिस्पर्शे शातातप आह—

'आर्त्तवाभिप्लुता नारी स्पृशेच्चेत्[†] शव-सूतकम्।
ऊर्ध्वं त्रिरात्रात् स्नातां तां त्रिरात्रमुपवासयेत्' ॥
(शा. स्मृ. २.१.२७)

इति। स्पर्शपूर्वकभोजनादौ विशेषमाहाऽत्रिः—

* 'पूर्वा' ब्राह्मणी। कृच्छ्रेण शुद्ध्यते इति योजना।

† 'शव-सूतकम्' ? शावं मृताशौच सूतकं जाताशौच तद्वन्तामित्यर्थः

१ B. and D read दानैः for दानै २ J. reads पिबेत for जपेत and for the same I reads क्षिपेत.

'आर्त्तवाभिप्लुता नारी मृत-सूतकयोः स्पृशेत्[1] ।
भुक्त्वा पीत्वा चरेत् कृच्छ्रं स्पृष्ट्वा तु त्र्यहमेव च' ॥

(अ. स्मृ. ९. ८)

इति । श्वादिदंशने व्यास आह—

'रजस्वला यदा दष्टा श्वान-जम्बूक-रासभैः ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति' ॥

(व्या. स्मृ. ३. ६१)

इति । बन्धुमरणश्रवणादौ स एवाह—

'मलवद्वसनायां[2] तु अप्रायत्यं भवेत् यदि ।
अभिषेकेण शुद्धिः स्यान्नाऽशनं[3] वा दिनत्रयम् ॥
आर्त्तवाभिप्लुता नारी नावगाहेत् कदाचन ।
उद्धृतेन जलेनैव स्नात्वा शेषं समापयेत्[4] ॥
स्वकं गात्रं भवेदद्भिः साङ्गोपाङ्गमलैर्युतम् ।
न वस्त्रपीडनं कुर्यात् नान्यवासा भवेत् पुनः' ॥

(व्या. स्मृ. ३.४२–४४)

इति ॥ ११–१२–१३–१४ ॥

इदानीं रजोनिमित्तां शुद्धिं दर्शयति—

**स्नाता रजस्वला या तु चतुर्थेऽहनि शुद्ध्यति ॥१५॥**
**कुर्याद्रजोनिवृत्तौ तु दैव-पित्र्यादि कर्म च ।**

इति । रजोदर्शनमारभ्य दिनत्रयं नास्ति शुद्धिः । चतुर्थे

---

१. I reads स्पृशा for स्पृशेत् २. I. reads मलयुग्वसनायां and B. and D मलवद्वसना या तु for मलवद्वसनायां तु. ३. C and F. read नाऽऽसनं for नाऽशनं. ४. H and J. insert इति after समापयेत्.

ऽहनि स्नाताया रजोनिवृत्त्यभावेऽपि भर्त्तुः शुश्रूषादौ शुद्धिः। पञ्चमेऽहनि दैव-पित्र्ययोः। तदाहाऽऽपस्तम्बः—

'शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति'॥

इति। कानिचित् दिनानि रजो यद्यनुवर्त्तेत तदा तन्निवृत्तिपर्यन्तं दैव-पित्र्ययोः शुद्धिर्नास्ति। निवृत्ते तु रजसि दैवं पित्र्यं च कर्त्तव्यम्॥ १५॥

रोगजन्यानुवृत्तौ विशेषमाह—

रोगेण यद्रजः स्त्रीणामन्वहं तु प्रवर्त्तते॥१६॥
नाशुचिः सा ततस्तेन तत्स्यात् वैकालिकं मतम्[1]।

इति। राग-रोगादिनिमित्तभेदादनेकविधा हि रजःप्रवृत्तिः। तदुक्तं स्मृत्यन्तरे—

'रागजं[2] रोगजं चैव कालोत्पन्नं तथैव च।
द्रव्यजं चैव सम्प्रोक्तं तच्चतुर्धा प्रदृश्यते॥
अर्वाक् प्रसूतेरुत्पन्नं मेदोवृद्ध्याऽङ्गनासु यत्[3]।
तद्रागजमिति प्रोक्तं मदोद्रिक्तसमुद्भवम्[4]॥
अत्यर्थं यद्रजः स्त्रीणां तद्रोगजमिति स्मृतम्।
अष्टादशदिनादूर्ध्वं स्नानप्रभृति सङ्ख्यया॥

१ B. and D. read वैकारिक मतम, while K and L substitute मत्मम् for मतम्. २. Except A and I. all omit राग- and G substitutes साग- for राग- It is an incorrect reading. ३ I. omits हि and H reads अनेका-भेदाद्धि रजोनिवृत्ते, B. C. D. E F. and G अनेकविधा हि रजोनिवृत्ति for अनेकविधा हि रज प्रवृत्ति.. ४. B. D and G. read पक्षोद्देशसमुद्भवम, C and F. पक्षोद्देशे समुद्भवम, G. and H मदोद्देशसमुद्भवम and I पक्षोद्देशसमुद्भवम for मदोद्रिक्तसमुद्भवम

यद्रजस्तु समुत्पन्नं तत्कालोत्पन्नमुच्यते ।
भक्ष्यद्रव्यस्य वैषम्याद्धातुवैषम्यसम्भवम् ॥
द्रव्यजं रज इत्युक्तं तत् कादाचित्कसम्भवम्' ।

इति । प्रतिदिनं नैरन्तर्य[1]स्रावेण रोगजं विद्यात् । तेन रोगजेन रजसा ततो रजोदर्शनानन्तरं सा स्त्री कालप्राप्तरज-सेवाऽशुचिर्न भवति । तत्र हेतुः वैकालिकमिति । सामान्येन रजोयोग्यः कालो मासः—

'मासि मासि रजः स्त्रीणाम्' ।

(य. स्मृ. १. ३४)

इति शास्त्रात् लोकप्रसिद्धेश्च । यस्याः कस्याश्चित् धातु-स्वभावविशेषाद्विंशतिरात्रादिकः कालविशेषः प्रतिनियतो भवति ततो विपरीतकालो वि[2]कालः । प्रतिदिनं तत्रानुवर्त्तना-द्वैकालिकत्वम् । यत्तु गर्भिण्याः प्राक्प्रसवाद्रोगजमुदाहृत तत्र कालप्रा[3]प्तरजोवद्दिनत्रयाशौचं विज्ञेयम् । द्रव्यजे त्वङ्गिरा आह—

'आ द्वादशाहान्ननारीणां मूत्रवत् शौचमिष्यते ।
अष्टादशाहात् स्नानं स्यात् त्रिरात्रं परतोऽशुचिः ॥
एतत्तु द्रव्यजे विद्याद्रोगजे पूर्वमीरितम्' ।

(अं. स्मृ. १. १२७)

इति । [4]प्रसूनिकाविषये शुद्धिविशेषमाह प्रजापतिः—

१ I omits -स्रावेण and reads नैरन्तर्येण २ H reads ऽकाल for वि-काल ३ I omits -प्राप्त-. ४ B C D H. and J read प्रसूतिकालादिविषये and I. प्रसूतिविषये for प्रसूतिकाविषये

'प्रसूतिका तु या नारी स्नानतो* विंशतेः परम् ।
आर्त्तवी रजसा प्रोक्ता प्राक्[1] तु नैमित्तिकं रजः ॥
न तु नैमित्तिकेन[2] स्यात् रजसा स्त्री रजस्वला ।
रजस्युपरते तत्र स्नानेनैव शुचिर्भवेत् ॥
अन्यत्र गर्भविश्लेषात् पातनाद्वा रजस्वला ।
गर्भस्रावेऽपि सा स्नानाद्विंशतेः परतो शुचिः ॥
गर्भस्य पतने[3] चैव स्नानात्[4] क्षालनतोऽप्यधः ।
निःसन्दिग्धे[5] परिज्ञाते चार्त्तवे शुद्धिकारणम् ॥
सन्दिग्धमात्रे स्नानं स्यादित्युवाच प्रजापतिः ।
अतो दिवा वा रात्रौ वा मलवद्वसना यदि ॥
तद्दिनादि त्रिरात्रं स्यान्न सङ्ख्या[6] नाडिकावशात् ।
तृतीयभागे सम्प्राप्ते मलं स्यान्निशि चेत् स्त्रियाः ॥
प्रभातात्तु[7] त्रिरात्रेण शुद्धिं तस्या विनिर्दिशेत्' ।
( प्र. स्मृ. ३. १७–२३ )

इति ॥ १६ ॥

---

* 'स्नानतः' दशमदिनस्नानतः । दिनानामिति शेषः । 'विंशतेः' विंशतिसंख्याकेभ्यो दिनेभ्यः परं 'रजसा' युक्ता 'आर्तवी' इति प्रोक्ता । गर्भस्य विश्लेषे ।

'पातः पञ्चम-षष्ठयोः'

इत्युक्तलक्षणः पातः । तस्मिन् पाते–

'आचतुर्थात् भवेत् स्रावः' ।

इत्युक्तलक्षणः स्रावः तस्मिन् स्रावे चेति यथायथं योजनीयम् ।

---

१ I. substitutes प्रोक्त for प्राक्तु २. I. reads नैमित्तिके स्यात्तु for नैमित्तिकेन स्यात् ३ I. substitutes पातने for पतने. ४. Except A. and I all substitute स्नानं for स्नानात्; while I. reads अथ for अधः ५. I. reads न संदिग्ध- for नि सन्दिग्धे and B. and D. substitute -ज्ञाने for -ज्ञाते. ६. B and D. substitute सङ्ख्या च for न सङ्ख्या. ७. I. reads प्रातरादि for प्रभातात्तु

रोगजन्यरजोऽनुवृत्तौ अस्पृश्यत्वलक्षणाशुचित्वाभावेऽपि दैवे पित्र्ये चास्त्येवाशुचित्वमित्याह—

**साध्वाचारा न तावत् स्यात् रजो यावत् प्रवर्त्तते ॥१७॥**
**रजोनिवृत्तौ गम्या स्त्री गृहकर्मणि चैव हि ।**

इति । साधुः दैव-पित्र्यर्थे पाकादिरूप आचारो यस्याः सा साध्वाचारा । रजसि निवृत्ते पश्चात् पुरुषेण गम्या भवति । उक्तपाकादिगृहकर्मणि च योग्या भवति ॥ १७ ॥

पूर्वं—'चतुर्थेऽहनि शुद्ध्यति' (७. ११)—इत्युक्तं ततः प्राचीने दिनत्रये शुद्ध्यभावं विशदयति—

**प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी ॥१८॥**
**तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति ।**

इति । चण्डाल्यादिगमने यावान् प्रत्यवायः तावानुदक्यागमने-इत्यभिप्रेत्य तैर्नामभिर्व्यवहारः। यथा*कुण्डपायिनामयने—

* कुण्डे सोमपानं धर्मो येषां ते कुण्डपायिनो ऋत्विग्विशेषा । तेषां कर्तव्ये ऽयनाख्ये यागविशेषे—

'मासमग्निहोत्रं जुहोति' ।

इत्यग्निहोत्रपदप्रयोगो दृश्यते । अग्निहोत्रपदं च यावज्जीवकर्तव्ये नित्याग्निहोत्रे शक्तमिति पूर्वमीमांसाया ( पू. मी. १. ४. ३) निर्णीतम् । न च—नित्याग्निहोत्रवत् कुण्डपायिनामयने ऽप्यग्निहोत्रपदस्य शक्तिरस्तीति ।

१. The two lines of the text of Parāśara do not appear in M —
साध्वाचारा न तावत् स्यात् रजो यावत् प्रवर्तते ॥ १७ ॥
रजोनिवृत्तौ गम्या स्त्री गृहकर्मणि चैव हि ।.

२ I omits इति and the next sentence—
साधु दैव-पित्र्यर्थं पाकादिरूप आचारो यस्या सा साध्वाचारा ।, Probably this is a mistake

'मासमग्निहोत्रं जुहोति'।

इति अग्निहोत्रनामनिर्देशेन नित्याग्निहोत्रधर्मातिदेशः तद्वत् ॥ १८ ॥

यदा ज्वरादिभिरातुरस्य रजस्वलाऽभिस्पर्शने प्रत्यासन्नबन्धुमरणे वा स्नानं प्राप्नोति तदा कथं कर्त्तव्यमित्यत आह–

**आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ॥ १९ ॥**

**स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत् स आतुरः।**

इति। तत्र प्रतिस्नानमातुरस्य वासो विपरिवर्त्तनीयम्। तदाहाऽत्रिः–

'आतुरस्नान उत्पन्ने दशकृत्वो ह्यनातुरः।
स्पृष्ट्वा स्पृष्ट्वाऽवगाहेत स विशुद्ध्येत आतुरः॥
वासोभिर्दशभिश्चैव परिधाय यथाक्रमम्।
दद्यात्तु शक्तितो दानं पुण्याहेन विशुद्ध्यति'॥

(ल. अ. स्मृ. ५. ६०–६२)

इति। उशना अपि–

'ज्वराभिभूता या नारी रजसा च परिप्लुता।
कथं तस्या भवेत् शौचं? शुद्धिः स्यात् केन कर्मणा?॥
चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु[2] तां स्त्रियम्।
सा सचैलाऽवगाह्याऽऽपः स्नात्वा चैव पुनः स्पृशेत्॥
दश द्वादशकृत्वो वा आचामेच्च पुनः पुनः।

---

शङ्कनीयम्। अनेकार्थत्वस्यान्याय्यत्वात्। तस्मात् कुण्डपायिनामयने अग्निहोत्रत्वाभावात् 'अग्निहोत्रं जुहोति' इत्यस्य यथाश्रुतार्थस्य तत्रासम्भवादगतेश्च 'अग्निहोत्रवत् जुहोति'–इति वत्यर्थाश्रयणेन नित्याग्निहोत्रस्य धर्मस्तत्रातिदिश्यते–इति सिद्धान्तः। अत एवोक्तमाचार्यैः–

'परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेणापि वत्यर्थं गमयति'।

इति। स्पष्टमिदं मीमांसादर्शने ७ अध्याये, ३ पादे, १ अधिकरणे।

---

१ I. reads तथा for तदा. २. B. D. and J. read ऽऽतुरां स्त्रियम् for तु तां स्त्रियम्.

अन्ते च वाससां त्यागः ततः शुद्धा भवेत्तु सा ॥
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति' ।

इति । तथा सूतिकामरणे स्मृत्यन्तरे विशेषो दर्शितः—

'सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः ।
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥
पुण्यर्ग्भिरभिमन्त्र्याऽऽपो वाचा शुद्धिं लभेत्ततः ।
तेनैव स्नापयित्वा तु दाहं कुर्यात् यथाविधि' ॥

इति । रजस्वलामरणे तु—

'पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम्' ॥

इति तत्रैव विशेष उक्तः ॥ १९ ॥

उच्छिष्टस्य द्विजस्यान्येनोच्छिष्टेन द्विजेन शुना शूद्रेण वा संस्पर्शे शुद्धिमाह—

**उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः ॥ २० ॥**
**उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति ।**

इति । उच्छिष्टेन संस्पृष्टः उच्छिष्टसंस्पृष्टः । उच्छिष्टश्चासावुच्छिष्टसंस्पृष्टश्चेति विग्रहः । रजनीमुपोष्य रात्रिभोजनं परित्यजेदित्यर्थः । यत्तु अत्रिणोक्तम्—

'उच्छिष्टोच्छिष्टसंस्पृष्टो ब्राह्मणो ब्राह्मणेन तु ।
दशरूपं जपेत् पश्चात् गायत्र्याः शोधनं भवेत्' ॥

इति तदेतदशक्तविषयम् । शुना स्पर्शे विशेषमाह संवर्त्तः—

'कृतमूत्र-पुरीषो वा भुक्तोच्छिष्टोऽथ वा द्विजः ।
श्वभिः स्पर्शे जपेत् देव्याः सहस्रं स्नानपूर्वकम्' ॥

---

१. H. and J. read अत for तत २. I reads दद्याच्च शक्तितो for दद्याच्छक्त्या ततो. ३ Except A. all omit तत्रैव विशेष उक्त.. ४. K. and L. read पुन for द्वि न . ५. B. and D read दश-पूर्वं and I. दशवारं for दशरूपं.

इति ॥ २० ॥

अनुच्छिष्टस्य विप्रस्योच्छिष्टशूद्रस्पर्शे[1] स्नानमात्रम् । उच्छिष्टस्य विप्रस्योच्छिष्टशूद्रस्पर्शे प्राजापत्यकृच्छ्रमित्याह—

**अनुच्छिष्टेन शूद्रेण स्पर्शे स्नानं विधीयते ॥२१॥**
**तेनोच्छिष्टेन[2] संस्पृष्टः प्राजापत्यं समाचरेत् ।**

इति । यद्यप्यनुच्छिष्टोच्छिष्टशब्दौ शूद्रविशेषणतया[3] श्रुतौ तथापि विधीयमानस्नान-प्राजापत्यानुसारेण विप्रेऽपि तौ योजनीयौ ॥ २१ ॥

पूर्वं* कांस्यस्य या शुद्धिरुक्ता तामनूद्य तत्र विशेषमाह—

**भस्मना शुद्ध्यते कांस्यं सुरया यन्न लिप्यते ॥२२॥**
**सुरामात्रेण संस्पृष्टं शुद्ध्यतेऽग्न्युपलेखनैः[4] ।**

इति । सुरास्पृष्टस्य कांस्यस्य न भस्मघर्षणमात्रेण शुद्धिः । किन्तु उपलेखन-तापनाभ्याम् । उपलेखनं नाम शस्त्रेणोपरिभागस्य तक्षणम् । †मूत्र-पुरीषलेपेष्वेवैषैव शुद्धिः । तदुक्तं स्मृत्यन्तरे—

---

* 'पूर्वम्' अस्मिन्नेवाध्याये द्वितीयश्लोके—
'भस्मना शुद्ध्यते कांस्यम्' ।
इत्यनेनाभिहिता द्रष्टव्या । सा च सामान्येनोक्ता । इयं विशेषेणोच्यते इति भेदः ।

† धरणीधरस्तु—'सुरापदं मूत्र-पुरीषाद्युपलक्षणम्'—इत्याह ।

---

१ I. substitutes शूद्रस्यानुच्छिष्ट- for विप्रस्योच्छिष्ट-, B. D and H. read अनुच्छिष्टस्य विप्रस्यानुच्छिष्टशूद्रस्पर्शे यत् स्नानमात्रम् । उच्छिष्टानुच्छिष्ट-विप्रस्योच्छिष्टशूद्रस्पर्शे. This reading contains unnecessary words. २. M. reads उच्छिष्टेन च for तेनोच्छिष्टेन. ३. I reads शूद्रविशेषणौ for शूद्रविशेषणतया. ४. M. reads -लेपनैः for -लेखनै .

'भस्मना शुद्धयते कांस्यं सुरया यन्न लिप्यते ।
सुरा-मूत्र-पुरीषैस्तु शुद्धयतेऽग्न्युपलेखनैः ॥
आमिषेण तु यल्लिप्तं पुनर्दाहेन* शुद्धयति' ।
(य. स्मृ. ९. ३–४)

इति ॥ २२ ॥

गवाघ्रातादीनां दशकृत्वो भस्मघर्षणेन शुद्धिरित्याह—

**गवाघ्रातानि कांस्यानि श्व-काकोपहतानि च ॥२३॥**
**शुद्धयन्ति दशभिः क्षारैः† शूद्रोच्छिष्टानि यानि च ।**

इति । एतदेव शातातपो ऽप्याह—

'गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः ।
दशभिर्भस्मभिः शुद्धिः श्व-काकोपहतेषु च' ॥
(शा. स्मृ. ३. ६१)

इति ॥ २३ ॥

गण्डूषाद्युपहतस्य भूनिक्षेप इत्याह—

**गण्डूषं पादशौचं च कृत्वा वै कांस्यभाजने ॥२४॥**
**षण्मासान् भुवि निःक्षिप्य ‡उद्धृत्य पुनराहरेत् ।**

---

* अत्र 'दाह'शब्देन रसरूपपरिणामोत्पत्तिपर्यन्तो दाह इत्यवसेयमिति प्रतिभाति । अन्यथा 'ऽग्न्युपलेखनैः' इति पूर्वमुक्त्वा 'पुनर्दाहेन' इत्यत्र न को ऽपि विशेषः सम्पद्येत ।

† 'दशभिः क्षारैः' दशवारं भस्मना घर्षणेन शुद्धिः । 'क्षार'शब्देन भस्माभिधीयतेति प्राञ्चः । एवमग्रे ऽपि ।

‡ षण्मासपर्यन्तं भुवि निखाय पुनरुद्धृत्य 'पुनराहरेत्' नवाकारं कुर्यादिति योजना ।

---

१. B. and D omit this line—
'भस्मना शुद्धयते कांस्य सुरया यन्न लिप्यते ।
२ B. D and M read षण्मासात् for षण्मासान्.

इति। अयं च भूनिःक्षेपः कांस्यकारघर्षणस्याप्युपलक्षणम्। अत एवाङ्गिराः—

'गण्डूषं पादशौचं च कृत्वा वै कांस्यभाजने।
षण्मासं भुवि निःक्षिप्य पुनराकारमादिशेत्'॥

(अं. स्मृ. २. ११)

इति। यत्तु बौधायनेनोक्तम्—

'तैजसानां पात्राणामुच्छिष्टोपहतानां त्रिःसप्तकृत्वः परिमार्जनम्। (४) तथा मूत्र-पुरीष-लोहित-रेतःप्रभृत्युपहतानां पुनःकरणम्। (६)'

(बौ. स्मृ. १. ६. १४. ४–६)

इति तत्र पुनःकरणं चिरलेपविषयं द्रष्टव्यम्॥ २४॥

आयसादीनां कटाहादीनां सीसपात्रस्याप्यत्यन्तोपहतस्य शुद्धिमाह—

**आयसेष्वायसानां च सीसस्याग्नौ विशोधनम्॥२५॥**

इति। अयोमयेषु घर्षणसाधनेषु आयसानां घर्षणेन शोधनम्। सीसस्य त्वग्नौ प्रविलापनम्। अयःसङ्घर्षणमश्मसङ्घर्षणस्याप्युपलक्षणम्। अत एव मार्कण्डेयपुराणम्—

'गात्राणां च मनुष्याणामम्बुना शौचमिष्यते॥
तथाऽऽयसानां तोयेन त्वश्मसङ्घर्षणेन च'।

(मा. पु. ३५. ५–६)

---

१. For this Sûtra the text reads—

तैजसानां पात्राणा पूर्ववत् परिमृष्टानां प्रक्षालनम्।

The next Sûtra will show that the word प्रक्षालनम् must be replaced by परिमार्जनम्. २. M reads आयसेष्वपसारेण for आयसेष्वायसानां च ३. I. reads पात्राणां for गात्राणा

इति। तोयेनेत्यल्पोपहतविषयम्॥ २५॥

गजदन्तादीनां शुद्धिमाह—

दन्तमस्थि तथा भृङ्गं रूप्यं[1] सौवर्णभाजनम्।
*मणि-[2]पाषाणपात्राणीत्येतान् प्रक्षालयेज्जलैः॥२६[4]॥
पाषाणे तु पुनर्घर्षः[3] शुद्धिरेवमुदाहृता।

इति। अस्थिशब्देन गजास्थ्यादिनिर्मितं करण्डकादि। शृङ्गशब्देन महिषशृङ्गादिनिर्मितं करण्डकादि। मणिपात्राणि प्रवालस्फटिकादीनि। पाषाणपात्रस्य तु प्रक्षालनं पाषाणान्तरघर्षणं चेत्युभयं वेदितव्यम्। जलैः प्रक्षालनं निर्लेपविषयम्। तदाह मनुः—

'निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुद्ध्यति।
अब्जमश्ममयं चैव राजतं चानुपस्कृतम्'†॥
(म. स्मृ. ५. ११२)

* धरणीधरस्तु–'मणिपात्राणि शङ्खश्चेति'–इत्यमुमेव पाठमाश्रित्य–'मणिपात्राणि स्फटिकमरकतादिनिर्मितानि। शङ्खः चकाराच्छुक्तिश्च इत्येतानि निर्लेपानि जलैः प्रक्षालनीयानि। सुलेपानि पाषाणैर्घर्षणीयानि'–इत्याह।

† 'अनुपस्कृतम् अखातपूरितमथवा अत्यन्तानुपहतम्'–इति मेधातिथिः। रेखादिगुणान्तराधानरहितमिति कुल्लूकभट्टः।

१. I. reads रौप्य-सौवर्ण- and M. रौप्यं सौवर्ण- २ I and M read मणि-पाषाण-शङ्खाश्चे-, B. C. D E F. G. H and J. मणिपात्राणि शङ्खश्चे- for मणि-पाषाणपात्राणी- ३. K. and L. read पाषाणेन तु सङ्घर्ष. M reads this line as follows —

पाषाणे तु पुनर्वृ(घृ?)ष्टिरेषा शुद्धिरुदाहृता।.

४. This explanation shows that the author approves of the reading मणि-पाषाणपात्राणीत्येतान्

इति। अब्जं शङ्ख-शुक्त्यादि। अनुपस्कृतं निर्लेपम्। यत्तु मनुनैवोक्तम्—

'तैजसानां *मणीनां च सर्वस्याश्ममयस्य च।
भस्मनाऽद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः'॥
(म. स्मृ. ५. १११)

इति तत् सलेपविषयम्। शुद्ध्यन्तराणि मुनिभिर्दर्शितानि। तत्र शातातपः—

'सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं तथा।
रीतिका-सीस-लोहानि शुद्ध्यन्तेऽश्मप्रघर्षणात्'॥
(शा. स्मृ. ३. ४८)

इति। यमः—

'रजतस्य सुवर्णस्य ताम्रस्य त्रपुणस्तथा।
रीत्ययः-कांस्य-सीसानां भस्मना शौचमिष्यते'॥
(य. स्मृ. ५. ३९)

इति। उशनसापि—

'सुवर्ण-रजत-ताम्र-त्रपु-सीस-कांस्यानामद्भिरेव भस्मसंयुक्ताभिः। मणिमयानामद्भिरेव मृत्संयुक्ताभिः। तैजसानां चोच्छिष्टानां भस्मना त्रिःप्रक्षालनम्। कनक-मणि-रजत-शङ्ख-शुक्त्युपलानां वज्र-विदलन-रज्जु-चर्मणां चाद्भिः शौचम्'।
(उ. स्मृ. ५. १७–२०)

इति। विष्णुः

* यान्यग्निसंयोगेन द्रवीभवन्ति रजत-सुवर्ण-ताम्रायस-त्रपु-सीसकादीनि तानि तैजसान्युच्यन्ते।

'विण्मूत्र-रेता-ऽऽसव-रक्तलिप्तम्
*आवर्त्तनोल्लेखन-तापनैर्वा ।
त्रिःसप्तकृत्वः परिमार्जनैर्वा
भस्माम्बुना शुद्ध्यति तैजसानाम्' ॥
(वि. स्मृ. ११. ६७)

इति । एतेषां सर्वेषां यथायोगं चिर-क्षिप्रलेपा-ऽलेपभेदेन व्यवस्था द्रष्टव्या ॥ २६ ॥

मृद्भाण्डस्य धान्यस्य चोच्छिष्टाभ्युपहतौ शुद्धिमाह—

**मृण्मये दहनात् शुद्धिर्धान्यानां मार्जनादपि ॥२७॥**

इति । दहनं सलेपविषयम् । अत एव बौधायनः—

'मृण्मयानां पात्राणामुच्छिष्टसमन्वारब्धानामव-
चूर्णनम् । उच्छिष्टलेपोपहतानां पुनर्दहनम् ।
मूत्र-पुरीषलोहित-रेतःप्रभृत्युपहतानामुत्सर्गः'।
(बौ. स्मृ. १. ६. १३. ३१–३३)

* 'आवर्तनं' नाम पूर्वामाकृतिमुपमृद्य इच्छातो नवीनाकृतिसम्पादनम् । 'उल्लेखनं' तीक्ष्णेन शस्त्रेणाश्मना वा निघर्षः ।

१ I reads this verse in the form of Sûtrâs, reading the Sûtrâs as follows :—

'विण्मूत्ररेत शवरक्तलिप्तमावर्तनोपलेपनतापनैर्वा त्रि सप्तकृत्व परिमार्जनैर्वा भस्मना च शुद्ध्यति। तैजसानाम'।,

B and D. also substitute -रेत -शव- for -रेता-ऽऽसव-. २. H. reads तैजसम् for तैजसानाम् ३. I. reads -सलेप- for -लेपा-ऽलेप-. ४. All, except A. and I. omit this word. ५ I. omits मृद्-, and all others except A. omit धान्यस्य. ६ M. reads मृद्भाण्ड- for मृण्मये. ७. I. reads -समन्वितानाम् for -समन्वारब्धानाम्, while C E and F read अवचूलनम्, B. D. G. H and J अवधूननम् and the text अवकूलनम् for अवचूर्णनम्. ८ All, except A. and the text read मूत्र पुरीष-रेत प्रभृतिभिरुत्सर्गः।.

इति । एतच्च श्वादिस्पर्शविषयम् । चण्डालादिस्पर्शे तु स्मृत्यन्तरोक्तं द्रष्टव्यम्—

'चण्डालाद्यैस्तु संस्पृष्टं धान्यं वस्त्रमथापि वा ।
क्षालनेन विशुद्ध्येत परित्यागान्महीमयम्' ॥

इति । मार्जनं प्रोक्षणं प्रक्षालनं वा । तत्रोभयोर्व्यवस्थितविषयत्वं दर्शयति मनुः—

'अद्भिस्तु प्रोक्षणं शौचं बहूनां *धान्य-वासासाम् ।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते' ॥

(म. स्मृ. ५. ११८)

इति । विष्णुः—

---

* अत्र बहुत्वमनियतम् । धान्यानां द्रोणाधिक्ये बहुत्वम् ।

'द्रोणाभ्यधिकं सिद्धमन्नमुपहतं न दुष्यति' ॥

( वि. स्मृ. २३. ३६ )

इति विष्णूक्तेः । अन्ये तु पुरुषापेक्षया देश-कालापेक्षया च बहुत्वं वर्णयन्ति । यथा कस्यचिद्दुर्गतस्य कुडवार्धमपि बहु भवति । तथा कस्यांचिदवस्थायां वर्धितकोशो बहुनामेति । एवं वस्त्रेषु बहुत्वे सङ्ख्याविशेषो नोक्तः अतस्त्रिभ्योऽधिकानि वस्त्राणि बहूनि । अनिर्धारितसङ्ख्याविशेषस्य बहुवचनस्य त्रित्वे पर्यवसानात् ।

---

१. B. and D. omit मनुः and the next quotation—

'अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्य-वाससाम् ।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते' ॥;

while C. E. F. G. and H. omit only मनुः. The quoted Śloka appears also in M. ( the text of Parāśara ), but probably it does not belong to Parāśara

'अल्पस्य धान्यस्य यन्मात्रमुपहन्यते तन्मात्र-
मुत्सृज्य शेषस्य कण्डन-प्रक्षालने कुर्यात्' ।
(वि. स्मृ. २३. ३९)

इति । बौधायनः—

'चण्डालादिस्पर्शने ऽनेकपुरुषोद्धार्याणां प्रोक्ष-
णम् । (१७) मूत्रादिसम्पर्के तन्मात्रापहारः ।
(१८) असृक्पांस्वादिद्रव्यसंयोगे निस्तुषी
करणम् । (१९)
(बौ. स्मृ. १. ६. १३. १७–१९)

इति । काश्यपः—

'प्रोक्षण-पर्यग्निकरणा-ऽवगाहनैर्व्रीहि-यव-गोधू-
मानाम् । विमर्शन-प्रोक्षणैः फलीकृतानाम् ।
विघर्षण-विदलन-प्रोक्षणैः शमीधान्यानाम्' ।
(का. स्मृ. १२. ३–४)

इति । अस्यार्थः—अनेकपुरुषोद्धार्याणां व्रीहि-यव-गोधू-
मानां यथाक्रमं प्रोक्षण-पर्यग्निकरणा-ऽवगाहनैः शुद्धिः । अव-
गाहनं प्रक्षालनम् । व्रीह्यादितण्डुलानां फलीकृतानां विम-

---

१ The text substitutes असिद्धस्य and B. and D. जलस्य for अल्पस्य while C E F G H and J read अल्पधान्यस्य २. B. and D. read यावन्मात्रमुपहन्यते and the text यन्मात्रमुपहत for यन्मात्रमुपहन्यते ३. All, except A and the text substitute खण्डन- for कण्डन-. ४. A. reads तन्मात्रोद्धार. for तन्मात्रापहार ५ B and D. read अश्रु-कफ-श्वासादिसंयोगे and C. and F असृक्पातादिद्रव्यसंयोगे for असृक्-पांस्वादिद्रव्यसंयोगे ६. I. reads कश्यप for काश्यप ७ J substitutes शिम्बी- for शमी-. ८ I. reads -पुरुषधार्याणा for -पुरुषोद्धार्याणा. ९ C and F. omit the following —

यथाक्रम प्रोक्षण-पर्यग्निकरणा-ऽवगाहनै शुद्धिः ।
अवगाहन प्रक्षालनम् । व्रीह्यादितण्डुलानाम ।

र्शनेन। विमर्शनं कराभ्यां घर्षणम्। कण्डनेन शुक्लीकरणं वा। शमीधान्यानां मुद्गादीनां अनेकपुरुषोद्धार्याणां विघर्षणेन। आदिपुराणे—

'गृहदाहे समुत्पन्ने संस्थिते पशु-मानुषे।
अभोज्यस्तद्गतो व्रीहि-धातुद्रव्यस्य संग्रहः॥
मृण्मयेनावगुप्तानामधोभुवि च तिष्ठताम्।
यव-माष-तिलादीनां न दोषं मनुरब्रवीत्॥
ततः संक्रममाणेऽग्नौ स्थाने स्थाने च दह्यते।
न च प्राणिवधो यत्र केवलं गृहदीपनम्।
तत्र द्रव्याणि सर्वाणि गृह्णीयादविचारयन्'॥

इति॥ २७॥

वेण्वादीनामेकैकस्याल्पोपहतौ संहतानां महोपहतौ चैकविधां शुद्धिमाह—

**वेणु-वल्कल-चीराणां क्षौम-कार्पासवाससाम्।**
**और्ण-नेत्रपटानां च प्रोक्षणात् शुद्धिरिष्यते॥२८॥**

इति। वेणुशब्देन तत्कार्याणि कट-व्यजनादीनि गृह्यन्ते।

१. All, except A. and the text read खण्डनेन for कण्डनेन. २ I. reads -पुरुषधार्याणा घर्षणेन for -पुरुषोद्धार्याणां विघर्षणेन. ३ I reads स्यात्तदा व्रीहिर्धातुद्रव्यस्य सङ्ग्रह for तद्गतो व्रीहि-धातु-द्रव्यस्य सङ्ग्रह.. ४. I. reads मध्ये पुरि वर्तिष्ठताम for अधोभुवि च तिष्ठताम्. ५. I. reads दोषो for दोष. ६ C. F. and I. omit संहताना and read अल्पोपहतानां महोपहतानां, while B. and D. omit संहतानां महोपहतौ. ७ M. reads—
और्णानां नेत्रपट्टानां जलाच्छौच विधीयते॥.
८ B. C. D. E. F. G. and J read त्वक्साराणि and I. वेणुकार्याणि for तत्कार्याणि

वल्कल-चीराण्यरण्यवासिनां प्रसिद्धानि । क्षौमं दुकूलम् । कार्पासवासांसि प्रसिद्धानि । और्णः कम्बलः । नेत्रपटा अरण्यवासिनामेव प्रसिद्धा भूर्जत्वगादयः । अस्याश्चाल्पविषयशुद्धिरेवं देवलो दर्शयति—

'और्ण-कौशेय-कुतप-पट्ट-क्षौम-दुकूलजाः ।
अल्पशौचा भवन्त्येते शोषण-प्रोक्षणादिभिः ॥
तान्येवामेध्ययुक्तानि क्षालयेच्छोषकैः स्वकैः ।
धान्यकल्कैस्तु फलजै रसैः क्षारानुगैरपि' ॥

इति ॥ २८ ॥

एकैकस्य लेपोपहतौ याज्ञवल्क्य आह—

'सोषैरुदक-गोमूत्रैः शुद्ध्यत्याविक-कौशिकम् ।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥
सगौरसर्षपैः क्षौमं पुनः पाकाच्च मृण्मयम्' ।

(या. स्मृ. १. १८६–१८७)

इति । आविकं कम्बलः । कौशेयं कृमिकोशोत्थम् । अंशुपट्टं नेत्रपटः । अरिष्टानि पुत्रजीवफलानि । कुतपः पार्वतीयच्छागरोमनिर्मितः कम्बलविशेषः । मनुरपि—

'कौशेया-ऽऽविकयोरूषैः कुतपानामरिष्टकैः ।
श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥

---

१. H reads अस्याल्प- for अस्याश्चाल्प-. २. I. reads -दुकूलका for -दुकूलजा· ३ B. and D read शोधनैः स्वकैः and I. चारकैर्द्विजैः for शोषकैः स्वकैः, while C and F. substitute शुक्रैः for स्वकैः. ४. I. reads क्षीरानुगैः for क्षारानुगैः· ५. B D and G. read शोषै and I. सोष्मैः for सोषै. ६ The text reads पुन पाकान् महीमयम् for पुन पाकाच्च मृण्मयम; while B and D. substitute तु for च. ७. I. reads आवन्तेय- for पार्वतीय- and some read पार्वतेय- ८. I. reads माषैः for ऊषैः.

क्षौमवत् शङ्ख-शृङ्गाणामस्थि-दन्तमयस्य च।
शुद्धिर्विजानता कार्या गोमूत्रेणोदकेन वा' ॥
(म. स्मृ. ५. १२०-१२१)

इति। अङ्गिरा अपि—

'शौचं महार्घरोम्णां तु वाय्वग्न्यर्केन्दुरश्मिभिः।
रेतःस्पृष्टं शवस्पृष्टमाविकं न प्रदुष्यति' ॥

इति। अत्र च रेतःस्पर्शो लेपरहितो विवक्षितः ॥ २८ ॥

मुञ्जादीनां वेणुवत् शुद्धिमाह—

मुञ्जोपस्कर-शूर्पाणां शणस्य फल-चर्मणाम्।
तृणकाष्ठस्य रज्जूणामुदकाभ्युक्षणं मतम् ॥२९॥

इति। मुञ्जो रशनादिप्रकृतिभूतस्तृणविशेषः। तेन सम्पादित उपस्करो विष्टरादिः। यद्यपि पूर्ववचने वेणुविकाराणां कटादीनां प्रोक्षणस्योक्तत्वात्तेनैव शूर्पशुद्धिरभिहिता तथापि तण्डुलफलीकरणादौ तल्लेपस्य लग्नत्वात् शुद्ध्यन्तराशङ्का भवति तन्माभूदिति पुनरिह ग्रहणम्। शणो गोण्यादिहेतुर्वल्कलविशेषः। तेन तद्विकाराः सर्वेऽपि विवक्षिताः। फलमाम्रादि। चर्म कृष्णाजिनादि। तृणं च काष्ठं च तृणकाष्ठम्। रज्जवः प्रसिद्धाः। अत्र फलशब्देन शाक-मूलादीन्युपलक्ष्यन्ते। अत एव याज्ञवल्क्यः—

---

१ B C D. E. F. and G substitute च for वा २ J reads -रोमाणां for -रोम्णां तु, while I reads सौम्यमाविकरोम्णां तु for शौचं महार्घरोम्णां तु ३ M. reads -काष्ठानि for -काष्ठस्य and उदकप्रोक्षण for उदकाभ्युक्षण. ४. I. reads विष्टरादिरुपस्करः for उपस्करो विष्टरादि ५ All, except A and I. insert -स्थल- after शाक

'शाक-रज्जू-मूल-फल-वासो-विदल-चर्मणाम् ॥
पात्राणां चमसानां च वारिणा शुद्धिरिष्यते'।
(या. स्मृ. १. १८२–१८३)

इति। शाकं वास्तुकादि। रज्जुर्बल्वजादिनिर्मिता। मूल-मार्द्रकादि। फलमाम्रादि। वैदलं वैणवादि। चर्म अजादीनाम्। पात्राणि प्रोक्षणपात्रप्रभृतीनि। चमसा होतृचमसादयः। तत्र वारिशुद्धिः प्रोक्षणं प्रक्षालनं च। तदुभयं यथायोगं द्रष्टव्यम्। अत एव मनुना धान्यं दृष्टान्तितम्—

'चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च।
शाक-मूल-फलानां च धान्यवत् शुद्धिरिष्यते'॥
(म. स्मृ. ५. ११९)

इति। काश्यपोऽपि—

---

१ I. omits the following portion —
वास्तुकादि। रज्जुर्बल्वजादिनिर्मिता। मूलमार्द्रकादि। फलमाम्रादि। वैदलं वैणवादि। चर्म अजादीनाम्। पात्राणि प्रोक्षणपात्रप्रभृतीनि। चमसा होतृ-,
and C. E. F. H. and J. omit up to चमसादयः। तत्र वारिशुद्धिः प्रोक्षणं प्रक्षालनं च। तदुभयं यथायोगं द्रष्टव्यम्। अत एव मनुना धान्यं दृष्टान्तितम्.

२. B. and D. omit the following portion —
अजादीनाम्। पात्राणि प्रोक्षणपात्रप्रभृतीनि। चमसा होतृचमसादयः। तत्र वारिशुद्धिः प्रोक्षणं प्रक्षालनं च। तदुभयं यथायोगं द्रष्टव्यम्। अत एव मनुना धान्यं दृष्टान्तितम्—

'चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च।
शाक-मूल-फलानां च धान्यवच्छुद्धिरिष्यते'॥

इति। काश्यपोऽपि—

'तृण-काष्ठ-रज्जु-मुञ्ज-चर्म-वेणु-विदल-फल-पत्र-मूलादीनां'.

३ G omits तत्र वारिशुद्धिः प्रोक्षणं प्रक्षालनं च। तदुभयं यथायोगं द्रष्टव्यम and reads आह मनुः for अत एव मनुना धान्यं दृष्टान्तितम

'तृण-काष्ठ-रज्जु-मुञ्ज-चर्म-वेणु-विदल-फल-
पत्र-मूलादीनां चैलवत् शौचम्। (८)
मृद्दारु-चर्मणां चात्यन्तोपहतानां त्यागः। (९)
(का. स्मृ. १२. ८–९)

इति। ब्रह्मपुराणेऽपि—

'शव-विण्मूत्र-शुक्रैस्तु दूषितं च मृदम्बुभिः।
शोध्याऽऽदौ शोधनीयं च गोमूत्र-क्षार-वारिभिः॥
रज्जु-वल्कल-पत्राणां चमसा-ऽलाबु-चर्मणाम्।
कृत्वा शौचं ततः शुद्धिः गोवालैर्घर्षणं पुनः'॥

इति। व्यासोऽपि—

'वस्त्रं मृदम्भसा शुद्धं रज्जुर्वैदलमेव च।
रज्ज्वादिकं चातिदुष्टं त्याज्यं तन्मात्रमेव च'॥
(व्या. स्मृ. ४. १७)

इति। उशना अपि—

'मूल-फल-पुष्प-भूमि-तृण-दारु-
पलाल-धान्यानामभ्युक्षणम्'।
(औ. स्मृ. ३. ४१)

इति। यत्तु बौधायनेनोक्तम्—

'कृष्णाजिनानां बिल्व-तण्डुलैः'।
(बौ. स्मृ. १. ६. १३. १३)

इति। पैठीनसिरपि—

१. I. reads -मञ्जु- for -मुञ्ज-. २. I. reads ब्रह्माण्डपुराणे for ब्रह्मपुराणेऽपि. ३. I. reads चमसानां च for चमसा-ऽलाबु-. ४. The text has the following Sûtram

वल्कलचर्मकृष्णाजिनानाम्।

'गौरवाद्यजिनानां बिल्व-तण्डुलवत्' ।

इति तत् नूतनचर्मविषयम् ॥ २९ ॥

सतूल-शय्यादीनां शुद्धिमाह—

**तूलिकाद्युपधानानि [2]रक्तवस्त्रादिकानि च ।**
**शोषयित्वाऽऽतपेनैव प्रोक्षणात् शुद्धितामियुः[3] ॥ ३० ॥**

इति । तूलं शाल्मलिफलादिजन्यं तेन निर्मिता शय्या तूलिका । आदिशब्देनासनोपाश्रयादीनि गृह्यन्ते । उपधानमुच्छीर्षकम् । तूलिकादीनि चोपधानं च तूलिकाद्युपधानानि । रक्तवस्त्रं माञ्जिष्ठम् । आदिशब्देन कौसुम्भ-हारिद्रादीनि । एतेषाममेध्यादिलेपरहितोपहतौ आतपशोषणं प्रोक्षणं च । एतच्च करोन्मार्जनस्याप्युपलक्षणम् । अत एव देवलः—

'तूलिकाद्युपधानानि पुष्परक्ताम्बराणि च ।
शोषयित्वा तथा किञ्चित् करैरुन्मार्जयेन्मुहुः ॥
पश्चात्तु वारिणा प्रोक्ष्य शुचीन्येवमुपाहरेत्[4]' ।

इति । [5]निर्लेपकौसुम्भपुष्परक्तानि कुङ्कुम-कुसुम्भादिरक्तानि । पुष्परक्तग्रहणं अन्यस्यापि हरिद्रादिरक्तस्य क्षालनास-

---

१. A. reads रौरववस्त्राद्यजिनानां for गौरवाद्यजिनानां. २. M reads पीत-रक्ताम्बराणि च. ३. I. reads शुद्धिता पुनः for शुद्धितामियुः. M. reads this line as follows —

शोषयित्वाऽर्कतापेन प्रोक्षयित्वा शुचिर्भवेत ॥.

४. I. reads उदाहरेत् for उपाहरेत्. ५. B. and D. omit निर्लेपकौसुम्भ- and C. E. F. H. and I. omit the following portion :—

निर्लेपकौसुम्भपुष्परक्तानि कुङ्कुमकुसुम्भादिरक्तानि । पुष्परक्तग्रहणं अन्यस्यापि हरिद्रादिरक्तस्य क्षालनासहस्य प्राप्त्यर्थम् । न माञ्जिष्ठादेः । तस्य क्षालनसहत्वात् ।

हस्य प्राप्त्यर्थम् । न माञ्जिष्ठादेः । तस्य क्षालनसहत्वात् ।
सैलेपोपहतौ[1] स एवाह—

'अल्पशौचे भवेत् शुद्धिः शोषण-प्रोक्षणादिभिः ।
तान्येवामेध्ययुक्तानि निर्णिज्यात्[2] क्षारपर्ययैः ॥
तान्यप्यतिवालिष्ठानि[3] यथावत् परिशोधयेत्' ।

इति । निर्लेपकौसुम्भादौ षट्त्रिंशन्मतेऽभिहितम्—

'कुसुम्भ[4]-कुङ्कुमै रक्तं तथा लाक्षारसेन वा ।
प्रोक्षणेनैव शुद्ध्येत चण्डालस्पर्शने सदा[5]' ॥

इति । शङ्खोऽपि—

'कुसुम्भ-कुङ्कुमानां च और्ण[6]-कार्पासयोस्तथा ।
प्रोक्षणात् कथिता शुद्धिरित्याह भगवान् यमः[7]' ॥

इति ॥ ३० ॥

द्रव्योपहतौ शुद्धिर्वर्णिता । इदानीं श्वादिभिरिव मार्जारादिभिरप्युपहते शङ्काप्रसक्तावपवदति—

**मार्जार-मक्षिका-कीट-पतङ्ग-कृमि-दर्दुराः ।**
**मेध्यामेध्यं स्पृशन्तोऽपि नोच्छिष्टं[8] मनुरब्रवीत् ॥३१॥**

---

१. B and D omit सलेपोपहतौ स एवाह and the next four lines —
'अल्पशौचे भवेत् शुद्धिः शोषण-प्रोक्षणादिभिः ।
तान्येवामेध्ययुक्तानि निर्णिज्यात् क्षारपर्ययैः ॥
तान्यप्यतिवालिष्ठानि यथावत् परिशोधयेत्' ।
इति । निर्लेपकौसुम्भादौ षट्त्रिंशन्मतेऽभिहितम् —
२ I. reads जह्यात्क्षारपर्याणि चैव for निर्णिज्यात्क्षारपर्ययैः ३. H. and I. read -मलिष्ठानि for -वालिष्ठानि ४ B. and D read कुसुम्भानां रसै रक्त. ५. I substitutes सति for सदा ६. B. C. E. F. G. H. and J read ऊर्णा- for और्ण-. ७. I. reads मनुः for यमः ८. M. reads स्पृशन्त्येव नोच्छिष्टान for स्पृशन्तोऽपि नोच्छिष्टं and K. and L read न दोषो for नोच्छिष्टम्.

इति। मेध्यं चामेध्यं च मेध्यामेध्यम्। यद्यपि मार्जारादय उभयं स्पृशन्तो वर्त्तन्ते तथापि मेध्यं तावता नोच्छिष्टमिति योजनीयम्॥ ३१॥

भूमिस्पृष्टोदकादावशुद्धिमपवदति–

**महीं स्पृष्ट्वाऽऽगतं तोयं याश्चाप्यन्योन्यविप्रुषः।**
**भुक्तोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत्॥३२॥**

इति। पादप्रक्षालनाचमनादावधः पतितं यदुदकं भूमिं स्पृष्ट्वा पुनर्बिन्दुरूपेणागत्य स्पृशति, ये चान्योन्यमुखाद्गता बिन्दवः सम्भाषणे शरीरे पतन्ति, यश्च स्नेहो भोजनानन्तरं प्रक्षालनेनानिर्हार्यः, तत् सर्वं नाऽशुद्ध्यापादकम्॥ ३२॥

मुखान्तर्गतताम्बूलादीनामुच्छिष्टशङ्कामपवदति–

**ताम्बूलेक्षु-फले चैव भुक्तस्नेहानुलेपने।**
**मधुपर्के च सोमे च नोच्छिष्टं धर्मतो विदुः॥३३॥**

इति। ताम्बूलं च इक्षुश्च फलं च ताम्बूलेक्षुफलम्। पूर्ववचनोक्तोऽपि भुक्तस्नेहो ऽत्र दृष्टान्तत्वेन पुनरुपात्तः। मधुपर्को यज्ञ-विवाहादौ दध्यादिभक्षणम। सोमो यागे सोमपानम्। एतेषु नास्त्युच्छिष्टदोषः॥ ३३॥

रथ्योदकादौ प्रयत्नेन कर्त्तव्यः शुद्धिविशेषो नास्तीत्याह–

**रथ्याकर्दम-तोयानि नावः पन्थास्तृणानि च।**
**मारुतार्केण शुद्ध्यन्ति पक्वेष्टकचितानि च॥३४॥**

---

१. M reads भूमि for महीं. २. B. and D. substitute ये च for याश्च. ३ B and D. read पादप्रक्षालनात and except A. and I all omit -आचमन- ४ J. reads शुद्ध्यापादकम for नाऽशुद्ध्यापादकम. while I. substitutes अशुचिता for अशुद्धि. ५. M. reads मनुरब्रवीत for धर्मतो विदुः.

इति। पक्केष्टकचितानि चैत्यवृक्ष-वेदिकादीनि। निर्दिष्टानामेतेषां चण्डालादिस्पर्शे ऽपि वाय्वातपाभ्यां शुद्धिः। तथाच याज्ञवल्क्यः—

*'रथ्याकर्दम-तोयानि स्पृष्टान्यन्त्य-श्व-वायसैः।
मारुतार्केण[1] शुद्ध्यन्ति पक्वेष्टक[2]चितानि च ॥ (१९७)
पन्थानश्च[3] विशुद्ध्यन्ति सोम-सूर्यांशु-मारुतैः'॥ (१९४)
(या. स्मृ. १. १९४–१९७)

इति। बौधायनोऽपि—

'आसनं शयनं यानं नावः पन्थास्[4]तृणानि च।
मारुतार्केण[5] शुद्ध्यन्ति पक्वेष्टकचितानि च'॥
(बौ. स्मृ. १. ६. ९. ७.)

इति। उपरिभागस्पर्शे शङ्ख आह—

'रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा त्वथ[6]।
नाभेरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुद्ध्यति'॥
(शं. स्मृ. ११. ३६)

इति। अधोभागस्पर्शे यम आह—

* अत्र 'बहुवचनं तद्गतगोमय-शर्करादिप्राप्त्यर्थम्'—इति विज्ञानेश्वरः। पन्थानो मार्गाः। रात्रौ सोमांशुभिर्मारुतेन च दिवा सूर्यांशुभिर्मारुतेन च शुद्ध्यन्ति इति योजना।

१. The text reads मारुतेनैव for मारुतार्केण २ H. reads तसेष्टक- for पक्वेष्टक-. ३ B. and D. omit this line —
'पन्थानश्च विशुद्ध्यन्ति सोम-सूर्यांशु-मारुतैः'॥.
४. The text reads पाथ- for पन्था. ५. This line does not appear in the text. ६. E. and F. read मथा and I. पुनः for त्वथ.

'सेकर्दमं तु वर्षासु प्रविश्य ग्रामसङ्करम् ।
जङ्घयोर्मृत्तिकास्तिस्रः पादयोर्मृत्तिका स्मृता'॥
(य. स्मृ. ४. ११)

इति ॥ ३४ ॥

उदकपानगतधारादीनामशुद्धिमपवदति—

अदुष्टाः सन्तता[2] धारा वातोद्धूताश्च रेणवः ।
स्त्रियो वृद्धाश्च[3] बालाश्च न दुष्यन्ति कदाचन ॥३५॥

इति । कमण्डल्वादिकात् निर्गत्य मुखपर्यन्तमविच्छिन्ना अपि उदकधारा नोच्छिष्टाः। नानाविधाशुचिप्रदेशाद्वायुनोत्थापिता अपि रेणवः स्पर्शार्हाः । पुरुषवत्[4] प्रातःस्नानाद्यभावेऽपि योषिदादयः स्पृश्याः शुद्धाश्च। रेणुशुचित्वं रासभादिभ्योऽन्यत्र द्रष्टव्यम् । तदाह शातातपः—

'रेणवः शुचयः सर्वे वायुना समुदीरिताः ।
अन्यत्र रासभा-ऽजा-ऽवि-श्व-काकोलूक-वायसाम्'[5]॥

इति । स्मृत्यन्तरेऽपि—

'श्व-काकोष्ट्र-खरोलूक-सूकर-ग्राम्य[6]पक्षिणाम्*।
अजा-ऽविरेणुसंस्पर्शादायुर्लक्ष्मीश्च हीयते' ॥

* ग्राम्यपक्षिणः कुकुटादयः । कुकुटस्य स्पर्शानर्हत्वमभक्ष्यत्वं चान्यत्र प्रसिद्धम् ।

१ I. reads न for स-. २. K. and L read अनुष्टा सतता for अदुष्टाः सन्तता ३. K. and L. read वृद्धास्तथा बालाः for वृद्धाश्च बालाश्च. ४. B. and D. omit पुरुषवत् प्रातःस्नानाद्यभावे ऽपि and read स्त्रियो वृद्धाश्च बालाश्च शुद्धा for योषिदादय स्पृश्याः शुद्धाश्च । ५. C. E. F. G. and H. read -श्वसमूहनिवासिनाम्, I. -श्वसमूहान्त्यवासिनाम् and J श्वसमूहनिवासजम् for -श्व-काकोलूकवायसाम् ६. All, except H. and I read -ग्राम- for -ग्राम्य-.

इति । गवादीनां रेणवो न केवलं दोषरहिताः प्रत्युत प्रशस्ताः । तदाहोशनाः—

'गवा-ऽश्व-रथ-यानानां प्रशस्ता रेणवः सदा' ।

इति । विषयविशेषेण शुद्धिमाह याज्ञवल्क्यः—

'रश्मिरग्निरजच्छाया गौरश्वो वसुधाऽनिलः ।
विप्रुषो मक्षिकास्पर्शे वत्सः प्रस्रवणे शुचिः' ॥
(या. स्मृ. १. १९३)

इति । विप्रुषो नीहारबिन्दवः । एते चण्डालादिस्पृष्टा अपि स्पर्शे शुचयः । वत्स ऊधोगतक्षीराकर्षणे शुद्धः । वत्सन्यायो बालस्तन्यपाने ऽप्यवगन्तव्यः । तथा च वसिष्ठः—

'अहताश्च मृगा मेध्याः[1] पातितं च द्विजैः[2] फलम् ।
बालैरनुपरिक्रान्तं* स्त्रीभिराचरितं च यत्' ॥
(व. स्मृ. ३. ४५)

इति । द्विजैः पक्षिभिः[3] । उशनाः—

'गौर्मेध्या पृष्ठे । (१७) पुरस्तादजादयः[4] । (१८) स्त्रियः सर्वतः । (१९) हृदयमासामशुचि' । (२०)
(औ. स्मृ. ३. १७–२०)

इति । बृहस्पतिरपि—

* बालैः त्रिवर्षोनैः । ततो ऽधिकस्य उच्छिष्टादिप्रतिबन्धो ऽस्त्येव । अनुपरिक्रान्तं उच्छिष्टानुच्छिष्टास्पृश्यस्पर्शादि यदाचरितं तस्य न दोषोऽस्तीति भावः । एवं स्त्रीभिरपि पाकादिकाले रतिकाले च यदाचरितं तन्नामेध्यमित्यर्थः ।

१. The text reads वन्याः for मेध्याः. २. The text reads खगै· for द्विजैः. ३. C. E. F. H. and I. omit द्विजैः पक्षिभि·. ४. B. and D. substitute अश्वश्च पुरस्तात for पुरस्तादजादयः. and omit हृदयमासामशुचि ; while C. E. F. G. and H. read अज for अजादयः.

'पादौ शुची ब्राह्मणानामजाश्वस्य मुखं शुचि ।
गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम्' ॥

इति । सुमन्तुः—

'स्त्री-बाल-मशक-मक्षिकामार्जार-मूषिका-च्छाया-
ऽऽसन-शयन-योना-ऽम्बुविप्रुषो नित्यं मेध्याः' ।

इति । बृहस्पति-हारीतौ—

'मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः' ।

इति । शङ्खः—

'मार्जारश्चंक्रमे शुचिः' ।

(शं. स्मृ. १६. १४)

इति । मनुः—

'नित्यं शुद्धः *कारुहस्तः पैण्यं यच्च प्रसारितम् ।
ब्रह्मचारिगतं भैक्षं नित्यं मेध्यमिति स्थितिः' ॥

(म. स्मृ. ५ १२९)

इति । यमः—

'आसनं शयनं यानं स्त्रीमुखं† कुतपं क्षुरम् ।
न दूषयन्ति विद्वांसो यज्ञेषु चमसं तथा ॥

* कारुः कान्दविकः । न शिल्पी ।

† स्त्रीमुखं न सर्वदा । किन्तु रतिकाल एव ।
'रतिकाले मुखं स्त्रीणाम्' ।
इत्युक्तेः । तदपि चुम्बनादिविषय एव । नान्यत्र ।

---

१ E reads -पानाम्बु- and B. and D. -पीताम्बु- for -यानाम्बु-. २. The text reads पण्ये for पण्यं. ३ The text reads भैक्ष्यं for भैक्षं.

गोरजो[1] विप्रुषश्छाया मक्षिकाः शलभाः शुकाः[2] ।
अश्वो हस्ती रणे छत्रं[3] रश्मयश्चन्द्र-सूर्ययोः ॥
भूमिरग्निरजो वायुरापो दधि घृतं पयः ।
सर्वाण्येतानि शुद्धानि स्पर्शे मेध्यानि नित्यशः ॥
आपः शुद्धा भूमिगताः शुचिर्नारी पतिव्रता ।
शुचिर्धर्मपरो[4] राजा सन्तुष्टो ब्राह्मणः शुचिः ॥
नित्यमास्यं *शुचि स्त्रीणां शकुनिः फलपातने ।
प्रस्नवे तु[5] शुचिर्वत्सः श्वा मृगग्रहणे शुचिः' ॥

( य. स्मृ. ४. ३१–३५ )

इति । पैठीनसिरपि[6]–

'स्त्रीणां मुखं रतिसंसर्गे' ।

इति । वसिष्ठात्रि-बौधायन-शातातपाः–

'स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः'।

(व. स्मृ. २८. ८ )

इति । मनुः–

* रतिकाल एवेत्यनुवर्तनीयम् । प्रस्नवे स्तनपाने एव वत्सः शुचिः ।

१ J reads गौरजां for गोरजो २. B D, I. and J substitute कृशा for शुका, while C. E F. and H read शुभा for the same. ३ I. reads रणश्छत्रं for रणे छत्र ४ All, except A. and I read धर्मकरो for धर्मपरो. ५. I reads प्रश्नान्तरं शुचिर्बि-तु for प्रस्नवे तु शुचिर्वत्स. ६. G. omits following —
पैठीनसिरपि—
'स्त्रीणां मुख रतिसंसर्गे'।
इति । वसिष्ठा-अत्रि-बौधायन-शातातपा —
'स्त्रियश्च रतिससर्गे श्वा मृगमहणे शुचिः'।
(व. स्मृ. २८ ८)
इति । मनुः—.
H also omits this portion, but gives it in the margins.

'श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत् ।
क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः' ॥
(म. स्मृ. ५. १३१)

इति । देवलः—

'तरवः पुष्पिता मेध्या ब्राह्मणाश्चैव सर्वदा ।
भस्म क्षौद्रं सुवर्णं च सदर्भाः कुतपास्तिलाः ॥
अपामार्ग-शिरीषार्क-पद्ममामलकं मणिः ।
माल्यानि सर्षपा दूर्वाः सदा भद्राः प्रियंगवः ॥
अक्षताः सिकता लाजा हरिद्रा चन्दनं यवाः ।
पलाश-खदिरा-ऽश्वत्थास्तुलसी[1] धातकी वटः ॥
एतान्याहुः पवित्राणि ब्रह्मज्ञा हव्य-कव्ययोः ।
पौष्टिकानि मलघ्नानि शोधनानि च देहिनाम् ॥
अकश्मलैः समिद्धो ऽग्निर्दुर्मनुष्यैरदूषितः ।
सर्वेषामप्यशौचानां समर्थः शोधनाय सः ॥
अग्नेर्वृषलभुक्तस्य[2]* ग्रहणं नास्त्यनापदि ।
श्वपाको वृषलो भोक्तुं ब्राह्मणाग्निं च नार्हति ॥
चण्डालाग्नेरमेध्याग्नेः सूतकाग्नेश्च कर्हिचित् ।

* 'वृषलभुक्तस्य' वृषलेन पाकार्थं प्रज्वालितो ऽग्निः पाकं कृत्वा विसृष्टः वृषलभुक्तः । 'वृषलमुक्त' इति पाठे ऽपि पाकं कृत्वा मुक्त इति व्याख्येयम् । एवं ब्राह्मणेन सिद्धो ऽग्निरपि श्वपाको वृषलो वा पाकाद्यर्थं न गृण्हातुमर्हतीति यथायथ योजनीयम् ।

१. All, except A and I read -खदिर श्चाथ तुलसी for -खदिरा-ऽश्वत्थास्तु-लसी. २. H reads -मुक्तस्य for -भुक्तस्य.

पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम् ॥
अग्राम्या[1] मृद्भवेत् शुद्धा श्लक्ष्णाऽविण्मूत्रदूषिता'[2] ।

इति । ब्रह्मपुराणे ऽपि—

'ग्रामाद्दण्डशतं त्यक्त्वा नगरे च चतुर्गुणम् ।
भूमिः सर्वत्र शुद्धा स्यात् यत्र लेपो न दृश्यते'[3] ॥

इति । लेपे तु याज्ञवल्क्य आह—

'भूशुद्धिर्मार्जनाद् दाहात् कालाद् गोक्रमणात्तथा ।
सेकादुल्लेखनाल्लेपाद् गृहं मार्जन-लेपनात्' ॥
(या. स्मृ. १. १८८)

इति । यमो ऽपि—

'खननात् पूरणात्[4] दाहादद्भिर्वर्षण-लेपनात्[5] ।
गोभिराक्रमणात् कालाद् भूमिः शुद्ध्यति सप्तधा' ॥
(म. स्मृ. ३. ३४)

इति । देवलस्त्वमेध्य-दुष्ट-मलिनत्वभेदैस्त्रिविधामशुद्धिं तद्विशुद्धिं च विशदयति—

'यत्र प्रसूयते नारी म्रियते दह्यते नरः ।
चण्डालाध्युषितं यत्र यत्र विष्ठादिसङ्घातिः ॥
एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्त्तिता ।

---

१. I. reads अमाह्या for अमाम्या. २. G. reads श्लेष्म-विण्मूत्र-, C and F. लक्ष्मा विण्मूत्र- and H. लक्ष्णा विण्मूत्र- for श्लक्ष्णा विण्मूत्रदूषिता All these readings appear to be incorrect ३ C. and F. substitute विद्यते for दृश्यते. ४ I. reads सरणात् for पूरणात्. ५. B. D E H and J read अविवर्षण-लेपनात्, G. अग्निर्वर्षण-लेपनात् and I. अभिवर्षण लेपनात् for अद्भिर्वर्षण-लेपनात्.

श्व-सूकर-खरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत् ॥
अङ्गार-तुष-केशाऽस्थि-भस्माद्यैर्मलिना भवेत् ।
पञ्चधा च चतुर्धा च भूरमेध्या विशुद्ध्यति ॥
दुष्टाऽपि या[1] त्रिधा द्वेधा शुद्ध्यते मलिनैकधा' ।

इति । तत्र पञ्चविधा शुद्धिर्मनुना दर्शिता—

'सम्मार्जनेनाञ्जनेन[2] सेकेनोल्लेखनेन च ।
गवां च परिवासेन भूमिः शुद्ध्यति पञ्चधा[3]' ॥
( म. स्मृ. ५. १२४ )

इति । एतेष्वेव पञ्चविधेषु यथायोगं* चातुर्विध्यादिकं योजनीयम् । यद्वा दहनादयः पञ्च विधा देवलोक्ता द्रष्टव्याः—

'दहनात् खननाच्चैव उपलेपन-धावनात् ।
पर्जन्यवर्षणात्[4] भूमेः शौचं पञ्चविधं स्मृतम्' ॥

इति । गृहशुद्धिं संवर्त्त आह—

'गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषणे ।
सम्प्रोक्ष्य मृण्मयं भाण्डं सिद्धमन्नं तथैव च ॥
गृहादपास्य तत् सर्वं गोमयेनोपलेपयेत् ।

---

* यथायोगं व्यवस्था चेत्थम्—'यत्र मनुष्या दह्यन्ते यत्र च चण्डालैरध्युषितं तयोः पञ्चभिः दहन-काल-गोक्रमण-सेकोल्लेखनैः शुद्धिः । यत्र मनुष्या जायन्ते यत्र च म्रियन्ते यत्र चात्यन्तं विष्ठादिसङ्गतिः तासां दाहवर्जितैस्तैरेव चतुर्भिः । श्व-सूकर-खरैश्चिरकालमध्युषितायाः गोक्रमण-सेकोल्लेखनैस्त्रिभिः । उष्ट्र-ग्रामकुक्कुटादिभिश्चिरकालमधिवासिताया सेकोल्लेखनाभ्यां शुद्धिः । अङ्गार-तुषादिभिश्चिरकालमधिवासिताया उल्लेखनेनैकेनैव शुद्धिः । मार्जनानुलेपने तु सर्वत्र समुच्चीयेते'—इति विज्ञानेश्वरः ।

१. All, except A read सा for या. २. I. and the text read सम्मार्जनोपाञ्जनेन for सम्मार्जनेनाञ्जनेन. ३. The text reads पञ्चभिः for पञ्चधा ४. I. reads wrongly पर्यण्य- for पर्जन्य-.

गोमयेनोपलिप्याऽथ धूमैराघ्रापयेद् बुधः ॥
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्य-कुशवारिणा।
सर्वमभ्युक्षयेद्वेश्म ततः शुद्ध्यत्यसंशयम्' ॥
(सं. स्मृ. १९८–२००)

इति। बौधायनः—
'उद्बन्धशवोपघाते वेश्मनो भित्तितक्षणम्'।
(बौ. स्मृ. १. ६. १३. ३३)

इति। देहविषये शुद्ध्यशुद्धी विभजति मनुः—
'ऊर्ध्वं नाभेर्यानि खानि* तानि मेध्यानि सर्वशः।
यान्यधस्तादमेध्यानि देहाच्चैव मलाश्च्युताः ॥
विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्यादेयमर्थवत्†।
दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि' ॥
(म. स्मृ. ५. १३२–१३४)

इति। अर्थवत् शास्त्रोक्तवत्। अत्र च कर्णविट्प्रभृति-षूत्तरेषु षट्सु मृद्ग्रहणं वैकल्पिकम्।
'आददीत मृदोऽपश्च षट्सु पूर्वेषु शुद्धये।
उत्तरेषु तु षट्स्वद्भिः केवलाभिस्तु शुद्ध्यति' ॥

इति स्मृत्यन्तरे वचनात्। मृदम्भसोरियत्तामाह मनुः—

* अत्र खशब्द इन्द्रियवचनो न भवति। छिद्रवचन एव सः। अन्यथा यान्यमेध्यानीति बहुवचनमयुक्तं स्यात्।

† अर्थवत् प्रयोजनवत्। प्रयोजनं च गन्ध-लेपापसर्पणम्। तेन यावतीभिर्गन्ध-लेपावपसर्पतः तावतीरपो मृदश्च गृण्हीयादित्युक्तं भवति।

१. I. reads द्वादशोऽस्वपि for द्वादशस्वपि. २. All, except A. B. and D. omit अर्थवत् शास्त्रोक्तवत्. ३. B. and D. read अन्यत्र for अत्र च, while C. E. F and G. omit च. ४. B. and D. substitute शुद्धाभि for केवलाभि, while G. H. and I. read सकलाभिः for the same.

'यावन्नापैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः ।
तावन् मृद्वारि चाऽऽदेयं सर्वासु द्रव्यशुद्धिषु' ॥
(म. स्मृ. ५. १२६)

इति । विद्यमानाऽप्युपहतिर्यत्र न दृष्टा तत्र तद्दर्शनात् पूर्वं शुद्धमेव तद्वस्तु । तदाह स एव—

'त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते' ॥
(म. स्मृ. ५. १२७)

इति । याज्ञवल्क्योऽपि—

'वाक्शस्तमम्बुनिर्णिक्तमज्ञातं[1] च सदा शुचि' ।
(या. स्मृ. १. १९१)

इति ॥ ३५ ॥

येयं[2] पूर्वोक्ता शुद्धिः सा सर्वाऽप्यनापद्विषयेत्यभिप्रेत्याह—

**देशभङ्गे[3] प्रवासे वा व्याधिषु व्यसनेष्वपि ।**
**रक्षेदेव स्वदेहादि पश्चाद्धर्मं समाचरेत् ॥ ३६ ॥**

इति । देशभङ्गः परसैन्यापादितः । प्रवासस्तीर्थयात्रादौ परगृहाद्यवस्थानम् । व्याधयो ज्वरादयः । व्यसनानि स्वामिकोपादिजनितानि । एतेषु प्राप्तेषु श्रद्धाजाड्येन शुद्ध्यशुद्धी न

---

१. I. reads अदृष्टं च for अज्ञातं च. २. J. reads एवं for येयं. ३. The following three ślokás appear in M. before the present one:—

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते ।
पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥
अग्निरापश्च वेदाश्च सोम-सूर्या-ऽनिलास्तथा ।
एते सर्वेऽपि विप्राणां श्रोत्रे तिष्ठन्ति दक्षिणे ॥
प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे सान्निध्यं मनुरब्रवीत् ॥

विचारयितव्ये। किं तर्हि शुचिभिरशुचिभिर्वा द्रव्यैरात्म-पुत्र-कलत्रादीनां यथा रक्षा भवति तथा कृत्वा शान्तायामापदि पश्चात् द्रव्यशुद्ध्यादिरूपं शास्त्रोक्तं धर्ममाचरेत् ॥ ३६ ॥

'रक्षेदेव स्वदेहादि'—इत्यमुमर्थं प्रपञ्चयति—

येन केन च धर्मेण मृदुना दारुणेन वा[1]।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥३७॥

इति। शुद्धद्रव्यादिसम्पादितो धर्मो मृदुः*। तद्विपरीतो धर्मो दारुणः। स्तन्यपान[2]-मांसभक्षणादिः। तयोर्मध्ये येनकेनापि व्याध्यादिभिर्दीनमात्मानमापन्न उद्धृत्य समर्थो व्याध्यादिरहितो यथाशास्त्रं धर्ममाचरेत् ॥ ३७ ॥

तत्राचरणीयो धर्मो द्विविधः। आचारकाण्डोक्तविहितानुष्ठान-प्रतिषिद्धवर्जनरूप एकः प्रायश्चित्तकाण्डोक्तविधि-निषेधातिक्रमसमाधानरूपो ऽपरः। तदुभयं विविच्योभयत्रापि शान्तापदेवाधिकारीत्याह—

आपत्काले तु निस्तीर्णे[3] शौचाचारं तु चिन्तयेत्।
शुद्धिं[4] समुद्धरेत् पश्चात् स्वस्थो[5] धर्मं समाचरेत् ॥३८॥

इति। शौचाचारमित्यनेन प्रथमकाण्डोक्तो धर्मः परामृष्टः।

* 'मृदुना सुकरेण। यथोपपन्नदेश-काल-द्रव्यात्मसाध्यो मृदुः। दारुणेन दुष्करेण'—इति धरणीधरः।

१ I. K. L. and M. substitute च for वा. २. G. reads स्तनपान- for स्तन्यपान- and B. and D. read न्यस्तपान- for the same. ३. M. reads सम्प्राप्ते शौचाचार न चिन्तयेत for निस्तीर्णे शौचाचारं तु चिन्तयेत. ४. M. reads स्वयं for शुद्धिं. ५. A. reads समर्थो धर्ममाचरेत् for स्वस्थो धर्मं समाचरेत्.

शुद्धिमित्यनेन प्रायश्चित्तकाण्डोक्तो धर्मो निर्दिष्टः । शुद्धो यथा भवति तथा पापात् समुद्धरेदित्यर्थः । स्वस्थ इत्युपसंहारः । उक्तं द्विविधमपि धर्मं स्वस्थ एव समाचरेत् । न त्वापन्नः । एतदेवाभिप्रेत्य याज्ञवल्क्य आह—

'क्षात्रेण कर्मणा जीवेद्विशां वाऽप्यापदि द्विजः ।
निस्तीर्य तामथात्मानं* पावयित्वा न्यसेत् पथि' ॥
( या. स्मृ. ३. ३५ )

इति ॥ ३८ ॥

आख्याय सप्तमेऽस्मिन्नध्याये द्रव्यशुद्धिरवशिष्टा ।
सैषा माधवविभुना व्याख्यायि पराशरस्मृतौ विदुषा ॥१॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां सप्तमोऽध्यायः ॥ ७ ॥

---

* आपन्निस्तरणानन्तरं प्रायश्चित्तेनात्मानं पावयित्वा पथि स्ववृत्तौ न्यसेत् स्थापयेदित्यर्थः ।

१. I. omits एव. २. I. reads सुधीः for पथि. ३. B. D. and J. omit माधवीयायां.

# पराशरसंहिता।

## अथाष्टमोऽध्यायः ।

सप्तमाध्याये द्रव्यशुद्धिः प्रतिपादिता । तत्रान्ते 'शुद्धिं[1] समुद्धरेत्' इत्युक्तम् । तत्रोद्धारप्रकारः प्रकीर्णकादिप्रायश्चित्तरूपश्चतुर्थादित्रिष्वध्यायेषूपवर्णितः[2] । अथावशिष्ट उपवर्णनीयः । षष्ठाध्याये च–

'वैश्यं वा क्षत्त्रियं वाऽपि' ।

इत्यादिनोपपातकानां प्रायश्चित्तान्युपवर्णयन् बहुवक्तव्यसद्भावादुपपातकविशेषस्य गोवधस्य प्रायश्चित्तं तत्रोपेक्षितम् । तदिदानीमध्यायद्वयेन विवक्षुरादौ मुनिविप्रतिपत्तिं* सूचयितुं[3] पृच्छति–

**गवां बन्धनयोक्त्रेषु[4] भवेन्मृत्युरकामतः[5] ।**
**अकामकृतपापस्य[6] प्रायश्चित्तं कथं भवेत् ? ॥ १ ॥**

इति । योक्त्राणि पाशाः । बन्धनार्थानि योक्त्राणि बन्धनयोक्त्राणि । तेषु बद्धानां गवामितस्ततः सञ्चरणादिना गले निरुद्धानां कथंचित् मृत्युर्भवेत् । स चाऽकामकृतः । पुरुषेण[7]

* परस्परविरुद्धमेकार्थं दर्शनं विप्रतिपत्तिः । कामकारकृतपापस्य प्रायश्चित्तमस्तीत्येकेषां दर्शनम् । नास्तीत्यन्येषाम् ।

१ Except A and I all read शुद्धं for शुद्धिं. २. All, except A. and I. omit त्रिषु, B. D and J. read चतुर्थादिषु and C. E. F. and H. चतुर्थादि अध्यायेषु for चतुर्थादित्रिष्वध्यायेषु. ३. B. and D. substitute स्तवयितु for सूचयितुं and for the same J. भावयितुं. ४. M. reads योक्त्रे तु for योक्त्रेषु ५. I. reads मृत्ति for मृत्युः. ६. M. reads अकामात् for अकाम-. ७. B. and D. read दोषेण for पुरुषेण.

तन्मरणाय प्रयत्नस्याकृतत्वात् । तादृशस्य गोवधस्य प्राय-श्चित्तं वक्तव्यम् । सर्वमुनिसम्मतं मुख्यं प्रायश्चित्ताधिकारं द्योतयितुमकामकृतस्येत्यनुवादः । कामकृतस्य तु प्रायश्चित्तं कैश्चिदेव मुनिभिरभ्युपगम्यते । न तु सर्वैः । तदाह मनुः—

'अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः ।
कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्'* ॥

( म. स्मृ. ११. ४५ )

इति । जाबालिरपि—

'अकामकृतपापानां ब्रुवन्ति ब्राह्मणा व्रतम् ।
कामकारकृतेऽप्येके द्विजानां वृषलस्य च' ॥

इति । देवलोऽपि—

'यत् स्यादनभिसन्धाय पापं कर्म सकृत् कृतम् ।
तस्येयं निष्कृतिः प्रोक्ता धर्मविद्भिर्मनीषिभिः ॥
विधेः प्राथमिकादस्मात् द्वितीये द्विगुणं स्मृतम् ।

* श्रुतिनिदर्शनात् वैदिकलिङ्गदर्शनात् । तच्चेत्थम्—

'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् ।
तमश्लीला वागित्यवदत् स प्रजापतिमु-
पाधावत् तस्मात्तमुपहव्यं प्रायच्छत्' ।

(तै. सं. २. १४. ३१)

इति । अत्र इन्द्रो यतीन् बुद्धिपूर्वकं श्वभ्यो दत्तवान् । अनन्तरं स अश्लीला ब्रह्महाऽसीत्येवंरूपां वाचमशृणोत् । श्रुत्वा च स प्रायश्चित्तार्थं प्रजातिसमीपमगमत् । स तस्मै उपहव्यं अश्वमेधरूपं प्रायश्चित्तं उपदिदेशेति वर्णयन्त्या श्रुत्या कामकारकृते ऽपि प्रायश्चित्तमस्तीति निर्दिष्टम्-इति सुधियो विदाङ्कुर्वन्तु ।

**तृतीये त्रिगुणं कृच्छ्रं* चतुर्थे नास्ति निष्कृतिः ॥**
अभिसन्धिकृते पापे सकृद्वा नेह निष्कृतिः ।
अपरे निष्कृतिं ब्रूयुरभिसन्धिकृते ऽपि च' ॥

इति । बौधायनस्तु कामकृतस्य प्रायश्चित्ताभावमाह—
'अमत्या ब्राह्मणं हत्वा दुष्टो भवति धर्मतः ।
ऋषयो निष्कृतिं तस्य वदन्त्यमतिपूर्वके[1] ।
मतिपूर्वं हते[2] तस्मिन् निष्कृतिर्नोपलभ्यते' ॥
(बौ. स्मृ. २. १. १. ६)

इति । छागलेयो[3] ऽपि—
'प्रायश्चित्तमकामानां कामावाप्तौ न विद्यते' ।

इति । अङ्गिरास्तु कामकृतस्य द्विगुणं व्रतमाह—
'अकामतः कृते पापे प्रायश्चित्तं न कामतः ।
स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके[4]' ॥

इति । एवं च कामकृते विप्रतिपत्तावपि अकामकृते तद-भावात्तादृशः सर्वसम्मतो मुख्याधिकारी ।

अत्रेदं विचार्यते—भवत्वकामकृतस्य प्रायश्चित्तसद्भावे मुनीनामविवादः कामकृतस्य तूक्तरीत्या मुनिविप्रतिपत्तौ को निर्णय इतीदं विचार्यते ।

अत्र केचिन्निर्णयमाहुः—द्विविधा हि पापस्य शक्तिः । नरकोत्पादिका व्यवहारनिरोधिका[5] चेति अतस्तन्निवर्त्त-

---

* कृच्छ्रं प्रायश्चित्तमिति भावः ।

---

१ B. D. and G. read वदन्त्यमतिपूर्वकम ; while B. and D. substitute उभयोर् for ऋषयो. २ The text reads हतस्तस्य for हते तस्मिन. ३. We follow here A only, while I reads छागलयोऽपि and all others छागलोऽपि. for छागलेयोऽपि. ४ I. reads शुद्धिपूर्वके for बुद्धिपूर्वके. ५. I. and J. read विरोधिका for -निरोधिका

कस्य प्रायश्चित्तस्यापि शक्तिर्द्विधा भिद्यते । नरकनिवारिका व्यवहारजननी चेति । तत्र प्रायश्चित्ताभाववादिनां मुनीनां नरकनिवारणाभावोऽभिप्रेतः । सद्भाववादिनां तु व्यवहारजननी शक्तिरभिप्रेता । अयं च निर्णयो याज्ञवल्क्येन विस्पष्टमभिहितः—

'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो *व्यवहार्यस्तु वचनादिह जायते'॥

( या. स्मृ. ३. २२६ )

इति । अस्यायमर्थः—यदेनो ब्रह्मघातादिकमज्ञानकृतं तत् विहितैर्द्वादशवार्षिकादिभिरपैति । कामतस्तु कृतं चेत् स पुमान् शिष्टैर्व्यवहार्यः केवलमिह लोके भवति । न तु तस्य नरकापादकमेनः प्रायश्चित्तैरपैति । ननु—एवं सति प्रायश्चित्तं पापस्य काञ्चिच्छक्तिमपनुदति काञ्चिन्नेत्यर्धजरतीयं प्रसज्येत । न हि कुक्कुट्या एको भागः पच्यते अपरो भागः प्रसवाय कल्पत इति क्वचित् दृष्टम् । न । वचनादर्धजरतीयस्याप्यङ्गीकार्यत्वात् ।

'किं हि वचनं न कुर्यात् । नास्ति वचनस्यातिभारः' ।

इति न्यायात् । अन्यथा यौक्तिकम्मन्यः पापशक्तिं प्रायश्चित्तशक्तिं च केन दृष्टान्तेन समर्थयिष्यति? । वचनं च कामकृतानां द्विगुणं व्रतं दर्शयति—

'विहितं यदकामानां कामात्तत् द्विगुणं भवेत्' ।

इति । अतो द्विगुणप्रायश्चित्तेनेह लोके व्यवहारः सिद्ध्यति ।

---

*अत्र च—'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं' इत्युपक्रमात् तत्प्रतियोगितया ज्ञानत इति वक्तव्ये यत् 'कामत' इत्युक्तं तज्ज्ञान-कामयोस्तुल्यत्वप्रदर्शनार्थम्'—इति विज्ञानेश्वरः ।

यस्तु व्यवहारमनपेक्ष्य परलोकनिर्वाहमेव केवलमपेक्षते तस्य बुद्धिपूर्वकेषु महापातकेषु मरणान्तिकमेव प्रायश्चित्तम्। तत्र शातातपः—

'अकामावासौ प्रायश्चित्तम्। काम-
कारकृते[1] स्वात्मानमवसादयेत्'।

इति। स्मृत्यन्तरेऽपि—

'यः कामतो महापापं नरः कुर्यात् कथञ्चन।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते'॥

इति। मनुरपि—

'प्रास्येदात्मानमग्नौ वा[2] समिद्धे त्रिरवाक्शिराः[3]।
लक्ष्यं शस्त्रभृतां वा स्याद् विदुषामिच्छयाऽऽत्मनः'॥
( म. स्मृ. ११. ७३ )

इति। तस्मात् कामकारिणो मरणेन नरकपातनिवृत्तिः व्रतचर्यया तु व्यवहारसिद्धिरिति निर्णयः।

× इदं च मरणार्थमेवाग्निपतनम्। न पुनर्जीवनाय। यथाहापस्तम्बः—
'तथा प्रास्येत यथा म्रियेत'।
(आ. ध. सू. १. ९. २५. ७)

इति। इद प्रायश्चित्तद्वयम्—
'यजेत वाऽश्वमेधेन'।
( म. स्मृ. ११. ७४ )

इति वक्ष्यमाणं चैकम्। त्रयमपि कामतः क्षत्त्रियस्य ब्राह्मणवधे द्रष्टव्यम्।

१. B. C. D. E F. G. and J read कामकृते for कामकारकृते २. The text of Manu inserts this line after the next one. ३. H. and I. read सुसमिद्धे स्ववाक्शिरा for समिद्धे त्रिरवाक्शिराः.

अपरे पुनरेवमाहुः—यदुक्तं मरणान्तिकप्रायश्चित्तेन नरकनिवृत्तिरिति तत्तथैव[1]। यत्तु[2] व्रतचर्यया व्यवहारसिद्धिरेव न तु नरकनिवृत्तिरिति तत् विपर्येति। चीर्णव्रतस्य नरकस्तावन्निवर्त्तते। इहलोके तु तस्य न शिष्टैः सह व्यवहारोऽस्ति। एतच्च 'अव्यवहार्यः'—इति याज्ञवल्क्यवचने पदं छित्वा योजनीयम्। कामतश्चेत् पापं कृतं स पापी कृतप्रायश्चित्तोऽप्यव्यवहार्य इहलोके जायते। तच्चा ऽव्यवहार्यत्वं वचनबलादवगन्तव्यम्। वचनं च मानवमेतत्—

'बालघ्नांश्च[*] कृतघ्नांश्च विशुद्धानपि धर्मतः।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्' ॥[3]

(म. स्मृ. ११. १९०)

इति। अतः कृतप्रायश्चित्ता महापातकिनः परलोके शुद्धा अपि शिष्टैरिह बहिःकार्याः।

ननु—उपपातकिनामपि कृतप्रायश्चित्तानां बहिष्कार एवोचितः। तथा च वैय्यासिकं न्यायसूत्रम्—

'बहिस्तूभयथापि स्मृतेराचाराच्च'।

(ब्रा. सू. ३. ४. ४३)

---

* एनस्तत् द्विविधं भवति। आत्मगतं शरीरगतं च। तत्रात्मगतं प्रायश्चित्तादिनाश्यम्। शरीरगतं तु यावद्देहस्थायि। तत्रात्मगतस्य प्रायश्चित्तैर्निरासेऽपि देहगतस्यानिरासता वाचनिकी अभिहिता ऽस्मिन्वचने।

---

१ I. inserts युक्तम् after तथैव. २. I. substitutes यदुक्तं for यत्तु. ३. II. and J. read—

बालघ्नं च कृतघ्नं च विशुद्धावपि धर्मतः।

इति। अस्यायमर्थः—यद्युपपातकं यदि वा महापातकं उभयथाऽपि कृतप्रायश्चित्ताः शिष्टैर्बहिःकार्याः।

'प्रायश्चितं न पश्यामि'।

इति निन्दास्मृतेः शिष्टाचाराच्च—इति चेत्। मैवम्। अयं हि बहिष्कार ऊर्ध्वरेतोविषयः। न तु गृहस्थविषयः। ऊर्ध्वरेतोविचाराणामेव तत्र प्रस्तुतत्वात्। इदं च कौशिकेन स्पष्टीकृतम्—

'नैष्ठिकानां वनस्थानां यतीनां चावकीर्णिनाम्।
शुद्धानामपि लोके ऽस्मिन् प्रत्यापत्तिर्न* विद्यते'॥

इति। तदेवमैहिकव्यवहाराय परलोकाय वा कामकृतानां महापातकानां उपपातकानां चास्त्येव प्रायश्चित्तमिति सिद्धम्॥ १॥

'प्रायश्चित्तं कथं भवेत्?'—इति सेतिकर्तव्यताकस्य प्रायश्चित्तस्य पृष्टत्वात् परिषदुपसत्तिरूपामाद्यामितिकर्तव्यता माह—

**वेद-वेदाङ्गविदुषां धर्मशास्त्रं विजानताम्।**
**स्वकर्मरतविप्राणां स्वकं पापं निवेदयेत्॥ २॥**

इति। नामधारकविप्राणां परिषत्त्वं नास्तीति वक्ष्यमाणमर्थं हृदि निधाय तद्व्यावृत्तिसमर्थैर्विशेषणैः परिषद्योग्या ब्राह्मणा विशेष्यन्ते। यद्यपि मन्वादिधर्मशास्त्रज्ञानमात्रेण ब्राह्मणाः प्रायश्चित्तं विधातुं समर्थाः तथापि—

* 'प्रत्यापत्तिः' स्वीकारः लोके व्यवहार्यतेति यावत्।

१. C. and D. omit विधातुं समर्थाः तथापि—
'शुनाऽऽलीढं हविर्यथा'।
इति न्यायेन अनधीतवेदैः स्वकर्मानुष्ठानरहितैर्निर्दिष्टं प्रायश्चित्तं.

'शुनाऽऽलीढं हविर्यथा' ।

( द. स्मृ. ७. ४३ )

इति न्यायेन अनधीतवेदैः स्वकर्मानुष्ठानरहितैर्निर्दिष्टं प्रायश्चित्तं न पापापनोदनक्षमम् । तस्मात् स्वकर्मनिष्ठान् वेदपारङ्गतानुपेत्य तेषामग्रे चिकीर्षितप्रायश्चित्तनिमित्तं पापमशेषेण निवेदयेत् । सेयं परिषदुपसत्तिः । तामेतामुपसत्तिमङ्गिरा अपि स्पष्टं दर्शयति–

'अत ऊर्ध्वं प्रवक्ष्यामि उपस्थानस्य लक्षणम् ।
उपस्थितो हि न्यायेन व्रतादेशनमर्हति ॥
सद्यो निःसंशये पापे न* भुञ्जीतानुपस्थितः ।
भुञ्जानो वर्धयेत् पापं पर्षद्[१] यत्र न विद्यते ॥
संशये तु न भोक्तव्यं यावत् कार्यविनिश्चयः ।
प्रमादश्च न कर्तव्यो यथैवाऽसंशये[२] तथा ॥
कृत्वा पापं न गूहेत गूह्यमानं[३] विवर्धते ।
स्वल्पं वा ऽथ प्रभूतं वा धर्मविद्भ्यो निवेदयेत् ॥
ते हि पापकृतो[४] वैद्या हन्तारश्चैव पाप्मनाम् ।

---

* पर्षत्सन्निधानाभावे—इदं मया पापं कृतमित्यस्मिन् विषये यदि स्वस्यैव निःसंशयेन प्रत्ययो भवेत् तर्हि पर्षदुपसत्तिपर्यन्तं भोजनं वर्जयेत् । 'भुञ्जानो वर्धयेत् पापं' इति तत्र हेतुः । इदं च भोजनवर्जनं 'संशये' ऽपि कर्तव्यम् । स्वकृतं कर्म पापमपापं वेति यावन्न निश्चयः तावन्न भुञ्जीत । सति तस्मिन् पापे भुञ्जानो वर्धयेदित्यस्य तत्रापि प्राप्तिर्भवत्येवेति भावः ।

१ I. reads परिषद् यत्र विद्यते for पर्षद् यत्र न विद्यते. २ I. reads यथैवाऽसंशय for यथैवाऽसंशये. ३. Some read गुह्यमान for गूह्यमानं. ४. G. H. and J. read पापकृते and I. पापे कृते for पापकृतो.

व्याधितस्य यथा वैद्या बुद्धिमन्तो रुजापहाः ॥
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः ।
मृदुरार्जवसम्पन्नः शुद्धिं याचेत मानवः ॥
सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।
क्षत्त्रियो वाऽथ वैश्यो वा ततः पर्षदमाव्रजेत् ॥
उपस्थाय ततः शीघ्रमार्तिमान् धरणीं व्रजेत् ।
गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत्[१] ॥

(अं. स्मृ. ३. ७४–८१)

इति ॥ २ ॥

यथोक्तविशेषणरहितानां परिषत्त्वं निषेद्धुं तेषां स्वरूपमाह—

**सावित्र्याश्चापि गायत्र्याः सन्ध्योपास्त्यग्निकार्ययोः ।**
**अज्ञानात् कृषिकर्त्तारो ब्राह्मणा नामधारकाः ॥३॥**

इति ।

'तत्सवितुर्वरेण्यम्' ।

इति सवितृप्रतिपादकत्वात् सावित्री । णिकार-यकारयोर्विश्लेषेण[*] चतुर्विंशत्यक्षरत्वाद्गायत्री ।

'चतुर्विंशत्यक्षरा गायत्री' ।

इति श्रुतेः । सावित्र्यादीनामज्ञानान्न मुख्या ब्राह्मणाः ।

* णिकार-यकारयोर्विश्लेषेण—'तत्सवितुर्वरेणीयम' इत्याकारिका भवति ।

१. The sixteen lines of Angirah appear in M. after the second verse of the text of Parâśara. But no commentator has referred to them as from Parâśara.

ब्रह्म वेदः। तमधीत्यार्थं चावगत्य येऽनुतिष्ठन्ति मुख्यास्ते ब्राह्मणाः। तदाहाङ्गिराः—

'जन्म-शारीर-विद्याभिराचारेण श्रुतेन च।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते'॥

(अं. स्मृ. १. ९१)

इति। ये तु सावित्रीं सम्यक् न जानन्ति दूरे तदनुष्ठानं ते विशिष्टमाता-पितृजन्या अपि ब्राह्मणनाममात्रं धारयन्ति। न तु यथोक्तब्राह्मणशब्दार्थत्वं तेषु विद्यते। अत एव याजनाध्यापनादिजीवनहेत्वसम्भवाज्जीवनाय कृषिं कुर्वन्ति। तेषु ब्राह्मणशब्दार्थत्वाभावं व्यास आह—

'ब्रह्मबीजसमुत्पन्नो ब्राह्म[1]संस्कारवर्जितः।
जातिमात्रोपजीवी यः[2] स ब्राह्मण इति स्मृतः'॥

(व्या. स्मृ. ४. ४२)

इति। नामधारकवत् ब्राह्मणब्रुवस्यापि न मुख्यं ब्राह्मण्यम्। ब्राह्मणब्रुवश्च चतुर्विंशतिमते दर्शितः

'गर्भाधानादिसंस्कारैर्वेदोपनयनैर्युतः।
नाध्यापयति नाधीते स भवेद् ब्राह्मणब्रुवः'॥

इति॥ ३॥

अमुख्यब्राह्मणानां वृद्धव्यवहारदर्शनेन [3]प्रायश्चित्तविशेषपरिज्ञानेऽपि परिषत्त्वयोग्यत्वं नास्तीत्याह—

१. The text reads मन्त्रसंस्कार- for ब्राह्मसंस्कार. २. The text च स भवेद्ब्राह्मण. सम. for यः स ब्राह्मण इति स्मृत. ३. B. and D. omit प्रायश्चित्तविशेषपरिज्ञाने and read -दर्शने for -दर्शनेन- Also C. E. F. and G. -दर्शने for -दर्शनेन.

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ ४ ॥

इति। सौम्य-प्राजापत्यादिव्रतहीना अव्रताः। अनधीतवेदा अमन्त्राः।

ननु—अध्यात्मविद्यायुक्तस्यैकस्यैव परिषत्त्वमस्ति।

'एको वाऽध्यात्मवित्तमः'।

(या. स्मृ. १. ९)

इति स्मरणात्। अध्यात्मविद्यारहितस्य त्वेकस्य परिषत्त्वाभावेऽपि चतुर्णां परिषत्त्वं स्मर्यते—

'चत्वारो वेदधर्मज्ञाः परिषत्'।

(या. स्मृ. १. ९)

इति। अनयैव दिशाऽध्ययनादिरहितानां पञ्चषाणां परिषत्त्वाभावेऽपि शत-सहस्रादिसङ्ख्यायुक्तानां परिषत्त्वं भविष्यतीत्याशङ्क्य तन्निवारणाय 'सहस्रशः समेतानाम्' इत्युक्तम्। अध्ययनादिहीनवन्नास्तिकादीनामपि परिषत्त्वं नास्ति। यदुक्तं चतुर्विंशतिमते—

'वेदपारमनीता ये धर्मशास्त्रविवर्जिताः।
परिषत्त्वं न तेषां स्यान्नास्तिकानां विशेषतः॥
अनाहिताग्नयो ऽज्ञानाः केवला वेदपारगाः।

---

१. B and D. omit स्मर्यते -

'चत्वारो वेदधर्मज्ञाः परिषत्'।

(या स्मृ १ ९)

इति। अनयैव दिशा अध्ययनादिरहितानां पञ्चषाणां परिषत्त्वाभावे ऽपि शत-सहस्रादिसङ्ख्यायुक्तानां परिषत्त्वं. २. B. and D read -पारमधीता ये, H -पारमनीता ये and I -पाराचार्यमियता for -पारमनीता ये ३. I. reads ऽज्ञानात केवल for ऽज्ञाना. केवला..

पिशुनाः क्रूरकर्माणः परिषत्त्वं न विद्यते ॥
शास्त्रज्ञा[1] दुष्टकर्माणः प्रतिकूलास्त्वसूयकाः ।
हैतुका भिन्नमर्यादास्ते ऽपि पर्षद्विवर्जिताः[2]' ॥

इति ॥ ४ ॥

पूर्वत्र 'धर्मशास्त्रं विजानताम्' (७.२) -इति विशेषणेन तद्विज्ञानरहितस्य प्रायश्चित्तवक्तृत्वं नास्तीति यदर्थात् सूचितं तदेवात्र श्लोकद्वयेन प्रपञ्चयति-

यद्वदन्ति[3] तमोमूढा मूर्खा धर्ममतद्विदः ।
तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति[4] ॥५॥
अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।
प्रायश्चित्ती भवेत् पूतः किल्बिषं पर्षदि[5] व्रजेत् ॥६॥

इति । अज्ञानं द्विविधम् । सत्यपि धर्मशास्त्रपाठे न्यायनिर्णयकौशलाभावेन प्रकृतस्य सूक्ष्मस्य प्रायश्चित्तविशेषस्यापरिज्ञानमेकम् । वृद्धव्यवहारेण सत्यपि परिज्ञाने धर्मशास्त्रापरिशीलनमपरम् । तदुभयमभिलक्ष्य श्लोकद्वयम् । तमोमूढाः प्रज्ञामान्द्येन[6] तमसा सूक्ष्मन्यायेषु विभ्रान्ताः । मूर्खाः पण्डितम्मन्याः । अतद्विदः प्रायश्चित्तविशेषमजानन्तः । तादृशाः पुरुषा यत् पापमुद्दिश्य धर्मं प्रायश्चित्तमन्यथा वदन्ति तत्पापं शतगुणं भूत्वा तान् मूर्खान् वक्तॄन् प्राप्नोति । अङ्गिराश्चैनदेवाह-

---

१ I. reads शास्त्राज्ञा for शास्त्रज्ञा. २. I. reads परिषत्त्वं for ते ऽपि पर्षद्-. ३. K reads यद्वदन्ति द्विजा and L. तद्वदन्ति द्विजा for यद्वदन्ति तमो-. ४. M. reads -वक्तु. for -वक्तॄन. ५. Except K. and L. read परिषद् for पर्षदि. ६. C. F. and H. read अज्ञानाद्येन for प्रज्ञामान्द्येन, while I. omits तमसा.

'यत्तु दत्तमजानद्भिः प्रायश्चित्तं सभागतैः।
तत्पापं शतधा भूत्वा दातॄनेवोपतिष्ठति' ॥

(अं. स्मृ. ३. ६४)

इति। प्रायश्चित्ती चान्यथाकारित्वान्न शुद्ध्यति। यस्तु धर्मशास्त्रपाठहीनः प्रायश्चित्तविशेषं लोकतोऽवगत्य निर्दिशति तत्र यथाशास्त्रानुष्ठायित्वात् प्रायश्चित्ती पूतो भवति। स तु वक्ता किल्बिषं व्रजेत्। धर्मशास्त्राणामपठितत्वात्। तत्पाठाभावे च विधायकवचनस्योदाहर्त्तुमशक्यत्वात्। उदाहृत्यैव वचनं प्रायश्चित्तं निर्देष्टव्यमिति हि पूर्वमुक्तम्—

'मुनिवक्त्रोद्गतान् धर्मान् गायन्तो वेदवित्तमाः'।

(प. स्मृ. ६. ३५)

इति। अङ्गिरा अपि—

'वचः पूर्वमुदाहार्यं यथोक्तं धर्मवक्तृभिः।
पश्चात् कार्यानुसारेण शक्त्या कुर्युरनुग्रहम् ॥
न हि तेषामतिक्रम्य वचनानि महात्मनाम्।
प्रज्ञानैरपि विद्वद्भिः शक्यमन्यत् प्रभाषितुम्' ॥

(अं. स्मृ. ३. ४१)

इति ॥ ५६ ॥

---

१. H. reads समागतैः, and I सभा गतैः for सभागतैः २ I omits च-; while B. and D read प्रायश्चित्ताऽन्यथाकारित्वात् for प्रायश्चित्ती चाऽन्यथाकारित्वात ३. B. C. D E F and H read शुद्ध्यते for शुद्ध्यति. ४. C F and H read -नुष्ठायित्वात and I.-नुष्ठातृत्वात for -नुष्ठायित्वात. ५. All, except A. read ऋषि-for मुनि-. ६. A. reads प्रज्ञानेनापि for प्रज्ञानैरपि

पिशुनाः क्रूरकर्माणः परिषत्त्वं न विद्यते ॥
शास्त्रज्ञा[1] दुष्टकर्माणः प्रतिकूलास्त्वसूयकाः ।
हैतुका भिन्नमर्यादास्ते ऽपि पर्षद्विवर्जिताः[2]' ॥

इति ॥ ४ ॥

पूर्वत्र 'धर्मशास्त्रं विजाननाम्' (७.२) —इति विशेषणेन तद्विज्ञानरहितस्य प्रायश्चित्तवक्तृत्वं नास्तीति यदर्थात् सूचितं तदेवात्र श्लोकद्वयेन प्रपञ्चयति—

यद्वदन्ति[3] तमोमूढा मूर्खा धर्ममतद्विदः ।
तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति[4] ॥५॥
अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।
प्रायश्चित्ती भवेत् पूतः किल्बिषं पर्षदि[5] व्रजेत् ॥६॥

इति । अज्ञानं द्विविधम् । सत्यपि धर्मशास्त्रपाठे न्यायनिर्णयकौशलाभावेन प्रकृतस्य सूक्ष्मस्य प्रायश्चित्तविशेषस्यापरिज्ञानमेकम् । वृद्धव्यवहारेण सत्यपि परिज्ञाने धर्मशास्त्रापरिशीलनमपरम् । तदुभयमभिलक्ष्य श्लोकद्वयम् । तमोमूढाः प्रज्ञामान्द्येन[6] तमसा सूक्ष्मन्यायेषु विभ्रान्ताः । मूर्खाः पण्डितम्मन्याः । अतद्विदः प्रायश्चित्तविशेषमजानन्तः । तादृशाः पुरुषा यत् पापमुद्दिश्य धर्मं प्रायश्चित्तमन्यथा वदन्ति तत्पापं शतगुणं भूत्वा तान् मूर्खान् वक्तॄन् प्राप्नोति । अङ्गिराश्चैतदेवाह—

१ I. reads शास्त्राज्ञा for शास्त्रज्ञा २. I. reads परिषत्त्वे for ते ऽपि पर्षद्-. ३. K reads यद्वदन्ति द्विजा and L तद्वदन्ति द्विजा for यद्वदन्ति तमो-. ४ M. reads -वक्तु for -वक्तॄन ५. Except K. and L. read परिषद् for पर्षदि. ६ C F. and H. read अज्ञानाद्येन for प्रज्ञामान्द्येन, while I. omits तमसा.

'यत्तु दत्तमजानद्भिः प्रायश्चित्तं सभागतैः।
तत्पापं शतधा भूत्वा दातॄनेवोपतिष्ठति' ॥

(अं. स्मृ. ३. ५४)

इति। प्रायश्चित्ती चान्यथाकारित्वान्न शुद्ध्यति। यस्तु धर्मशास्त्रपाठहीनः प्रायश्चित्तविशेषं लोकतोऽवगत्य निर्दिशति तत्र यथाशास्त्रानुष्ठायित्वात् प्रायश्चित्ती पूतो भवति। स तु वक्ता किल्बिषं व्रजेत्। धर्मशास्त्राणामपठितत्वात्। तत्पाठाभावे च विधायकवचनस्योदाहर्त्तुमशक्यत्वात्। उदाहृत्यैव वचनं प्रायश्चित्तं निर्देष्टव्यमिति हि पूर्वमुक्तम्—

'मुनिवक्त्रोद्गतान् धर्मान् गायन्तो वेदवित्तमाः'।

(प. स्मृ. ६. ३५)

इति। अङ्गिरा अपि—

'वचः पूर्वमुदाहार्य यथोक्तं धर्मवक्तृभिः।
पश्चात् कार्यानुसारेण शक्त्या कुर्युरनुग्रहम् ॥
न हि तेषामतिक्रम्य वचनानि महात्मनाम्।
प्रज्ञानैरपि विद्वद्भिः शक्यमन्यत् प्रभाषितुम्' ॥

(अं. स्मृ. ३. ४१)

इति ॥ ५–६ ॥

१ H reads समागतै. and I. सभां गतै for सभागतै. २ I. omits च-; while B. and D read प्रायश्चित्ताऽन्यथाकारित्वात् for प्रायश्चित्ती चाऽन्यथाकारित्वात् ३ B. C. D E. F and H. read शुद्ध्यते for शुद्ध्यति. ४. C F and H. read -नुष्ठापितत्वात् and I.-नुष्ठातृत्वात् for -नुष्ठायित्वात् ५ All, except A. read ऋषि-for मुनि-. ६. A. reads प्रज्ञानेनापि for प्रज्ञानैरपि.

*धर्मशास्त्रपरिज्ञानस्य न्यायनिर्णयकौशलस्य च सद्भावेऽप्य-नवधानादिचित्तदोषशङ्काव्युदासाय स्वसमानैस्त्रि-चतुरैः सह संवादोऽपेक्षित इत्यभिप्रेत्याह—

चत्वारो वा त्रयो वाऽपि यं ब्रूयुर्वेदपारगाः ।
स धर्म इति विज्ञेयो नेतरैस्तु सहस्रशः ॥ ७ ॥

इति। बहूनामन्योन्यसंवादेन यो निश्चितः स एव धर्म इति विज्ञेयः । इतरैरन्योन्यसंवादमनाद्रियमाणैः सहस्रसंङ्ख्याक-वचनपाठपुरःसरमभिहितोऽपि विसंवादशङ्काया अनिराकृत-त्वान्नासौ धर्मत्वेन स्वीकार्यः ॥ ७ ॥

†सत्यपि त्रि-चतुराणां परस्परसंवादे विप्रकीर्णेष्वनेकेषु धर्म-शास्त्रेषु क्वापि कस्यचिद्विशेषस्य सम्भवात् प्रायश्चित्तनिर्देश-वेलायां पुनः शास्त्राणि पर्यालोच्यैव निर्देष्टव्यमित्याह—

प्रमाणमार्गं मार्गन्तो ये धर्मं प्रवदन्ति वै ।
तेषामुद्विजते पापं सद्भूत[2]गुणवादिनाम् ॥ ८ ॥

इति। ‡प्रमाणमार्गो धर्मशास्त्रतात्पर्यम्। तस्य मार्गः न्यायेन

---

* धरणीधरस्त्विदं वचनं—‘अथ पर्षदतिरिक्तास्त्रयश्चत्वारो वा विधा-यकाः कार्या इत्याह’—इत्यवतारयति ।

† अत्रापि—‘विधायकैः कथ संवादः कार्य इत्याह’—इत्यवतारयति धरणीधरः ।

‡ केचित्— ‘प्रमाणं धर्मशास्त्रं मार्गः शिष्टानुगृहीतः पन्थाः तयोः समाहारः’—इति अपरे तु—‘प्रमाणानां स्मृतिवचसा मार्गो व्यवस्था’—इति च व्याचक्षते ।

---

१. H. reads चतुरै. for त्रि-चतुरै २. M. reads सम्भूत- for सद्भूत-.

निष्कर्षः। तं कुर्वन्त एव ये धर्मं प्रवदन्ति तेभ्यः पापमुद्विजते नाशयोग्यतामापद्यते इति यावत्। तत्र हेतुः सद्भूत इति। सद्भूतः सत्यभूतोऽन्यथाभावमप्राप्तः। परस्परसंवादेनाऽनवधानादिदोषाभावात्। पुनः शास्त्रपर्यालोचनेन निगूढरहस्यावगमाच्च गुणो धर्मः। श्रेयोहेतुत्वात्। *तादृशधर्मवादित्वात्तेभ्यः पापस्योद्वेगो युक्तः। परस्परसंवादः पुनर्धर्मशास्त्रपाठश्चाङ्गिरसा दर्शितः—

'तस्मिन्नुत्सारिते[2] पापे यथावद्धर्मपाठकाः[3]।
ते तथा तत्र जल्पेयुर्विमृशन्तः परस्परम्'॥
(अं. स्मृ. ३. १७)

इति। पापे पापकारिणि पुरुषे॥ ८॥

ननु—परिषदुद्विग्नं पापं यदि कर्त्र्येवावतिष्ठते तदा प्रायश्चित्तमनर्थकम्। अथ परिषदं प्राप्नुयात् तर्हि कथमुद्वेगः? इत्यत आह—

यथा[4]ऽश्मनि स्थितं तोयं मारुतार्केण शुद्ध्यति।
एवं परिषदादेशात् नाशयेत्तस्य[5] दुष्कृम्॥ ९॥

* 'अनेन विधायकैरपि प्रमाणानुसन्धानेनैव संवादः कार्य इत्युक्तम्'—इति धरणीधरः।

१ B. and D substitute मन· for पुन २ I. reads उत्पादिते for उत्सारिते ३ A. reads धर्माचिन्तका for धर्मपाठका. ४. H and I. read यत for यथा, while C. and F omit this and the next lines —

यथा ऽश्मनि स्थित तोयं मारुतार्केण शुद्धयति।
एवं परिषदादेशात् नाशयेत् तस्य दुष्कृतम्॥ ९॥
नैव गच्छति कर्तारं नैव गच्छति पर्षदम्।
मारुतार्कादिसंयोगात् पापं नश्यति तोयवत्॥ १०॥.

५ M. reads एव for तस्य and B. and D. substitute तत्र निष्कृतम् for तस्य दुष्कृतम्

नैव गच्छति कर्तारं नैव गच्छति पर्षदम् ।
मारुतार्कादिसंयोगात् पापं नश्यति तोयवत् ॥१०॥

इति । निम्ने महति वा पाषाणे वर्षधाराभिः स्थितमुदकं मारुता-ऽर्कादिसंयोगो विनाशं प्रापयति । एवमियं परिषत् शास्त्रीयस्य प्रायश्चित्तस्यादेशात्तस्य दुष्कृतिं नाशयति । नहि शिलास्थमुदकमुत्तरकाले यथापूर्वं शिलायामवतिष्ठते । नापि मारुतादावासज्जते । किन्तु शुष्यत्येव केवलम् । एवमिद-मपि पापं न कर्त्तर्यवतिष्ठते नापि परिषदं प्राप्नोति । किन्तु स्वरूपनाशमेव प्राप्नोति । एतदेव चतुर्विंशतिमतेऽप्यभिहितम्—

'यथा भूमिगतं तोयमर्कपादैर्विनश्यति[2] ।
एवं* परिषदादिष्टं नश्यते तस्य दुष्कृतम् ॥
नैव गच्छति कर्त्तारं नैव गच्छति पर्षदम् ।
मारुतार्कसमायोगात्† पापं नश्यति तोयवत्' ॥

इति । अङ्गिरास्तु प्रश्नपूर्वकमेतदेव विशदयति—

'प्रायश्चित्ते यदा चीर्णे ब्राह्मणे दग्धकिल्बिषे ।
सर्वं पृच्छामि तत्त्वेन तत् पापं क्व नु तिष्ठति? ॥
नैव गच्छति कर्त्तारं नैव गच्छति पर्षदम् ।

* 'परिषदादिष्ट' पर्षदा शास्त्रीयाशास्त्रीयप्रायश्चित्तेनादिष्टम् । न केवलमादेशेनैव पापनाशः । अपि तु आदिष्टप्रायश्चित्तस्य यथावदाचरणे-नैवेति तात्पर्यमवसेयम् ।

† अत्र च दार्ष्टान्तिके जलस्थानीयं पापम् । मारुतार्कसमायोगस्था-नीयं पर्षदादेशन तदनुष्ठानं चेति यथायथमूह्यम् ।

१. I reads मारुतार्काग्नि- for मारुतार्कादि- २. B and D. read अर्क-पाते विशुद्ध्यति and H. अर्कपाते विनश्यति for अर्कपादैर्विनश्यति.

मारुतार्कसमायोगाज्जलवत्सम्प्रलीयते ॥
यथाऽश्मनि स्थितं तोयं नाशमेत्यर्क-मारुतैः[1]।
तद्वत् कर्त्तरि यत् पापं नाशयेद्विदुषां सभा[2] ॥
नैषां नेत्राग्निदग्धं सत्[3] पापं तस्य तु धीमतः ।
नश्यते नात्र सन्देहः सूर्यदृष्टं हिमं यथा'॥

इति ॥ ९–१० ॥

अथ मुख्या-ऽनुकल्पभेदेन परिषद्भेदानाह–

[4]चत्वारो वा त्रयो वाऽपि वेदवन्तोऽग्निहोत्रिणः ।
ब्राह्मणानां समर्था ये परिषत् साऽभिधीयते[5] ॥११॥
अनाहिताग्नयो येऽन्ये[6] वेद-वेदाङ्गपारगाः ।
पञ्च त्रयो वा धर्मज्ञाः परिषत् सा प्रकीर्त्तिता ॥१२॥
मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम् ।
वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत् ॥ १३ ॥
पञ्च पूर्वं मया[7] प्रोक्तास्तेषां चाऽसम्भवे त्रयः ।
स्ववृत्तिपरितुष्टा ये परिषत् सा प्रकीर्तिता ॥१४॥

---

१ B. C D. E F. G and H read नाशयेतार्क-मारुतैः for नाशमेत्यर्क-मारुतैः. २ B and D read विधिपार्षदम, C E F. and H विधिपारिषदम्, G. हि न पर्षदम् and J हीनपर्षदम् for विदुषां सभा ३. C and F. substitute तत् for सत् ४ M omits this Sloka –

चत्वारो वा त्रयो वा अपि वेदवन्तो ऽग्निहोत्रिणः ।
ब्राह्मणाना समर्था ये परिषत् सा ऽभिधीयते ॥.

५ G. H K. and L. substitute विधीयते for ऽभिधीयते. ६ B and D. substitute विप्रा and I ये च for ये ऽन्ये. ७. B. and D. substitute अथ for मया and M reads चैव स्वसम्भवे for चाऽसम्भवे त्रय, while K. and L. substitute वा for च.

इति । ग्राममध्ये विद्यमानानां वेदविद्यादिगुणयुक्तानां ब्राह्मणानां मध्ये येऽत्यन्तं समर्थास्ते चत्वारो मुख्या परिषत् । तदसम्भवे त्रयो वा परिषत्त्वेन ग्राह्याः । एतत् पक्षद्वयमाहिताग्निष्वभिहितम् । तदसम्भवे त्रो ऽनाहिताग्नयः । तत्रापि पञ्चेति मुख्यः कल्पः । त्रय इत्यनुकल्पः । तस्यापि पक्षद्वयस्यासम्भवे सत्येक एव परिषद्भवेत् । तमेकं विशिष्टं मुनीनामित्याद्युक्तम् । आत्मनि ब्रह्मणि विद्याऽनुभवो येषा ते आत्मविद्याः । तथाविधाः कृतकृत्याः सन्तोऽपि लोकानुग्रहाय यज्ञैरिष्टवन्तो यज्ञयाजिनः । वेदानामृगादीनां चतुर्णामध्ययनार्थानुष्ठितानि तत्तद्वेदोक्तानि व्रतानि वेदव्रतानि । तैस्तद्व्रतसहितेषु वेदेषु समाप्तेषु यथाविधि स्नाताः ।

'शिरोव्रतेन स्नातानाम्' ।

इति वा पाठः । आथर्वणिकानां वेदव्रतेषु मुख्यं व्रतं शिरोव्रतम् । तथा चाथर्वणिका आमनन्ति—

'क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः
स्वयं जुह्वत एकर्षि श्रद्धयन्तः ।
तेषामेवैतां ब्रह्मविद्यां वदेत
शिरोव्रतं* विधिवद् यैस्तु चीर्णम्' ॥

( मुं. उ. ३. २. १० )

* 'एकर्षिं' एकर्षिनामानमग्निम् । 'जुह्वते' जुह्वति 'शिरोव्रतं शिरस्यग्निधारणलक्षणं व्रतम् । इदं चाथर्वणानां वेदव्रतत्वेनाभिहितम् ।

---

१ I omits वा. २ B and D read तथा and I. तत्र for तस्य ३ I. reads विशिष्ट and G. विशेष्ट for विशिष्टं ४. I. reads लोकामहाय for लोकानुग्रहाय ५ B C D F. G and H. read अध्ययनानुष्ठितानि for अध्ययनायानुष्ठितानि. ६. Except A. and I. all omit तत्त and J omits वेदेषु. ७. B and D omit स्नाताः । शिरोव्रतेन and read यथाविधि स्नातानामिति वा पाठ ।. C E. F G H and J substitute शिरोव्रते च for शिरोव्रतेन. ८. Except A and the text all read जुह्वन्त एकर्षि श्रद्धयन्तः for जुह्वत एकर्षि श्रद्धयन्त ।.

इति । तस्मिन् शिरोव्रते सत्यनन्तरमध्ययनं परिसमाप्य यथाविधि स्नाताः । तेषामेतेषां यथोक्तसर्वगुणसम्पन्नानां मध्ये यः कोऽप्येकः परिषद्भवेत् । अत्र साग्निकानामनग्निकानां द्वौ द्वौ पक्षौ अध्यात्मविदस्त्वेकः पक्षः—इति पञ्च पक्षा मया प्रोक्ताः । तेषां सर्वेषामसम्भवे केचेन विद्यमानाः श्रेष्ठास्त्रयः । ते च यद्यायुधजीवनाद्यधर्मवृत्तिमनुपजीव्य यथासम्भववृत्तिमात्रेण परितुष्टास्तेषामपि परिषत्त्वमविरुद्धम् । अङ्गिरसाऽपि परिषद्विकल्पा दर्शिताः—

'चत्वारो वा त्रयो वा ऽपि वेदवन्तोऽग्निहोत्रिणः ।
ये सम्यङ्नियता विप्राः कार्याकार्यविनिश्चिताः ॥
प्रायश्चित्तप्रणेतारः सप्त तेऽपि प्रकीर्त्तिताः ।
एकविंशतिभिश्चान्यैः परिषत्त्वं समागतैः ॥
सावित्री मात्रसारैस्तु चीर्णवेदव्रतैर्द्विजैः ।
यतीनामग्रविद्यानां ध्यायिनामात्मयाजिनाम् ॥
शिरोव्रतैश्च स्नातानामेकोऽपि परिषद्भवेत् ।
एषा* लाघवकार्येषु मध्यमेषु तु मध्यमा ॥
महापातकचिन्तासु शतशोभूय एव च' ।

इति । बृहस्पतिरपि—

* 'एषा' 'शिरोव्रतैश्च स्नातानामेकोऽपि परिषद्भवेत्' इत्यनेन पूर्वत्रोदिता पर्षत् 'लाघवकार्येषु' लघुषु पापविचारकृत्येषु योग्या भवेदित्यर्थः ।

१. I reads अध्यात्मविवेक for अध्यात्मविदस्त्वेकः. २ J inserts अपि after असम्भवे and A reads ये केचन for केचन. ३. B C, D E. F, G and H read विद्यमानश्रेष्ठा for विद्यमाना श्रेष्ठा. ४. B. and D. read वृत्तौ सम्यग्मिता विप्रा, C. E F and H एते सम्यङ्मिता विप्राः, G. एते सम्यङ्विता विप्रा and J. हतौ सम्यङ्मिता विप्रा for ये सम्यङ् नियता विप्रा E has the marginal reading हतौ for एते. ५ G. substitutes अग्र्य- and I. आत्म- for अग्र -. ६. B and D read एतेषां भावकार्येषु for एषा लाघवकार्येषु, while G I. and J substitute एषां for एषा.

'लोक-वेदाङ्ग-धर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा'॥

इति ॥ ११–१२–१३–१४ ॥

नामधारकविप्राणां परिषत्त्वं नास्तीति यत् पूर्वमुदाहृतं तदेव दृष्टान्तेन दृढीकर्त्तुं सिंहावलोकनन्यायेन पुनः परामृशति—

**अत ऊर्ध्वं तु ये विप्राः केवलं नामधारकाः ।**
**परिषत्त्वं न तेष्वस्ति[1] सहस्रगुणितेष्वपि ॥ १५ ॥**

इति । अत ऊर्ध्वं वर्णितेषु परिषत्पक्षेषु अवगम्यमानेभ्यो गुणवद्भ्यो ब्राह्मणेभ्य ऊर्ध्वं तद्व्यतिरिक्ता गुणरहिता इति यावत् ॥ १५ ॥

गुणरहितेषु ब्राह्मणेषु[2] ब्राह्मण इति नाममात्रं केवलं वर्त्तते । न तु ब्राह्मणशब्दप्रवृत्तिनिमित्तं मुख्योऽर्थोऽस्तीत्येवमर्थं दृष्टान्ताभ्यां विशदयति—

**यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।**
**ब्राह्मणस्त्वनधीयानस्त्रयस्ते[3] नामधारकाः ॥ १६ ॥**

इति । हस्तित्वं मृगत्वं जातिद्वयं तत्तच्छब्दप्रवृत्तिनिमित्तम् । न चैतत्काष्ठमय-चर्ममययोर्विद्यते । तथापि हस्ति-मृगनामनी[4] सादृश्यमात्रेण प्रयुज्येते । तद्वद्वेदाध्ययनहीने ब्राह्मणशब्दप्रयोगः ॥ १६ ॥

ननु—ब्राह्मणशब्दस्यावयवार्थतस्तस्मिन् मा भूत् । जातिस्तु

---

१ M reads तेषां वै for तेष्वस्ति २. All, except A. and I. omit ब्राह्मणेषु ३ M. reads ब्राह्मणास्त्वनधीयानाः. ४. B D. and I. read -नामसादृश्य- for -नामनी सादृश्य-, while B. and D. read प्रयुज्यते for प्रयुज्येते.

विद्यते। विशिष्टमाता-पितृजन्यत्वं ब्राह्मणत्वजातिः। तथा च ब्राह्मणशब्दस्य तस्मिन् यौगिकत्वाभावेऽपि रूढेः सद्भावात् विषमौ दृष्टान्तौ—इत्याशङ्क्याह—

ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः।
यथा हुतमनग्नौ च अमन्त्रो ब्राह्मणस्तथा॥ १७॥

इति। ग्रामशब्दो हि जननिवासस्थाने भूभागविशेषे मुख्यया वृत्त्या वर्त्तते। कूपशब्दश्च जलाधारे खाते। होमशब्दश्च शास्त्रसंस्कृतवह्नौ हविःप्रक्षेपमाह। तत्र जनविशिष्टस्थानं मुख्यो ग्रामः। जनशून्यग्रामस्तु ग्रामाभासः। कूप-होमयोरप्याभासत्वमेवं योजनीयम्। तैरेतैर्दृष्टान्तैरयं नामधारको जातिमात्रसद्भावेऽपि योगहीनत्वात् ब्राह्मणाभासः। न तु मुख्यः। पङ्कजशब्दस्य च यद्यपि जातिः प्रवृत्तिनिमित्तं तथाप्यवयवार्थस्तस्मिन्निमित्तेऽन्तर्भवत्येव। ततो योगरूढ इति व्यवह्रियते। एवं ब्राह्मणशब्दस्यापि योगरूढत्वात् जातिसद्भावेऽपि योगहीनत्वादाभासत्वं द्रष्टव्यम्॥ १७॥

ननु—मुख्यसम्भवे सत्यमुख्यं न ग्राह्यम्। तदसम्भवे त्वमुख्यमपि ग्राह्यम्—इति लोक-वेदस्थितिः। तथा चाध्ययनादिसम्पन्नमुख्यब्राह्मणानामसम्भवे सति ब्राह्मणाभासानामपि क्वचित् परिषत्त्वं स्यात्—इत्याशङ्क्याह—

---

१ I. reads रूढिसद्भावात् for रूढेः सद्भावात्. २ Except A and I all read जनवास- for जननिवास-. ३ B D and H read कूप-होमाभासयोरप्येवं for कूप-होमयोरप्याभासत्वमेवं. ४ I omits योगहीनत्वात्. ५ G omits च and B C. D F. and H omit following

पङ्कजशब्दस्य च यद्यपि जातिः प्रवृत्तिनिमित्तं तथापि
अवयवार्थस्तस्मिन्निमित्तेऽन्तर्भवत्येव। ततो योगरूढ
इति व्यवह्रियते। एवं ब्राह्मणशब्दस्यापि योगरूढत्वात्
जातिसद्भावेऽपि योगहीनत्वादाभासत्वं द्रष्टव्यम्॥ १७॥

यथा षण्ढोऽफलः स्त्रीषु यथा गौरूषरा[1]ऽफला ।
यथा चा[2]ऽज्ञेऽफलं दानं तथा[3] विप्रोऽनृचोऽफलः॥१८॥

इति । अमुख्यमपि यत्र कार्यक्षमं भवति तत्र मुख्यासम्भवे तदुपादेयम् । यथा वैदिके कर्मणि सोमाभावे पूतीका[4]भिषवः । यथा वा लोके शाल्यभावे कोद्रवादिः । तद्वद्ब्राह्मणाभासस्यापि कार्यक्षमत्वे स्यात् क्वचिदुपादेयत्वम् । न त्वध्ययनहीनस्य प्रायश्चित्तविधानक्षमताऽस्ति । न हि पुंस्त्वोपेतस्य वरस्यासम्भवेऽपि षण्ढः प्रजामुत्पादयन्नुपलभ्यते । नापि भूमिरूषरा क्वचित् फलति । नाप्यज्ञः प्रतिगृह्णन् दात्रे फलहेतुः । एवमसावपि ऋगादिमन्त्रहीनो न पापनिवृत्तिफलहेतुः ॥ १८ ॥

ननु—नामधारकः* षण्ढादिवदफलश्चेत्तर्हि संस्कारैरपि तस्य कोऽतिशयः स्यात्? । न हि शृङ्गा[5]रसहस्रेणापि षण्ढः प्रजनयितुं प्रभवति—इत्याशङ्क्य दृष्टान्तेन संस्कारकृतोत्कर्षं सम्भावयति—

* धरणीधरस्त्वित्थमवतारयति । 'ननु—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥

इति स्मृत्यन्तरे लक्षणमुक्तं तत्कथं न मुख्यं ब्राह्मण्यम्? अत आह'—इति । पटादौ यथा चित्रमनेकैर्नील-पीतादिभिर्वर्णैः क्रियते नैकेनैव । एवं ब्राह्मण्यमपि मन्त्रपूर्वकैः संस्कारैः क्रियते नैकेन केवलेन जन्मनेति तदाशयः ।

---

१ I. reads wrongly गौदूषराफला for गौरूषराऽफला २ K. substitutes वा for च. ३ M. reads यथा for तथा. ४ J. reads पूनिका- and B D. and I पूतिका- for पूतीका-. ५. I. reads स्वदार- for शृङ्गार-.

चित्रकर्म[1] यथाऽनेकैरङ्गैरुन्मील्यते शनैः।
ब्राह्मण्यमपि तद्वद्धि[2] संस्कारैर्मन्त्रपूर्वकैः ॥ १९ ॥

इति। चित्रकारः[3] प्रथमं पटादौ मषीरेखाभिः सर्वावयवसम्पू[4]-र्णानि मनुष्यादिरूपाणि लिखति। न च तानि तावता दर्शनीयत्वमापद्यन्ते। पुनस्तान्येव रूपाणि नानाविधवर्णप्रक्षेपेणो[5]-न्मीलितानि दर्शनीयतामापद्यन्ते। एवं जातिब्राह्मण्यं शास्त्रीयसंस्कारैरुत्कृष्यते। मन्त्रसंस्कारेण विद्यादयोऽप्युपलक्ष्यन्ते। अत एवाङ्गिराः—

'जन्म-शारीर-विद्याभिराचारेण श्रुतेन च।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥
चित्रकर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः।
ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः'॥

इति ॥ १९ ॥

ननु—यत्र संस्कृता बहवो न सन्ति तत्रैकेन संस्कृतेन[6] सतरे नामधारकाः प्रायश्चित्तविधायिनः स्युरित्याशङ्क्याह—

प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः।
ते द्विजा पापकर्माणः समेता नरकं ययुः ॥ २० ॥

इति। समेताः एकेन[7] संस्कृतेन सङ्गताः। ययुः यान्तीत्यर्थः।

१ M reads चित्रं कर्म for चित्रकर्म. २ M reads स्यात् सस्कारैर्विधिपूर्वकै for हि सस्कारैर्मन्त्रपुर्वके ३ Except I, all read चित्रकार for चित्रकर ४. I. reads सर्वावयवपूर्णानि ५ B. and D read -विक्षेपेण for प्रक्षेपेण. ६ B and D. omit सस्कृतेन ७ B and D substitute एतेन for एकेन and सयता for सङ्गता

यद्यपि संस्कृतः स्वयं नरकं नार्हति तथाप्यनर्हैः सहैकस्यां परिषद्युपवेशनात्तस्य नरकप्राप्तिः। एतच्च चतुर्विंशतिमते स्पष्टीकृतम्—

'प्रायश्चित्तं प्रयच्छन्ति ये द्विजा[2] नामधारकाः।
ते सर्वे पापकर्माणः समेतो नरकं व्रजेत्' ॥

इति। समेतो नामधारकैः सङ्गतः। तावतैवापराधेन मन्त्रसंस्कृतोऽपि नरकं प्राप्नोति ॥ २० ॥

ननु—संस्कृतानां बहूनामपि गृहिणां कथं परिषत्त्वं स्यात्? नामधारकवत्तेषामिन्द्रियरतत्वादित्याशङ्क्याह—

**ये पठन्ति द्विजा वेदं पञ्चयज्ञरताश्च ये।**
**त्रैलोक्यं तारयन्त्येते* पञ्चेन्द्रियरता अपि[5]॥२१॥**

इति। वेदो हि निखिलपापापनयने समर्थः। तथा च तैत्तिरीयब्राह्मणे वन्ह्यादिपरम्परया प्राप्तं पापं स्वाध्यायोऽपहन्तीति श्रूयते—

'अग्निं वै जातं पाप्मा जग्राह। तं देवा आहुतीभिः पाप्मानमपाघ्नन्नाहुतीनां यज्ञेन यज्ञस्य दक्षिणा-

---

* उक्तलक्षणा ब्राह्मणास्त्रैलोक्यमपि तारयितुं समर्थाः किं पुनर्दुष्कृतिनमिति काकुः।

---

१. B. and D substitute सह for स्वयं and अनेकैः for अनर्हैः. २ B. D. and J read ब्राह्मणा. for ये द्विजा ३ C. and F read समेता नरकं यान्ति. This reading seems to be better, but the author does not follow it. ४ M reads धारयन्ति for तारयन्ति, K and L substitute तारयन्ते ते for तारयन्त्येते. ५. M reads पञ्चेन्द्रियरताश्रया for पंचेन्द्रियरता अपि. ६ B. D. and H read अग्नि for अग्निं ७ I. reads पाप्मानमपाघ्नाहुतीना for पाप्मानमपाघ्नन्नाहुतीना.

भिर्दक्षिणानां ब्राह्मणेन ब्राह्मणस्य छन्दोभिश्छ-
न्दसां स्वाध्यायेनापहतपाप्मा स्वाध्यायो दे-
वपवित्रं वा एतत्' ।

(तै. ब्रा. ३. ७. ३४-९)

इति । मनुरपि—

'वेदाभ्यासो* ऽन्वहं शक्त्या महायज्ञक्रिया क्षमा ।
नाशयन्त्याशु पापानि महापातकजान्यपि ॥ (२४६)
यथैधांस्योजसा[1] वह्निः प्राप्य निर्दहति क्षणात् ।
तथा ज्ञानाग्निना पापं सर्वं दहति वेदवित् ॥ (२४७)

(११. २४६–२४७)

---

* वेदाभ्यासादीनां नित्यानां कर्मणां पापप्रणोदनार्थता अधिकारान्तरत्वेनोच्यते । अनिर्दिष्टप्रायश्चित्तानां अप्रत्ययकृतानां प्रतिभूतानां पापानां चैतद्विज्ञायते। अन्ये त्वाहुः— 'ब्राह्मणस्य तपो ज्ञानम्' । (११. २३५) इति तपोविधानेन कर्मान्तरनिवृत्तिमाशङ्कमानस्य वचनम् । इदमपि तथैव विज्ञेयम् । अनुसन्धानार्थं क्षमाग्रहणम्। सर्वात्मगुणप्रदर्शनार्थं 'महापातकजान्यपि' इति ।

† ज्ञानप्रशंसेयम् । विदुष स्वल्पेन प्रायश्चित्तेन शुद्धिरित्यस्मिन् प्रकरणात् ज्ञायेत । ज्ञानं च सरहस्य वेदार्थविषयं ज्ञेयम् । प्रायश्चित्तविधिज्ञानं तु केवलं शुद्धये । प्रयोगार्थत्वात् । न ह्यन्यथा प्रयोगोपपत्तिः ।

---

१ H and the text read यथैधस्तेजसा वह्निं प्राप्तं for यथैधांस्योजसा वह्निः प्राप्य, G and J read प्राप्तानि दहति क्षणात् for प्राप्य निर्दहति क्षणात्; while B and D omit the following portion :—

'यथैधांस्योजसा वह्निः प्राप्य निर्दहति क्षणात् ।
तथा ज्ञानाग्निना पापं सर्वं दहति वेदवित् ॥
यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् ।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः' ॥

इति । ये तु श्रद्धालव एव सन्तः प्रज्ञामान्द्यादिदोषेण पठितं वेदं धारयितुमसमर्थाः तेऽपि पञ्चयज्ञानुष्ठानात्.

२ We follow here A. and the text, while all others read—

तथाज्ञानकृतं पापं कृत्स्नं दहति वेदवित् ॥.

यथा जातबलो[*] वह्निर्दहत्यार्द्रानपि द्रुमान्।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः' ॥ (१०१)
(म० स्मृ० ११. २४६–२४७; १२. १०१)

इति। ये तु श्रद्धालव एव सन्तः प्रज्ञामान्द्यादिदोषेण पठितं वेदं धारयितुमसमर्थाः तेऽपि पञ्चयज्ञानुष्ठानात् क्षीणपापा एव। पञ्चयज्ञानां पापक्षयहेतुत्वं च प्रथमाध्याये प्रपञ्चितम्। अतश्च पञ्चेन्द्रियप्रसक्तानामपि क्षीणपापत्वेन परिषत्त्वमविरुद्धम् ॥ २१ ॥

ननु—एवमपि पञ्चयज्ञादिभिः परिशुद्धेषु गृहिषु परकीयं पापमनुप्रविशति। परान्नभोजनादेस्तत्प्रापकत्वात्।

'दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति'।
अन्नादेर्भ्रूणहा मार्ष्टि' ————'।

इत्यादि स्मरणात्— इत्यत आह—

**सम्प्रणीतः श्मशानेषु दीप्तोऽग्निः सर्वभक्षकः।**
**एवं[2] च वेदविद्विप्रः सर्वभक्षोऽपि दैवतम् ॥ २२ ॥**

इति। न ह्यग्निः श्मशाने नीतः शवादिभक्षक इत्येतावता देवत्वं परित्यजति। एवं वेदविदो भूदेवस्य अभक्ष्या-ऽभोज्यादिदोषमात्रेण भूदेवत्वं नापैति। एकैकस्य मन्त्रस्याभक्ष्यभक्षणाद्यशेषदोषनिवर्त्तकत्वात्। तथा च मन्त्रलिङ्गम्—

* यथा वृद्धो ऽग्निरार्द्रानपि द्रुमान् दहति एवं ग्रन्थतोऽर्थतश्च वेदवित् प्रतिषिद्धाद्याचारजनितमात्मनः पापं नाशयतीत्यर्थः।

१ G reads ज्ञातबलो for जातबलो. २ M. reads—
तथैव ज्ञानवान् विप्र सर्वभक्षश्च दैवतम् ॥
३ J. substitutes दीप्त. for नीत ; while I. reads -भक्षणे प्रयुक्त for -भक्षक. ४ G. reads भक्ष्यभोज्यादि- for अभक्ष्या-ऽभोज्यादि-.

'यदन्नमद्म्यनृतेन देवा
दास्यन्नदास्यन्नुत वा करिष्यन् ।
यद्देवानां चक्षुष्यागोऽस्ति यदेव किंच
प्रतिग्राहमग्निर्मा तस्मादनृणं कृणोतु ॥
यदन्नमद्मि बहुधा विरूपं
वासो हिरण्यमुत गामजाविम्' ।

(ऋ. सं. ३. ६. २१. ५)

इत्यादि । अनृतेन परकीयादौ स्वकीयत्वादिवचनेन । दास्यन्ननर्हेभ्यो नष्टशौचाचारादिभ्यः स्नेहानुबन्धेन हव्य-कव्ययोः प्रयच्छन् । अदास्यन्नातिथ्यादिभ्यो योग्येभ्योऽप्रय-च्छन् । करिष्यन्नन्नभक्षणव्यतिरिक्तमविहितं प्रतिषिद्धं वा कुर्वन् चक्षुष्यागो नग्नपरयोषिदवलोकनादि । तथा देवाना-मागः विष्ण्वाद्यं देवं दृष्ट्वाऽप्यनमस्कारादि । यदेव किंच अश्व-महिष-कालपुरुषाद्यप्रतिग्राह्यं यत् किञ्चित् प्रतिजग्राहं प्रति-गृहीतवानस्मि । बहुधा विरूपं गणान्न-गणिकान्नादिरूपेणा-नेकदोषयुक्तं यदन्नमद्मि भक्षितवानस्मि । यथोक्तान् सर्व-स्माद्दोषजातात् मामनृणं पुनरग्निः करोत्विति मन्त्रार्थः । तथा पवमानसूक्तादिमाहात्म्यमभिधीयते—

'क्रय-विक्रयाद्योनिदोषाद्भक्षाद्भोज्यात् प्रतिग्रहात् ।
असम्भोजनाच्चापि नृशंसं तत् पावमानीभिरहं पुनामि' ।

(ऋ. सं. ७. २. ३. परिशिष्टम् २)

इति । तथा सामविधाने सामगाः पठन्ति—

१ I. reads दास्यनुत for -दास्यन्नुत

'अभोज्यभोजने ऽते पन्था अधो दिवः' ॥

( सा. वि. ब्रा. २. ५. ३ )

इति साम गायेदिति शेषः । मनुरपि-

'प्रतिगृह्याऽप्रतिग्राह्यं भुक्त्वा वाऽन्नं विगर्हितम् ।
जपंस्तरत्समन्दीयं* पूयते मानवस्त्र्यहात् ॥ (२५३)
हत्वा† लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः ।
ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किञ्चन ॥ ( २६१)

( म. स्मृ. ११. २५३-२६१ )

इति ॥ २२॥

ननु-उक्तरीत्या वेदविदः स्वकीयपापमपनयन्तु नाम । तथापि त्रैलोक्यं तारयन्त्येते'-इति यदुक्तं तत् कथम् ? इत्याशङ्क्य दृष्टान्तेन तदुपपादयति-

---

* तरत्समन्दीयम् 'तरत्समन्दीधावति'-इति ऋक्संहिताया नवममण्डलस्य द्वितीये ऽनुवाके चतुस्त्रिंशं चतूऋचं सूक्तम् । इदं च ऋक्चतुष्टयात्मकं सर्वमपि सूक्तं जपेदिति मेधातिथ्यादीनामाशयः । रामचन्द्रस्तु-

'तरत्समन्दीधावति धारा सुतस्यान्धसः ।
तरत्समन्दी धावति' ॥

( ऋ. सं. ७. १. १५. १. )

इति ऋचं जपन् 'त्र्यहान्मानवः पूयते'—इत्याह । परमेतदसमञ्जसमिव प्रतिभाति । 'तरत्समन्दीयं' इति निर्देशबलात् सूक्तमेव गृह्यते न त्वेका ऋक् ।

† ऋग्वेदधारिणो विप्रस्य स्तुतिरियं रहस्यप्रायश्चित्तार्था ।

---

१ I reads कुते for एते. २ H and the text substitute च for वा. ३. H. reads मनूक्तनीत्या for ननु-उक्तरीत्या.

अमेध्यानि तु सर्वाणि प्रक्षिप्यन्ते[1] यथोदके।
तथैव किल्बिषं सर्वं प्रक्षिपेच्च द्विजानले[2] ॥२३॥

इति। गङ्गादिजले स्नातुं प्रविष्टाः शरीरात् स्वेदादीन्यमेध्यानि प्रक्षिपन्ति। नैतावता तज्जलमपूतं भवति। प्रत्युत मलोपेतान् पुरुषान्मलापनयनेन पुनाति। एवं प्रायश्चित्ती स्वकीयमशेषं पापं वेदवित्सु प्रक्षिपति। तत्र प्रक्षेपणं नाम तदपनयनाय तेषामग्रे निवेदनम्। ते च तदपनयाङ्गीकारमात्रेण न दुष्यन्ति प्रत्युत तदपनयनसमर्थं शास्त्रीयमुपायमुपदिश्य पापिनमुद्धरन्ति तस्मात्तारयन्तीत्युपपन्नम् ॥ २३ ॥

ननु—वेदविद्यायाश्चेदीदृशो महिमा तर्हि वेदविदां दैनन्दिनगायत्र्युपास्त्यादिष्वलसानामपि परिषत्त्वं प्रसज्ज्येतेत्यत[3] आह—

गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत्।
गायत्रीब्रह्मतत्त्वज्ञाः सम्पूज्यन्ते जनैर्द्विजाः[4] ॥ २४ ॥

इति। गायत्री च ब्रह्म च गायत्री-ब्रह्मणी। तयोस्तत्त्वं गायत्रीब्रह्मतत्त्वम्। तत्र गायत्र्यास्तत्त्वमङ्ग-न्यास-काल[5]-वर्ण-विशेष-ध्यानादि। ब्रह्मणस्तत्त्वं वेदोक्तो निः[6]शेषानुष्ठेयोऽर्थः। तदुभयं यथावदवगत्यानुतिष्ठन्तस्तत्त्वज्ञा इह विवक्षिताः।

---

१ M. reads प्रक्षिपन्त्युदके यथा for प्रक्षिप्यन्ते यथोदके. २ M. reads प्रक्षेप्तव्य द्विजेऽमले and I. प्रक्षिपेच्च द्विजोत्तम for प्रक्षिपेच्च द्विजानले. ३ I. and J. read प्रसज्ज्यते for प्रसज्ज्येत ४ M reads द्विजोत्तमा for जनैर्द्विजाः ५ G. substitutes -कला- for -काल- ; while I. reads -कला-वर्णयति- for -काल वर्ण-. ६ B and D. read विशेषा- for निःशेषा- ; while G. reads वेदोक्तनिःशेषानुष्ठानादि for वेदोक्तो निःशेषानुष्ठेयोऽर्थ .

यद्वा ब्रह्म परमात्मा । तस्य तत्त्वं वेदान्तप्रतिपाद्यं स्वरूपम् । तद् गायत्र्यन्तर्गततच्छब्दवाच्यत्वेनावगत्योपासते ये ते गायत्रीब्रह्मतत्त्वज्ञाः ॥ २४ ॥

*ननु—यस्मिन् ग्रामे जितेन्द्रियः शास्त्रोक्तस्वधर्मवर्ती शूद्रो विद्यते तत्र पञ्चेन्द्रियरताद्दुःशीलाद्वरं तस्यैव शूद्रस्य परिषत्त्वमित्यत आह—

**दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः ।**
**कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥ २५ ॥**

इति । कः परित्यज्य—इत्यादिर्दृष्टान्तः । जाति-शीलयोर्मध्ये जात्युत्कर्ष एव प्राधान्येनोपादेयः । शीलं तु यथासम्भवम् । अत एव चतुर्विंशतिमते शूद्रोपदेशस्यानुपादेयत्वं प्रपञ्चयति—

'श्वचर्मणि यथा क्षीरमपेयं ब्राह्मणादिभिः ।
तद्वत् शूद्रमुखाद्वाक्यं न श्रोतव्यं कथञ्चन ॥
पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च ।
वचनं तस्य न ग्राह्यं[†] शुनोच्छिष्टं हविर्यथा ॥

* 'ननु—यथोक्तविप्राभावे क्षत्रियादिर्गृह्यताम्' इत्यवतारयति धरणीधरः । परमिदं मूलासङ्गतमिव प्रतिभाति ।

† प्रायश्चित्तादिष्वेवायं निषेधः । न सर्वत्र । अन्यथा हीनजातिना धर्मव्याधेन द्विजातेः कौशिकस्य पितृसेवोपदेशः विदुरेण च धृतराष्ट्रस्योपदेशो न सङ्गच्छेतेति सुधियो विदाङ्कुर्वन्तु ।

---

१. B C D E F. H and J. omit तत, while I. reads गायत्र्या भर्गशब्द- for गायत्र्यन्तर्गत-तच्छब्द-. २. Except A. and I all read धर्मकर्ता for धर्मवर्ती, while C. and F. substitute शुद्धो for शूद्रो. ३ M. reads न शूद्रो विजितेन्द्रिय for न तु शूद्रो जितेन्द्रिय. ४ A. reads क्षीरवती for शीलवती. ५. B. and D. read कदाचन for कथञ्चन.

शूद्रो ज्ञानावलेपेन[1] ब्राह्मणान् भाषते यदि ।
स याति नरकं घोरं यावदाभूतसम्प्लवम् ॥
कृष्णसर्पं द्विज नष्टं[2] शूद्रं च प्रतिपाठकम्[3] ।
गर्दभं जारजातं च दूरतः परिवर्जयेत् ॥

इति ॥ २५ ॥

ननु—दुःशीलानां परिषत्त्वाभ्युपगमे तन्निर्दिष्टप्रायश्चित्तस्यान्यथाभावः शक्यते[4] इत्यत आह—

**धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः ।**
**क्रीडार्थमपि यद् ब्रूयुः स धर्मः परमः स्मृतः ॥ २६ ॥**

इति । यथा युद्धार्थं रथमारुह्य खड्गं धृत्वा समागतस्य योद्धुं मुहूर्त्तमात्रं विलम्बितेऽपि युद्धे खड्गचालनादिरूपा युद्धोचितैव[5] लीला प्रवर्त्तते । न स्वप्रस्तुनाऽक्षद्यूनादिरूपा[6] । तद्वत् धर्मशास्त्रवासनावासितत्वात्[7] क्रीडन्नपि यथाशास्त्रमेव ब्रूते । किमु वक्तव्यं बुद्धिपूर्वं परिषद्युपविश्य—

'अब्रुवन्विब्रुवन् वाऽपि नरो भवति किल्बिषी' ।
( म. स्मृ. ८. १३ )

इत्यादिशास्त्रं चावगत्याऽन्यथा न ब्रूते इति ॥ २६ ॥

इत्थं योग्यायोग्यपरिषदो विविच्य तत्र योग्यायाः परिषदोऽपेक्षितं विशेषणजातं दर्शयन्ति—

१. I reads ज्ञानावलेपात्तु for ज्ञानावलेपन. २ I reads दुष्टं for नष्ट ३ J. and G read प्रतिपादकम for प्रतिपाठकम ४ C. E F. G. and H. read शङ्क्येत for शक्यते. ५ I omits एव ६. I. omits न स्वप्रस्तुताऽक्षद्यूतादिरूपा ७. I reads प्रस्तुताद्युद्धादिरूपाक्रियाद्धर्मशास्त्रवेदी यो निपुणो ब्राह्मण. स इन्द्रियपरतन्त्रोऽपि चिर शास्त्रवासनावासित्वात for धर्मशास्त्रवासनावासितत्वात्

चातुर्वैद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।
त्रयश्चाश्रमिणो मुख्याः पर्षदेषा दशावरा ॥२७॥

इति । तत्र चातुर्वैद्यादिशब्दार्थानङ्गिरा विवृणोति—

'चतुर्णामपि वेदानां पारगा ये द्विजोत्तमाः ।
स्वैस्वैरङ्गैर्विना*ऽप्येते चातुर्विद्या इति स्मृताः ॥
धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ।
त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेत् द्विजः ॥
शब्दे† च्छन्दसि कल्पे च शिक्षायां च सुनिश्चितः ।
ज्योतिषामयने चैव सनिरुक्तोऽङ्गविद्भवेत् ॥
वेद-विद्याव्रतस्नातः कुल-शीलसमन्वितः ।
अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः ॥
ब्रह्मचर्याश्रमादूर्ध्वं विप्रोऽयं वृद्ध उच्यते' ।

इति । चातुर्वैद्यत्वाद्युक्तविशेषणविशिष्टा गार्हस्थ्याद्यन्यतमाश्रमवर्तिनो दश संख्याकाः परिषच्छब्दवाच्याः । दशसंख्या अवरा यस्यां परिषदि सा दशावरा । दशत्वमवरः पक्षः । ततो ऽप्यर्वाचीनः पक्षो नास्तीत्यर्थः । ये तु—

'चत्वारो वा त्रयो वाऽपि' ।

(प. स्मृ. ८. ७)

* ये चतुर्णां वेदानां पारगाः ते तत्तद्वेदाङ्गज्ञानाभावे ऽपि चातुर्विद्याः स्मृता इति योजना ।

† 'शब्दे' शब्दशास्त्रे व्याकरणे इति यावत् ।

१. M reads परिषत् स्युर्दशावरा and H. परिषद्दो दशावराः for पर्षदेषा दशावरा.

इत्यादिपक्षाः पूर्वमुपन्यस्ताः। ते सर्वेऽपि गोवधादर्वाचीनविषये द्रष्टव्याः। सेयं दशसंख्योपेता परिषद् ब्राह्मणस्य प्रायश्चित्तित्वे सत्यवगन्तव्या। यदा क्षत्त्रिय-वैश्यौ प्रायश्चित्तिनौ भवतः तदा विशेषमङ्गिरा आह—

'परिषद्या ब्राह्मणानां सा राज्ञां द्विगुणा मता।
वैश्यानां त्रिगुणा चैव परिषच्च व्रतं स्थितम्॥
ब्राह्मणो ब्राह्मणानां तु क्षत्त्रियाणां पुरोहितः।
वैश्यानां याजकश्चैव ते एव व्रतदाः स्मृताः॥
अगुरुः क्षत्त्रियाणां च वैश्यानां चाप्ययाजकः।
प्रायश्चित्तं समादिश्य तप्तकृच्छ्रं समाचरेत्'॥

इति। यथा क्षत्त्रिय-वैश्ययोः परिषद्वृद्धिः तथा व्रतमपि वर्धते। इयं च व्रतवृद्धिरुत्तमजातिहनने द्रष्टव्या। इतरविषये व्रतह्रासस्याभिधानात्। तथा च चतुर्विंशतिमते दर्शितम्—

'प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः।
पादोनं* क्षत्त्रियः कुर्यादर्धं वैश्यः समाचरेत्।

* अत्र क्षत्त्रियस्य पादोन वैश्यस्यार्धं शूद्रस्य पादमिति प्रायश्चित्तस्य न्यूनत्व ज्ञानतारतम्याभिप्रायेणोक्तम्। सर्वत्राप्यस्मिन् प्रायश्चित्तप्रकरणे ज्ञानवतो दोषाधिक्यमज्ञानिनो दोषाल्पत्वमाहुर्महर्षयः। वर्णज्यैष्ठ्यात् सर्वविद्याधिकारित्वाच्च ज्ञानवतो ब्राह्मणस्य पूर्णं ततो ऽवरस्य क्षत्त्रियस्य पादोन ततोऽप्यवरस्य वैश्यस्यार्धं सर्वेभ्यो जघन्यस्य शूद्रस्य पादं प्रायश्चित्तमुपदिष्टम्। अनेन शूद्रादप्यधमानां चाण्डालादीनां तारतम्येन प्रायश्चित्तह्रास उपलक्षणीयो धर्मविद्भिरित्यलं प्रसक्तानुप्रसक्तेन।

१. I. reads स एव व्रतद स्मृत for त एव व्रतदाः स्मृताः.

शूद्रः समाचरेत् पादमशेषेष्वपि पाप्मसु' ॥

इति ॥ २७ ॥

अथ व्रतादेशनम् ॥

इत्थं प्रायश्चित्तिना कर्त्तव्यमुपस्थानं उपस्थेया परिषच्चे-त्युभयं निरूपितम् । अथ व्रतादेशनं निरूपणीयम् । तस्यो-पस्थानानन्तरभावित्वात् । अनन्तरभावश्चाङ्गिरसा दर्शितः—

'उपस्थानं व्रतादेशः स्वीयाशुद्धिप्रकाशनम् ।
प्रायश्चित्तचतुष्कं च विहितं धर्मकर्तृभिः' ॥

इति । तदेतद्व्रतादेशनं राजानुमन्त्या कर्तव्यमित्याह—

राज्ञश्चानुमते स्थित्वा प्रायश्चित्तं विनिर्दिशेत् ।
स्वयमेव न कर्तव्यं कर्त्तव्या स्वल्पनिष्कृतिः ॥ २८ ॥

इति । अत्र गोवधस्य प्रकृतत्वात् तमारभ्याधिकेषु राजा-नुज्ञयैव* व्रतं निर्दिशेत् । न तु राजानं वञ्चयित्वा स्वयं तत् कर्त्तव्यम् । गोवधादल्पेषु तु पापेषु विनाऽपि राजानुज्ञां निष्कृ-तिर्दातुं शक्यते । एतच्च देवलोऽप्याह—

'याचितास्तेन ते चापि ब्राह्मणाः पापभीरुणा ।
निष्कृतिं व्यवहारार्थं कुर्यात्तस्मै नृपाज्ञया ॥

---

* गोवधादिगुरुषु पापेषु गुरोः प्रायश्चित्तस्य कर्तव्यत्वात् तत्र स्व कर्तुः कथंचित् देहनाशादिसम्भवात् लोकोपद्रवसम्भवाच्च तादृशप्राय-श्चित्तदानं राज्ञोऽनुमतेन दातव्यमिति प्रतिपदमुक्तम् ।

---

१ M reads—
राज्ञा चानुमते चैव प्रायश्चित्तं द्विजो वदेत् ।
स्वयमेव न वक्तव्या प्रायश्चित्तस्य निष्कृतिः ॥.

२. I reads चेत् पापं for ते चापि

स्वयं वा[1] ब्रह्मणैः कृच्छ्रमल्पदोषे विधीयते ।
राज्ञा च ब्राह्मणैश्चैव[2] महत्सु सुपरीक्ष्य च'॥

इति । हारीतोऽपि—

'राज्ञोऽनुमतिमाश्रित्य प्रायश्चित्तानि दापयेत् ।
स्वयमेव न कुर्वीत कर्त्तव्यं स्वल्पमेव च' ॥

इति ॥ २८ ॥

यथा परिषद्राजानं नातिक्रमेत् तथा राजापि परिषदं नातिक्रामेदित्याह—

**ब्राह्मणांस्तानतिक्रम्य राजा कर्त्तुं यदिच्छति ।[3]**
**तत्पापं शतधा भूत्वा राजानमनुगच्छति[4] ॥२९॥**

इति । कर्त्तुं प्रायश्चित्तं कारयितुम्* । अन्तर्भावितण्य-र्थस्य[5] विवक्षितत्वात् ॥ २९ ॥

इदानीं परिषदा समाचरणीयान् नियमविशेषानाह—

**प्रायश्चित्तं सदा दद्याद्देवतायतनाग्रतः ।**
**आत्मकृच्छ्रं ततः कृत्वा जपेद्वै वेदमातरम्[6] ॥३०॥**

* प्रायश्चित्तोपदेशो ब्राह्मणैरेव कार्यः । राज्ञा तु कथं तत्कारयितव्य-मिति व्यवस्था विचारणीयेत्यर्थः ।

१ I substitutes च for वा. २ I reads राजा च ब्राह्मणश्चैव for राज्ञा च ब्राह्मणैश्चैव and For the same B. and D. read राजा च ब्राह्मणाश्चैव
३. M. reads:—

ब्राह्मणांश्च व्यतिक्रम्य राजा यत कर्तुमिच्छति ।.

४ M reads उपगच्छति for अनुगच्छति. ५. All, except H and I. read -र्भाविमस्यार्थस्य for -र्भावितण्यर्थस्य. ६ M. reads—

आत्मानं पावयेत पश्चाज्जपन् वै वेदमातरम् ॥.

इति । दद्यादित्यत्रायोगव्यवच्छेदो विवक्षितः । परिषद्युपविश्यादाने प्रत्यवायस्मरणात् । तदाहाङ्गिराः—

'आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः ।
जानन्तो न प्रयच्छन्ति ते तेषां समभागिनः ॥
तस्मादार्त्तं समासाद्य ब्राह्मणांस्तु विशेषतः ।
जानद्भिः पर्षदः पन्था न हातव्यः पराङ्मुखैः ॥
तस्य कार्यो व्रतादेशः पावनार्थे हितेप्सुभिः ।
अज्ञानामुपदेष्टव्यं क्रमशः सर्वमेव च ॥
यथाऽभ्युद्धरते कश्चिद्‌ध्यार्त्तं ब्राह्मणं क्वचित् ।
एवं पापात् समुद्धृत्य तेन तुल्यं फलं लभेत्' ॥

इति । सर्वथा दद्यादित्ययं नियमो यथाविध्युपपन्नविषयः । तथा च हारीतः—

'यत्नादेव पुरस्कृत्य विप्रांस्तत्र दशावरान् ।
प्रणिपत्य च भक्त्या च प्रायश्चित्तं विनिर्दिशेत्' ॥

इति । विनिर्दिशेत् याचेत— इति यावत् । यथाविध्युपपत्त्यभावे प्रायश्चित्तं न देयम् । तदाहाङ्गिराः—

'अनर्चितैरनाहूतैरपृष्टैश्च यथाविधि ।
प्रायश्चित्तं न दातव्यं जानद्भिरपि च द्विजैः' ॥

इति । ज्ञानेनाज्ञानेन वा प्रायश्चित्तस्यान्यथानिर्देशे प्रत्यवायं स एवाह—

१ C. E. F G and H read तुल्यफलो भवेत् for तुल्यं फलं लभेत्.
२. C. and F. read चाऽद्विजैः for च द्विजैः.

'अजानन् यस्तु विब्रूयाज्जानन्यश्चाऽन्यथा वदेत्।
उभयोर्हि तयोर्दोषः पक्षयोरुभयोरपि' ॥

इति। विधिवत् कृतस्य प्रायश्चित्तस्य गौरव-लाघवनिर्णयाय देश-कालादयः परीक्षणीयाः। तदाह बौधायनः—

'शरीरं बलमायुश्च वयः कालं च कर्म च।
समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तं प्रकल्पयेत्' ॥
(बौ. स्मृ. १.१.१.–१९)

इति। हारीतोऽपि—

'यथावयो यथाकालं यथाप्राणं च ब्राह्मणे।
प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्मपाठकैः ॥
येन शुद्धिमवाप्नोति न च प्राणैर्वियुज्यते।
आर्तिं वा महतीं याति न चैतद् व्रतमादिशेत्' ॥

इति। विश्वामित्रोऽपि—

'जाति-शक्ति-गुणापेक्षं सकृद्बुद्धिकृतं तथा।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत्' ॥

इति। परिषद्धर्मप्रश्नादीतिकर्त्तव्यता अङ्गिरसा दर्शिता—

'ततस्ते प्रणिपातेन दृष्ट्वा तं समुपस्थितम्।
विप्राः पृच्छन्ति तत् कार्यमुपविश्यासने स्थितम् ॥
किं ते कार्यं? किमर्थं वा सदा मृगयसे द्विजान्?।
पर्षदि ब्रूहि तत् सर्वं यत्कार्यं हितमात्मनः ॥
*सत्येन द्योतते राजा सत्येन द्योतते रविः।

---

* स्तुतिरेवेयं सत्यस्य। सा च उपसन्नस्य प्रायश्चित्तिनः यथावत्स्वदोषनिवेदनाय सत्यप्ररोचनार्थम्।

---

१. The text reads प्रायश्चित्तानि निर्दिशेत् for प्रायश्चित्तं प्रकल्पयेत्. २. I. reads रविः सत्येन तद्यथा for सत्येन द्योतते रविः.

सत्येन द्योतते वह्निः सर्वं सत्ये प्रतिष्ठितम् ॥
भूर्भुवःस्वस्त्रयो लोकास्तेऽपि सत्ये प्रतिष्ठिताः ।
अस्माकं चैव सर्वेषां सत्यमेव परं बलम् ॥
यदि चेद्वक्ष्यसे सत्यं नियतं प्राप्स्यसे शुभम् ।
यद्यागतोऽस्यसत्येन न तु शुद्ध्यसि केनचित् ॥
सत्येन तु विशुद्ध्यन्ति[1] शुद्धिकामाश्च मानवाः ।
तस्मात्तद्वद यत्[2] सत्यमादि-मध्या-ऽवसानिकम् ॥
एवं तैः समनुज्ञातः सर्वं ब्रूयादशेषतः ।
तस्मिन्निवेदिते कार्ये निष्कास्यो यस्तु कार्यवान् ॥
तस्मिन्नुत्सारिते पापे यथावद्धर्मपाठकाः ।
ते तथा तत्र जल्पेयुर्विमृशन्तः परस्परम् ॥
आपद्धर्मेषु यत्प्रोक्तं यच्च सानुग्रहं भवेत् ।
परिषत्सम्पदश्चैव कार्याणां च बलाबलम् ॥
प्राप्य देशं च कालं च यच्च कार्यान्तरं भवेत् ।
पर्षत् सञ्चिन्त्य तत्सर्वं प्रायश्चित्तं विनिर्दिशेत् ॥
सर्वेषां निश्चितं यत्स्याद्यच्च प्राणान् न घातयेत् ।
आहूय श्रावयेदेकः[3] पर्षदा यो नियोजितः ॥
शृणुष्व भो इदं विप्र, यत्ते आदिश्यते व्रतम् ॥
तत् प्रयत्नेन कर्त्तव्यमन्यथा ते वृथा भवेत् ।
यथा[4] भवेत् तथा चीर्णे तदा शुद्धिप्रकाशनम् ॥
कार्यं सर्वं प्रयत्नेन शक्त्या विप्राभिभाषितम् ।

---

१ H. reads विशुद्धिः स्यात सत्यकामाश्च for विशुद्ध्यन्ति शुद्धिकामाश्च.
२. I reads प्रब्रूहि तत् for तद्वद यत्. ३. B. C. D. E. F G. H. and J. read तद्ब्रूदेवैक for श्रावयेदेकः. ४ O. यदा for यथा and I reads :—
यदा च ते भवेत् चीर्णे तदा शुद्धिप्रकाशकम् ॥

इति। एतच्च सर्वं कस्यचित् देवतायतनस्य शैवस्य[1] वैष्णवस्य वा पुरः स्थित्वा निर्देष्टव्यम्। 'देवतायतनाग्रतः'-इत्येतत् पुण्यतीर्थादेरप्युपलक्षणम्। एवं प्रायश्चित्तं निर्दिश्यानन्तरं निर्देष्टारः सर्वेऽप्यात्मविशुद्ध्यर्थं तत्तत्प्रायश्चित्तानुसारेण स्वल्पमधिकं वा किञ्चित् कृच्छ्रं चरित्वा तदन्ते वेदमातरं गायत्रीं यथाशक्ति जपेयुः—इति। एतदेव हारीतोऽप्याह[2]—

'प्रायश्चित्तं तु निर्दिश्य कथं पापात् प्रमुच्यते?।
यत्पवित्रं विजानीयात् जपेद्वा वेदमातरम्'॥

इति ॥ ३० ॥

'वेद-वेदाङ्गविदुषाम्' (८. १)—इत्यारभ्य 'जपेद्वै वेदमातरम्' (८. ३०)—इत्यन्तेन ग्रन्थसन्दर्भेण यत् परिषन्निरूपणं तत् सर्वमतीताध्यायोक्तेषु आगाम्यध्याये वक्ष्यमाणेषु च प्रायश्चित्तेषु समानमवगन्तव्यम्। अध्यायादौ यत् पृष्टं गोवधप्रायश्चित्तं तदिदानीमध्यायपरिसमाप्तेर्निरूपयति। तत्र 'सशिखम्'—इत्यादिना बहुविधमितिकर्त्तव्यमाह[3]—

सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम्।
गवां मध्ये वसेद्रात्रौ दिवा गाश्चाऽप्यनुव्रजेत्[4] ॥३१॥

इति। शिखाऽपि यथा न परिशिष्यते तथा वपनं

१. I. inserts वा after शैवस्य. २. Except A. and I. all omit अपि. ३. B. and D. read बहुधामितिकर्तव्यताम् for बहुविधमितिकर्तव्यम्. ४. B. and D. substitute चरेत for वसेत्, while M. reads गोष्ठे for मध्ये and ताः समनुव्रजेत for गाश्चाऽप्यनुव्रजेत्.

कुर्यात् । सन्ध्यात्रये च नद्यादावक्गाहेत् । रात्रौ गोष्ठे गोमध्ये शयीत । दिवसे तु चरन्तीर्गा अनुचरेत् ॥ ३१ ॥

इतिकर्त्तव्यतान्तरमाह—

> उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
> न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥३२॥

इति । निदाघसन्तापे प्रथमतो गवां छायां सम्पाद्य पश्चात् स्वयं छायायामुपविशेत् । एवं वर्षादौ । वर्षति सति वृष्टिपीडितानां गवां शालादिसम्पादनेन रक्षां कुर्यात् । तथा हेमन्त-शिशिरयोर्निशि निवासाय शीतरहितं स्थानं सम्पादयेत् । तथा यदा कदाचित् मारुते भृशं वाति सति स्थानादिसम्पादनेन तदुपद्रवात् संरक्षेत् । यदा गवां रक्षां कर्त्तुं न शक्नुयात् तदा स्वात्मनोऽपि रक्षां न कुर्यात् ॥ ३२ ॥

अन्यदितिकर्त्तव्यमाह—

> आत्मनो यदि वाऽन्येषां गृहे क्षेत्रे खलेऽथ वा ।
> भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम् ॥३३॥

इति । स्वकीयेषु परकीयेषु वा गृहादिषु सञ्चितं शाल्यादिकं यदि काचिद्गौर्भक्षयेत् तदा तां पश्यन्नपि निवारकारणामग्रे न कथयेत् । तथा वत्सो यदि दोहकालादन्यत्र स्तनं-

१. Except A. and I. all read अपोऽवगाहेत for नद्यादावक्गाहेत्. २. K. and L read स्वशक्तितः for तु शक्तित. ३. C. E. F. G H. and J. read वर्षतो देवे वर्षति for वर्षादौ । वर्षति. ४ G. reads निशि दिवा सायं for निशि निवासाय.

पिबेत् तदा तमपि वत्सं न कथयेत् ॥ ३३ ॥

पुनरप्यन्यदितिकर्त्तव्यमाह—

पिबन्तीषु पिबेत्तोयं संविशन्तीषु संविशेत् ।
पतितां पङ्कमग्नां वा[1] सर्वप्राणैः समुद्धरेत् ॥ ३४ ॥

इति । स्वयमत्यन्ततृष्णार्तोऽपि गवामुदकपानात् पूर्वमुदकं न पिबेत् । तथा चिरस्थिति-गतिभ्यां पादयोर्व्यथां प्राप्यापि गोसंवेशनात् प्राक् स्वयं न संविशेत् । यत्र क्वापि रोगार्त्ता सती भूमौ पतिता वा जलपानाद्यर्थं गत्वा पङ्के मग्ना वा गौर्यदा दृष्टा तदानीमेव स्वप्राणेषु लौल्यं[2] परित्यज्य सर्वेणापि प्रयत्नेन तां गामुद्धरेत् ॥ ३४ ॥

ननु—स्वप्राणेष्वलुब्धस्य प्रक्रान्तव्रतसमाप्त्यभावे दुरितक्षयो न स्यादित्यत आह—

ब्राह्मणार्थे गवार्थे वा यस्तु प्राणान् परित्यजेत् ।
मुच्यते ब्रह्महत्याया गोप्ता गोर्ब्राह्मणस्य च[3] ॥ ३५ ॥

इति । अनुष्ठेयेभ्यः सर्वेभ्योऽपि[4] व्रतेभ्यः इदमधिकं व्रतं यद्गो-ब्राह्मणाद्यर्थे मरणम् । तत्र कुतो व्रतभङ्गशङ्कावकाशः? । स्वयं मरणमभ्युपगम्य गो-ब्राह्मणरक्षणे प्रवृत्तो यदि कथञ्चिज्जीवेत् तदा गो-ब्राह्मणयोः सङ्गोप्ता जीवन्नपि ब्रह्महत्याया मुक्तो भवति ॥ ३५ ॥

अङ्गानि विधायाङ्गिनं व्रतविशेषं विदधाति—

---

१. C. F. H. I. and J. read पङ्कलग्नां for पङ्कमग्नां and H. reads सर्वत्राणैः, K. and L. सर्वोपायैः for सर्वप्राणैः. २. I. reads लोभं for लौल्यं. ३. M. reads ब्रह्महत्यायैर्गोप्ता गो-ब्राह्मणस्य. Also all others except A. and I. read गोब्राह्मणस्य for गोर्ब्राह्मणस्य. ४. I. omits -ऽपि.

गोवधस्यानुरूपेण प्राजापत्यं विनिर्दिशेत् ।
प्राजापत्यं ततः[1] कृच्छ्रं विभजेत्तच्चतुर्विधम् ॥ ३६ ॥

इति । एकभक्तादिरूपं प्राजापत्यव्रतं गोवधस्य प्रायश्चित्तम् । तच्च व्रतं वक्ष्यमाणप्रकारेण[2] चतुर्विधम् । तत्र गोवधस्य तारतम्यं न्याया-ऽऽगमाभ्यां निश्चित्य तत्तारतम्यानुसारेणान्यतमं प्राजापत्यव्रतविशेषं निर्दिशेत् । यतो वधतारतम्यानुसारेण प्रायश्चित्ततारतम्यं विनिर्देश्यं ततो व्रततारतम्यावगतं[3] प्राजापत्यव्रतं चतुर्विधं यथा भवति तथा विभजेत् ॥ ३६ ॥

इदानीं विभागं प्रकटयति—

एकाहमेकभक्ताशी एकाहं नक्तभोजनः ।
[4]अयाचिताऽश्येकमहरेकाहं मारुताशनः ॥ ३७ ॥
दिनद्वयं चैकभक्तो द्विदिनं चैकभोजनः ।
दिनद्वयमयाची स्याद् द्विदिनं मारुताशनः ॥३८॥
त्रिदिनं चैकभक्ताशी त्रिदिनं नक्तभोजनः ।
दिनत्रयमयाची स्यात् त्रिदिनं मारुताशनः ॥३९॥
चतुरहं चैक[5]भक्ताशी चतुरहं नक्तभोजनः ।

१. M reads तु यत् for तत and I. substitutes च for तत्. All others except A. and M read विभजेत चतुर्विधम्. २. H. and J read तत्प्रमाणप्रकारेण for वक्ष्यमाणप्रकारेण. ३. I. reads-अनुगतं for -अवगतं. ४. H. reads अयाचितस्यैकमह, K and L. अयाश्चितास्त्वेकमह and C. and F. अयाचितार एकाहम् for अयाचिताऽश्येकमह. ५. M. reads तु for च.

**चतुर्दिनमयाची स्याच्चतुरहं मारुताशनः॥ ४०॥**

इति। एकभक्त-नक्ता-ऽयाचितोपवासाः प्राजापत्यस्वरूपम्। सोऽयमाद्यः कल्पः। द्विगुणीभूतैकभक्तादिचतुष्टयं यत् तत् द्वितीयः कल्पः। त्रिगुणीभूतैकभक्तादिचतुष्टयं तृतीयः कल्पः। चतुर्गुणीभूतैकभक्तादिचतुष्टयं चतुर्थः कल्पः। त एते चत्वारः कल्पा वधभेदेषु योजनीयाः। तद्यथा—एकहायणस्य वधे प्रथमः। द्विहायणस्य वधे द्वितीयः। त्रिहायणस्य वधे तृतीयः। उपरितनवयस्कस्य वधे चतुर्थः—इति॥ ३७-३८-३९-४०॥

यथोक्तव्रतचरणानन्तरकर्त्तव्यमाह—

**प्रायश्चित्ते ततश्चीर्णे कुर्याद् ब्राह्मणभोजनम्।**
**विप्राणां दक्षिणां दद्यात् पवित्राणि जपेद् द्विजः॥४१॥**

इति। पवित्राणि पवमानसूक्तादीनि। भोजन-दक्षिणा-जपाः शक्त्यनुसारेण द्रष्टव्याः॥ ४१॥

उपस्थान-व्रतादेशनचर्यात्मकान् त्रीन् प्रायश्चित्तपादानभिधाय शुद्धिप्रकाशनरूपं चतुर्थपादमाह—

**ब्राह्मणान् भोजयित्वा तु गोघ्नः शुद्धो न संशयः।**

इति। स्वकीयविशुद्धिख्यापनार्थं स्वबन्धूनशेषान् ब्राह्मणान् भोजयेत्। [१]एतावता चतुष्पादप्रायश्चित्तस्यानुष्ठितत्वात् अस्य शुद्धौ नास्ति कश्चित् संशयः।

सशिखमित्यादिना साङ्गं प्रायश्चित्तं यदुक्तं तदेव [२]च्यवन आह—

---

१. H. reads तावता for एतावता. २ C. and F. read व्यवहरन्नाह for च्यवन आह—; while B. and D. omit यदुक्तं तदेव च्यवन आह—
'प्राजापत्यव्रतं गोवधे प्रायश्चित्तम्.'

'प्राजापत्यव्रतं गोवधे प्रायश्चित्तम्। नखानि रोमाणि छित्वा सशिखं वपनं कृत्वा त्रिषवणस्नानं गवामनुगमनं सह शयनं सुमहत्तृणानि रथ्यासु चारयेत्। व्रतान्ते ब्राह्मणभोजनम्' ।

इति । आचार्येणैकहायनादिचतुर्विधवध्यभेदमभिप्रेत्य व्रते पक्षचतुष्टयमुपन्यस्तम् । तदेव भङ्ग्यन्तरेण वृद्धप्रचेता आह

'एकवर्षे हते वत्से कृच्छ्रपादो विधीयते ।
अबुद्धिपूर्वे पुंसां स्यात् द्विपादस्तु द्विहायने ॥
त्रिहायणे त्रिपादः स्यात् प्राजापत्यमतः परम्'।

इति । ननु—आचार्योक्ताद् गोवधप्रायश्चित्तादधिकानि बहुविधानि गोवधप्रायश्चित्तानि नानामुनिभिर्दर्शितानि । तत्र कानिचित् कालेनाधिकानि । तद्यथा—एकमास-द्विमास-त्रिमासादिव्रतानि कालतोऽधिकानि । तथा कानिचिद्दानेनाधिकानि । तद्यथैकगोदानमारभ्य सहस्रगोदानपर्यन्तानि कानिचित् कायक्लेशेनाधिकानि । तद्यथा—द्वादशरात्रोपवासादीनि । बाढम् । तत्र निमित्तगौरवं व्रतगौरवं च पर्यालोच्य न्यायेन विषयव्यवस्था कल्पनीया । तां च वयं प्रदर्शयामः । तत्र याज्ञवल्क्यो व्रतचतुष्टयमाह—

'पञ्चगव्यं पिबेद् गोघ्नो मासमासीत संयतः ।
गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुद्ध्यति ॥

---

१. I reads समूह- for सुमह- २. B. D. and H. read योग्यान्तरेण, but H. has the marginal reading भङ्ग्यन्तरेण and substitutes बृहत्प्रचेता for वृद्धप्रचेता J also has बृहत्प्रचेता ३. The text reads पिब for पिबेत्.

कृच्छ्रं चैवातिकृच्छ्रं च चरेद्वाऽपि समाहितः।
दद्यात् त्रिरात्रं चोपोष्य वृषभैकादशास्तु गाः' ॥

(या. स्मृ. ३. २६३-२६४)

इति। तत्र गोस्वामिभेदमुपजीव्य व्यवस्था। जातिमात्र-ब्राह्मणस्वामिके त्रिरात्रोपवासो वृषभैकादशगोदानं च[*]। क्षत्त्रि-यस्वामिके पञ्चगव्याशनम्। वैश्यस्वामिके मासमतिकृच्छ्र-म्। शूद्रस्वामिके कृच्छ्रम्। विष्णुर्व्रतत्रयमाह—

'गोघ्नस्य पञ्चगव्येन मासमेकं निरन्तरम्।
प्राजापत्यं पराको वा चान्द्रायणमथापि वा' ॥

(वि. स्मृ. २. १४)

इति। एतत् त्रयमपि क्षत्त्रियस्वामिकविषयम्[†]। यत्तु शङ्ख-लिखिताभ्यामुक्तम्।

'गोघ्नः[‡] पञ्चगव्याहारः पञ्चविंशतिरात्रमुपवसेत्।

[*] अत्र विज्ञानेश्वर एव व्यवस्थामाह—पञ्चगव्याशनं ततश्च षड्भि षड्भिरुपवासैरेकैकैकप्राजापत्यकल्पनया पञ्चकृच्छ्राणां प्रत्याम्नायत्वेन पञ्च धेनवो मासान्ते च दीयमाना गौरेकेति षट् धेनूनां दानम्। वैश्य-स्वामिके मासमतिकृच्छ्रं कुर्यात्। तत्र षड्रात्रमुपवासो भवति। चतुर्विंश-त्यहं च पाणिपूरान्नभोजनम्। ततश्च कृच्छ्रप्रत्याम्नायकल्पनया किञ्चि-न्न्यूनं धेनुपञ्चकं भवति। शूद्रस्वामिकविषये मासं प्राजापत्यव्रतं द्विती-यम्। तत्र च सार्धप्राजापत्यद्वयात्मकेन प्रत्याम्नायेन किञ्चिदधिकं धे-नुद्वयं भवति। विस्तरस्तु मिताक्षरायामनुसन्धेयः।

[†] विज्ञानेश्वरस्त्विदं—'पञ्चगव्याहारसमानविषयम्'— इत्याह।

[‡] इदं च शङ्ख-प्रचेतसवचनमिति मिताक्षरायाम्।

१. I reads पलत्रयम् for निरन्तरम्. २. I. reads प्रत्यहं स्यात् for प्राजापत्य

सशिखं वपनं कृत्वा गोचर्मणा प्रावृतो[1] गाश्चानु-
गच्छन् गोष्ठेशयो गां[2] दद्यात्।

इति। एतत्तु वैश्यस्वामिकविषयम्*। यत्तु संवर्त्तेनोक्तम्—

'गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिं तत्त्वतः शुभाम्[3]।
गोघ्नः कुर्वीत संस्थानं गोष्ठे गोरूपसंस्थिते[4]॥
तत्रैव क्षितिशायी स्यान्मासार्धं संयतेन्द्रियः।
सक्तु-यावक-भैक्षाशी पयो दधि घृतं शकृत्[5]॥
एतानि क्रमशोऽश्नीयात् द्विजस्तत्पापमोक्षकः।
शुद्ध्यते सोऽर्धमासेन[6] नख-रोमविवर्जितः॥
स्नानं त्रिषवणं कुर्याद्[7] गवामनुगमं तथा।
एतत्समाहितः कुर्यात् स[8] नरो वीतमत्सरः॥
सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः।
ततश्चीर्णव्रतः कुर्यात् विप्राणां भोजनं परम्[9]॥
भुक्तवत्सु च विप्रेषु गां च दद्यात्[10] सदक्षिणाम्।

* 'इदं मासातिकृच्छ्रसमानविषयम्'—इति विज्ञानेश्वरः।

१ B. and D. read आवृतो and H. आच्छादितो for प्रावृतो. २. B and D insert च after गां ३. The text reads पुमान् for शुभाम्. ४ Except H. and the text all read गोरूपसन्निधौ for गोरूपसंस्थिते ५. The text reads—

सक्तु-यावक-पिण्याक पयो-दधि-सकृन्नर' ॥.

६ I. and the text read सार्धं- for सोऽर्धं-. ७. The text reads चास्य for कुर्यात् and अनुगम. for अनुगमं ८. The text reads कुर्यान्नरो विगतमत्सर ९. I. reads चैव भोजनम् for भोजनं परम् १० B D H. and J read च दद्याद्विचक्षणः and C E F and I प्रदद्याद्विचक्षण for च दद्यात् सदक्षिणाम्

वृषभं[1] तिलधेनुं* वा[2] ततो मुच्येत किल्बिषात्' ॥
(सं. स्मृ. १२९-१३४)

इति। यच्चे[3] सुमन्तुनोक्तम्—

'गोघ्नस्य गोप्रदानं गोष्ठे शयनं द्वादशरात्रं
पञ्चगव्यप्राशनं गवां चानुगमनम्'।

इति तत् शूद्रस्वामिकविषयम्। यत्तु मनुनोक्तम्—

'उपपातकसंयुक्तो गोघ्नो मासं यवान् पिबेत्।
कृतवापो वसेद्गोष्ठे चर्मणाऽऽर्द्रेण[4] संवृतः ॥ (१०९)

---

* तिलधेनुरुक्ता लिङ्गपुराणे उपरिभागे सप्तत्रिंशेऽध्याये, वराहपुराणे च नवनवतितमेऽध्याये यथा—

'सा तु षोडशभिः कार्या चतुर्भिर्वत्सको भवेत्।
नासा गन्धमयी चास्या जिह्वा गुडमयी शुभा ॥
पुच्छे प्रकल्पनीया सा घण्टाभरणभूषिता।
ईदृशीं कल्पयित्वा तु स्वर्णशृङ्गीं च कारयेत् ॥
कांस्यदोहा रौप्यखुरा पूर्वधेनुविधानतः
कृत्वा तां ब्राह्मणायाऽऽशु दद्याच्चैव नराधिप' ॥
(व. पु. ९९. ८६-८९)

इति। षोडशभिः कुडवैरित्यर्थः।

१ This line does not appear in the text —

'वृषभं तिलधेनुं वा ततो मुच्येत किल्बिषात्' ॥

२ All others except A and I substitute च for वा. ३ Except A. and I. all substitute तु for च; while B. and D. omit—

'गोघ्नस्य गोप्रदानं गोष्ठे शयनं द्वादशरात्रं
पञ्चगव्यप्राशनं गवां चानुगमनम्'।

इति तत् शूद्रस्वामिकविषयम्। यत्तु मनुनोक्तम्—. ४ G. reads द्रोणसंवृत. and the text तेन संवृत. for ऽऽर्द्रेण संवृत., while B. and D. substitute कृतपापो for कृतवापो.

चतुर्थकालमश्नीयादक्षारलवणं मितम् ।
गोमूत्रेण[1] चरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥
दिवाऽनुगच्छेत्ता गास्तु तिष्ठन्नूर्ध्वं रजः पिबेत् ।
*शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनी[2] भवेत् ॥
तिष्ठन्तीष्वनुतिष्ठेत[3] व्रजन्तीष्वप्यनुव्रजेत् ।
आसीनास्वपि[4] चासीनो नियतो वीतमत्सरः ॥
आतुरामभियुक्तां[5] वा चौर-व्याघ्रादिभिर्भयैः ।
पतितां पङ्कमग्नां[6] वा सर्वप्राणैर्विमोक्षयेत्[7] ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा[8] तु शक्तितः ॥
आत्मनो यदि वाऽन्येषां गृहे क्षेत्रे खलेऽपि वा ।
भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम् ॥

---

* 'वीरासन वसेत्'—इति मेधातिथ्यादिसम्मतः पाठः। भित्ति-शय्यादावनिषद्य यदुपविष्टस्यावस्थानं तद्वीरासनमित्याहुः । उक्त च विष्णुधर्मोत्तरे—

'उत्थितस्तु दिवा तिष्ठेत् उपविष्टस्तथा निशि ।
एतद्वीरासनं प्रोक्तमनाश्रित्योपवेशनम्' ॥

इति । आश्रयमन्तरा उपवेशनम् ।

---

१. The text reads गोमूत्रेणाचरेत् for गोमूत्रेण चरेत् २ C E and F. read चीरासनी for वीरासनी, while B. and D. read वीरासने चरेत, G H. and J वीरासन चरेत् and the text वीरासन वसेत् ३ I reads तिष्ठन्तीषु च तिष्ठेत्तु and all others except A. and H. substitute तिष्ठेत्तु for तिष्ठेत ४ The text reads आसीनासु तथासीनो for आसीनास्वपि चासीनो ५ The text reads अभिशस्ता for अभियुक्ता. ६. G. H. I. and the text read पङ्कलग्नां for पङ्कमग्ना. ७ The text reads सर्वोपायैर्विमोचयेत् for सर्वप्राणैर्विमोक्षयेत्. ८ I reads गोरक्षण for गोरकृत्वा.

अनेन विधिना यस्तु गोघ्नो गा अनुगच्छति ।
स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ॥
वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः ।
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्' ॥

( म. स्मृ. ११. १०९-११७ )

इति एतत्* ब्राह्मणपरिगृहीताया बुद्धिपूर्वकवधविषये द्रष्टव्यम् । यत्त्वाङ्गिरसोक्तम्—

'उपपातकसंयुक्तो गोघ्नो भुञ्जीत यावकम् ।
अक्षारलवणं रूक्षं षष्ठे कालेऽस्य भोजनम् ॥
कृतवापो वसेत् गोष्ठे चर्मणा तेन संवृतः ।
द्वौ मासौ स्नानमप्यस्य गोमूत्रेण विधीयते ॥
पादशौचक्रिया कार्या अद्भिः कुर्वीत केवलम् ।
व्रतिवद्धारयेद् दण्डं समन्त्रां चैव मेखलाम् ॥
गां चैवानुव्रजेन्नित्यं रज आसां सदा पिबेत् ।
तिष्ठन्तीषु च तिष्ठेच्च व्रजन्तीष्वप्यनुव्रजेत् ॥
शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासनी भवेत् ।
गोमतीं च जपेद् विद्यामोंकारं वेदमेव च ॥
आतुरामभिशस्तां च रोग-व्याघ्रादिभिर्भयैः ।

* विज्ञानेश्वरस्तु—'एतत् त्रितयं याज्ञवल्क्यीयमासप्राजापत्य-मासपञ्चगव्याशन-वृषभैकादशगोदानयुक्तत्रिरात्रोपवासरूपव्रतत्रितयविषयं यथाक्रमेण द्रष्टव्यम्'—इत्याह ।

१ A reads आतुरां वाऽतिभीतां वा; while I. reads आतुरामभिशुक्तां च.

पतितां पङ्कलग्नां च सर्वप्राणैर्विमोक्षयेत् ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥
आत्मनो यदि वाऽन्येषां गेहे क्षेत्रे ऽथ वा खले ।
भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम् ॥
अनेन विधिना गोघ्नो यस्तु गा अनुगच्छति ।
स तद्वधकृतं द्वाभ्यां मासाभ्यां तु व्यपोहति ॥
वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः ।
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्' ॥

इति तत् ब्राह्मणस्वामिककामकृतगोवध एव तारुण्या-दिगुणवद्विषयं द्रष्टव्यम् । अत्र जप्यां गोमतीं विद्यां यम आह—

'गोमतीं कीर्त्तयिष्यामि सर्वपापप्रणाशिनीम् ।
तां तु मे वदतो विप्राः शृणुध्वं सुसमाहिताः ॥[1]
गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः ।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
अन्नमेव परं गावो देवानां हविरुत्तमम् ।
पावनं सर्वभूतानां रक्षन्ति च वहन्ति च ॥
हविषा मन्त्रपूतेन तर्पयन्त्यमरान्[2] दिवि ।
ऋषीणामग्निहोत्रेषु गावो होमप्रयोजिकाः[3] ॥

१ I. reads स्तोत्र for तां तु and J. reads ते गदतो for मे वदतो २ B. C D and F. substitute वर्षयन्ति for तर्पयन्ति. ३ B. D. H and J. read -प्रयोजका for -प्रयोजिका.

सर्वेषामेव भूतानां गावः शरणमुत्तमम् ।
गावः पवित्रं परमं गावो मंगलमुत्तमम् ॥
गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः ।
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ॥
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः' ।

(य. स्मृ. ९. २–८)

इति । यत्तु हारीतेनोक्तम् ।

'गोघ्नस्त्वचमूर्ध्वलांगूलां[1] परिधाय गा अनुतिष्ठेत् तिष्ठमानासु । आसीनास्वासीनः । संविशमानासु संविशन् । संवीतांगो वीतमत्सरः[2] । शीत-वातो-ष्णातिवर्षेषु[3] नात्मनस्त्राणं कुर्यात् गोरकृत्वा । चोर-पङ्क[4]-व्याघ्रादिभ्यो भयेभ्यो मोचयेत् । एवं सुचरितप्रायश्चित्तो वृषभमेकादशं गाश्च दत्त्वा त्रयोदशमासेन पूतो भवति' ।

(हा स्मृ. २३. ४०–४७)

इति । यदपि वसिष्ठेन–

'गां[5] चेद्धन्यात्तस्याश्चर्मणाऽऽर्द्रेण परिवेष्टितः

---

१. G. reads तच्चर्मोर्ध्वलाङ्गूल for त्वचमूर्ध्वलाङ्गूलां, while H I. and J read गामनुतिष्ठेत् for गा अनुतिष्ठेत. २. except A. and I all read ऽवगुण्ठित for वीतमत्सर. ३ I reads -उष्मा- for -उष्णा- ४. B. D. and H read गां पङ्क- for चोर-पङ्क- ५. I. has read these two sûtras into a ślôka, which is —

'गां चेद्धन्यात्ततश्चास्याश्चर्मणाऽऽर्द्रेण वेष्टित. ।
षण्मासकृच्छ्रांस्तिष्ठेत वृषभैकादशा च गाः' ॥

दद्यादिति शेष ।,

But we have followed the text.

षण्मासान् * कृच्छ्रं तप्तकृच्छ्रं वा ऽऽतिष्ठेत्(१८)
ऋषभ-वेहतौ च। (२२)

(व. स्मृ. २१. १८–२२)

इति। दद्यादिति शेषः। देवलेनापि—

'गोघ्नः षण्मासान् तच्चर्मपरिवृतो गोग्रासाहारो
गोव्रजे[1]निवासी गोभिरेव स[2]हचरन् मुच्यते'।

इति। एतत्त्रितयमपि सवनस्थब्राह्मणगोवधे कामकृते द्रष्टव्यम्। यत्तु कात्यायनेनोक्तम्—

'गोघ्नस्तच्चर्मसंवीतो वसेद्गोष्ठे ऽथ वा[3] पुनः।
गाश्चानुगच्छेत् सततं मौञ्जी[4] वीरासनादिभिः॥

इदमकामतः कृते गोवधे इति केचित्। कृच्छ्र-तप्तकृच्छ्रौ आतिष्ठत्

'त्र्यहं दिवा भुङ्क्ते नक्तमश्नाति वै त्र्यहम्।
त्र्यहमयाचितव्रतस्त्र्यहं न भुङ्क्त इति कृच्छ्रः॥ (२०)
त्र्यहमुष्णाः पिबेदापस्त्र्यहमुष्णं पयः पिबेत्।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षः परं त्र्यहम्॥
इति तप्तकृच्छ्रः'। (२१)

(व. स्मृ. २१. २०–२१)

इत्युक्तलक्षणौ कृच्छ्र-तप्तकृच्छ्रौ वेदितव्यौ। ऋषभश्च वेहत् च ऋषभ-वेहतौ। विहन्ति गर्भमिति वेहत्। 'संश्चत्तृपद्वेहत्' (उ. २. ८४) इति साधुः। या वृषसंयोगेन गर्भं पातयति सा गौर्वेहदित्युच्यते।

---

१ H reads गोव्रतनिवासी and B. C. D E. F. G. I. and J गोव्रतोपवासी for गोव्रजनिवासी. २. except B. D. and H read सहाचरन् for सहचरन्. ३ I reads तथा for ऽथ वा. ४. C and F. read मौण्डी and I. राज्ञौ for मौञ्जी

वर्ष-शीता-ऽतप-क्लेश-वह्नि-पङ्क-भयादिभिः।
मोक्षयेत् सर्वयत्नेन पूयते वत्सरैस्त्रिभिः'॥

(का. स्मृ. २. ९. १५)

इति यच्च शङ्खेनोक्तम्-

'पादं तु शूद्रहत्यायामुदक्यागमने तथा।
गोवधे च तथा कुर्यात् परस्त्रीगमने तथा'॥

(शं. स्मृ. १३. ३२)

इति यच्च गौतमोऽपि-

'गां च वैश्यवत्'।

(गौ. स्मृ. २२. २३)

इति एतत् त्रितयमपि कामकृते सवनस्थब्राह्मणगोवधे द्रष्टव्यम्। यत्तु यमेन-

'गोसहस्रं शतं वाऽपि दद्यात् सुचरितव्रतः।
अविद्यमाने सर्वस्वं वेदविद्भ्यो निवेदयेत्'॥

(य. स्मृ. ५. १९)

इति तत् सवनस्थश्रोत्रियगुणवद्गोवधे द्रष्टव्यम्। अत एव प्रचेताः-

'स्त्रीगर्भिणी-गोगर्भिणी-बालवधेषु भ्रूणहा भवति'।

इति। अनयैव दिशा व्यासादिवचनेष्वपि प्रायश्चित्त-गौरव-लाघवे गोगतगुणागुणौ परीक्ष्य विषयव्यवस्था* योजनीया। वचनानि तु प्रदर्श्यन्ते। तत्र व्यासः-

* अत्र विशिष्टव्यवस्था 'पञ्चगव्यं पिबेत् गोघ्नो' (३. २६३—२६४) इत्यादिश्लोकव्याख्याने मिताक्षरायां द्रष्टव्या।

१. I reads—

निषाद-शूद्रहत्यायामगम्यागमने तथा।

'मासं वाऽपि पिबेद्गोघ्नः शुचि गोमूत्रयावकम् ।
दद्याद्वा दशकं चैव धेनूनां ब्राह्मणाय वा' ॥
(व्या. स्मृ. ६. १८)

इति । पैठीनसिः—

'गोष्ठे वसन् यवागूं प्रसृतितण्डुलशृतां मासं
भुक्त्वा गोभ्यः प्रियं कुर्वाणो गोघ्नः शुद्ध्यति'।

इति । विश्वामित्रः—

'कृच्छ्रांश्च चतुरः कुर्याद्गोवधे बुद्धिपूर्वके ।
अमत्या तु द्वयं कुर्यात् तदर्धं वृद्ध-बालयोः' ॥

इति । जाबालिः—

'प्राजापत्यं चरेन्मासं गोहत्या[2] चेदकामतः ।
गोहितो गोऽनुगामी स्याद् गोप्रदानेन शुद्ध्यति' ॥

इति । जातूकर्ण्यः—

'गां चेदकामतो हन्यात् ब्राह्मणानुज्ञया ततः ।
प्राजापत्यत्रयं कृत्वा स्पर्शयेद्[3] ब्राह्मणाय गाः' ॥

इति । व्याघ्रः—

'गां चेद्धन्यान्नरो[4]ऽकामात् पणसप्तशतं तथा ।
श्रोत्रियाय दरिद्राय दद्यात् शुद्ध्यर्थमात्मनः' ॥

इति । हारीतः—

'अकामाद्वा सकामाद्वा गोघ्नस्य पुरुषस्य वै ।

---

१ C E F G I. and J substitute व्रत for त्रय २. C. and F. read गौर्हता and G H गोहन्ता for गोहत्या ३ I. reads चार्पयेद् for स्पर्शयेद् ४ H reads नरोऽकाम धेनुसप्तशत for नरोऽकामात पणसप्तशत while B and D substitute येन for पण-.

ब्राह्मणान् ज्ञापयेत् तत्र यथावदनुपूर्वशः[1] ॥
सशिखं वपनं कुर्यात् मासमेकं व्रतं चरेत्।
पयोशी पञ्चगव्याशी गोष्ठशायी जितेन्द्रियः ॥
गवामनुगमं चैव तस्माच्च नियतव्रतः।
अद्भिर्यस्तर्पयेन्नित्यं शोधयेद्दुष्कृतं स्मरन् ॥
एकरात्रं जले स्थित्वा त्रिरात्रं तदनन्तरम्।
गोदानं सर्वशक्त्या च ब्राह्मणेभ्यः प्रयच्छति ॥
स किल्बिषात् समुत्थाय मुच्यते नात्र संशयः'।
(हा. स्मृ. ९. ३८—४२)

इति। चतुर्विंशतिमते—
'गोघ्नः सौम्यत्रयं कुर्यात् कृच्छ्रं वा नवमासिकम्।
गोमूत्र-यावकाहारस्त्रिभिर्मासैस्तु वा शुचिः ॥
गवामनुगमं कुर्याद् गवां मध्ये वसन् निशि।
पञ्चगव्याशनो नित्यं गोवधात् तु प्रमुच्यते' ॥

इति। बृहस्पतिः—
'गोघ्नस्य पावनं सम्यग् गदतो मे निबोधत।
शस्त्रादिभिश्च हत्वा गां मानवं * व्रतमाचरेत् ॥
रोधादिना † चाङ्गिरसमापस्तम्बोक्तमेव ‡ वा।

* मानवं व्रतं 'उपपातकसंयुक्तो' (११. १०८—११६) इत्यादिना ग्रन्थजातेन मनुनोक्तं पूर्वत्र द्रष्टव्यम्।

† मनुनोक्तमितिकर्तव्यतासहितं त्रैमासिकमभिधाय—
'अक्षारलवणं रूक्षं षष्ठे कालेऽस्य भोजनम्।
गोमतीं वा जपेद्विद्यामोङ्कारं वेदमेव च ॥
व्रतवद्धारयेद्दण्डं समन्त्रां चैव मेखलाम्'।
इत्यधिककर्तव्यतापुरःसरं व्रतमुक्तं तदाङ्गिरसं व्रतमभिधीयते।

‡ आपस्तम्बोक्तं 'पादमेकं चरेद्रोधे' (आ स्मृ. १. ३) इत्यादिनोक्तमनुसन्धेयम्।

[1] I reads ब्राह्मणानुज्ञया for ब्राह्मणान् ज्ञापयेत्.

पादं चरेद्रोधवधे कृच्छ्रार्धं बन्धपातने ॥
अतिवाह्य च पादोनं कृच्छ्रमज्ञानताडने ।
गर्भिणीं कपिलां दोग्ध्रीं होमधेनुं च सुव्रताम् ॥
रोधादिना घातयित्वा द्विगुणं व्रतमाचरेत् ।
अतिवृद्धामतिकृशामतिबालां च रोगिणीम् ॥
हत्वा पूर्वविधानेन चरेदर्धं व्रतं द्विजः ।
ब्राह्मणान् भोजयेत् शक्त्या दद्याद्धेम तिलांश्च गाः ॥
हेम-गो-तिलदानेन नरः पापात् प्रमुच्यते[1] ।

( बृ. स्मृ. ३. ३–९ ).

इति ॥ ४२ ॥

गावः श्लाघ्यास्त्रिलोक्यामिति निगमगिरस्तादृशीनां वधे यत्
प्रायश्चित्तं प्रणीतं किमपि गणयतस्तच्च सामान्यगीतम् ।
भारद्वाजान्ववायः प्रथितसमुदयः स्वोदितैरेव सूक्तै-
रध्यायस्याष्टमस्य व्यतनुत विवृतिं शाश्वतीं माधवार्यः ॥१॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां अष्टमोऽध्यायः ॥ ८ ॥

---

१. All, except A and I read हेमा-ऽन्न-तिल- for हेम-गो तिल-

# पराशरसंहिता

## अथ नवमो ऽध्यायः ।

[1] अष्टमाध्याये गोवधस्य सामान्य[2]प्रायश्चित्तमुपवर्णितम् । अथ नवमाध्याये रोधादिनिमित्तविशेषानुपजीव्य प्रायश्चित्तविशेषा अभिधीयन्ते । तत्र

एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ।

(प. स्मृ. ९. ३)

इति वक्ष्यति । तयोः पुरस्तादपवादमाद्यश्लोकेन दर्शयति—

**गवां संरक्षणार्थाय न दुष्येद्रोध-बन्धयोः ।**

**तद्वधं तु न तं विद्यात् कामा[3]कामकृतं तथा ॥१॥**

इति । व्रजे शालायां वा गाः प्रवेश्य तृणादिभक्षणप्रतिबन्धो रोधः । ग[4]ले पाशेन दोहाद्यर्थं पादेषु रज्वा वा नियन्त्रणं बन्धः । तौ च[5] रोध-बन्धौ द्विविधौ । हितावहितौ च । रोगग्रस्ताया गो[6]रपथ्यभक्षणनिवारणं हितो रोधः । क्षुधिताया गोः तृणादिभक्षणनिवारणमहितो रोधः । एवं बन्धस्यापि द्वैविध्यम् ।

१ In I. the ninth Adhyâya begins.—

पावानुमहतो यस्य प्राप्ता मानुषविग्रहम् ।
मुनिभार्याऽनिश राम त वन्देऽमितविक्रमम् ॥

This śloka may be an insertion by some writer other than Mâdhavâhârya. २. I reads सामान्येन for सामान्य- ३. G. and I read कामकारकृत and M. कामात्कामकृत for कामाकामकृत. ४. G reads गच्छे for गले. ५ I. reads गोश्च for तौ च. ६ I. omits अपथ्य-.

तत्र हितयोर्बन्ध-रोधयोः प्रत्यवायजनकत्वाभावान्न प्रायश्चित्तनिमित्तत्वम् । एतदेवाङ्गिरा आह—

'सायं सङ्गोपनार्थं तु न दुष्येद्रोध-बन्धयोः'।

( आं. स्मृ. ९. २९ )

इति ॥ १ ॥

लगुडादिभिर्निपातने प्रायश्चित्तमाह—

**दण्डादूर्ध्वं[1] यदन्येन[2] प्रहाराद्यदि पातयेत् ।**
**प्रायश्चित्तं तदा प्रोक्तं द्विगुणं गोवधे चरेत्[3] ॥२॥**

इति । दण्डस्य लक्षणम् 'अङ्गुष्ठमात्र' ( ९. १० )—इत्यनेन वक्ष्यति । तस्मात् दण्डादूर्ध्वमधिकप्रमाणेनेत्यर्थः । अन्येन लगुडादिना पातयेन्मारयेत् । अकामकृते गोवधे यत् प्रायश्चित्तं पूर्वाध्याये* प्रोक्तं तदेवात्र द्विगुणीभूतमाचरेत् ॥ २ ॥

इदानीं प्रायश्चित्तविशेषानभिधातुमन्यानि वधनिमित्तान्युपन्यस्यात—

**रोध-बन्धन-योक्त्राणि घातश्चेति[4] चतुर्विधम् ।**

इति । वधनिमित्तमिति शेषः । चतुर्विधान् रोधादिवधान् स्वयमेव स्पष्टीकरिष्यति ॥

तेषु बन्धेषु प्रायश्चित्तान्याह—

---

* इदं च 'सशिखं वपनं कृत्वा' ( ८. ३१ ) इत्यादिनोक्तमवगन्तव्यम् ।

१ In M. the tenth śloka (अङ्गुष्ठमात्र स्थूलो वा &c ) of the text appears before this. २ H. reads यदाऽन्येन for यदन्येन, while M reads प्रहरेद्वा निपातयेत् for प्रहाराद्यदि पातयेत्. ३. I reads यथा प्रोक्त द्विगुणं गोव्रत and M चरेत् प्रोक्त द्विगुण गोव्रत for तदा प्रोक्त द्विगुण गोवधे. ४. M. reads घातनं च for घातश्चेति.

एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ॥३॥
योक्त्रेषु पादहीनं स्यात् चरेत् सर्वं निपातने ।

इति । पूर्वाध्यायोक्तप्राजापत्यव्रतस्य पादभेदेन रोधादिवधेषु प्रायश्चित्तान्यवगन्तव्यानि । ननु—एतदङ्गिरोवचनेन विरुद्ध्यते । अङ्गिरा हि मासद्वयकृच्छ्रं गोव्रतत्वेनाभिधाय रोधादिवधेषु तत्पादादीनि विधत्ते—

'पादं चरेत् रोधवधे द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्यात् चरेत् सर्वं निपातने' ॥
( अं. स्मृ. २. ३१ )

इति । नायं दोषः । गुणवदगुणवद्विषयत्वेनाङ्गिरः-पराशरवचनयोर्व्यवस्थापनीयत्वात् । अन्यथा अङ्गिरसः संवर्त्ता-ऽऽपस्तम्बाभ्यां सह विरोधः कथं परिह्रियेत ?। संवर्त्तः पक्षंकृच्छ्रं गोवधव्रतमभिधायैतदाह—

'प्रायश्चित्तस्य पादं तु निरोधे व्रतमाचरेत् ।
द्वौ पादौ बन्धने चैव पादोनं योजने तथा ॥
पाषाणैर्लोष्टकैर्दण्डैस्तथा शस्त्रादिभिर्नरः ।
निपात्य संचरेत् सर्वं प्रायश्चित्तं विशुद्धये' ॥
( सं. स्मृ. १३९–१४० )

---

१. H reads योक्त्रेषु तु त्रिपाद for योक्त्रेषु पादहीनं २ G. H and J. read पादादीन् for पादादीनि. ३. G. omits पक्ष- ४. The text reads रोधेषु and all others except H and I. संरोधे for निरोधे ५. The text reads कुट्टने for योजने, while C. E. F. and G. read पादसंरोधने and B D H and J पादौ संरोधने for पादोनं योजने ६. The text reads लगुडै for लोष्टकै· ७. G. H. and J read निपात्यासौ चरेत्, B. and D निपात्यासौ चरेत् and the text reads निपातने चरेत् for निपात्य संचरेत्

इति । आपस्तम्बोऽपि दिनचतुष्टयैकृत्यं[1] पादत्वेन प्रकृत्येदमाह—

'एकभक्तेन[2] नक्तेन तथैवाऽयाचितेन च ।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्तितः ॥
एकपादं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्यात् चरेत् सर्वं निपातने' ॥

( आ. स्मृ. १. १६ )

इति । ननु—एवमपि पूर्वापरविरोधो दुष्परिहरः । पूर्वाध्याये ह्यकामकृते षोडशरात्रकृच्छ्रोऽभिहितः । अत्र तु कामकृते रोधवधे चतूरात्रोऽभिधीयते । नायं दोषः । अत्र प्रामादिकस्य बालवत्सादिवधस्य प्रायश्चित्तमिदमिति[3] परिहरणीयत्वात् । एवं तर्हि—चतूरात्रा-ऽष्टरात्र[4]-द्वादशरात्र-षोडशरात्ररूपाणां चतुर्विधानां कृच्छ्राणां बाल-वत्सादिविषयाणां पूर्वमभिहितत्वात् पुनरुक्तम्—इति चेत् । न । रोधादिनिमित्तस्य पूर्वमनुपन्यासात्[5] । तत्र हि केवलं रजन्यादौ रक्षणार्थं पाशबद्धानां यादृच्छिकमरणमुपन्यस्तम् । एवं तर्हि—रोधादीनां पुरुषापराधत्वेनाधिकं प्रायश्चित्तं वक्तव्यम्—इति चेत् । न । रोधनीयस्य वत्सादेः शूद्रस्वामिकत्वादिलक्षणस्य हीननिमित्तस्यात्र कल्पनीयत्वात् । तस्मात् न कोऽपि विरोधः ॥ ३ ॥

वधनिमित्तस्य रोधस्य स्वरूपमाह—

गोवाटे[6] वा गृहे वाऽपि दुर्गेवाप्यसमस्थले ॥४॥

---

१. I reads -चतुष्क-for -चतुष्टय-. २ The first two lines of this quotation do not appear in the text. ३. I. omits इदम् ४ C E F. H and J omit -ऽष्टरात्र- ५. I. reads ऽनुपलभ्यमानत्वात् for अनुपन्यासात्. ६. M reads—

गोचरे च गृहे वापि दुर्गेष्वपि समेष्वपि ।,

I. reads गोष्ठे वाऽपि for गोवाटे वा.

नदीष्वथ समुद्रेषु त्वन्येषु[1] च नदीमुखे।
दग्धदेशे मृता[2] गावः स्तम्भनाद्रोध उच्यते ॥५॥

इति। दुर्गाणि पर्वतसंकीर्णमार्गादीनि। असमस्थलं निम्नोन्नतप्रदेशः। अन्येषु वापी-तडागादिषु नदीमुखं समुद्र-नदीसङ्गमप्रदेशः। दग्धदेशो दावाग्न्यादिना दग्धः सन्तृण-भस्माक्रान्तप्रदेशः। यथोक्तेषु स्थानेषु स्तम्भनाद्गावो मृता भवन्ति। अतस्तादृशस्तम्भनमत्र रोध उच्यते। ईदृशरोधनि-मित्तं प्रायश्चित्तमापस्तम्ब आह—

'कान्तारेष्वथ दुर्गेषु गृहदाहभयेषु च।
यदि तत्र विपत्तिः स्यात् पाद एको विधीयते'॥
(आ. स्मृ. १. १९)

इति॥ ४९॥

वधनिमित्तबन्धनस्य स्वरूपमाह—

योक्त्र[4]-दामक-दोरैश्च कण्ठा[5]भरण-भूषणैः।
गृहे वाऽपि वने वाऽपि बद्धा स्याद्[6]गौर्मृता यदि ॥६॥
तदेव बन्धनं विद्यात् कामाकामकृतं च तत्[7]।

१ M reads स्थातेष्यथ दरीमुखे for त्वन्येषु च नदीमुखे. २. K. and L. read दग्धे for दग्ध- and M. substitutes स्थिता for मृता ३ I. reads स्तम्भनमात्र for स्तम्भनमत्र. ४ K. and L read योक्त्रे for योक्त्र- ५ M. reads घण्टा- for कण्ठा-. ६ C E. and F. read वध स्यात् and G H. J. K. and L बद्ध स्यात् for बद्धा स्यात्. ७. Except A. and I. all read यत् for तत्.

इति । योक्त्रं पाशः शकट[1]युगच्छिद्रसम्बद्धः । दामकं धेनु-बन्धनहेतुः पाशः[2] । डोरं रज्जुमात्रम् । कण्ठाभरणं घण्टा-किङ्किण्यादि । भूषणं ललाटादौ निबद्धवराटकादि । ईदृशैः साधनैर्बद्धा गौर्गृहे स्थिता वा चरणाय अरण्ये गता वा यदि म्रियते तदा मरणनिमित्तं योक्त्रादिकमत्रबन्धनमित्युच्यते । गोषु योक्त्रादियोजनं कामकृतं बन्धनं, गोशालायां स्थापितेषु योक्त्रादिषु यदि गावो लग्नाः स्युस्तदानीमकामकृतं बन्धनमिति द्विविधं बन्धनं विज्ञेयम् । एतच्च संप्रायश्चित्तमापस्तम्ब आह—

'कण्[4]ठाभरणदोषेण गौर्वा यत्र विपद्यते ।
चरेदर्धं व्रतं तत्र भूषणार्थं हि[5] तत्कृतम्' ॥
(आ. स्मृ. १. १७)

इति ॥ ६ ॥

वधनिमित्तस्य योक्त्रस्य स्वरूपमाह—

**हले[6] वा शकटे पङ्क्तौ[7] पृष्ठे वा पीडितो नरैः ॥७॥**
**गोपतिर्मृत्युमाप्नोति योक्त्रो[8] भवति तद्वधः ।**

इति । पङ्क्तिः गले[9] मेढीबन्धनम् । गोपतिर्बलीवर्दः । स च स्थाविरेण रोगेण वा वोढुमशक्तो हल-रथ-पङ्क्ति-गोणीभारेषु वाहितो म्रियेत तदा तन्मरणनिमित्तवहननियोजनं योक्त्र-

१ G substitutes कट- for शकट- and I -सम्बन्धः for -सम्बद्ध २ All, except A. an I omit पाश.. ३. B. C. and D. omit स-. ४. The text substitutes घण्टा- for कण्ठा- and तु for वा. ५ H. reads दूषणार्थं for भूषणार्थं and the text कृतं हि तत for हि तत् कृतम्. ६. M. reads मूल्ये शकटे पङ्क्तौ भारे for हले वा शकटे पङ्क्तौ पृष्ठे. ७. G reads युक्तो for पङ्क्तौ and J. substitutes जले for हले ८. I. reads योक्त्रात् for योक्त्रो. ९. I. reads खलमधि for गले मेढी-.

मित्युच्यते । हलादिवाहनं दमनादीनामुपलक्षणम् । अत एवापस्तम्बः—

'दमने दामने रोधे सङ्घाते चैव योजने ।
नस्तः सकलपाशैर्वा मृते पादोनमाचरेत्' ॥
(आ. स्मृ. १. १८)

इति । अशिक्षितबलीवर्दस्य वोढुं शिक्षणं दमनम् । दाम्ना पाशेन सम्पादितो दामनः । रोधो गलनिरोधः । सङ्घातः समूहः । पङ्क्तिः पूर्वोक्ता । तत्र योजनं बन्धनम् । नस्तः नासिकायां दोरप्रक्षेपः । सकलपाशा इतरे सर्वे बन्धनविशेषाः ॥ ७ ॥

वधनिमित्तस्य घातस्य स्वरूपमाह—

मत्तः प्रमत्त उन्मत्तश्चेतनो वाऽप्यचेतनः ॥ ८ ॥
कामाकामकृतक्रोधो दण्डैर्हन्यादथोपलैः ।
प्रहता वा मृता वाऽपि तद्धि हेतुर्निपातने ॥९॥

इति । मत्तो धनादिना दृप्तः । प्रमत्तो मद्यपानादिना परवशः । उन्मत्तो व्याध्यादिना विभ्रान्तः । चेतनो लोकव्यवहारदक्षः । अचेतनो मुग्धः । पातयिष्यामीति बुद्धिः कामः । व्यर्थचेष्टामात्रमकामः । ताभ्यामुत्पादितः क्रोधो यस्यासौ दण्डादिभिर्यदि हन्यात् तदामरणमन्तरेण केवलं प्रहता स्यात् तत्र कामकृतसम्प्रहारो घात इत्युच्यते । अकामकृतं तु मारणं घातः । दण्डोपलाभ्यां शस्त्रादीन्युपलक्ष्यन्ते । अत एवापस्तम्बः—

१. The text reads वा निरोधे वा for दामने रोधे २ B and D read न्यस्तः and I नस्ते for नस्त०. The text reads स्तम्भ-शृङ्खल पाशैश्च for नस्तः सकलपाशैर्वा ३ I. reads तद्धेतुर्विनिपातने for तद्धि हेतुर्निपातने. ४ I. reads -व्यवहाराविक्षम for -व्यवहारदक्ष ५. C. F. and I. read मारयिष्यामि for पातयिष्यामि ६. I. reads तत for तत्र.

'पाषाणैर्लगुडैः पाशैः[1] शस्त्रेणान्येन वा बलात् ।
निपातयति यो गा वै सर्वमेव समाचरेत्'[2] ॥
( आ. स्मृ. १–१९ )

इति ॥ ८–९ ॥

'दण्डादूर्ध्वं यदन्येन'(९.२)—इत्यत्र दण्डादधिकेन लगुडादिना कृतस्य प्रहारस्य प्रायश्चित्तनिमित्तत्वं वदताऽर्थाद्दण्डप्रहारस्य निर्दोषत्वमङ्गीकृतम् । तत्र कोऽसौ दण्ड इत्याकाङ्क्षायामाह—

**अङ्गुष्ठमात्रस्थूलस्तु बाहुमात्रः प्रमाणतः ।**
**आर्द्रस्तु सपलाशश्च दण्ड इत्यभिधीयते ॥ १० ॥**

इति । अङ्गुष्ठमात्र इत्यनेन ततोऽधिकं स्थौल्यं व्यावर्त्यते । न स्वल्पम् । अल्पस्य वधहेतुत्वाभावात् । बाहुमात्र इत्यनेनाप्यधिकदैर्घ्यव्यावृत्तिः । अतिदीर्घेण प्रहारे[3] मुखपर्यन्तप्रसारणेन चक्षुराद्युपघातप्रसङ्गात् । आर्द्रत्वं सपलाशत्वं च वेदनाऽनुत्पत्त्यर्थम् । उक्तलक्षणेन दण्डेन भीतिमेवोत्पादयेत् । न तु वेदनामित्याशयः ॥ १० ॥

यथोक्तदण्डप्रहारेण रुग्णस्य गोः पात-मूर्च्छनयोः सतोः प्रत्यवायप्रायश्चित्त[4]प्रसक्तावपवदति—

**मूर्च्छितः पतितो वाऽपि दण्डेनाभिहतः स तु ।**
**उत्थितस्तु यदा गच्छेत् पञ्च सप्त दशैव वा[5] ॥ ११ ॥**

---

१. The text reads वापि for पाशै . २. The text reads this line as follows :—

'निपातयन्ति ये गास्तु तेषां सर्वं विधीयते' ॥

३. G. reads प्रहारेण for प्रहारे ४. H. omits -प्रायश्चित्त-. ५. K. and L. read दशाथ वा for दशैव वा

ग्रासं वा यदि गृण्हीयात्तोयं वाऽपि पिबेद्यदि।
पूर्वं व्याध्युपसृष्टश्चेत् प्रायश्चित्तं न विद्यते ॥१२॥

इति। यस्तु गौश्चिरं व्याधिपीडितोऽत्यन्तकृशश्चारणार्थं यथोक्तदण्डेनाभिहतः सन् पतितो मूर्च्छितो वाऽपि भवेत् स पुनरुत्थाय कानिचित्पदानि गच्छेत् तर्हि प्रहर्त्तुः प्रत्यवायो नास्ति[1]। अथोत्थातुमशक्तस्तदाऽपि तृणे भक्षिते नास्ति प्रत्यवायः। भक्षयितुमशक्तो यदि जलं पिबेत् तदाऽपि नास्ति प्रत्यवायः। उत्थान-तृणभक्षण-जलपानान्यकृत्वा मूर्च्छानन्तरमेव म्रियेत चेत् तदा प्रहर्त्ता प्रत्यवैतीत्यर्थादवगन्तव्यम् ॥ ११-१२॥

गोगर्भस्य वधे प्रायश्चित्तमाह—

पिण्डस्थे पादमेकं तु द्वौ पादौ गर्भसम्मिते[2]।
पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥ १३ ॥

इति। चतस्रो गर्भावस्थाः। पिण्डः सम्मितोऽचेतनः सचेतनश्चेति। गर्भाशये पतितं वीर्यं कलल-बुद्बुदादिक्रमेणार्धमासे पिण्डभावमापद्यते। स एव मासमात्रेण दार्ढ्यमापद्य सम्मित इत्युच्यते। सम्यङ्मितः परिवृत्तो दृढीभूतः सम्मितः। स च सप्तमे मासि प्राणवायुसञ्चाररूपां चेतनामापद्यते। मासादूर्ध्वमा सप्तमान्मासादचेतन इत्युच्यते। तदूर्ध्वं पतितो मृतो भवेत्। अत्र पिण्डस्थे गर्भे प्राजापत्यस्य पादमाचरेत्। सम्मितवधे अर्धकृच्छ्रम्। अचेतनवधे पादत्रयम्। सचेतनस्य चतुर्थस्य वधे प्रायश्चित्तं वक्ष्यति ॥ १३ ॥

१. B and D read न स्यात् for नास्ति २. B. and D. read गर्भसंस्थिते for गर्भसम्मिते.

पादकृच्छ्रादीनां चतुर्णामङ्गभूतांश्चतुरो वपनविशेषानाह[1]—

**पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च ।**
**त्रिपादे तु शिखावर्जं सशिखं तु निपातने ॥१४॥**

इति। रोमवपनेन नखनिकृन्तनमप्युपलक्ष्यते। नितरां पातनं निपातनम्। सम्पूर्णस्य सचेतनस्य गर्भस्य वधे इत्यर्थः। इदं चतुर्विधं वपनं शङ्खोऽप्याह[2]—

'रोमाणि प्रथमे पादे द्विपादे श्मश्रुवापनम्।
पादहीने शिखावर्जं सशिखं तु निपातने'॥

इति। नखनिकृन्तनं आपस्तम्ब आह—

'पादे तु नख-रोमाणि द्विपादे श्मश्रुवापनम्।
त्रिपादे तु शिखा धार्या चतुर्थे सशिखं स्मृतम्'॥
(आ. स्मृ. १. ३३)

इति ॥ १४ ॥

पवनविशेषवच्चतुर्धा[3] व्यवस्थितान्* दानविशेषानाह—

**पादे वस्त्रयुगं† चैव द्विपादे कांस्यभाजनम्।**
**त्रिपादे[4] गोवृषं दद्याच्चतुर्थे गोद्वयं स्मृतम् ॥१५॥**

---

* केचन इममेव दानविशेषं पर्षद्दक्षिणेत्याचक्षते। न तत्र मूलं पश्यामः।

† 'वस्त्रयुगं' उत्तरीयान्तरीयरूपम्। 'कांस्यभाजनं' भोजनोपयोगी कांस्यघटितः पात्रविशेषः। 'गोवृष' बलीवर्दम्। नात्र गवा सहितो वृष इति व्याख्येयम्

---

१. B D and H read वचन- for वपन-. २. The text reads this slōka as follows :—

'सरोम प्रथमे पादे द्वितीये श्मश्रुकर्तनम्।
तृतीये तु शिखा धार्या सशिख तु निपातने'॥.

३ I. reads -चतुर्णां for चतुर्धा. ४ M. reads पादोने for त्रिपादे.

इति। गोवृषो बलीवर्दः। द्विपादे कांस्यभाजनमशक्तस्य। शक्तस्य त्वर्धसुवर्णम्। तदाह शङ्खः—

> 'कृच्छ्रपादे वस्त्रदानं कृच्छ्रार्धे त्वर्धकाञ्चनम्[1]।
> पादन्यूने तु गां दद्यात् पूर्णे गोमिथुनं स्मृतम्'॥
> (शं. स्मृ. १८. २९)

इति॥ १५॥

चतुर्थावस्थस्य[2] सचेतनस्य गर्भस्य वधे प्रायश्चित्तमाह—

**निष्पन्नसर्वगात्रस्तु दृश्यते वा सचेतनः।**
**अङ्ग-प्रत्यङ्गसम्पूर्णो[3] द्विगुणं गोव्रतं चरेत्॥ १६॥**

इति। अष्टमे मासे सर्वावयवसम्पूर्णो भवति। प्रसवप्रत्यासन्नकाले सचेतन इतस्ततः सञ्चरन्नुपलक्षयितुं शक्यते। अङ्गानि शिर आदीनि। प्रत्यङ्गानि ग्रीवादीनि। तथा च स्मर्यते—

> 'अङ्गान्यत्र शिरो हस्तौ वक्षः पार्श्वौ कटी तथा।
> पादाविति षडुक्तानि शास्त्रविद्भिः समासतः॥
> प्रत्यङ्गानि पुनर्ग्रीवा बाहू पृष्ठं तथोदरम्।
> ऊरू जङ्घे षडित्याहुस्तथा रोम-नखं परम्'॥

इति। तैरङ्गैः प्रत्यङ्गैश्च सम्पूर्णे गर्भे निहते[4] प्राजापत्यद्वयमाचरेत्। तदेतच्चतुर्विधं गोगर्भवधप्रायश्चित्तं षट्त्रिंशन्मतेऽपि दर्शितम्—

> 'पाद उत्पन्नमात्रे तु द्वौ पादौ दृढतां गते।
> पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम्॥

---

१ I. omits त्वर्ध- and inserts तथा after -काञ्चनम्. २. G omits चतुर्थावस्थस्य and H. सचेतनस्य गर्भस्य. ३ I reads -सम्पूर्णे and M. सम्पन्न for -सम्पूर्णो. ४. B. and D. omit निहते.

अङ्ग-प्रत्यङ्गसम्पूर्णे गर्भे* चेतःसमन्विते ।
द्विगुणं गोव्रतं तत्र एषा गोघ्नस्य निष्कृतिः'॥

इति । आपस्तम्बो[1]ऽपि—

'पादोऽसम्पन्नमात्रे† तु द्वौ पादौ च[2] घने चरेत् ।
पादोनं व्रतमाचष्टे हत्वा गर्भमचेतनम् ॥
अङ्ग-प्रत्यङ्गसम्पूर्णे चेतनेन[3] समन्विते ।
द्विगुणं गोव्रतं तत्र एषा गोघ्नस्य निष्कृतिः' ॥
(आ. स्मृ. १०. ३५—३६)

इति ॥ १६ ॥

अवयवविशेषेषु प्रायश्चित्तविशेषानाह—

**पाषाणेनाथ दण्डेन गावो येनाभिघातिताः[4] ।**
**शृङ्गभङ्गे चरेत्पादं द्वौ पादौ नेत्रघातने[5] ॥ १७ ॥**

* 'चेतःसमन्विते' चेतनायुक्तेत्यर्थः ।

† उपलब्धेषु सर्वेष्वप्यादर्शपुस्तकेषु 'पादः सम्पन्नमात्रे' इत्येव वर्तते । तथापि तत्प्रामादिकमिव प्रतिभाति । अत एव—'असम्पन्नमात्रे' पिण्डभावस्थिते 'घने' सम्पन्नसंज्ञके इति व्याख्येयम् । अन्यथा पूर्वोक्तानाञ्चतसृणां गर्भावस्थानामसङ्गतिः स्यात् ।

---

१. A B. and D. omit this and the following four lines —
आपस्तम्बोऽपि—
'पाद सम्पन्नमात्रे तु द्वौ पादौ च घने चरेत् ।
पादोन व्रतमाचष्टे हत्वा गर्भमचेतनम् ॥
अङ्ग-प्रत्यङ्गसम्पूर्णे चेतनेन समन्विते ।
द्विगुण गोव्रत तत्र एषा गोघ्नस्य निष्कृति ' ॥

२ C E F G. I. and J. read बन्धने for च घने. ३. I reads गर्भचेत· for चेतनेन ४ I. reads गवां येनापघातिता· for गावो येनापघातिता.. ५. I. reads तेन घातने and M. तेन यातने for नेत्रघातने.

लाङ्गूले पादकृच्छ्रं तु द्वौ पादावस्थिभञ्जने।
त्रिपादं चैव[1] कर्णे तु चरेत् सर्वं निपातने ॥१८॥

इति। येन पुंसा पाषाणादिसाधनैर्गवामुपघातः क्रियते स पुमान् गोमरणाभावेऽप्यवयवभङ्गप्रत्यवायनिवृत्तये निर्दिष्टं प्रायश्चित्तविशेषमाचरेत्। यत्त्वङ्गिरसा दर्शितम्—

'अस्थिभङ्गं* गवां कृत्वा लाङ्गूलच्छेदनं तथा।
पातनं चैकशृङ्गस्य मासार्धं यावकं पिबेत्'॥
(अं. स्मृ. २. २८)

इति। आपस्तम्बोऽपि—

'अस्थिभङ्गं गवां कृत्वा शृङ्गभङ्गमथापि वा।
त्वक्छेदे पुच्छनाशे वा मासार्धं यावकं पिबेत्'॥
(आ. स्मृ. १. २८)

इति तत्[2] शृङ्गादिबह्ववयवभङ्गविषयं गुणवद्गोविषयं वा। यदप्यङ्गिरसोक्तम्[3]—

'शृङ्गभङ्गेऽस्थिभङ्गे च चर्मनिर्मोचनेऽपि वा।
दशरात्रं पिबेदब्जं स्वस्थाऽपि यदि गौर्भवेत्'॥
(अं. स्मृ. ३०)

---

* केचनेदं वचनद्वयं कालान्तरमरणविषयं मन्यन्ते। तद्यथा—शृङ्गाद्यवयवभङ्गेन जनितया रुजा कालान्तरे मरणे। न तु तत्कालमरणे। तत्र प्रायश्चित्तान्तरस्योक्तत्वात्। सर्वथा यस्मिन् गोमरणे अवयवविशेषभङ्ग एव प्रयोजको भवति तत्रैतयोर्वचनयोः प्रवृत्तिरिति तेषामाशयः।

१ I. reads चैककर्णे for चैव कर्णे. २ Except A. all read एतत् for तत्. ३. I. reads यत्ति for यद्.

इति। वज्र्यं क्षीरादि। एतच्चाशक्तविषयम् ॥ १७-१८ ॥

ननु—वर्णितं अङ्गभङ्गादिप्रायश्चित्तं न पर्याप्तम्। अङ्गभङ्गादेः कियताऽपि कालेन मरणपर्यवसायित्वसम्भवात्। वधप्रायश्चित्तस्यैव तत्रोचितत्वात्—इत्याशङ्क्याह—

शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च।
यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते ॥१९॥

इति। शृङ्गभङ्गानन्तरं षण्मासमध्ये यदि म्रियते तदानीं शृङ्गादिभङ्गस्य तन्निमित्तत्वशङ्कया वधप्रायश्चित्तं कर्त्तव्यं भवेत्। यदा पुनः पदाभिभङ्गे षट्सु मासेषु जीवति तदा वधप्रायश्चित्तं न विद्यते। किन्तु भङ्गादिनिमित्तमेव प्रायश्चित्तमनुष्ठेयम् ॥ १९ ॥

व्रणभङ्गादौ न केवलं प्रायश्चित्ताचरणम्। किन्तु तच्चिकित्साऽपि कर्त्तव्येत्याह—

व्रण-भङ्गे च कर्त्तव्यः स्नेहाभ्यङ्गस्तु पाणिना।
यवसश्चोपहर्त्तव्यो यावद् दृढबलो भवेत् ॥ २० ॥

इति। व्रणश्च भङ्गश्च व्रण-भङ्गौ। त्वक्च्छेदो व्रणः। शृङ्गाद्यस्थिच्छेदो भङ्गः। स्नेहाभ्यङ्ग इत्यौषधप्रक्षेपस्याप्युपलक्षणम्। यवसस्तृणविशेषः। तेन भक्ष्यं सर्वमुपलक्ष्यते। चिकित्सां शङ्खोऽप्याह—

१. B. and D read अपक- for अशक्त-. २. I. reads शृङ्ग- for भङ्ग-. ३. J. omits तत्-. ४ I. inserts अपि after इति.

'यवसश्चोपहर्त्तव्यो यावद्रोहेत तद्व्रणः।
सम्पूर्णे दक्षिणां दद्यात्ततः पापात् प्रमुच्यते' ॥
(शं. स्मृ. ११. १९)

इति ॥ २० ॥

'यावद् दृढबल' इति चिकित्साया अवधिरभिहितः। तमेवानूद्यानन्तरकर्त्तव्यमाह—

यावत् सम्पूर्णसर्वांगस्तावत् तं पोषयेन्नरः।
गोरूपं ब्राह्मणस्याग्रे नमस्कृत्वा विसर्जयेत् ॥२१॥

इति। अङ्गसम्पूर्तिपर्यन्तं पोषणं कृत्वा पुष्टं तद्गोस्वरूपं क्षमापणबुद्ध्या नमस्कृत्य चिकित्साया उपरमेत् ॥ २१ ॥

सम्यक् चिकित्सायां कृतायामपि प्रहारदार्ढ्यात् पुष्ट्यभावे किं कर्त्तव्यमित्यत आह—

यद्यसम्पूर्णसर्वांगो हीनदेहो भवेत् तदा।
गोघातकस्य तस्यार्धं प्रायश्चित्तं विनिर्दिशेत् ॥२२॥

इति। गोघातकस्य यत् प्रायश्चित्तं प्राजापत्यं तदर्धमनुतिष्ठेत् ॥ २२ ॥

इदानीं चौर्यादिदोषेण कामकृतगोवधे निमित्तविशेषानुपजीव्य प्रायश्चित्तविशेषानाह—

---

१. B C. D. E F G H. and J. read तद्व्रणम् for तद्व्रण. I. reads यावद्रोहिततद्व्रण. २. J reads चिकित्साया अपि विधि for चिकित्साया अवधि. ३. K and L. read ब्राह्मणाग्रे तु for ब्राह्मणस्याग्रे and M. नमस्कृत्य for नमस्कृत्वा. ४. Except A and I. all read -सम्पूर्ण- for -सम्पूर्ति-. ५ K. and L. read सद्य सम्पूर्णसर्वाङ्गो हीनदेही for यद्यसम्पूर्णसर्वाङ्गो हीनदेहो. ६. Except A and I. all omit यत् and I omits प्राजापत्यं. ७. C E. and F. read चौर्यादिद्वेषेण and I. वैर्यादिद्वेषेण for चौर्यादिदोषेण. ८. B. and D. read प्रायश्चित्तमाह and C. E. F. G. H. and I. प्रायश्चित्तविशेषमाह for प्रायश्चित्तविशेषानाह.

काष्ठ-लोष्टक-पाषाणैः शस्त्रेणैवोद्धतो बलात् ।
व्यापादयति यो गां तु तस्य शुद्धिं विनिर्दिशेत् ॥२३॥
चरेत् सान्तपनं काष्ठे प्राजापत्यं तु लोष्टके ।
तप्तकृच्छ्रं तु पाषाणे शस्त्रे चैवातिकृच्छ्रकम् ॥ २४॥

इति । प्राजापत्य-तप्तकृच्छ्रयोः स्वरूपं पूर्वमेवोपदर्शितम् । सान्तपना-ऽतिकृच्छ्रयोः स्वरूपं तूपरिष्टाद्वक्ष्यते ।

नच—काष्ठादीनां वधनिमित्तत्वे समाने सति प्रायश्चित्त-वैषम्यमयुक्तमिति शङ्कनीयम् । शास्त्रैकगम्येऽर्थे युक्तिभिरुपालम्भासम्भवात् । एवं तर्हि सर्वत्र न्यायविचारो निरर्थक इति चेत् । न । वचनानां परस्परविरोधे सति न्यायस्य निर्णायकत्वात् ॥ २३–२४ ॥

यथोक्तेषु चतुर्षु क्रमेण चतुर्विधान् दक्षिणाविशेषानाह—

पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः ।
तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश ॥ २५ ॥

इति । गावो देया इति शेषः । त्रयस्तिस्रः ॥ २५ ॥

प्रमापितस्य गोः परकीयत्वे तस्मै गोस्वामिने गां दत्त्वा पश्चात् यथोक्तं व्रतमाचरेदित्याह—

प्रमापणे प्राणभृतां दद्यात् तत् प्रतिरूपकम् ।
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः ॥ २६ ॥

---

१. B. D. and J. read नैवोद्धते for -णैवोद्धतो. २. Except A. and M. all read शस्त्रेणैवातिकृच्छ्रकम्.

इति। महिषाश्वादिष्वपि स्वामिने दानं समानमिति विवक्षया प्राणभृतामित्युक्तम्। तदेतत्प्रतिरूपदानं मनुरब्रवीत्। तथा च मानवं वचनम्—

*'यो यस्य हिंस्यात् द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम्'॥

इति ॥ २६ ॥

'रोध-बन्धन-योक्त्राणि'।

इत्यत्र रोध-बन्धनयोः प्रत्यवायहेतुत्वं वर्णितम्। इदानीं तस्यापवादमाह—

**अन्यत्रांकन-लक्ष्मभ्यां[2] वाहने मोचने[3] तथा।**
**सायं सङ्गोपनार्थं[4] च न दुष्येद्रोध-बन्धयोः ॥२७॥**

इति। वृषोत्सर्गादौ दाहादिना स्थिर[5]चिह्नकरणमङ्कनम्। तत्रैव गोमयहरिद्रादिना तात्कालिकचिह्नकरणं[6] लक्ष्म। ताभ्यामन्यत्र उक्तचिह्नरहितेषु बलीवर्देष्वित्यर्थः। वाहनं गोणीभाराद्यारोपणम्। मोचनं तस्यैव[7] भारस्यावरोपणम्। त-

---

* नास्तीदमुपलब्धमनुस्मृतिपुस्तकेषु कुत्रापि। उपलभ्यन्ते च मानवानि वचनानि भारतादिष्वन्येषु ग्रन्थेषु। तत्र कुत्रापि स्याच्चेत् शोधकैरवलोकनीयम्।

---

१. B D. and H. omit -अश्व-, while H. reads महिष्यादि- २. All, except A. I. and M. read अङ्कन-लक्ष्याभ्या for अङ्कन-लक्ष्मभ्यां ३. M. reads मोहने for मोचने. ४. M. reads संयमनार्थं तु for सङ्गोपनार्थं च. ५. I. reads सक्थि- for स्थिर-; while J. substitutes वृषोत्सर्गादिबुद्ध्या for वृषोत्सर्गादौ ६. B and D read तात्कालिकविहरण for तात्कालिकचिह्नकरण and except H. and I. all substitute लक्ष्यम् for लक्ष्म. ७. I. omits एव.

त्रोभयत्रैव बलीवर्दशरीरे यद्यपि व्यथा जायते तथापि प्रत्य-
वायो नास्ति । चिह्नद्वयरहितेषु बलीवर्देषु वाहन-मोचनयोः
शास्त्रेणैवाङ्गीकृतत्वात् । चिह्नोपेतेषु वृषेषु वाहनं न शास्त्री-
यम् । वाहननिवृत्तिज्ञापनायैव चिह्नकरणात् । तथा रात्रौ संर-
क्षणार्थं रोध-बन्धनयोः कृतयोरपि नास्ति प्रत्यवायः ॥ २७ ॥

पुनरपि व्यवस्थितान् प्रायश्चित्तविशेषान् विधातुं चत्वारि
निमित्तान्युपन्यस्यति—

अतिदाहेऽतिवाहे[1] च नासिकाभेदने तथा ।
नदी-पर्वतसञ्चारे प्रायश्चित्तं विनिर्दिशेत् ॥ २८ ॥

इति । रोगचिकित्सार्थमङ्कनार्थं वा यावद्दहनमपेक्षितं तावतो-
ऽधिकदहनमतिदाहः । यावन्तं भारमक्लेशेन वोढुं शक्नोति
तावतोऽप्यधिकस्य भारस्यारोपणमतिवाहः । रज्जुस्थित्यर्थं
नासिकायां छिद्रकरणं भेदनम् । पात-वधसम्भावनोपेत-
योर्दुर्गमयोर्नदी-पर्वतयोः प्रेरणं नदी-पर्वतसञ्चारः ॥ २८ ॥

तेषु चतुर्षु निमित्तेषु क्रमेण प्रायश्चित्तान्याह—

अतिदाहे चरेत् पादं द्वौ पादौ वाहने चरेत् ।
नासिक्ये[2] पादहीनं तु चरेत् सर्वं निपातने ॥ २९ ॥

इति । दुर्गमनदी-पर्वतसञ्चारेण प्रमादात् पतित्वा मरणं
निपातनम् । 'अतिदोहे'—इति वा[3] पाठः । तस्मिन् पक्षे वत्सार्थं
पयो ऽनवशेष्य कृत्स्नक्षीरदोहनमतिदोहः । तत्र वत्सोपघात-

---

१ B. and D substitute त्र for -ऽति. २. K. L and M. read नासिके for नासिक्ये. ३. I. omits वा and reads पाठान्तरम् for पाठ..

प्रत्यवायनिमित्तं धेनूपघातनिमित्तं वा प्रायश्चित्तम् । यत्तु हारीतेनातिदाहातिवाहनादौ चान्द्रायणमुक्तम्–

'नासाभेदन-दाहेषु कर्णच्छेदन-बन्धने ।
अतिदाहातिदोहाभ्यां कृच्छ्रं चान्द्रायणं चरेत्' ॥
(हा. स्मृ. १९.१०)

इति तद्बहुनिमित्तसन्निपातविषयं द्रष्टव्यम् ॥ २९ ॥

यस्तु गौर्गृहे बद्धः प्रमादाद्गृहदाहे सति यदि म्रियेत तदा किं प्रायश्चित्तम्? इत्यत आह–

**दहनात्तु[1] विपद्येत अनड्वान्[3] योक्त्रयन्त्रितः ।**
**उक्तं परा[4]शरेणैव ह्येकपादं यथाविधि ॥ ३० ॥**

इति । वृद्धपराशरेण यथाविध्युक्तमेकं पादकृच्छ्रं चरेत्– इति शेषः । एतच्चापस्तम्बोऽप्याह–

'कान्तारेष्वथ वा दुर्गे गृहदाहे खलेषु च ।
यदि त्विह विपत्तिः स्यात् पाद एको विधीयते' ॥
(आ. स्मृ. ३. १६)

इति ॥ ३० ॥

बुद्धिसमाधानायोक्तान्यनुक्तानि च निमित्तानि संगृण्हाति–

**रोधनं[5] बन्धनं चैव भारः प्रहरणं तथा ।**
**दुर्गप्रेरण-योक्त्रं च निमित्तानि वधस्य[6] षट् ॥ ३१ ॥**

१. I. reads भेदने वाहने चैव for नासाभेदन-दाहेषु २ I. reads चेत and M. च for तु ३. M. reads अबद्धो वाऽपि यन्त्रित for अनड्वान योक्त्रयन्त्रित. ४ B. and D. read पाराशरेण for पराशरेण and B D. K. and L. read ह्येकं पादं for ह्येकपादं. ५. M. reads रोध-बन्धन-योक्त्र च for रोधनं बन्धन चैव. ६. K. and L. read वधेषु for वधस्य.

इति। तत्र रोध-बन्धन-योक्त्राणि पूर्वमेव व्याख्यातानि। भारोऽतिवाहनम्। प्रहरणं शस्त्रादिभिस्ताडनम्। दुर्गप्रेरणं प्रौढभारं वाहयित्वा अत्युन्नतपर्वताग्रे नयनम्॥ ३१॥

पूर्वं गृहे बद्धस्य पशोर्दाहनिमित्तं प्रायश्चित्तमभिहितम्। इदानीं तस्यैव मरणे वधनिमित्तं प्रायश्चित्तमाह—

बन्ध-पाश-सुगुप्ताङ्गो म्रियते यदि गोपशुः।
भवने तस्य पापी स्यात् प्रायश्चित्तार्धमर्हति॥३२॥

इति। बन्धहेतुः पाशो बन्धपाशः। तेन सुगुप्तानि रोधितानि गलपादादीन्यङ्गानि यस्यासौ बन्धपाशसुगुप्ताङ्गः। स चेद्भवने म्रियेत तदा कृच्छ्रार्धमाचरेदिति। यद्यपि पूर्वत्र—

'द्वौ पादौ बन्धने चरेत्'।

इत्यनेनेदं प्रायश्चित्तमुपवर्णितं तथाप्यत्र बन्धनयोग्यायोग्यरज्जुविवेकचिकीर्षया तस्यैव पुनरनुवाद इत्यदोषः। यद्वा पूर्वोक्तस्यैव प्रायश्चित्तस्य विहितरज्जुबन्धविषयत्वमनेन समर्थ्यते। निषिद्धरज्जुबन्धने तु सम्पूर्णं कृच्छ्रमवगन्तव्यम्॥ ३२॥

तत्र तावद्वर्ज्यान् रज्जुविशेषान् दर्शयति—

न नारिकेलैर्न च शाणवालैः
न वापि मौञ्जैर्न च वल्कशृङ्खलैः

---

१ All, except A. and I. substitute पुन for अत्युन्नत-. २ G. reads बद्धपाश- for बन्धपाश-. ३. I. reads तत्र for तस्य; while M. reads नाशस्य पापे कृच्छ्रार्धम् for पापी स्यात् प्रायश्चित्तार्धम्. ४ K and L. read नारिकेलेन for नारिकेलै. ५. I. reads शाणपाशै for शाणवालैः. ६ B. D. and I substitute च for वा; while K. and L read मौञ्जेन न नद्धशृङ्खलै and M मौञ्जे न च बन्धशृङ्खलै.

गावो न निबन्धनीया
बध्वाऽपि तिष्ठेत् परशुं गृहीत्वा ॥ ३२ ॥

इति। वल्कानि वंशादिजनितानि। शृङ्खलान्ययस्ताम्रादिनिर्मितानि नारिकेलादिभिर्गावो न बन्धनीयाः। यदि दामान्तरासम्भवादेतैर्दामभिर्बद्ध्येरन् तदा तन्निमित्तोपद्रवप्रसङ्गे[१] सहसा छेत्तुं हस्तेन परशुं गृहीत्वा सावधानस्तिष्ठेत्। नारिकेलादिभिः कार्पासतन्त्वादिजन्या दृढा रज्जवः सर्वा उपलक्ष्यन्ते। अत एवाङ्गिराः—

'न नारिकेलैर्न च फालकेन
न मौञ्जिना नापि च वल्कलेन।
एतैरनड्वान् न हि बन्धनीयो
बध्वाऽपि तिष्ठेत् परशुं गृहीत्वा ॥'
(अं. स्मृ. ३. ९)

इति। फालकं कार्पासजन्यम् ॥ ३२ ॥

उपादेयान् रज्जुविशेषानाह—

कुशैः काशैश्च बध्नीयाद्गोपशुं[२] दक्षिणामुखम्।

इति। यथा पाशा अनुपद्रवकारिणो विवक्षिताः तथा-स्थानमपि निम्नोन्नतादि दोषरहितं विवक्षितम्। तथा च व्यासः—

'कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्जिते'।
(व्या. स्मृ. ९. १७)

इति ॥

---

१ I. reads -प्रसङ्गो भवत्यतस्तच्छेत्तु for प्रसङ्गे सहसा छेत्तुं. २ A reads गोपतिं and II. वै पशु for गोपशु

ननु—नारिकेलादिपाशानामुपद्रवकारित्वसम्भावनया प्रतिषेधः कृतः । स च[1] दोषः कुशादिपाशेष्वपि समानः । तेषां सहसा त्रोटनेऽपि गृहदाहादौ पलायमानानां गवां गलगतपाशेषु लग्नेनाग्निनोपद्रवसम्भवादित्यत आह—

**पा[2]शलग्नाग्निदग्धासु प्रायश्चित्तं न विद्यते ॥ ३४ ॥**

इति । कुशादिमयपाशानां शीघ्रं भस्मीभावात् सकृत् सन्तापमात्रं[3] सम्पद्यते । न तु प्राणान्तिक उपद्रवः । अतो न तत्र प्रत्यवायः ॥ ३४ ॥

तत्रापि केनचित् प्रकारेणोपद्रवसम्भावनामुद्भाव्य तत्रोचितं प्रायश्चित्तमाह—

**यदि तत्र भवेत् का[4]ष्ठं प्रायश्चित्तं कथं भवेत्? ।**
**जपित्वा पावनीं देवीं मुच्यते तत्र किल्बिषात् ॥३५॥**

इति । गलगते पाशे दह्यमाने यदि कुशमूलादिरूपं किञ्चित् काष्ठं तस्मिन् पाशेऽवतिष्ठेत् तदा तदुल्मुकसंस्पर्शादीषद् त्व[5]ग्दाहो भवेत् । तत्र गायत्रीजपेनैव शुद्धिः । पावमानीयमिति पाठे पवमानसूक्तं जपित्वेति व्याख्येयम् ॥ ३५ ॥

---

१. Except A. and I. all omit च २. B. and D. read पाशलग्नानि दोषेषु C F. and I. read पाशलग्नादिदग्धेषु, H reads पाशलग्नाग्निवधेषु ; but the chhanda is incorrect, K and L read पाशलग्नानि दग्धेषु and M. reads पाशलग्नाग्निदग्धेषु all pay पाशलग्नाग्निदग्धासु ३ Except A and I. all read सम्पातमात्र सम्पाद्यते. ४. C. F. K. and L. read कष्ट and M काण्ड for काष्ठं ५. I. omits त्वग्-.

यस्मिन् देशे मरणान्तिकः प्रमादः सम्भावितः तत्र गावो न प्रेषणीयाः। यदि बुद्धिमान्द्यात् प्रेषयेत् तदा तत्र मरणे प्रायश्चित्तं चरणीयमित्याह—

प्रेरयन् कूप-वापीषु वृक्षच्छेदेषु पातयन्।
गवाशनेषु विक्रीणंस्ततः[1] प्राप्नोति गोवधम् ॥३६॥

इति। यस्मिन् चारणप्रदेशे जीर्णकूप-वाप्यादयो विद्यन्ते तत्र चारणार्थं प्रेषितो यदि म्रियते तदा, यत्र प्रौढा वृक्षाश्छिद्यन्ते तत्र प्रेषितः प्रौढशाखापातेन मरणं प्राप्नोति, गोमांसभक्षिणो म्लेच्छा गवाशनाः तेषु विक्रीता गौस्तैर्मार्यते अतस्तेषु त्रिष्वपि स्थानेषु प्रेरको गोव्रतं चरेत्॥ ३६॥

उद्वृषभयज्ञादावुपघाते पादत्रयं प्रायश्चित्तमाह—

आराधितस्तु यः कश्चित् भिन्नकक्षो[2] यदा भवेत्।
श्रवणं हृदयं भिन्नं मग्नो वा कूपसङ्कटे[3] ॥ ३७ ॥
कूपादुत्क्रमणे चैव भग्नो वा ग्रीव-पादयोः।
स एव म्रियते तत्र त्रीन् पादांस्तु समाचरेत्॥३८॥

इति। उद्वृषभयज्ञे* हि बलीवर्दमाराध्य धावयन्ति। तत्रातित्वरया धावतः कदाचित् कक्षो भिद्यते। केनचिदुप-

* अयं च यज्ञो महाराष्ट्रादिषु प्रसिद्ध एव। यत्र शूद्रादयः बलीवर्दपूजां कृत्वा ऽपराण्हे तान् शकटादिषु नियुज्य धावयन्ति।

१ I. substitutes तथा for तत २ A. reads भिन्नवक्षाः and B. and D. भिन्नकांश for भिन्नकक्ष. ३. B D. and M. read कूटसङ्कटे for कूपसङ्कटे.

विनिर्दिशेत् । तथाऽन्यत्रापि गृह-भित्ति-वेद्यादिकरणार्थमङ्गणो-पवनादिषु गोसञ्चारसम्भावनावत्सु प्रदेशेषु कृताः खाताः गृह-खाताः । स्वेन कृताः स्वकार्याः । स्वकार्याश्च ते गृहखाताश्च स्वकार्यगृहखाताः । तेषु गोविपत्तौ पादत्रयं प्रायश्चित्तं विनि-र्दिशेत्* ॥ ४१ ॥

गृहखातादिवद् गृहे सर्पादिना वधेन प्रत्यवायप्रसङ्गमप-वदति—

**निशि बन्धनिरुद्धेषु सर्प-व्याघ्रहतेषु च ।**
**अग्नि-विद्युद्विपन्नानां प्रायश्चित्तं न विद्यते ॥४२॥**

इति । रात्रौ संरक्षणार्थं पाशबन्धेन निरुद्धा गावः सर्प-व्याघ्रादिभिर्यदि हन्येरन् तदा स्वामिनः प्रत्यवायो नास्ति । अग्निर्ग्रामदाहः । विद्युदशनिः । ताभ्यां विपन्नानां न प्रत्यवा-यहेतुत्वम् ।

ननु—'दहनात्तु विपद्यन्ते' (७.१३)—इत्यत्र प्रायश्चि-त्तमुपवर्णितम् । इह तु तत् निराक्रियते इति पूर्वापरविरोध—इति चेत् । न । निराकरणस्याशक्तविषयत्वात् । सत्यां शक्तावुपेक्षायां पूर्वोक्तं प्रायश्चित्तम् । अत एव व्यासः—

* इदं च स्वकीयेषु खातेषु स्वस्वामिकगोविपत्तौ द्रष्टव्यम् । परस्वा-कगोविपत्तौ तु प्रमादेन शक्तौ सत्यामनिवारणे स्वामिनः खातकर्तुश्च मानमेवेति ध्येयम् ।

१ K. and L read नद्ध- for बन्ध-. २ B and D read आशङ्क्य-विषयत्वात् and H आशङ्काविषयत्वात् for अशक्तविषयत्वात्. ३. H reads शक्यशक्तौ तदुपेक्षया for शक्तावुपेक्षायां. ४. I. reads अपूर्वोक्तप्रायश्चित्तम for पूर्वोक्तं प्रायश्चित्तम्

'जलौघ-पल्वले मग्ना मेघ-विद्युद्धताऽपि वा ।
श्वभ्रे वा पतिताऽकस्मात् श्वापदेनापि भक्षिता ॥
प्राजापत्यं चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम् ।
शीत-वाताहता वा स्याद्‍बन्धनमृताऽपि वा ॥
शून्यागारे *उपेक्षायां प्राजापत्यं विनिर्दिशेत्' ।
(व्या. स्मृ. ३. ३९-४१)

इति । इदं तु कार्यान्तरविरहे सत्युपेक्षायां वेदितव्यम् । कार्यान्तरव्यग्रतयोपेक्षायां त्वर्धम् ।

'पल्वलौघ-मृग-व्याघ्र-श्वापदादिनिपातने ।
श्वभ्र-प्रपात-सर्पाद्यैर्मृते कृच्छ्रार्धमाचरेत् ॥
अपालनात्तु कृच्छ्रं स्यात् शून्यागार उपप्लवे'।
(वि. स्मृ. ११-१३)

इति विष्णुस्मरणात् ॥ ४२ ॥

विद्युद्दाहादेरिव ग्रामघातादेरपि न प्रत्यवायहेतुत्वमित्याह–

**ग्रामघाते शरौघेण वेश्मभङ्गान्निपातने ।**
**अतिवृष्टिहतानां च प्रायश्चित्तं न विद्यते ॥ ४३ ॥**

इति । शत्रुसैन्येन ग्रामे हन्यमाने सति तदन्तर्वर्त्तिनो गावः शरौघेण निपात्यन्ते । तथा स्तम्भ-वंशादिशैथिल्येन

* अनुपेक्षायां तु नास्त्येव किमपि ।

१. I. reads जलौघे for जलौघ- and यदि for मेघ-. २. C and F. read उपेतायां for उपेक्षायां. ३ Only the first and the last line of this quotation from Vyâsa appears in B and D ४ B and D read उपप्लवात् for उपप्लवे ५. C. E. F. G. and M read -बन्धात् for -भङ्गात् and for the same B. D. H. and J. read -भङ्ग-.

गृहे भग्ने सति तदन्तर्वर्त्तिनां गवां निपातो भवति। तथा बुध-शुक्रसामीप्यादिना प्रवृत्तायामतिवृष्टौ शीत-वातपीडिता गावो म्रियन्ते तत्र तत्स्वामिनः प्रत्यवायो नास्ति ॥ ४३ ॥

सङ्ग्रामादेरपि न प्रत्यवायहेतुत्वमित्याह—

**सङ्ग्रामे प्रहतानां च ये दग्धा वेश्मकेषु च ।**
**दावाग्नि-ग्रामघातेषु प्रायश्चित्तं न विद्यते ॥४४॥**

इति। सेनयोरुभयोर्युद्धे सति तत्र[1] प्रहता गावो म्रियन्ते। स्कन्धावारनिर्मितानि[2] तृणमयानि वेश्मकानीत्युच्यन्ते। तेषु वैरिभिर्दह्यमानेषु तत्र गावो म्रियन्ते। तथा क्वचिद्दावाग्निना अरण्यसमीपवर्त्तिनो ग्रामा दग्धा भवन्ति तत्र गाव उपहन्यन्ते। न चैतेषु विषयेषु स्वामी प्रत्यवायं प्राप्नोति ॥ ४४ ॥

गवां हिते प्रवृत्तस्य प्रामादिकं गोमरणं न प्रत्यवायजनकमित्याह—

**यन्त्रिता[3] गौश्चिकित्सार्थं मूढ[4]गर्भविमोचने ।**
**यत्ने कृते विपद्येत प्रायश्चित्तं न विद्यते ॥ ४५ ॥**

इति। व्रणरोगादौ[5] दाह-च्छेदादिचिकित्सार्थं रज्ज्वादिना यन्त्रिता गौः प्रमादाद्विपद्येत। तथा योनिद्वारि समागतस्य

१ G. and H read शरप्रहता for तत्र प्रहता. २. Except A. I. and J all omit —

स्कन्धावारनिर्मितानि तृणमयानि वेश्मकानीत्युच्यन्ते।
तेषु वैरिभिर्दह्यमानेषु तत्र गावो म्रियन्ते।.

३. J reads यन्त्रणे for यन्त्रिता ४ B. C D F G. K. and L read गूढ- for मूढ-. ५ B. D. and H read व्रणरोगादिदाह- for व्रणरोगादौ दाह-

मृतस्य गर्भस्य निर्गमनार्थं तदाकर्षणादिप्रयत्ने क्रियमाणे कथञ्चिद्गौर्म्रियेत तत्र हितमाचरन् पुरुषो न प्रत्यवैति[1] । एतदेव संवर्त्त आह–

'यन्त्रणे गोश्चिकित्सार्थे[2] मूढगर्भविमोचने ।
यदि तत्र विपत्तिः स्यात् न स पापेन लिप्यते ॥
औषधं स्नेहमाहारं दद्याद्[3] गो-ब्राह्मणेषु च ।
दीयमाने विपत्तिश्चेन्न स पापेन लिप्यते ॥
दाह-च्छेद-शिराभेदैः[4]* प्रयोगैरुपकुर्वताम् ।
द्विजानां गोहितार्थं च प्रायश्चित्तं न विद्यते' ॥

( सं. स्मृ. १३७–३९ )

इति । याज्ञवल्क्योऽपि–

'क्रियमाणोपकारे[5] तु मृते विप्रे न पातकम् ।
विपाके[6] गोवृषाणां तु भेषजाग्निक्रियासु च' ॥

( या. स्मृ. ३. २८४ )

इति । अङ्गिरा अपि–

'औषधं स्नेहमाहारं दद्याद् गो-ब्राह्मणेषु यः[7] ।
विपाके तु विपत्तिः स्यात् न स दोषेण लिप्यते' ॥

( अं. स्मृ. १ .२८ )

इति ॥ ४९ ॥

* रोगनिवारणार्थं दाह पुच्छ-शृङ्गादीना च्छेदः शिराभेदश्च एतैः प्रयोगैरुपकुर्वतां द्विजानां गोविपत्तिनिमित्त प्रायश्चित्तं नास्तीत्यर्थः ।

१. B. D and H read प्रत्यवायी for प्रत्यवैति २ I and the text read गोचिकित्सार्थे, C. F G and I read गूढगर्भ- for मूढगर्भ- ३ This and the next śloka do not appear in the text B C and A reads ददर्ग-ब्राह्मणे द्विज and C and F दद्गो -ब्राह्मणादिषु for दद्याद्गो-ब्राह्मणेषु च ४ I. reads -भेद- for -भेदै . ५ B and D read म्रियमाणे परार्के तु for क्रियमाणोपकारे तु ६ C and F. read विपाते for विपाके ७ B. and D substitute च for य .

रोध-बन्धनाभ्यां गोविपत्तौ प्रायश्चित्तं पूर्वमुपवर्णितम्। यदा बहव एकेन व्यापारेण विपद्यन्ते तदा किं व्यापारैक्या-देकं व्रतं स्यात्? किं वा प्रहतगोसंख्यया व्रतावृत्तिः?-इति विचिकित्सायामिदमाह–

व्यापन्नानां बहूनां च बन्धने रोधने ऽपि वा।
भिषङ्मिथ्योपचारे[1] च प्रायश्चित्तं विनिर्दिशेत्॥४६॥

इति। पूर्वोक्तं प्रायश्चित्तं द्विगुणमाचरेदित्याशयः। तथा च संवर्त्तः—

'व्यापन्नानां[2] बहूनां च बन्धने रोधनेऽपि *वा।
द्विगुणं गोव्रतस्यास्य[3] प्रायश्चित्तं विशुद्धये[4]'॥
(सं. स्मृ. १३९)

इति। आपस्तम्बोऽपि–

'विपन्नानां बहूनां तु बन्धने रोधनेऽपि वा।
भिषङ्मिथ्याप्रयोक्ता च द्विगुणं गोव्रतं चरेत्'॥
(आ. स्मृ. ३.१९)

* अत्रापि आधिभौतिकाधिदैविकोपद्रवैराकस्मिकमनिच्छया मरणे न प्रायश्चित्तमिति पूर्वोक्तापवादेभ्योऽवगन्तव्यम्।

१ B C D E F G. H I and M. read -थ्याप्रचारे for -थ्योपचारे.
२ The text reads व्यापारितेषु बहुषु for व्यापन्नाना बहूना च. ३. The text reads गोव्रत तस्य for गोव्रतस्याऽस्य ४ I. reads विधीयते for विशुद्धये; while C and F. omit the following —

'द्विगुण गोव्रतस्यास्य प्रायश्चित्त विशुद्धये'॥
इति। आपस्तम्बोऽपि—
विपन्नानां बहूनां तु बन्धने रोधनेऽपि वा।.

इति । अयथाशास्त्रं चिकित्सनं *भिषङ्मिथ्याप्रयोगः इति ॥ ४६ ॥

सत्यां शक्तावुपेक्षकस्य प्रत्यवायोऽस्तीत्युक्तम् । न केवलं स्वामिन एवैतत् । किं त्वन्येषामपीत्याह—

गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः ।
अनिवारयतां[1] तेषां सर्वेषां पातकं भवेत् ॥ ४७ ॥

इति । पङ्कमज्जनादिर्विपत्तिः । तत्र ये केचिन्मार्गे गच्छन्तो विपन्नां गां विलोक्य यथाशक्ति प्रतीकारं न कुर्वन्ति तेषां सर्वेषामुपेक्षकाणां प्रत्यवायो भवति । प्रेक्षका इत्यनेनानुमन्त्रादयः सर्वे ऽप्युपलक्ष्यन्ते । अत एव पैठीनसिः—

'हन्ता मन्तोपदेष्टा[2] च तथा सम्प्रतिपादकः ।
प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः ॥
आश्रयः शस्त्रदाता च भक्तदाता[3] विकर्मिणाम् ।
उपेक्षकः †शक्तिमांश्चेद्दोषवक्ता[4]ऽनुमोदकः ॥
अकार्यकारिण[5]स्तेषां प्रायश्चित्तं प्रकल्पयेत्' ।

इति ॥ ४७ ॥

'व्यापन्नानाम्' (९.४६)—इत्यत्र वध्यबहुत्वं घातकैकत्वं

* यथाशास्त्रचिकित्सायां मरणे तु न दोष इति पूर्वोक्तमनुसन्धेयम् ।

† 'शक्तिमांश्चेत्' इत्यनेन नाशक्तानामुपेक्षकाणां प्रायश्चित्तमिति स्पष्टं भवति ।

१ M reads न वारयन्ति तां for अनिवारयता २ I reads मतोपदेष्टा च for मन्तोपदेष्टा च and for the same G and J read–ऽनुमन्तोपदेष्टा ३ H. reads भक्ष्यदाताऽपि and I शक्तिदाता च for भक्तदाता वि– ४. I reads शक्तिमांश्च देशवक्ता for शक्तिमांश्चेद्दोषवक्ता ५ I reads अकार्यकारिणां for अकार्यकारिण

चोपजीव्य प्रायश्चित्तमुक्तम् । इदानीं वध्यैकत्वे हन्तृबहुत्वे च[1] कथं ?—इत्याशङ्क्याह—

'एको हतो यैर्बहुभिः समेतैर्
न ज्ञायते यस्य हतोऽभिघातात् ।
दिव्येन तेषामुपलभ्य हन्ता
निवर्तनीयो नृपसन्नियुक्तैः[2] ॥ ४८ ॥

इति । यत्र बहूनां पुरुषाणां प्रहारैरेको गौर्हतो भवति तत्र सर्वेषां प्रहारकाणां वेदनाहेतुत्वे सत्यपि यदीयः प्रहारः प्राणवियोगनिमित्तमिति न ज्ञायते । अतस्तेषां बहूनां पुरुषाणां मध्ये प्राणवियोगकारिप्रहारकर्त्ताऽयमिति पुरुषविशेषस्तुला-ऽग्न्यादिदिव्येन* निश्चित्य राजपुरुषैर्हन्तृसमूहात् स पृथक् कर्त्तव्यः । पृथक्कृत्य च गोव्रतं चारयेत्[3] ॥ ४८ ॥

इतरेषां प्रहन्तृणां प्रायश्चित्तमाह—

एका चेद्बहुभिः काचिद्[4]दैवाद् व्यापादिता यदि[5] ।
पादं पादं तु हत्यायाश्चरेयुस्ते पृथक् पृथक् ॥४९॥

इति । गोहत्याया यद् व्रतमभिहितं[6] तस्य व्रतस्य पाद-

*तुलाग्न्यादिदिव्यानि अग्रे व्यवहारकाण्डे विस्तरेण वक्ष्यन्त इत्यत्र नोक्तानि ।

१ I omits च. २ I reads नुप- for नृप- ३ B C D. E F G. I and J read कारयेत् for चारयेत् ४ M reads कापि for काचित्. ५ K and L read क्वचित् and M. भवेत् for यदि. ६ B. D. and H. read विहित for अभिहित

मेकैकः पुरुषोऽनुतिष्ठेत्। एतच्चाकामकारविषयम्। दैवादित्यभिधानात्। कामकारे तु द्विगुणम्।

'एकां घ्नतां बहूनां तु यथोक्ताद्विगुणो दमः'*।

इति स्मृत्यन्तरेऽभिधानात्॥ ४९॥

'सर्प-व्याघ्रहतेषु'(९.४२)—इत्यत्र सर्पादिभिर्गवि हते प्रत्यवायो नास्तीत्युक्तम्। पुरुषप्रहारेण हते त्वस्ति प्रत्यवायः। यत्र बहुषु निमित्तेषु सन्देहः तत्र वधनिमित्तं कथं निश्चेयम्?—इत्याशङ्क्य लिङ्गविशेषैरित्यभिप्रेत्य तानि[1] लिङ्गानि प्रदर्शयति—

**हते तु[2] रुधिरं दृश्यं व्याधिग्रस्तः कृशो भवेत्।**
**[3]लाला भवति दष्टेषु एवमन्वेषणं भवेत्॥ ५०॥**

इति। यत्र रुधिरं दृश्यते तत्र प्रहारो निमित्तमिति निश्चेतव्यम्। कार्श्यमात्रोपलम्भे व्याधिर्मृतिहेतुः। लालादर्शने सर्पदंशनं निमित्तम्। एवमन्यैरपि तत्रतत्रोचितै[4]र्लिङ्गैर्निमित्तस्वरूपमन्विष्य निश्चेतव्यम्॥ ५०॥

* 'दमः' दण्डः। स च प्रायश्चित्तरूपोऽदृष्टफलकः राजदण्डरूपो दृष्टफलकश्च भवति।

'यो यस्य हिंस्यात् द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम्'॥

इत्यादिशास्त्रेण गोस्वामितुष्टिः राजदेयं च दण्डत्वेनैव व्याख्यातं भवति।

१ I omits तानि. २ B D and M read हतेषु for हते तु. ३ K. and L omit this line —

लाला भवति दष्टेषु एवमन्वेषण भवेत्॥ ५०॥,

while M. reads नानाभवति दृष्टेषु for लाला भवति दष्टेषु ४. I reads उचितै for उचितैः.

शृङ्गास्थिभङ्गादौ मरणाभावेऽपि प्रायश्चित्तविशेषमभिहितम्। अस्त्वेवं बाह्यावयवभङ्गे। यदा त्वन्तरावयवभङ्गो न विस्पष्टः तदा कथम्?—इत्याशङ्क्य तन्निश्चयहेतुं लिङ्गविशेषं दर्शयति—

ग्रासार्थं चोदितो वाऽपि अध्वानं नैव गच्छति।

इति। एवमन्यैरपि लिङ्गविशेषैस्तं तं निमित्तविशेषमभिनिश्चित्य तत्रतत्रोचितं प्रायश्चित्तमनुष्ठेयम्॥

'दण्डादूर्ध्वं यदन्येन' (९.२)—इत्यादिना ग्रन्थसन्दर्भेण निमित्तविशेषाननूद्य प्रायश्चित्तविशेषा अभिहिताः। ये तु पूर्वत्रानुदिता निमित्तविशेषाः ये च लिङ्गैरप्यनिश्चेयाः शङ्क्यमानाः तेषु सर्वेषु साधारणं प्रायश्चित्तं दर्शयति—

मनुना चैवमेकेन सर्वशास्त्राणि जानता॥ ५१॥
प्रायश्चित्तं तु तेनोक्तं गोघ्नश्चान्द्रायणं चरेत्।

इति। यथा कलिधर्मरहस्यं तथा तत्प्रतिपादकानि वेद-शास्त्राणि जानता पराशरेण मया गोवधविशेषाणां प्रायश्चित्तविशेषा अभिहिताः। एवं मनुनाऽप्युपपातकजातस्य सर्वसाधारणं प्रायश्चित्तं गोवधमुदाहृत्य उपवर्णितम्। किं तत्?—

---

१ I reads शृङ्गादि- for शृङ्गास्थि- २ I reads हेतुलिङ्गविशेष हेतुं लिङ्गविशेष.

३. This line does not appear in M —

ग्रासार्थं चोदितो वापि अध्वानं नैव गच्छति।

४. I reads पूर्वमनुदिता for पूर्वत्रानुदिता. ५. K and L read गोघ्न and M. गोषु for गोघ्न ६. B and D. omit कलि- and तथा. ७ H. reads गोप्रायश्चित्त for प्रायश्चित्त

'गोघ्नश्चान्द्रयणं चरेत्' ।

इति । न चात्र केनापि मुनिना विप्रतिपत्तुं शक्यमित्यभिप्रेत्य एकेनेत्युक्तम् । मुनिमुख्येनेति यावत् ॥ ५१ ॥

पूर्वाध्याये गोवधस्येतिकर्त्तव्येषु वपनमुक्तम् ।

'सशिखं वपनं कृत्वा' ।

(प. स्मृ. ८. ३१)

इति । तथाऽस्मिन्नप्यध्याये ऽभिहितम्—

'पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च ।
त्रिपादे तु शिखावर्जं †सशिखं तु निपातने' ॥

(प. स्मृ. ९.१४)

---

* 'उपपातकसंयुक्तो गोघ्नो'—इत्यादिभिः सप्तभिः श्लोकैः पूर्वं मासत्रयात्मकं प्रायश्चित्तमुक्त्वा वृषभैकादशगोदानं तदभावे सर्वस्वदानं चोक्त्वा—

'एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः ।
अवकीर्णिवर्जं शुद्ध्यर्थं चान्द्रायणमथापि वा' ॥

इत्यनेन पूर्वोक्तं मासत्रयात्मकं गोघ्नव्रतं सर्वेषूपपातकेष्वतिदिष्टं भवति । तथा सति उपपातकेषु पूर्वोक्तानां त्रयाणामपि विकल्पेन प्रवेशो भवति ।

'तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः
प्रवृत्तौ हि विकल्पः स्यात्' ।

(जै. सू. १०. ७. ६१)

इति न्यायात् । अतश्चान्द्रायणमपि वैकल्पिकमेव । मेधातिथिस्तु—वैकल्पिकं चान्द्रयणमपि उपपातकित्वे विशेषोपदेशान्न गोघ्नस्य चान्द्रायणमिच्छन्ति । तेषामुपपातकित्ववचने गोघ्नस्य प्रयोजनं मृग्यम्'—इत्याह । चान्द्रायणं तु लघुन्येवोपपातके जात्याद्यपेक्षं योज्यमित्याशयः ।

† प्रायश्चित्तनिमित्तकमिदं वपनम् । आन्ध्रा द्राविडाः केरलाश्च द्विजाः शिखावर्जं सर्वाङ्गरोमवपनं सर्वदैव कुर्वन्ति । एवं केचन कान्य-

इति । तत्र केनापि निमित्तेन वपनाकरणे यथोक्तं व्रतं द्विगुणमनुष्ठेयमित्याह—

केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत्[1] ॥५२॥
द्विगुणे व्रत आदिष्टे द्विगुणा दक्षिणा भवेत् ।

इति । यत्र यत्र व्रतद्वैगुण्यं तत्र तत्र दक्षिणाद्वैगुण्यमुक्तम् ॥ ५२ ॥

केशरक्षणं न सर्वविषयम् । किन्तु राजादिविषयमित्याह

राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः॥५३॥
अकृत्वा वपनं तस्य[2] प्रायश्चित्तं विनिर्दिशेत्[3] ।

इति । केशरक्षणस्य राजादिविषयत्वं शङ्खोऽप्याह—

'राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
अकृत्वा वपनं तेषां प्रायश्चित्तं कथं भवेत्[4] ?॥

---

कुब्जादयो गौडाः काश्मीरकाश्च रोमच्छेदं नैव कुर्वन्ति । उभयत्रापि मूलं मृग्यम् । द्वयमपि शास्त्रानुमतं स्यात्—इति चेत्—

'यत् किञ्चित् क्रियते पापं सर्वं केशेषु तिष्ठति' ।

इत्यापस्तम्बोक्तेरान्ध्रादीनां सदैव सर्वाङ्गवपनकर्तृत्वात् कदापि पापसम्बन्धो न स्यात् तथैव वपनमकर्तृणा काश्मीरकाणां सर्वदैव पापित्वसम्भवात् स्मृतिव्याकोपो दुष्परिहरः स्यात् ।

---

१. M. reads गोव्रत चरेत् for व्रतमाचरेत् २. B D. K and L. read तेषां for तस्य. After this M inserts the following three lines:—

यस्य न द्विगुण दानं केशश्च परिरक्षित. ।
तत्पापं तस्य तिष्ठेत वक्ता च नरक व्रजेत् ॥
यत्किञ्चित् क्रियते पापं सर्वंकेशेषु तिष्ठति ।.

३. B and D. read विनिर्दिशेत् for कथ भवेत्. ४. All, except A. and H. omit भवेत्.

केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत्।
द्विगुणे व्रत आचीर्णे दक्षिणा द्विगुणा भवेत्' ॥
(शं. स्मृ. १७. ३१)

इति। वपन-द्विगुणव्रतयोरन्यतरस्याप्यभावे चीर्णमपि प्रायश्चित्तं न पापनिवर्त्तकं भवेत्। तदाहाऽऽपस्तम्बः—

'राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः।
यस्तु नो वपनं कुर्यात् प्रायश्चित्तं कथं भवेत्?॥
केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत्।
द्विगुणे तु व्रते चीर्णे द्विगुणा दक्षिणा भवेत्॥
यस्य न द्विगुणं दानं केशांश्च परिरक्षतः।
तत् पापं तस्य तिष्ठेत वक्ता च नरकं व्रजेत्॥
यत्किञ्चित् क्रियते पापं सर्वं केशेषु तिष्ठति।
तस्मात् सर्वप्रयत्नेन सशिखं कारयेत् द्विजः' ॥
( आ. स्मृ. ७. ४–७ )

इति ॥ ५३ ॥

स्त्रीणां तु वपने विशेषमाह—

**सर्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुलद्वयम्॥५४॥**
**एवं नारी-कुमारीणां शिरसो मुण्डनं स्मृतम्।**

इति। नारीग्रहणेनैव कुमारीणामपि ग्रहणे सिद्धे पृथगुपादानं विधवासु वपनाङ्गीकारद्योतनार्थम्। नात्र नारीशब्दः स्त्रीमात्रवाची। किन्तु सभर्तृकस्त्रीवाची। कुमार्यस्तु विवाहरहिताः। तथा च सभर्तृकाणां विवाहरहितानां चैतदुक्त

भवेत्[1] । ततो विधवानां *सर्वात्मना मौण्ड्यमङ्गीकृतं भवति ॥ ५४ ॥

पूर्वोक्तेषु व्रताङ्गेषु कानिचिदङ्गानि स्त्रीणामपवदति–

न स्त्रियाः केशवपनं न दूरे शयना-ऽशनम्[2] ॥५५॥
न च गोष्ठे वसेद्रात्रौ न दिवा गा अनुव्रजेत् ।
नदीषु सङ्गमे चैव अरण्येषु विशेषतः ॥ ५६ ॥
न स्त्रीणामजिनं वासो व्रतमेव[3] समाचरेत् ।

इति । न[4] स्त्रियाः केशवपनं शिरसो मुण्डनं इत्यनयो-र्नान्योन्यविरोधः शङ्कनीयः । निषेधस्य कृत्स्नकेशविषयत्वात् । केशाग्रकर्त्तनमेव मुण्डनं पूर्वत्र विहितम् । अतो न विरोधः ।

संविशन्तीषु संविशेत्' ।
( प. स्मृ. ८. ३४ )

इत्यनेन गृहमध्ये ग्रामाद्बहिर्दूरे वा यत्र गावस्तत्र शयनं प्राप्तम् । तन्निराकरणाय न दूरे शयनमित्युक्तम् । रात्रौ गो-

---

* गौडास्तु विधवानामपि वपन न कुर्वन्ति कुतस्तरां सधवानां शिखादानम् ? । तत्र मूलं त एव प्रष्टव्याः ।

† इदं च गोष्ठावस्थानम्–

'गवा मध्ये वसेद्रात्रौ दिवा गाश्चाप्यनुव्रजेत्'
( प. स्मृ. ८. ३१ )

इत्यनेन पूर्वमुक्तमत्रानुसन्धेयम् ।

१. I reads भवति for भवेत्. २ K and L. read शयनासनम् for शयनाशनम्. ३ Except A. I. K. and L all read एवं for एव. ४. H. inserts च after न

ष्ठावस्थानं दिवा गवामनुव्रजनं च पुंसामेव। न स्त्रियाः। नदी-सङ्गमेष्वरण्येषु च वासो यद्यपि न साक्षात् पूर्वमुक्तः तथापि–

'गोऽनुगामी'

(या. स्मृ. ३. २६३)

इति शास्त्रादेर्थतः प्रसक्तं तदुभयं निवार्यते।

'चर्मणाऽऽर्द्रेण संवृतः'।

(म. स्मृ. ११-१०८)

इत्यादिशास्त्रतः प्रसक्तमजिनवासस्त्वं निषिद्ध्यते। व्रत-मेवेत्येवकारेण यथोक्ताङ्गनिवृत्तिरेवानूद्यते ॥ ५५-५६ ॥

वपनादीनामिव त्रिसन्ध्यस्नानादीनामपि निषेधप्रस-क्तावाह–

**त्रिसन्ध्यं स्नानमित्युक्तं सुराणामर्चनं तथा ॥५७॥**
**बन्धुमध्ये व्रतं तासां कृच्छ्र-चान्द्रायणादिकम् ।**

इति। 'त्रिसन्ध्यमवगाहनम्'(६.९)-इति यत् पूर्वमुक्तं तत् स्त्रीणामपि समानम्। सुरार्चनं नमस्कारादि*। कृच्छ्र-चान्द्रा-यणादिकं यद्व्रतं तद्योषितो बन्धुमध्येऽनुतिष्ठेयुः। न पुरुषा इव विजने देशे ॥ ५७ ॥

नियमान्तरमाह–

**गृहेषु सततं तिष्ठेत् शुचिर्नियममाचरेत् ॥५८॥**

इति। प्रक्रान्तस्य व्रतस्य समाप्तिपर्यन्तं गृहसीम्नो न बहिर्गच्छेत् ॥ ५८ ॥

---

* यथा विजने देशे अधिकाराभावात् नमस्कारेणैव सुरार्चनं कर्तव्य-मित्याशयः।

---

१ H. reads इत्यर्थप्रसक्त for अर्थत प्रसक्त. २. K. L. and M. read नियत for सततं.

अध्यायद्वयेन यत् प्रायश्चित्तं प्रपञ्चितं तस्याननुष्ठाने द्विविधं दिव्यं भौमं च नरकविशेषं दर्शयति—

इह यो गोवधं कृत्वा प्रच्छादयितुमिच्छति ।
स[1] याति नरकं घोरं कालसूत्रमसंशयम् ॥ ५९ ॥
विमुक्तो नरकात्तस्मात् मर्त्यलोके प्रजायते ।
क्लीबो दुःखी च कुष्ठी च सप्तजन्मानि[2] वै नरः ॥ ६० ॥

इति । मित्रादीनामुत्कोचदानादिना जनापवादमात्रपरिहारः प्रच्छादनम् । घोरस्य नरकविशेषस्य नामधेयं कालसूत्रमिति । सो ऽयं दिव्यो नरकः । नैरन्तर्येण सप्तजन्मसु क्लीबत्वादिदोषयोगो भौमो नरकः ॥ ५९–६० ॥

अध्यायद्वये प्रतिपादितं प्रकरणार्थमुपसंहरति—

तस्मात् प्रकाशयेत् पापं स्वधर्मं सततं चरेत् ।
स्त्री-बाल-भृत्य-गो-विप्रेष्वतिकोपं विवर्जयेत्[3] ॥ ६१ ॥

इति । यस्मात् प्रच्छादने द्विविधो नरकः प्रोक्तः तस्मादप्रच्छाद्य वेदविदामग्रे प्रकाश्य तैर्विनिर्दिष्टं स्वस्योचितं धर्मं प्रायश्चित्तविशेषमाचरेत् । तत ऊर्ध्वमीदृशपापानुत्पत्तये[4] स्त्री-बालादिषु कोपरहितो भवेत् ॥ ६१ ॥

---

१. This line does not appear in M —
स याति नरकं घोरं कालसूत्रमसंशयम् ॥ ५९ ॥.
२ K. and L. read -जन्मनि for -जन्मानि ३ I reads विसर्जयेत् for विवर्जयेत् ४ II. reads -अपनुत्तये for -अनुत्पत्तये.

अध्याये नवमे पराशरमुनिप्रोक्तस्मृतेर्मन्थने[1]
रोधोद्बन्धन-ताडनाद्यनुचितं[2] यत् स्यात् गवां पीडनम् ।
कर्मैतस्य विशेषतः समुदिता सर्वोत्तरा निष्कृतिः
तद्व्याख्यामकरोत् कृती शुभधियां[3] भाग्याम्बुधिर्माधवः ॥१॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्री-वीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां नवमोऽध्यायः ॥ ९ ॥

---

१ C. E. F. G. and J. read -स्मृतेर्मन्थने and I. -स्मृतौ मन्थके for -स्मृतेर्मन्थने. २. I. reads रोधो बन्धन-ताडनादि- for रोधोद्बन्धन ताडनादि-. ३. I. reads शुभधिया for शुभधियां.

# पराशरसंहिता

## अथ दशमोऽध्यायः ।

अष्टम-नवमाध्याययोरुपपातकस्य गोवधस्य सामान्य-विशेषाभ्यां प्रायश्चित्तानि प्रपञ्चितानि । अथागम्यागमनरूपोपपातकस्य प्रायश्चित्तं दशमाध्यायेऽभिधीयते । तत्र प्रतिज्ञापूर्वकं सामान्यप्रायश्चित्तमाह—

चातुर्वर्ण्येषु सर्वेषु हितां वक्ष्यामि निष्कृतिम् ।
अगम्यागमने चैव शुद्धयै चान्द्रायणं चरेत् ॥१॥

इति । चतुर्षु वर्णेष्वनुलोम-प्रतिलोमभेदेनावान्तरजातिबहुत्वमभिप्रेत्य सर्वेष्वित्युक्तम् । प्रत्यवायः निष्क्रियते निवार्यते विनाश्यते यया प्रायश्चित्त्या सा प्रायश्चित्तिः निष्कृतिः । तस्या अनर्थफलनिवारकत्वाद्धितत्वम् ।

'ऋतौ भार्यामुपेयात्' ।

इति शास्त्राद् गम्या स्वभार्या । तदितरा सर्वाऽपि योषिद-

---

१. In I. the tenth Adhyaya begins—
जन्मगेहं स्वर्गनद्या पाइपद्मं महात्मन ।
यस्यासीत्तमहं वन्दे रामचन्द्रं सदाऽव्ययम् ॥१॥

२. B. and D omit गोवधस्य and C and F. the following—
'गोवधस्य सामान्य-विशेषाभ्यां प्रायश्चित्तानि
प्रपञ्चितानि । अथागम्यागमनरूपोपपातकस्य' ।
and reads प्रायश्चित्तम् after दशमाध्याये ३ Except A. and I. all read -गमनस्योपपातकस्य for -गमनरूपोपपातकस्य and insert प्रायश्चित्तम् after दशमाध्याये. ४ M. reads—
चातुर्वर्ण्यस्य सर्वत्र हीय प्रोक्ता तु निष्कृति ।,
C. and F. substitute सतां for हितां. ५. Except A. G. and I. all read शुद्धौ for शुद्धयै, while C and F. substitute अगम्यागमनं for अगम्यागमने ६. B. D. H. and J. substitute निःसार्यते for निवार्यते.—

गम्या। तद्गमने प्राप्ते सति तच्छुद्धिनिमित्तं चान्द्रायणं प्रायश्चित्तमाचरेत् ॥ १ ॥

चान्द्रायणस्य लक्षणमाह—

एकैकं ह्रासयेद्ग्रासं[1] कृष्णे, शुक्ले च वर्धयेत्।
अमावास्यां न भुञ्जीत ह्येष[2] चान्द्रायणो विधिः[3] ॥२॥

इति। द्विविधं हि चान्द्रायणम्। यवमध्यं पिपीलिकामध्यं चेति। यथा यवस्य मध्यं स्थूलं उभावन्तौ सूक्ष्मौ तथा शुक्लप्रतिपदमारभ्य प्रतिदिनमेकैकग्रासवृद्ध्या पूर्णिमायां पञ्चदश ग्रासाः। कृष्णप्रतिपदमारभ्य प्रतिदिनमेकैकग्रासह्रासे सत्यमावास्यायामुपवास इति मध्यभागस्थौल्यात् यवमध्यत्वम्। यथा[4] पिपीलिकानां शिरः-पृष्ठभागौ स्थूलौ मध्यं सूक्ष्मं तथा यस्य च[5] चान्द्रायणस्य मध्यमे अमावास्यादिने सर्वग्रासह्रासः तस्य मध्यमभागसौक्ष्म्यात् पिपीलिकामध्यत्वम्। तदिदं पिपीलिकामध्यमाचार्येणोपन्यस्यते। तथाहि—कृष्णप्रतिपदि व्रतं संकल्प्य चतुर्दश ग्रासान् भुञ्जीत। ततो द्वितीयामारभ्य प्रतिदिनमेकैकस्य ग्रासस्य ह्रासे सति अमावास्यायामुपवासः सम्पद्यते। पुनः शुक्लप्रतिपदि ग्रासमेकमुपक्रम्य प्रतिदिनमेकैकग्रासवृद्ध्या[6] पौर्णमास्यां पञ्चदश ग्रासाः सम्पद्यन्ते। स एष पिपीलिकामध्यस्य चान्द्रायणस्यानुष्ठानप्रकारः। तदिदं[7] वसिष्ठोऽप्याह—

---

१ M. reads पिण्ड for ग्रास. २. M. omits हि ३. C. F. H. and J. read चान्द्रायणे for चान्द्रायणो. ४ H. and J. substitute अथ for यथा. ५. I omits च. ६ H. reads -ग्रासं जग्ध्वा, but has -ग्रासवृद्ध्या as a marginal reading. ७. A. reads तमिमं for तदिदं and inserts स्पष्टम् after अप्याह.

'मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश।
ग्रासापचयभोजी सन् पक्षशेषं समापयेत्॥
तथैव शुक्लपक्षादौ ग्रासं भुञ्जीत चापरम्।[1]
ग्रासोपचयभोजी सन् पक्षशेषं समापयेत्'॥
(व. स्मृ. २३. ४४–४५)

इति। चान्द्रायणाङ्गत्वेन त्रिषवणस्नानं कर्त्तव्यम्। तदाह मनुः—

'एकैकं ह्रासयेत् पिण्डं कृष्णे, शुक्ले च वर्धयेत्।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं[2]व्रतम्'॥
(म. स्मृ. ११. २१६)

इति। वपनादीतिकर्त्तव्यतां तु गौतम आह—

'अथातश्चान्द्रायणम्। (१) तस्योक्तो विधिः कृच्छ्रे। (२) वपनव्रतं चरेत्। (३) श्वोभूतां पौर्णमासीमुपवसेत्। (४) आप्यायस्व, सन्ते पयांसि, नवो नव इति चैताभिस्तर्पणम्। (५) आज्यहोमो हविषश्चानुमन्त्रणम्। (६) उपस्थानं चन्द्रमसः। (७) यद्देवा देवहेलनमिति चतसृभिराज्यं जुहुयात्। (८) देवकृतस्येति चान्ते समिद्भिः। (९) ॐ भूर्भुवःस्वर्म-हर्[3]जनस्तपःसत्यं यशःश्रीःकविर्बिडौजोज[4]ःपुरुषो धर्मः शिव इत्येतैर्ग्रासानुमन्त्रणम्। (१०) प्रतिमन्त्रं नमसा नमः स्वाहेति वा। (११) सर्व[5]ग्रासप्रमाणमास्यावि-

१. The text reads:—
'एव हि शुक्लपक्षादौ ग्रासमेकं तु भक्षयेत्'।.

२ The text reads चान्द्रायणं स्मृतम् for चान्द्रायणव्रतम्. ३ The text (Bo Edition) omits -महर्जन ४. I. reads श्रीगुरुर्ग्बिडौजोज and the text श्रीरूपं गिरौजस्तेज for श्रीः कविर्बिडौजोजः. ५. B. C. D. E. F. G H. and I. omit सर्व-.

कारेण। (१२) चरु[1]भैक्ष-सक्तुकण-यावक-शाक-पयो-दधि-घृत-मूल-फलोदकानि हवींष्योत्तरोत्तरं प्रशस्तानि। (१३) द्वा[2]दशैतानि। (१४) पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेनापरपक्षमश्नीयात्। (१५) अमावास्यायामुपोष्यैकोपचयेन पूर्वं पक्षम्। (१६) विपरीतमेकेषाम्। (१७) एष चान्द्रायणो मासः'। (१८)

(गौ. स्मृ. २८. १–१८)

इति। एकेषां मुनीनां मते पूर्वोक्तात् पिपीलिकामध्य-पक्षाद्विपरीतं यवमध्यं चान्द्रायणम्। तच्च मनुर्विस्पष्टमाह—

'एतमेव विधिं कृत्स्नमाचरेत् यवमध्यमे।
शुक्लपक्षादिनियतश्चरंश्चान्द्रायणं व्रतम्'॥

(म. स्मृ. ११. २१७)

इति। तदेतच्चान्द्रायणद्वयं देवलोऽप्याह—

'चान्द्रायणं द्विविधम्। यवमध्यं पिपीलिका-मध्यमिति। एकग्रासममावास्यादि यवमध्यम्। पञ्चदशग्रा[3]सं पौर्णमास्यादि पिपीलिकामध्यम्'।

इति। यमोऽपि—

अ[4]थातश्चान्द्रायणकल्पं व्याख्यास्यामः। तद्यथा—

'पौर्णमास्यामुपेतस्तु ब्राह्मण[5]ः सुसमाहितः।
केश-श्मश्रूणि लोमानि कक्षोपस्थं च वापयेत्॥
प्र[6]यतो विधिवत् कृत्वा गृह्णीयात् सुसमाहितः।
मधु मांसं च लवणं शु[7]क्तानि परिवर्जयेत्॥

---

१. I reads चतुर- for चरु २. The text omits द्वादशैतानि ३ I. reads -ग्रासान् for -ग्रासं ४. H. substitutes अथ for अथात. ५ C F H and J. read ब्राह्मणस्तु for ब्राह्मण. सु- ६ I. reads यथाविधि तत for प्रयतो विधिवत् ७. We follow here only A.; while I. reads शुक्लवासांसि वर्जयेत् and others read शुक्तानि परिवर्जयेत्.

स्त्री-शूद्रौ नाभिभाषेत सत्यवादी च संयतः[1]।
पालाशं धारयेद्दण्डं शुचिर्मौञ्जीं[2] च मेखलाम् ॥
यज्ञोपवीती करकं धारयेन्नियतः शुचिः।
शाणी[3] वल्कलचीरी वा मार्गं वा वास उच्यते ॥
सर्वाण्यहानि सन्तिष्ठेत् स्नान-मौनधृतव्रतः।
स्थानासनाभ्यां विहरेद् ब्रह्मचारी क्षपाशनः ॥

गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्याभ्युक्ष्य अग्निं प्रतिष्ठाप्य ब्रह्माणं दक्षिणतः[4] उपवेश्योत्तरत उदकपात्रं प्रतिष्ठाप्य प्रागुदगग्रान् दर्भानास्तीर्याज्यभागं कृत्वा महाव्याहृतिभिराज्याहुतीर्[5]जुहुयात्। व्रतपतये ऋतं सत्यं प्रजापतिं मित्रमग्नीषोमौ बृहस्पतिं यजेत।

एतानेवमर्चयित्वा महाव्याहृतयस्तथा।
ॐकारपूर्वमाख्यातास्तथा सर्वाः[6] पृथक् पृथक्।
ऋतं सत्यं च गायत्रीमित्येतानि सदा जपेत् ॥
दशसाहस्रिकं वाऽपि गायत्रीमाह्निकं जपेत्।
इन्द्रः शुद्धा ऋचश्चापः प्रविश्य मनसा जपेत् ॥
तत्रैव गायेत् सामानि अथवा व्याहृतीर्जपेत्।
वृक्षमूलनिकेतः स्याद्रात्रौ वीरासनी भवेत् ॥
आर्द्रवासाश्चरेत् कृच्छ्रं स्नात्वा वस्त्रं न पीडयेत्।
चरुं वा श्रपयेन्नित्यं गोभ्यो निष्क्रान्तयावकैः[7] ॥

---

१ C F. and H read समन्तत· for च सयत and for the same E reads ससन्तत. २. C and F read शुची मौञ्जी च and I. शुचि चर्म च for शुचिर्मौञ्जी च ३. I. reads शाण-वल्कल-चीरे for शाणी वल्कलचीरी. ४ All, except A. and I omit दक्षिणत. ५. C E. F G. and I read आज्याहुति and H. and J. आज्यभागं for आज्याहुती ६. I reads सर्वे for सर्वाः ७ I reads -यावकम् for -यावकै and H. reads *निष्क्रीय यावकै* for निष्क्रान्तयावकै.

पायसं शाकमन्नं वा भैक्षं वा वाग्यतश्चरेत् ।
आयसं तैजसं पात्रं चक्रोत्पन्नं विवर्जयेत् ॥
असुराणां हि तत् पात्रमयस्तैजसचक्रजम् ।
तथैवान्यतमालाभे[1] मृदं कुर्वीत वैदिकीम्[2] ॥
यज्ञियानां तु वृक्षाणां तेषां पर्णैः स्वयं च्युतैः[3] ।
हसन्न[4] तु निरीक्षेत नाभिभाषेत् परस्त्रियम् ॥
गोदोहमात्रं तिष्ठेत न सप्तानां परं व्रजेत् ।
तद्विधेषु चरेद्भैक्षं नियतेषु द्विजातिषु ॥
अग्नयो यत्र हूयन्ते ब्रह्म वा यत्र पठ्यते ।
प्रयतः कृतशौचस्तु भैक्षमभ्युक्षयेत्ततः ॥
आदित्याभिमुखो भूत्वा गुरवे तन्निवेदयेत् ।
अनुज्ञातस्ततः कुर्याद्देवर्षि-पितृपूजनम् ॥
शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् ।
सम्पादयेत् यमाहारं तेनाग्नौ जुहुयात् सदा ॥
आहारार्थं द्विजे दत्वा तदन्नं नियमं श्रितः ।
ग्रासं शेषेण कुर्वीत योऽस्यास्यं प्रविशेत् सुखम् ॥
कुक्कुटाण्डप्रमाणं वा ग्रासं कुर्यात् समाहितः ।
अङ्गुल्यग्रे स्थितं[5] वाऽपि गायत्र्या चाभिमन्त्रयेत् ॥
न तु विख्यापयेत् पिण्डं रसान् नास्वादयेत् पुनः ।
न निन्देन्न प्रशंसेत स्वाद्वस्वादु[6] च भक्षयेत् ॥

---

१ I. reads अन्यतरालाभे for अन्यतमालाभे. २ C. and F read वैदिक्रम् for वैदिकीम् ३ I reads पत्रे स्वय च्युते for पर्णैः स्वयं च्युतै ४. C. E. F. and G. read हसन्न तु निरीहेत and H. हस्त न तु निरीहेत for हसन् न तु निरीक्षेत. ५ I. reads अङ्गुल्यग्रस्थित for अङ्गुल्यग्रे स्थितं. ६. H. reads स्वादु स्वादु for स्वाद्वस्वादु

प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन्।
ह्रासो वृद्धिर्यथा सोमे मासि मासि प्रदृश्यते ॥
अमावास्यां पौर्णमास्यां व्रतं चान्द्रायणं चरेत्।
ग्रासान् वर्धयते[1] सोमः पञ्च पञ्च च पञ्च च ॥
एकैकं वर्धयेत् पिण्डं शुक्ले, कृष्णे च ह्रासयेत्।
अमावास्यां न भुञ्जीत एष चान्द्रायणो विधिः ॥
एकैकं ह्रासयेत् पिण्डं कृष्णे, शुक्ले च वर्धयेत्।
एतत् पिपीलिकामध्यं चान्द्रायणमुदाहृतम् ॥
वर्धयेत् पिण्डमेकैकं शुक्ले कृष्णे च ह्रासयेत्।
एतच्चान्द्रायणं नाम यवमध्यं प्रकीर्त्तितम्' ॥

(य. स्मृ. ६. २६–६४)

इति। पुनरपि प्रकारान्तरेण चान्द्रायणं त्रिविधम्। ऋषि-चान्द्रायणं शिशुचान्द्रायणं यतिचान्द्रायणमिति। तेषां स्वरूपं यम आह—

'त्रींस्त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः।
हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम् ॥
चतुरः प्रातरश्नीयाच्चतुरः सायमेव च।
पिण्डानेतद्धि बालानां शिशुचान्द्रायणं स्मृतम् ॥
पिण्डानष्टौ समश्नीयान्मासं मध्यन्दिने रवौ[2]।
यतिचान्द्रायणं ह्येतत् सर्वकल्मष[3]नाशनम्' ॥

(य. स्मृ ६. २१–२३)

---

१. I. reads प्रवर्धयेत् for वर्धयते. २ I. reads through mistake वरौ for रवौ. ३. B. and D read -किल्बिष- for -कल्मष-

इति । विष्णुरपि पञ्चविधं चान्द्रायणमाह—

'अथ चान्द्रायणम् । (१) ग्रासान्[२]नास्याविकारमश्नीयात् । (२) तांश्चन्द्रकलाऽभिवृद्धौ क्रमेण वर्धयेत् । हानौ च ह्रासयेत् । अमावास्यायां [३]चै नाश्नीयात् । एष चान्द्रायणो यवमध्यः । (३) पिपीलिकामध्यो वा । (४) यस्यामावास्या मध्या भवति स पिपीलिकामध्यः । ( ५ ) यस्य पौर्णमासी स यवमध्यः । ( ६ ) अष्टौ ग्रासान् [४]प्रतिदिनमश्नीयात् स यतिचान्द्रायणः । (७) सायं प्रातश्चतुरश्चतुरः स शिशुचान्द्रायणः । (८) यथा कथञ्चित्[६] षष्ठ्योनां त्रिशतीं मासेनाश्नीयात् स सामान्यचान्द्रायणः' । ( ९ )

( वि. स्मृ. ४७. १–९ )

इति ॥ १ ॥

चान्द्रायणे ऽभिहितस्य ग्रासस्य परिमाणमाह—

[७]कुक्कुटाण्डप्रमाणं तु ग्रासं वै[८] परिकल्पयेत् ।
अन्यथाभावदोषेण[९] न धर्मो न च शुद्ध्यति ॥ २ ॥

---

१ B. and D. omit this sutra २. C. E. F. and G read ग्रासानविकारमश्नीयात्, the text ग्रासानविकारानश्नीयात् and H. ग्रासाद्न्नविकारमश्नीयात् ३ All, except H. and I. omit च ४. H. reads यतिदिनम् for प्रतिदिनम् The text reads प्रतिदिवस मासमश्नीयात् for प्रतिदिनमश्नीयात्. ५. I. inserts ग्रासान् समश्नीयात् after चतुरश्चतुर , B. and D do not repeat चतुर . All, except A. I. and the text omit स ६ B. C. D E. F G. H. and J. read पिण्डाना तिस्रोशीतिर्य अश्नीयात् for षष्ठ्योनां त्रिशती मासेनाश्नीयात् I reads the same, but it substitutes वा for य and reads स सोम्यचान्द्रायण· ७. Before this M. inserts the following ślôka —

एकैकं ह्रासयेत् पिण्ड कृष्णे शुक्ले च वर्धयेत् ।
अमावास्यां न भुञ्जीत एष चान्द्रायणो विधि ॥·

८. M. reads च for वै. ९. K. and L. read -जातदोषेण and M. भावदुष्टस्य for -भावदोषेण.

इति । उक्तपरिमाणादधिकपरिमाणत्वमन्यथाभावः । तेन जातो यो दोषो व्रतवैकल्यं तेन दोषेण, धर्मश्चन्द्रलोकप्राप्तिहेतुस्तपोरूपो व्रतविशेषः स न सम्पद्यते । नाप्यस्य पापाच्छुद्धिर्भवति । चान्द्रायणसाध्यं फलं द्विविधम् । पुण्यलोकप्राप्तिः पापनिवृत्तिश्चेति । तदुभयमधिकपरिमाणग्रासानश्नतो न सिद्ध्यति । चान्द्रायणस्य फलद्वैविध्यं[१] यम आह—

'यत्किञ्चित् कुरुते पापं कर्मणा मनसा गिरा ।
द्विजश्चान्द्रायणं कृत्वा तस्मात् पापात् प्रमुच्यते ॥
एतानि विधिवत् कृत्वा षड्भिर्मासैर्हविष्यभुक् ।
व्यपेतकल्मषो विप्रश्चन्द्रस्यैति सलोकताम्' ॥
(य. स्मृ. ६. १९-२०)

इति ॥ ३ ॥

व्रतचरणानन्तरं कर्त्तव्यमाह—

**प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् ।**
**गोद्वयं वस्त्रयुग्मं च दद्याद्विप्रेषु दक्षिणाम् ॥ ४ ॥**

इति । संख्याविशेषानुपादानात् शक्त्यनुसारेण ब्राह्मणभोजनमिति वेदितव्यम् ॥ ४ ॥

अगम्यागमनमात्रे प्रायश्चित्तमभिहितम् । तद्विशेषेषु प्रायश्चितानि वक्तव्यानि । तत्रात्यन्तनीचजातिगमने प्रायश्चित्तमाह—

**चण्डालीं वा श्वपाकीं वा ह्यभिगच्छति[२] यो द्विजः ।**
**त्रिरात्रमुपवासित्वा[३] विप्राणामनुशासनात् ॥ ५ ॥**

१ B. C. D and G. read फल द्विविध for फलद्वैविध्यं. २ Except A. and M all read अनुगच्छति for ह्यभिगच्छति. ३. M. reads उपवासी स्यात् for उपवासित्वा.

सशिखं वपनं कृत्वा प्राजापत्यद्वयं[1] चरेत्।
गोद्वयं दक्षिणां दद्यात् शुद्धिं पराशरोऽब्रवीत्॥६॥[2]

इति। ब्राह्मण्यां शूद्राज्जाता चण्डाली। आरूढपतिताज्जाता च[3] सगोत्राज्जाता वा। तदेतत् त्रिविधं चण्डालत्वं यम आह—

'आरूढपतिताज्जातो ब्राह्मण्यां शूद्रजश्च यः।
चण्डालौ तावुभौ प्रोक्तौ सगोत्राद् यश्च जायते'॥
(य. स्मृ. ६. ३)

इति। एतत्त्रिविधचण्डालसन्ततौ जाता स्त्री चण्डाली। क्षत्तोरुग्रयोर्जाता[4] स्त्री श्वपाकी। तदाह मनुः—

'क्षत्तुर्जातस्तथोग्रायां[5] श्वपाक इति कीर्त्तितः'।
(म. स्मृ. १०. १९)

इति। द्विजशब्दोऽत्र ब्राह्मणपरः। क्षत्रिय-वैश्ययोः पृथग्वक्ष्यमाणत्वात्। उपवासित्वा उपवासं चरित्वेत्यर्थः। आचारार्थक्विबन्तात् शब्दनिष्पत्तेः॥ ५–६॥

---

१. M. reads -त्रयम् for -द्वयम्. २. M. reads for this line—
'गायत्रीं च जपेन्नित्यं दद्याद्गोमिथुनद्वयम्।
विप्राय दक्षिणां दद्याच्छुद्धिमाप्नोत्यसंशयम्'॥,
Also the following line appears in M. before गायत्रीं च जपेत् &c.—
ब्रह्मकूर्चं ततः कृत्वा कुर्याद्ब्राह्मणतर्पणम्।.

३. H. substitutes वा for च, while B. and D. omit सगोत्राज्जाता वा. ४. H. reads क्षत्तायामुग्राज्जाता and all others except A. and I. omit स्त्री. ५. We follow here A. I. and the text, while C. E. F. G. H. and J. read उग्रानुजात क्षत्तायां and B. and D. उग्रानुजात क्षत्तायां. The text substitutes कीर्त्यते for कीर्त्तित.

क्षत्रिय-वैश्ययोर्दक्षिणाऽऽधिक्यमाह—

क्षत्रियो वाऽथ वैश्यो वा चण्डालीं गच्छतो यदि[1]।
प्राजापत्यद्वयं कुर्यात् दद्याद्गोमिथुनद्वयम्[2] ॥ ७ ॥

इति। स्पष्टम् ॥ ७ ॥

शूद्रस्य स्वल्पं व्रतमधिका दक्षिणेत्याह—

श्वपाकीं वाऽथ[3] चण्डालीं शूद्रो वा यदि गच्छति।
प्राजापत्यं चरेत् कृच्छ्रं[4] चतुर्गोमिथुनं ददेत् ॥ ८ ॥

इति। ननु—स्मृत्यन्तरेषु[5] चण्डालीगमने प्रायश्चित्तान्यन्यथा स्मर्यन्ते। तत्र कानिचित् आचार्योक्तात् प्रायश्चित्तात् न्यूनानि। कानिचिदधिकानि। यथाह[6] सुमन्तुः—

'मातृष्वसृ-पितृष्वसृ-स्नुषा-भगिनी-भागिनेयी-गो-चण्डालीनामभिगमने[7] तप्तकृच्छ्रम्'।

इति। तदेतदकामतः प्रवृत्तस्य रेतःसेकात् प्राङ्निवृत्तौ द्रष्टव्यम्। यत्त्वङ्गिरसोक्तम्—

'पतिता-ऽन्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
मासोपवासं कुर्वीत चान्द्रायणमथापि वा' ॥

---

१. K. and L read ऽपि वा for यदि. २. M. reads गोमिथुन तथा for गोमिथुनद्वयम् ३. M omits वा ४ M. reads दद्याद्गोमिथुनं तथा for चतुर्गोमिथुनं ददेत्; while B. C D. E F. and H. substitute ददत् and K. and L. चरेत् for ददेत् ५ B and D. omit.—

प्रायश्चित्तान्यन्यथा स्मर्यन्ते। तत्र कानिचित् आचार्योक्तात् प्रायश्चित्तात् न्यूनानि। कानिचिदधिकानि। यथाह सुमन्तुः—

'मातृष्वसृ-पितृष्वसृ-स्नुषा-भगिनीभागिनेयी-गो-चण्डालीनामभिगमने,

and substitute नग्नकृच्छ्रम् for तप्तकृच्छ्रम्. ६ C E. F. and H. add तत् before यथा and G. and J read तथा च for यथाह. ७. G omits -गो-.

इति। तत्र चान्द्रायणं कामतः प्रवृत्तस्य रेतःसेकात् प्राङ्निवृत्तस्याशक्तस्यावगन्तव्यम्। शक्तस्य तु मासोपवासः। गोद्वयदक्षिणायुक्तस्य प्राजापत्यद्वयस्य मूलवचनोक्तस्य[1] प्रत्याम्नायकल्पनाद्वारेण मासोपवाससमानत्वादयमेव विषयः। यदपि शङ्खेनोक्तम्—

'अकामतस्तु यो विप्रश्चण्डालीं यदि गच्छति।
तप्तकृच्छ्रेण शुद्ध्येत प्राजापत्यद्वयेन वा॥
कामतस्तु यदा विप्रश्चण्डालीं यदि सेवते।
चान्द्रायणेन शुद्ध्येत प्राजापत्यद्वयेन च[2]'॥

(शं. स्मृ. १७- १९-२०)

इति। एतन्मूलवचनेन समानविषयम्। यमस्तु विषयव्यवस्थापूर्वकं पक्षद्वयमाह—

'चण्डाल-पुल्कसानां तु भुक्त्वा गत्वा च योषितम्।
कृच्छ्राब्दमाचरेत् ज्ञानादज्ञानादैन्दवद्वयम्'॥

(य. स्मृ. ६. ७)

इति। एतच्चोभयं रेतःसेकपर्यन्तसकृद्गमनविषये। यत्तु गौतमेनोक्तम्—

'अन्त्यावसायिनीगमने कृच्छ्राब्दः[4]। (३८)
अमत्या द्वादशरात्रम्'। (३९)

(गौ. स्मृ. २४. ३८–३९)

---

१. B. D. E G H and J. read मूलवचनस्य for मूलवचनोक्तस्य and for the same C. F. read मूलवचनोक्तकृच्छ्रस्य, while J. has the marginal reading मूलवचनोक्तस्य. २. B. D. I. and J. substitute वा for च. ३. H. omits this Slôka.

'चण्डाल-पुल्कसानां तु भुक्त्वा गत्वा च योषितम्।
कृच्छ्राब्दमाचरेत् ज्ञानादज्ञानादैन्दवद्वयम'॥.

४ I reads कृच्छ्राब्दम्.

इति तत्राब्दकृच्छ्रो यमोक्तसमानविषयः। द्वादशरात्रं तु सुमन्तुप्रोक्ततप्तकृच्छ्रसमानविषयम्। यदप्यङ्गिरसोक्तम्—

'अन्त्यजानां तु गमने भोजने च प्रमापणे।
पराकेण विशुद्धिः स्याद्भगवानङ्गिराऽब्रवीत्'॥

(अं. स्मृ. ९. १९)

इति तदपि तप्तकृच्छ्रसमानविषयम्। यदपि वसिष्ठेनोक्तम्—

'द्वादशरात्रमब्भक्षो यो द्वादशरात्रमुपवसेत्। (३८)
अश्वमेधावभृथं वा गच्छेत्। (४०) एतेनैव चाण्डालीव्यवायो व्याख्यातः'। (४१)

(व. स्मृ. २३. ३८–४१)

इति एतदपि बृहद्यमोक्तचान्द्रायणद्वयसमानविषयम्। यच्च संवर्त्तेनोक्तम्—

'यश्चण्डालीं द्विजो गच्छेत् कथञ्चित् काममोहितः।
त्रिभिः कृच्छ्रैर्विशुद्ध्येत प्राजापत्यानुपूर्वकैः'॥

(सं. स्मृ. १४९)

इति। प्राजापत्यतप्तकृच्छ्रातिकृच्छ्राणि प्राजापत्यानुपूर्वकाणि। एतच्चान्द्रायणद्वयेन समानविषयम्। यदपि मनुनोक्तम्—

---

१. B and D. read प्रोक्ततप्तकृच्छ्र- for सुमन्तुप्रोक्ततप्तकृच्छ्र-, while C. and F omit सुमन्तु-. २ B. and D. read आत्मजानां for अन्त्यजानां. ३ B D and G omit द्वादशरात्रमब्भक्षो. ४. G. reads विमुच्येत for विशुद्ध्येत. ५ C F. and G. read प्राजापत्य तप्तकृच्छ्राणि for प्राजापत्यतप्तकृच्छ्रातिकृच्छ्राणि and I. omits both. ६. B. and D. substitute यच्च and G. तच्च for यदपि.

'यत् करोत्येकरात्रेण वृषलीसेवनाद् द्विजः ।
तद् भैक्षभुग् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति'॥
(म. स्मृ. ११. १७८)

इति । वृषली चण्डाली । तथा च स्मृत्यन्तरे—

'चण्डाली बन्धकी वेश्या रजःस्था या च कन्यका ।
ऊढा च समगोत्रेण वृषल्यः पञ्च कीर्त्तिताः' ॥

इति तदेकदिनाभ्यासविषयम् । यदपि मनुनोक्तम्—

'रेतःसेकः स्वयोन्यासु कुमारीष्वन्त्यजासु च ।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः'॥
(म. स्मृ. ११. ५८)

इति याज्ञवल्क्येनापि—

'सखिभार्या-कुमारीषु स्वयोनिष्वन्त्यजासु च ।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतम्' ॥
(या. स्मृ. ३. २३१)

---

१. C E. F. I and J. read य for यत्. २. All, except A. and the text substitute -सेवनं for -सेवनाद् ३. Except A. and the text all read स for तद् ४. I reads या च सगोत्रेण for च समगोत्रेण. ५. The text reads स्वयोनीषु for स्वयोन्यासु. The commentators Râghavânanda and Râmachandra read स्वयोनीषु. ६. J. reads गुरुतल्प सदा विदुः for गुरुतल्पसम स्मृतम्. ७ I. reads स्वजातासु for स्वयोनिषु ८. H. reads स्वगोत्रासु for सगोत्रासु, while B. and D omit this and the next five lines.—

सगोत्रासु सुतस्त्रीषु गुरुतल्पसम स्मृतम्' ॥
(या. स्मृ ३. २३१)

इति एतच्च पक्षाभ्यासविषयम् । यच्च मनुनोक्तम्-

' गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु ।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च' ॥
(म. स्मृ ११ १७०)

इति एतच्च मासाभ्यासविषयम् । यच्च यमेनोक्तम्-

'रेत सिक्त्वा कुमारीषु चण्डालीष्वन्त्यजासु च ।

इति एतच्च पक्षाभ्यासविषयम्[1]। यच्च मनुनोक्तम्[2]–

'गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च'॥

(म. स्मृ. ११. १७०)

इति एतच्च मासाभ्यासविषयम्। यच्च यमेनोक्तम्–

'रेतः सिक्त्वा कुमारीषु चण्डालीष्वन्त्यजासु च।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते'॥

(य. स्मृ. ९. ४१)

इति एतच्च संवत्सराभ्यासविषयम्॥ ८॥

अथ मातृगमनप्रायश्चित्तमुच्यते।

यद्यप्येतन्नोपपातकम्। तस्यातिपातकेषु पाठात्। तथाप्यगम्यागमनावान्तरभेदवदत्राभिधानम्[3]। तत्राज्ञानकृते मात्रादिगमने[4] प्रायश्चित्तमाह–

मातरं यदि गच्छेत्तु भगिनीं स्वसुतां तथा[5]।
एतास्तु[6] मोहितो गत्वा त्रीणि कृच्छ्राणि सञ्चरेत्॥९॥
चान्द्रायणत्रयं कुर्यात् शिश्नच्छेदेन शुद्ध्यति॥

इति। मातरं जननीम्। इतरासां मातॄणां–

'पितृदारान् समारुह्य'।

(य. स्मृ. १०.२१)

---

१ H. and J. read प्रज्ञाभ्यास- for पक्षाभ्यास- and for the same G. reads प्रज्ञानाभ्यास-. २. C. E. F G. H and J. read यमेन for मनुना, but the next quotation is from Manu ३ I. reads -भेदप्रसङ्गात् for -भेदवत्. ४. J. omits मात्रादि-. ५ M. reads गच्छेत भगिनी पुत्रिका for गच्छेत्तु भगिनी स्वसुतां. ६. B. D. and J. read एतासु for एतास्तु and M. reads त्रीन् कृच्छ्रान् for त्रीणि कृच्छ्राणि.

इति वक्ष्यमाणत्वात्। भगिन्येकोदरा। तस्या एव मुख्यत्वात्। तथा स्वसुतेति सवर्णायां भार्यायामुत्पन्ना। तत्र त्रीणि प्रायश्चित्तानि। प्राजापत्यत्रयमेकं, चान्द्रायणत्रयं द्वितीयं, शिश्नच्छेदस्तृतीयम्। एतच्च मैथुनप्रकारभेदविषयतया योजनीयम्। मैथुनं चाष्टविधम्—

'स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव[1] च॥
एतन्मैथुनमष्टाङ्गं वदन्ति ब्रह्मवादिनः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्'॥

(ब्र. वै. पु. १. ११. २६-२७)

इति स्मरणात्। तत्राद्यं व्रतमल्पत्वात् अप्रवर्तकस्मरणादिपञ्चविधापराधविषयम्। द्वितीयं तु पूर्वस्माद् गुरुत्वात् प्रवर्तकसंकल्पाध्यवसायविषयम्। तृतीयं त्वतिमहत्त्वात्[2] क्रियानिर्वृतिविषयम्। ननु—मोहित इत्यभिधानादकामकृतविषयमिदम्। तथाच संकल्पाध्यवसायौ तत्र न सम्भवतः—इति चेत्। मैवम्[3]। मदान्धकारादौ[4] मातेयमित्यज्ञात्वा गमिष्याम्येनामिति सङ्कल्पाध्यवसायसम्भवात्। यद्वा मातेयमिति ज्ञातेऽपि प्रत्यवायगौरवमज्ञात्वा प्रवृत्तस्य सङ्कल्पाध्यवसायसम्भवात्। न च—मातरि भगिन्यां च समानं प्रायश्चित्तमयुक्तमिति[5] वाच्यम्।

---

१. H. reads -निर्वृत्तिः and I. -निष्पत्ति for -निर्वृति २ All, except A. and I. read -महत् for -महत्त्वात्, while I substitutes क्रियानिष्पत्ति- for क्रियानिर्वृति-. ३ B. and D. substitute नैवम् for मैवम्, while C E. F. G. H and J. omit मैवम् ४. J. reads महान्ध- for मदान्ध-, while C. E. F. G. and H. omit मातेयमित्यज्ञात्वा गमिष्याम्येनामिति सङ्कल्पाध्यवसायसम्भवात्। यद्वा. ५. I substitutes उक्तम् for अयुक्तम्.

भगिन्यामावृत्तिविषयत्वस्य कल्पनीयत्वात्। शिश्नच्छेदोत्तरकालकर्त्तव्यं मनुराह—

'स्वयं वा शिश्न-वृषणावुत्कृत्याधाय चाञ्जलौ।
नैर्ऋतीं दिशमातिष्ठेदा निपातादजिह्मगः' ॥
( म. स्मृ. ११. १०४ )

इति। उशना अपि—

'खट्वाङ्गधारी गुरुतल्पगः सवृषणं शिश्नमुत्कृत्य नैर्ऋतीं दिशमञ्जलिनाऽऽदाय व्रजेदा निपातात् पूतो भवतीति'।
(उ. स्मृ. १. ११)

इति। शङ्ख-लिखितावपि—

क्षुरेण शिश्न-वृषणावुत्कृत्यादायावेक्षमाणो व्रजेत्'।

इति। एवं गच्छन् यत्र कुड्यादिना प्रतिबद्ध्यते तत्रैवामरणान्तं तिष्ठेत्। तदाह वसिष्ठः—

'सवृषणं शिश्नमुत्कृत्यांजलावाधाय दक्षिणाभिमुखो गच्छेत्। यत्रैव प्रतिहतस्तत्रैव तिष्ठेदा प्रलयम्'।
( व. स्मृ. २०. १३ )

इति। अज्ञानकृताभ्यासा-ऽज्ञानकृतसकृज्जननीगमनेऽपि। पूर्वोक्तादधिकक्लेशोत्पादकं व्रतविशेषं वसिष्ठ आह—

'निष्कालको घृताभ्यक्तो गोमयेनाग्निना पादप्रभृत्यात्मानमवदाहयन् पूतो भवतीति विज्ञायते'।
( व. स्मृ. २०. १४ )

---

१. E. and I. omit -काल- २ I omits पूतो भवतीति ३. Except A and I. all omit आदाय. ४ The text reads उद्धृत्य for उत्कृत्य ५. B. C. D E. F. G H and J read आ प्रलयात् and I. आ प्राणविमोकात् for आप्रलयम् ६ All, except H. and I read अभ्यासे foi -अभ्यासा-. ७ For this Sûtia the text reads —

'निष्कालको वा घृताभ्यक्तस्तप्तां सूर्मीं परिष्वजेन्मरणात्'।

इति। के शिरस्यवस्थिता अलकाः केशाः कालकाः। निर्गताः कालका यस्मादसौ निष्कालकः। मुण्डितशिरा इत्यर्थः।

ननु—अस्य वधस्य कामकृतसकृद्गमनविषयत्वे ततोऽभ्यधिकक्लेशप्रदस्य वधान्तरस्याभावात् कामकृताभ्यासे प्रायश्चित्तं न स्यादिति चेत्। मैवम्। गोमयस्यैवेषदार्द्रत्वातिशुष्कत्वादिभेदेन चिर-क्षिप्रदाहिनो वधभेदस्य कल्पनीयत्वात्। यत्तु शिश्नच्छेदादिवधात् न्यूनप्रयाससाध्यं सूर्म्यालिङ्गनादिमरणमन्यैर्मुनिभिः प्रदर्शितं तत्रोभयेच्छाऽन्यतरेच्छादिभेदेन विषयव्यवस्था कल्पनीया। तदाह। मनुः—

'गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये।
सूर्मीं ज्वलन्तीं वाऽऽश्लिष्य मृत्युना च विशुद्ध्यति॥
स्वयं वा शिश्न-वृषणावुत्कृत्याधाय चाञ्जलौ।
नैर्ऋतीं दिशमातिष्ठेदा निपातादजिह्मगः'॥

(म. स्मृ. ११. १०३–१०४)

१. In this Samāsa I. has made several mistakes २ H. reads -ऽप्यधिक- for -ऽभ्यधिक-. ३ B. C. D. E. F. G. H. and J read गुरुतल्पगो ऽभिभाष्यैन. ४. C. E F. and J. read तप्ते स्वप्स्यादयोमये, B and D read तल्पे सुप्त्वार्द्रगोमये and G. तप्ते सुप्त्वार्द्रगोमये ५. The text reads स्वाश्लिष्येत for वाऽऽश्लिष्य. ६. B. and D. omit this and the next eight lines.—

'स्वयं वा शिश्न वृषणावुत्कृत्याधाय चाञ्जलौ।
नैर्ऋतीं दिशमातिष्ठेदा निपातादजिह्मग'॥
(म. स्मृ ११ १०३—१०४)

इति। यमोऽपि—

'गुरुदारावगमनं कृत्वा मोहेन वै द्विज।
ज्वलन्तीमायसीं शय्यां संविशेद्गुरुतल्पग॥
सूर्मीं ज्वलन्तीं वाऽऽश्लिष्य मृत्युना स विशुद्ध्यति'।
(य. स्मृ. ५।४३)

इति। याज्ञवल्क्योऽपि—

'तप्तेऽय शयने सार्धमायस्या योषिता स्वपेत्।
गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां वोत्सृजेत्तनुम्'॥.

इति। यमोऽपि–

'गुरुदारावगमनं कृत्वा मोहेन वै द्विजः।
ज्वलन्तीमायसीं शय्यां संविशेद्गुरुतल्पगः॥
सूर्मीं ज्वलन्तीं वाऽऽश्लिष्य मृत्युना स विशुद्ध्यति'।
(य. स्मृ. ५. ४३–४४)

इति। याज्ञवल्क्योऽपि–

'तप्तेऽयःशयने सार्धमायस्या योषिता [1]स्वपेत्।
गृहीत्वोत्कृत्य वृषणौ नैरृत्यां वोत्सृजेत्तनुम्'॥
( या. स्मृ. ३. २५९ )

इति। अङ्गिरा अपि–

'गुरुतल्पी शिलां तप्तामायसीं वा स्त्रियं विशेत्।
[2]उत्कृत्य वृषणौ वापि धारयेदञ्जलौ स्वयम्॥
मरणाय तदा पङ्क्त्यां प्रव्रजेद्दिशमुत्तराम्।
शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात्॥
[3]ख्यापयन् गुरुतल्पी वा तप्ते चैवायसे स्वपेत्।
समालिङ्गेत् स्त्रियं वाऽपि तप्तां कार्ष्णायसीं नरः'॥
(अं. स्मृ. ३. ३७–३९)

इति।

'तप्ते लोहशयने गुरुतल्पगः शयीत। सूर्मीं ज्वलन्तीं वाऽऽश्लिष्येत्। लिङ्गं वा सवृषणमुत्कृत्याञ्जलावाधाय दक्षिणाप्रतीचीं व्रजेदजिह्मगा शरीरनिपातनात्। मृतः शुद्ध्यति'।

---

१. C. F. G. H. and J. read शयेत् for स्वपेत्. २. I. omits this line — उत्कृत्य वृषणौ वापि धारयेदञ्जलौ स्वयम्॥.

३. All, except I. and J. insert इति before this line. Thus they show that this and the next one line are from some author other than Angirâ.

इति । बौधायनोऽपि–

'गुरुतल्पगस्तप्ते लोहशयने शयीत । (१३) ज्वलन्तीं वा सूर्मीमाश्लिष्यात् । (१४) लिङ्गं वा सवृषणं परिवास्याञ्जलावाधाय दक्षिणाप्रतीच्योरन्यतरेण गच्छेदा निपातात्' ।
(बौ. स्मृ. २. १. १३. १५)

इति । तत्र तयोरिच्छतोः संयोगे तप्तलोहशयनम् । स्त्रिया प्रोत्साहितस्य ज्वलत्सूर्म्यालिङ्गनम् । आत्मना प्रोत्साहितायां तु गमने सवृषणलिङ्गोत्कर्त्तनादि ॥ ९ ॥

जननीगमनेऽभिहितं यत् प्रायश्चित्तं तत् तद्भगिनीगमनेऽप्यतिदिशति–

**मातृष्वसृगमे चैवमात्ममेढ्रनिकर्त्तनम् ॥ १०॥**

इति । एवमिति सामान्यातिदेशान्मानसे क्रीडादौ वसिष्ठोक्तं व्रतत्रयमवगन्तव्यम् । मेढ्रनिकर्त्तनेन मरणपर्यन्तव्रतमुपलक्ष्यते । न च– जननी-तद्भगिन्योः समानव्रतमयुक्तमिति शङ्कनीयम् । जनन्यामकामकृते तद्भगिन्यां कामकृते च समानत्वसम्भवात् । उपरितनवचनेन तु 'अज्ञानेन'–इति विशेषणादेतस्य वचनस्य कामकृतविषयत्वमवगम्यते ॥ १० ॥

---

१ The text reads अन्तरेण for अन्यतरेण २ M. reads:—

मातृष्वसृगमे चैव आत्ममेढ्रनिकर्त्तनम् ।,

while K. and L read -निकृन्तनम् for -निकर्त्तनम् ३. B D. G. I. and J. read साम्यातिदेशात्, I. substitutes यथोक्तं for वसिष्ठोक्तं ४. C. and F. read भ्रातृतस्य for एतस्य.

अकामकृते मातृष्वसृगमने प्रायश्चित्तमाह—

अज्ञानेन[1] तु यो गच्छेत् कुर्याच्चान्द्रायणद्वयम्[2]।
दशगोमिथुनं दद्याच्छुद्धिं पाराशरोऽब्रवीत् ॥११॥

इति। गवोर्धेनु-वृषभयोर्मिथुनं गोमिथुनम्। दशसङ्ख्याकं गोमिथुनं दशगोमिथुनम्। विंशतिसङ्ख्याका गाव इत्यर्थः। ननु—याज्ञवल्क्येन मातृष्वसृगमने गुरुतल्पव्रतमतिदिष्टम्[3]—

'पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः'।

( या. स्मृ. ३. २३२–२३३ )

इति। बाढम्। कामकृते गुरुतल्पव्रतमस्माभिरपि पूर्ववाक्ये दर्शितम्। चान्द्रायणं त्वकामकृते इत्यविरोधः। एतदेवाभिप्रेत्य हारीत आह—

'पितृव्यस्त्रीगमने स्वसृ-मातृष्वसृ-पितृष्वसृगमने कन्या-सगोत्रा-स्वस्त्रीया[4]गमने भागिनेयीगमने चान्द्रायणम्'।

( हा. स्मृ. २३. ११. )

इति। शङ्ख-लिखितावपि—

'एवं मातुलानी-मातृष्वसृ-स्नुषा-दुहितृगमने तथाऽऽचार्यदुहितरि चान्द्रायणम्'।

---

१ M. reads अज्ञानात्तां तु for अज्ञानेन तु २. K and L. read -त्रयम् for -द्वयम्. ३ I. reads व्रतमिति निर्दिष्टम् for व्रतमतिदिष्टम्. ४ H omits -स्वस्त्रीया-, we think it better to omit either -स्वस्त्रीया- or भागिनेय as both the words convey the same sense.

इति । बृहद्यमो ऽपि—

'चण्डालीं पुल्कसीं म्लेच्छीं स्नुषां च भगिनीं सखीम् ।
माता-पित्रोः स्वसारं च निक्षिप्तां शरणागताम् ॥
मातुलानीं प्रव्रजितां सगोत्रां नृपयोषितम् ।
शिष्यभार्यां गुरोर्भार्यां गत्वा चान्द्रायणं चरेत्'॥

इति । चतुर्विंशतिमते ऽपि—

'पितृष्वसा मातुलानी श्वश्रूर्मातृष्वसा तथा ।
एता गत्वा स्त्रियो मोहाच्चरेच्चान्द्रायणव्रतम्'॥

इति । यद्यप्यकामकृतस्य मूलवचनेन चान्द्रायणद्वयं विंशतिगावश्चाभिहिताः तथापि तस्य रेतःसेकपर्यन्तगमनविषयत्वात् । एकचान्द्रायणवचनानां च रेतःसेकात् प्रागेव निवृत्तौ योजनीयत्वान्न कोऽपि विरोधः । यदपि चतुर्विंशतिमतेऽभिहितम्—

'पितृव्य-भ्रातृभार्यां च भगिनीं मातुरेव च ।
श्वश्रूमारुह्य धात्रीं च तप्तकृच्छ्रं समाचरेत्' ॥

इति यदपि संवर्त्तेनाभिहितम्—

'भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम् ।
एता गत्वा स्त्रियो मोहात्तप्तकृच्छ्रं समाचरेत्' ॥
( सं. स्मृ. १५९ )

---

१. I. reads -मनु for -यम.. २. B. and D. substitute मत्तां for धात्रीं and for the same G. reads मातां. ३. B. C D. E. F. and H. omit this line and the following quotation —

इति यदपि संवर्त्तेनाभिहितम्—
'भगिनीं मातुराप्तां च स्वसारं चान्यमातृजाम् ।
एता गत्वा स्त्रियो मोहात्तप्तकृच्छ्र समाचरेत्' ॥
(स. स्मृ १५९)

इति ।.

४. The text reads मातुलसुतां for मातुराप्ता च ५. The text reads एतास्तिस्र स्त्रियो गत्वा for एता गत्वा स्त्रियो मोहात्.

इति एतदुभयारोहणपर्यन्तं प्रवृत्तस्य योनिलिङ्गसम्बन्धात्प्राङ्निवृत्तौ द्रष्टव्यम् ॥ ११ ॥

जननीव्यतिरिक्तपितृभार्यागमने प्रायश्चित्तमाह—

**पितृदारान् समारुह्य मातुराप्तां तु[1] भ्रातृजाम् ।**
**गुरुपत्नीं स्नुषां चैव भ्रातृभार्यां तथैव च ॥ १३ ॥**
**मातुलानीं सगोत्रां च प्राजापत्यत्रयं चरेत् ।**
**गोद्वयं दक्षिणां दद्यात्[2] शुद्ध्यते नात्र संशयः ॥१४॥**

इति । पितृदाराः जननीव्यतिरिक्ताः पितृभार्या असवर्णाश्च । मातुराप्ता मातुः प्रियसखी । भ्रातृजा ज्येष्ठस्य कनिष्ठस्य वा सुता । गुरुशब्दो हि मुख्यया वृत्त्या पितरमाचष्टे । तथा च मनुः—

'निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते' ॥
( म. स्मृ. २. १४२ )

इति । याज्ञवल्क्योऽपि—

'स गुरुर्यः क्रियाः[3] कृत्वा वेदमस्मै प्रयच्छति' ।
( या. स्मृ. १. ३४ )

इति । पितृव्यतिरिक्तः श्रुतोपकार्यपि मुख्यो गुरुः । तच्च मनुनैवोक्तम्—

'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया[4]' ॥
( म. स्मृ. २. १४९ )

१ G and M. read च for तु. २ M reads दत्त्वा for दद्यात् ३. I. reads क्रिया for क्रिया. ४. Except A. I. and the text all substitute तथा for तया.

इति । व्यासस्तु मुख्यामुख्यगुरून् सर्वान् संगृह्य दर्शयति–

'गुरवो मातृ-पितृ-पत्न्याचार्या विद्यादातृ-ज्येष्ठ-
भ्रातृ-ऋत्विजो भयत्रातान्नदाता च' ।

इति । एवं च सत्यत्र पितृदारानिति पितुः पृथगुपादानात् तद्व्यतिरिक्ताचार्यादिरेव गुरुपत्नीरित्यत्रानेन गुरुशब्देन विवक्षितः । स्नुषादयः प्रसिद्धाः । अकामतः सकृद् गत्वा सदक्षिणं प्राजापत्यत्रयं चरेत् । कामतस्त्वग्निप्रवेशः । तदुक्तं चतुर्विंशतिमते–

'मातरं गुरुपत्नीं च स्वसारं स्वसुतां तथा ।
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते' ॥

इति । विष्णुस्मृतावपि–

'मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि । (१)
अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।
न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथञ्चन' ॥ (२)
(वि. स्मृ. ३४. १–२)

इति । यत्तु शङ्खेन–

'अधःशायी जटाधारी पर्ण-मूल-फलाशनः । (१)
एककालं समश्नानो वर्षे तु द्वादशे गते । (२)

---

१. B. and D. omit विष्णुस्मृतावपि and the first Sûtra of the next quotation —

'मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि ।

२. I. reads -यायी for -शायी and C. F. H. and J substitute जलधारी for जटाधारी. ३ The text reads एक कालं for एककालं, while all, except A. read समश्नन्नै and the text समस्थानो for समश्नानो.

रुक्मस्तेयी सुरापश्च[1] ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन शुद्ध्यन्ति महापातकिनस्त्विमे[2]'॥ (३)
( शं. स्मृ. १७. १-३ )

इति तत् सवर्णोत्तमवर्णपितृदारगमने अकामतो द्रष्टव्यम्। यच्च संवर्त्तेनोक्तम्—

'पितृदारान् समारुह्य मातृवर्ज्जं नराधमः।
भगिनीं मातुराप्तां[3] वा स्वसारं वाऽन्यमातृजाम्॥
एतास्तिस्रः स्त्रियो गत्वा तप्तकृच्छ्रं समाचरेन्'।
( सं. स्मृ. १५९ )

इति तद्धीनवर्णगुरुदारेषु रेतःसेकादर्वाग् द्रष्टव्यम्। यच्च याज्ञवल्क्येनोक्तम्—

'प्राजापत्यं[4] चरेत् कृच्छ्रं समा वा[5] गुरुतल्पगः।
चान्द्रायणं वा त्रीन् मासानभ्यस्यन् वेदसंहिताम्'॥
( या. स्मृ. ३. २६० )

इति एतत् त्रैवार्षिकप्राजापत्यव्रतं ब्राह्मणीपुत्रस्य शूद्रजातीयगुरुभार्यागमने द्रष्टव्यम्। यदा[6] तु गुरुपत्नीमसवर्णां व्यभिचारिणीमबुद्धिपूर्वं गच्छति तदा वेदजपसहितत्रैमासिक[7]-चान्द्रायणं द्रष्टव्यम्। यच्च व्याघ्रेणोक्तम्—

---

१ The text reads सुरापायी for सुरापश्च. २ The text reads च ये for त्विमे. ३. The text reads मातुलसुतां for मातुराप्तां वा ४. Except H and the text all read प्राजापत्य for प्रायश्चित्तं. ५. G substitutes सम वा and J सामान्य- for समा वा ६. A reads यच्च व्याघ्रेणापि—

यदा तु गुरुपत्नी च सवर्णा व्यभिचारिणीम।
अबुद्धिपूर्वं गच्छेत प्राजापत्य तदाऽऽचरेत्॥

तदा वेदजपसहितचान्द्रायण कर्तव्यत्वेन निर्दिष्टम्। इति। यत् पुनस्तेनैवोक्तम् for यदा तु गुरुपत्नीमसवर्णां व्यभिचारिणीमबुद्धिपूर्वं गच्छति तदा वेदजपसहित त्रैमासिकं चान्द्रायण द्रष्टव्यम्। यच्च व्याघ्रेणोक्तम्

७. B. C. D. E. F. H. and J. omit-त्रैमासिक-.

'कृच्छ्रं चैवातिकृच्छ्रं च तथा कृच्छ्रातिकृच्छ्रकम् ।
चरेन्मासत्रयं विप्र क्षत्रियागमने गुरोः' ॥

इति तत्र बुद्धिपूर्वं सकृद्गमने उभयोरिच्छातः प्रवृत्ते अतिकृच्छ्रः । तया प्रोत्साहितस्य कृच्छ्रः । स्वेनैव प्रोत्साहितायां कृच्छ्रातिकृच्छ्रः । तत्राप्यभ्यासे मरणान्तिकमेव । यथाऽऽह देवलः—

'मत्या गत्वा पुनर्भार्यां गुरोः क्षत्रसुतां द्विजः ।
अण्डाभ्यां वर्जितं लिङ्गमुत्कृत्य च मृतः शुचिः' ॥

इति । अबुद्धिपूर्वे सकृद्गमने कण्वोक्तं द्रष्टव्यम्—

'चान्द्रायणं तप्तकृच्छ्रमतिकृच्छ्रं तथैव च ।
सकृद्गत्वा गुरोर्भार्यामज्ञानात् क्षत्रियां द्विजः' ॥

इति । तत्राप्युभयोरिच्छातः प्रवृत्ते तप्तकृच्छ्रम् । तया प्रोत्साहितस्यातिकृच्छ्रम् । स्वेन प्रोत्साहितायां चान्द्रायणं द्रष्टव्यम् । अभ्यासे तु जातूकर्ण्यः—

'गुरोः क्षत्रसुतां भार्यां पुनर्गत्वा त्वकामतः ।
वृषणमात्रमुत्कृत्य शुद्ध्येज्जीवन् मृतश्च सः' ॥

इति । वैश्यायां बुद्धिपूर्वे सकृद्गमने कण्व आह—

'तप्तकृच्छ्रं पराकं च तथा सान्तपनं गुरोः ।
भार्यां वैश्यां सकृद् गत्वा बुद्ध्या मासं चरेत् द्विजः' ॥

इति । तत्राप्युभयोरिच्छातः प्रवृत्ते तप्तकृच्छ्रम् । तया प्रोत्साहितस्य सान्तपनम् । आत्मना प्रोत्साहितायां पराकः । अभ्यासे लिङ्गस्याग्रच्छेदः कार्यः । तथाह लौगाक्षिः—

'गुरोर्वैश्यां पुनर्गत्वा गत्वा चापि पुनः पुनः ।
लिङ्गाग्रं छेदयित्वा तु ततः शुद्ध्यति[1] किल्बिषात्' ॥

1. G and H read शुद्ध्यते स for शुद्ध्यति.

इति। अस्मादेव ज्ञापकादभ्यासे यदुक्तं गुरुतल्पप्रायश्चित्तं तदेव बहुशोऽभ्यासेऽपि द्रष्टव्यम्। अबुद्धिपूर्वके सकृद्गमने प्रजापतिराह—

'पञ्चरात्रं तु[1] नाश्नीयात् सप्ताष्टौ वा तथैव च।
वैश्यां भार्यां गुरोर्गत्वा सकृदज्ञानतो द्विजः' ॥
(म. स्मृ. ३. ४०)

इति। तत्राप्युभयोरिच्छातः प्रवृत्तौ सप्तरात्रम्। तया प्रोत्साहितस्य पञ्चरात्रम्। आत्मना प्रोत्साहितायामष्टरात्रमिति। अभ्यासे त्वामरणान्तं ब्रह्मचर्याचरणम्[2]। तदाह हारीतः—

'अभ्यस्य विप्रो वैश्यायां गुरोरज्ञानमोहितः।
स षडङ्गं ब्रह्मचर्यं सञ्चरेद् यावदायुषम्'[3] ॥
(हा. स्मृ. २१. २९)

इति। शूद्रागमने बुद्धिपूर्वे जाबालिराह—

'अतिकृच्छ्रं तप्तकृच्छ्रं पराकं च तथैव च।
गुरोः शूद्रां सकृद्गत्वा बुद्ध्या विप्रः समाचरेत्' ॥

इति। तत्राप्युभयोरिच्छातः प्रवृत्तौ तप्तकृच्छ्रम्। तयैव प्रोत्साहितस्यातिकृच्छ्रम्। आत्मना प्रोत्साहितायां पराक इति द्रष्टव्यम्। अभ्यासे तु द्वादशवर्षं ब्रह्मचर्यं कर्त्तव्यम्। तथाऽऽहोपमन्युः—

'पुनः शूद्रां गुरोर्गत्वा बुद्ध्या विप्रः समाहितः।
ब्रह्मचर्यं स दुष्टात्मा[4] सञ्चरेद् द्वादशीः समाः' ॥

---

१ G reads न वाश्नीयात् for तु नाश्नीयात्  २ Except A. and I. all read ब्रह्मचर्यरक्षणम् for ब्रह्मचर्याचरणम्  ३ All, except A and J read चरेत्तावद्यावदायुष्यसङ्क्षय for ब्रह्मचर्यं सञ्चरेद्यावदायुषम् H also reads the same, but it has the correct reading in the margin. ४ I reads अदुष्टात्मा for स दुष्टात्मा, while except A. and I. all read द्वादशं for द्वादशीः.

इति । अज्ञाने दीर्घतमा आह—

'प्राजापत्यं सान्तपनं सप्तरात्रोपवासनम् ।
गुरोः शूद्रां सकृद् गत्वा चरेद्विप्रः समाहितः' ॥

इति । तत्राप्युभयोरिच्छातः प्रवृत्तौ सान्तपनम् । तया प्रोत्साहितस्य प्राजापत्यम् । आत्मना प्रोत्साहितायां सप्तरात्रोपवास इति । अभ्यासे तु मनुनोक्तं द्रष्टव्यम्—

'चान्द्रायणं वा त्रीन्मासानभ्यसेन्नियतेन्द्रियः ।
हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये' ॥
(म. स्मृ. ११. १०६)

इति । साधारणस्त्रियां गुरुतल्पदोषो नास्तीत्याह व्याघ्रः[1]—

'जात्युक्तं पारदार्यं वा गुरुतल्पत्वमेव च ।
साधारणस्त्रियां नास्ति कन्यादूषणमेव च' ॥

इति । यत्तु नारदेनोक्तम्—

'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा[2] ।
पितृव्य-सखि-शिष्यस्त्री भगिनी तत्सखी स्नुषा ।
दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता ॥
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ।
आसामन्यतमां[3] गत्वा गुरुतल्पग उच्यते' ॥
(ना. स्मृ. १२. ७३–७५)

इति तदेतदकामतोऽभ्यासे कामतः सकृद्गमने च द्रष्टव्यम् । यच्च वसिष्ठेनोक्तम्—

---

१. H. reads नास्ति व्याघ्रवचनात् for नास्तीत्याह व्याघ्र. २ I. reads मातृष्वसा च श्वश्रूश्च for माता मातृष्वसा श्वश्रूः. ३. B. and D read आप्ताम् for आसाम्.

'सखि-सयोनि-सगोत्रा-शिष्यभार्यासु
स्नुषायां गवि गुरुतल्पसमानम्' ।

(व. स्मृ. १. २३)

इति यच्च मनुनोक्तम्–

'गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु ।
सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च' ॥

(म. स्मृ. ११. १७०)

इति यदपि व्याघ्रेण–

'आश्रितस्यापि विदुष आहिताग्नेश्च योगिनः ।
आचार्यस्य च राज्ञश्च भार्यां प्रव्रजितां तथा ॥
नप्त्रीं पुत्रीं च पौत्रीं च सखीं मातुस्तथैव च ।
पितुः सखीं तथा गत्वा गुरुतल्पव्रतं चरेत्' ॥

इति संवर्त्तेनापि–

'पितृव्यदारगमने भ्रातृभार्यागमे तथा ।
गुरुतल्पव्रतं कुर्यान्निष्कृतिर्नान्यथा भवेत्' ॥

(सं. स्मृ. १५८)

इति याज्ञवल्क्येनापि–

'पितृष्वसारं मातुश्च मातुलानीं स्नुषामपि ।

---

१ This Sûtra does not appear in Bombay, Calcutta and Benares editions of the text, but it is found in the MS. copy. For this Sûtra I. reads the following śloka —

'सखी-स्वयोनि-सगोत्रा-शिष्यभार्या-स्नुषासु च ।
कन्यास्वकामतो गत्वा गुरुतल्पसम स्मृत ' ॥.

२. B. D. and H. read गोप्तु for राज्ञः. ३ C. and F. have made several mistakes here. I and J. read धात्री for नप्त्री ४. G. reads भ्रातृजाथागमे and I. भ्रातृस्त्रीगमने for भ्रातृभार्यागमे. ५. The text reads तस्यान्या निष्कृतिर्न च for निष्कृतिर्नान्यथा भवेत्.

मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः' ।
( या. स्मृ. ३. २३२–२३३ )

इति तान्येतानि वचनानि नारदवचनवद्व्यवस्थापनीयानि । यानि तूक्तविषय एव न्यूनप्रायश्चित्तानि चान्द्रायणादीनि तानि सम्बन्धकनीयस्त्वमाश्रित्य योजनीयानि । तच्च सम्बन्धकनीयस्त्वं सुमन्तुना प्रदर्शितम्—

'पितृपत्न्यः सर्वा मातरः । तद्भ्रातरो मातुलाः । तद्भगिन्यश्च मातृष्वसारः । *भगिनीसपत्न्यश्च भगिन्यः । तदपत्यं भागिनेयम् । अतोऽन्यथा सङ्करकारणानि कृत्वा त्याज्याः पतिताश्च भवन्ति'।

इति । अत्रातिदेशिकव्यपदेशदर्शनात् प्रायश्चित्ताल्पत्वं सिद्ध्यति । एतदेवाभिप्रेत्य संवर्त्त आह—

'गुरोर्दुहितरं गत्वा स्वसारं पितुरेव च ।
तस्या दुहितरं चैव चरेत् चान्द्रायणं व्रतम् ॥(१६६)
सनाभिनीं मातुलानीं स्नुषां मातुः सनाभिनीम् ।
गच्छन्नेताः स्त्रियो मोहात् पराकेण विशुद्ध्यति॥(१६७)
सखिभार्यां समारुह्य श्वश्रूं चैव हि मानवः ।

*एतान्येव सूत्राण्याचारकाण्डे ऽन्यथा पठितानि ( अ.२, पृ. ६४ ) द्रष्टव्यानि।

१. Except A. and I. all read सम्बन्धगरीयस्त्वम् for सम्बन्धकनीयस्त्वम्। The former seems to be incorrect. २ Here also all except A. and I. read-गरीयस्त्वं for-कनीयस्त्वं. ३ B and D. read भगिन्यश्च भागिनीसपत्न्यश्च भगिन्य and E. G and J. भगिन्यश्च जननीसपत्न्यश्च भगिन्य ४. Except A. and the text all read स्वसुतां for स्वसारं. ५. The text reads —

मातुलानीं सनाभिं च मातुलस्यात्मजां स्नुषाम् ।.

६ The text reads यता गत्वा for गच्छन्नेताः. ७. For this slôka the text reads —

सखिभार्यां कुमारीं च श्वश्रू वा श्यालिकां तथा ।
स कुर्यात प्राकृत कृच्छ्रं धेनु दद्यात पयस्विनीम् ॥.

अहोरात्रोषितो भूत्वा तप्तकृच्छ्रद्वयं चरेत् ॥ ( १६२ )
कुमारीगमने चैव व्रतमेतत् समादिशेत्' ।( १६१ )
( सं. स्मृ. १९६–१६२ )

इति । सुमन्तुरपि–

'मातृपितृष्वसृ-स्नुषा-भगिनी-भागिनेयी-गो-च-
ण्डालीगमनेषु तप्तकृच्छ्रत्रयं सान्तपनं च' ।[1]

इति । चतुर्विंशतिमतेऽपि–

'भ्रातुश्चैव कनिष्ठस्य भार्यां गत्वा तु कामतः ।
सान्तपनं प्रकुर्वीत कृच्छ्रद्वयमथापि वा ॥[2]
मातुश्च स्वस्त्रियां गत्वा पितृव्यतनयां तथा ।
तप्तकृच्छ्रं प्रकुर्वीत षड्रात्रं तत्सुतासु च ॥[3]
गुरोर्दुहितरं* गत्वा पराकं तु समाचरेत् ।
भागिनेयीं द्विजो गत्वा चरेच्चान्द्रायणं व्रतम् ॥
मातुलस्य† सुतां गत्वा पितुश्च स्वस्त्रियां तथा ।
प्राजापत्यं प्रकुर्वीत हारीतवचनं यथा ॥

---

* इय च गुरोर्दुहिता परेण विवाहिता अविवाहिता वा चेत् तस्या गमने दोषः । नतु स्वभार्यात्वं प्राप्तायाः । गुरुणा दीयमानाया गुरुकन्याया अपि विवाह्यत्वस्यान्यत्राभिधानात् ।

† मातुलसुतापि स्वविवाहिता चेन्न दोष । यद्यपि मातुलकन्यापरिणयनं कैश्चिन्निषिद्धं तथापि दाक्षिणात्याना तन्न दोषावहमिति श्रुतिस्मृत्यनुज्ञातत्वेन बहुभिः प्राचीनैर्निरूपितमित्यल पल्लवितेन ।

---

१ B D. and H read मातृष्वसृसुता-भगिनी- for मातृपितृष्वसृ-स्नुषा-भगिनी २ H. omits the following —

* * * प्रकुर्वीत कृच्छ्रद्वयमथापि वा ॥
मातुश्च स्वस्त्रिया गत्वा * * * * * ।

and J reads सान्तपनं तु कुर्वीत ३ I reads मातुलस्य स्त्रिय for मातुश्च स्वस्त्रियाः

मातुश्च स्वस्त्रियस्यैव भार्यां गत्वा तु कामतः ।
पितृव्यतनयस्यैव सपादं कृच्छ्रमाचरेत् ॥
दौहित्रीं पुत्त्रतनयां चरेच्चान्द्रायणं व्रतम् ।
तत्सुतां च स्नुषां गत्वा पराकं तु समाचरेत् ॥
चरेच्चान्द्रायणं विप्रो गत्वोपाध्याययोषितम् ।
आचार्यस्य पराकं तु बौधायनवचो यथा ॥
सम्बन्धिनः[*] स्त्रियं गत्वा सपादं कृच्छ्रमाचरेत् ।
विधवागमने कृच्छ्रमहोरात्रसमान्वितम् ॥
व्रतस्यागमने कृच्छ्रं सपादं तु समाचरेत् ।
सखिभार्यां समारुह्य ज्ञाति-स्वजनयोषितम् ॥
स कृत्वा प्राकृतं कृच्छ्रं पादकृच्छ्रं ततः पुनः[१] ।
कुमारीगमने विप्रश्चरेच्चान्द्रायणव्रतम् ॥
पतितां तु द्विजो गत्वा तदेव[†] व्रतमाचरेत्' ।

इति । अत्र प्रोक्तेषु सर्वेषु व्रतेषु गौरव-लाघवे परीक्ष्य यथायथं बुद्धिपूर्वा ऽबुद्धिपूर्वा ऽभ्यासाऽनभ्यासादिविषयत्वं योजनीयम् । मूलवचनपठितपितृदारादिव्यतिरिक्तपरदारगमने व्याघ्रोक्तं[२] द्रष्टव्यम्—

'ब्राह्मणो ब्राह्मणीं गच्छेदकामां यदि कामतः ।
कृच्छ्रं चान्द्रायणं कुर्यादर्धमेव प्रमादतः ॥
अर्धमेव सकामायां तप्तकृच्छ्रं सकृद्गतौ ।
अर्धमर्धं नृपादीनां दारेषु ब्राह्मणश्चरेत् ॥

* सम्बन्धिन' उक्तातिरिक्तसम्बन्धवन्तः ।

† 'तदेव' यत्तस्याः पतितायाा उक्तं प्रायश्चित्त तदेवाचरेदिति भावः ।

१ B, D E, G, H and J read पादं कुर्यात् for पादकृच्छ्र, while C. and F. substitute परम् for पुन २ I. reads ब्राह्मोक्त for व्याघ्रोक्त.

एतद् व्रतं चरेत् सार्धं श्रोत्रियस्य परिग्रहे ।
अश्रोत्रियश्चेत् द्विगुणमगुप्तामर्धमेवं[1] च' ॥

इति । कण्वोऽपि—

'शूद्रदारान् गतो[2] विप्रो ह्यतिकृच्छ्रं समाचरेत् ।
चान्द्रायणं विशो राज्ञः समं च[3] ब्राह्मणव्रतम्' ॥

इति । यदि चै ब्राह्मणेनैव चातुर्वर्ण्यप्रसूतासु क्रमेण निविष्टं[4] तदानीं ब्राह्मणस्य ब्राह्मणीगमने यदुक्तं तदेव पादहीनं क्षत्रियादिगमने द्रष्टव्यम् । व्याघ्रवचनात्—

'विप्रेण वै निविष्टाश्चे[5]च्चातुर्वर्ण्यप्रसूतयः ।
क्रमेण पादशो हीनं व्रतं तासु गतश्चरेत्' ॥

इति । अयमेव न्यायः क्षत्रियादिपरिगृहीतास्वपि द्रष्टव्यः[6] । ब्राह्मणभार्यां शूद्रां ब्राह्मणो गत्वा प्राजापत्यं कुर्यात् । वसिष्ठवचनात् ।

"ब्राह्मणश्चेदप्रेक्षापूर्वकं[7] ब्राह्मणदारानभिगच्छेत् निवृत्तधर्मकर्मणः कृच्छ्रः अनिवृत्तधर्मकर्मणोऽतिकृच्छ्रः'[8]।

( व. स्मृ. २१. १६ )

* अप्रेक्षापूर्वं अज्ञानतः । क्वचित् 'निवृत्तधर्मकर्मणोतिकृच्छ्रः अनिवृत्तधर्मकर्मणः कृच्छ्रः' इति दृश्यते । परमिदमसमञ्जसमिव प्रतिभाति ।

'एतद्व्रत चरेत् सार्धं श्रोत्रियस्य परिग्रहे ।
अश्रोत्रियश्चेत् द्विगुणमगुप्तामर्धमेव च' ॥

इति व्याघ्रवचने अनिवृत्तधर्मकर्मण एव अधिकप्रायश्चित्ताभिधानात् ।

१ I. reads अधमेषु च for अर्धमेव च. २ I reads शूद्रदारगतो ३ H. and I. omit च. ४ I reads निर्दिष्ट for निविष्ट ५ I. reads-णैवातिदिष्टा for-ण वै निविष्टा ६. I reads द्रष्टव्यम् for द्रष्टव्य ७. A reads अपेक्षापूर्वं for अप्रेक्षापूर्वकं. ८. The text reads अनिवृत्तधर्मकर्मण कृच्छ्रः निवृत्तधर्मकर्मणो ऽतिकृच्छ्र .

इति। इदमबुद्धिपूर्वे सकृद्गमने। बुद्धिपूर्वे तु द्विगुणम्।

'अर्धमेव प्रमादतः'।

(व्याघ्रवचनम्)

इति लिङ्गात्। ब्राह्मणस्य क्षत्रियादिभार्यागमने यदुक्तं तदेव क्षत्रियादीनां स्वजातिभार्यागमने द्रष्टव्यम्। कुतः?—

'विप्रो नृपस्य भार्यायां यत्करोति समागमे।
तदेव क्षत्रियस्यापि कुर्यादत्रैव सङ्गमे'॥

(प्र. स्मृ. ३. ६१)

इति प्रजापतिधर्मलिङ्गात्। गर्भपर्यन्ते परदारगमने यम आह—

'वर्षे द्वे परदारेषु त्रीणि श्रोत्रियदारके'।

(य. स्मृ. ९.

इति। प्रातिलोम्येन परदारगमने संवर्त्त आह—

'कथञ्चित् ब्राह्मणीं गच्छेत् क्षत्रियो वैश्य एव वा
गोमूत्रयावकाहारो मासार्धेन विशुद्ध्यति॥
शूद्रस्तु ब्राह्मणीं गत्वा कथञ्चित् काममोहितः।
गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति'॥

(सं. स्मृ. १६६-६७)

---

१. I. omits तु. २ The text reads :—

'कथञ्चित् ब्राह्मणीं गत्वा क्षत्रियो वैश्य एव च।
गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति॥
ब्राह्मणी शूद्रसम्पर्के कथञ्चित् समुपागते।
कृच्छ्र चान्द्रायण कुर्यात् पावन परमं स्मृतम्'॥

३. C. and F. omit this and the next one line —

गोमूत्रयावकाहारो मासार्धेन विशुद्ध्यति॥
शूद्रस्तु ब्राह्मणीं गत्वा कथञ्चित् काममोहित ।

इति । एतदत्यन्तव्यभिचारिब्राह्मणीविषयम् । इतरविषये वधस्मरणात् । तथा च वसिष्ठः—

'शूद्रश्चेद् ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा* शूद्रमग्नौ प्रास्येत् । (१) ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां कृष्णखरमारोप्य महापथमनुसंव्राजयेत् । (२) पूता भवतीति विज्ञायते । (३) वैश्यश्चेद् ब्राह्मणीमभिगच्छेत् लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् । (४) ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां गौरखरमारोप्य महापथमनुसंव्राजयेत् । (५) पूता भवतीति विज्ञायते । (६) राजन्यश्चेद् ब्राह्मणीमभिगच्छेत् शरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् । (७) ब्राह्म-

* वीरणैः उशीराङ्कुरैः शूद्रं वेष्टयित्वाग्नौ प्रास्येत् । महापथं राजमार्गं अनुसंव्राजयेत् भ्रामयेदित्यर्थः । इदं च मत्या गच्छतो दण्डरूपं प्रायश्चित्तम् । अमत्या चेत् द्वादशवार्षिकानुवृत्तौ वृद्धप्रचेतसोक्तं द्रष्टव्यम्—

'शूद्रस्य ब्राह्मणीं मोहाद्गच्छतः शुद्धिमिच्छतः ।
पूर्णमेतद्व्रतं देयं माता यस्माद्धि तस्य सा' ॥

इति । 'एतत्' पूर्वोक्तं द्वादशवार्षिकम् । एवमेव क्षत्रियादीनां मत्या ब्राह्मणीमभिगच्छतां वसिष्ठोक्तं प्रायश्चित्तम् । अमत्या तु इदमुक्तमेव द्वादशवार्षिकं पादहान्या वर्णक्रमेण देयम् ।

'पादहान्याऽन्यवर्णासु गच्छतः सार्ववर्णिकम् ।
प्रायश्चित्तमिदं देयमगम्यागमने क्रमात्' ॥

इति वृद्धप्रचेतसोक्तेः ।

१. All, except A. and the text read उपगच्छेत् for अभिगच्छेत्, while B C. D. and F. substitute तु for चेत् २, The text reads समभ्यज्य for अभ्यज्य. ३. I, reads कृष्णखरम् for गौरखरम्.

ण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां रक्तखरमारोप्य महापथमनुसंव्राजयेत्। (८) पूता भवतीति विज्ञायते । ( ९ ) एवं वैश्यो राजन्यायाम् । ( १० ) शूद्रश्च राजन्य-वैश्ययोः' । ( ११ )

( व. स्मृ. २१. १–११ )

इति । स्वैरिणीगमने शङ्ख-लिखितावाहतुः—

'स्वैरिण्यां* वृषल्यां चावकीर्णः सचैलं स्नात उदकुम्भं दद्याद्ब्राह्मणाय । वैश्यायां चतुर्थ-कालाहारो ब्राह्मणान् भोजयेत् । क्षत्रियायां त्रिरात्रोपोषितो यवाढकं दद्यात् । ब्राह्मण्यां त्र्यहमुपोष्य घृतपात्रं दद्यात् ' ।

इति । बन्धकीगमने षट्त्रिंशन्मते प्रायश्चित्तमुक्तम्—

'ब्राह्मणो बन्धकीं† गत्वा किञ्चिद्दद्यात् द्विजातये ।
राजन्यां हि धनुर्दद्याद् वैश्यां गत्वा तु चैलकम् ।।

---

* पतिं हित्वा याऽन्यं पुरुषं गच्छति तस्याः चतुर्थपुरुषपर्यन्त स्वैरिणीति संज्ञा स्मृत्यन्तरवचनेन ।

† 'बन्ध् बन्धने' इत्यस्माद्धातोर्बध्नाति मनोऽत्रेति बन्धकी । या पतिं त्यक्त्वाऽन्यान् पञ्च तदधिकान्वा पुरुषानाश्रयति सा बन्धकीत्ययमत्र विशेषः स्वैरिण्याः । तत्र ब्राह्मणजातीयबन्धकीगमने ब्राह्मणः किंचित् सुवर्णादिकं दद्यात् । राजन्य-वैश्य-शूद्रजातीयबन्धकीगमने धनुर्वस्त्रमुदकुम्भश्च क्रमेण देयः । इदं ब्राह्मणस्यैव प्रायश्चित्तम् । न क्षत्रियादीनाम् ।

---

१. The text substitutes श्वेतखरम् for रक्तखरम् २ H. reads सचैलस्नात and I सचैलस्नात for सचैलं स्नात. ३ I. reads दद्यात् । ब्राह्मणो वैश्याया for दद्याद्ब्राह्मणाय । वैश्याया and -कालाहारी for -कालाहारो.

शूद्रां गत्वा तु वै विप्र उदकुम्भं द्विजातये।
दिवसोपोषितो वा स्याद् दद्याद् विप्राय भोजनम्' ॥

इति। बन्धकीलक्षणं स्मृत्यन्तरेऽभिहितम्—

'चतुर्थे स्वैरिणी प्रोक्ता पञ्चमे बन्धकी भवेत्'।
(य. स्मृ. ९. ३७)

इति। इदं च प्रायश्चित्तं गर्भानुत्पत्तिविषयम्। तदुत्पत्तौ यद्विशेषेण प्रायश्चित्तमुक्तं[1] तदेव तत्र द्विगुणं कुर्यात्। तदाहोशनाः—

'गमने तु व्रतं यत् स्याद् गर्भे तद्द्विगुणं चरेत्'।
(उ. स्मृ. १. ३७)

इति। शूद्रां गर्भमादधतश्चतुर्विंशतिमते विशेष उक्तः—

'वृषल्यामभिजातस्तु त्रीणि वर्षाणि
चतुर्थकालसमये[2] सक्तून् भुञ्जीत'।

इति। गर्भादर्वाक् तु तत्रैवाभिहितम्—

'शूद्राणां हीनजातीनां स्त्रियं गत्वा तु कामतः।
प्राजापत्यं प्रकुर्वीत इष्टिं वा वारुणीं द्विजः' ॥

इति। पुल्कस्यादिगमने संवर्त आह—

'पुल्कसीगमनं* कृत्वा कामतोऽकामतोऽपि वा।
कृच्छ्रं चान्द्रायणं कुर्यात् ततो मुच्येत किल्बिषात्[3] ॥

* अत्रापि कामतः कृच्छ्रचान्द्रायणम्। अकामतः चान्द्रायणमिति हरदत्तादयो बहवः।

'कामतः कृतपापस्य अकामे हीनकं चरेत्'।

इति बृहदङ्गिरसोक्तेः।

---

१ All, except A. and I. read यद्विशेषेण यत् प्रायश्चित्तम् for यद्विशेषेण प्रायश्चित्तम्. २ I. reads चतुर्थकाले सक्तु भुञ्जीत for चतुर्थकालसमये सक्तून् भुञ्जीत. ३. The text reads तस्य पावनं परमं स्मृतम् for कुर्यात् ततो मुच्येत किल्बिषात्.

'नटीं शैलूषकीं चैव रजकीं वेणुजीविनीम् ।
गत्वा चान्द्रायणं कुर्यात् तथा चर्मोपजीविनीम्' ॥
( सं. स्मृ. १९०–१९१ )

इति । यत्तु बृहत्संवर्त्तः—

'रजक-व्याध-शैलूष-वेणुचर्मोपजीविनीः ।
एतास्तु ब्राह्मणो गत्वा चरेच्चान्द्रायणद्वयम्' ॥
(बृ. सं. स्मृ. १. २७)

इति आपस्तम्बोऽपि—

'म्लेच्छी नटी चर्मकारी रजकी बुरुडी तथा ।
एतासु गमनं कृत्वा चरेच्चान्द्रायणद्वयम्' ॥
(आप. स्मृ. २. २६)

इति तदभ्यासविषयम् । यच्च शातातपेन—

'कैवर्त्तीं रजकीं चैव वेणुचर्मोपजीविनीम् ।
प्राजापत्यविधानेन कृच्छ्रेणैकेन शुद्ध्यति' ॥
(शा. स्मृ. ३. ११)

इति । चर्मोपजीविनीं गच्छन्निति शेषः । तद्रेतःसेकात्

---

१. Except A. and I. all read संवर्तेनोक्तम् for बृहत्संवर्तः ; while B. and D. omit यत्तु बृहत्संवर्तः and next line —

रजक-व्याध-शैलूष-वेणुचर्मोपजीविनी ।

२. B. and D. omit this line and the following question ;—

इति । आपस्तम्बोऽपि—

'म्लेच्छी नटी चर्मकारी रजकी बुरुडी तथा ।
एतासु गमनं कृत्वा चरेत् चान्द्रायणद्वयम्' ॥.

३. All, except A. and I. substitute एतच्च for यच्च; while H. reads

प्राङ्निवृत्तिविषयम् । *कापालिकस्त्रीगमने यम आह—

'कापालिकान्नभोक्तॄणां तन्नारीगामिनां तथा।
ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम्' ॥

(य. स्मृ. ५. १२)

इति । जातिभेदेन गर्भाधाने चतुर्विंशतिमतेऽभिहितम्-

'ब्राह्मणीगमने कृच्छ्रं गर्भे सान्तपनं चरेत् ।
राज्ञी गर्भे पराकः स्याद्वैश्यागर्भे त्र्यहाधिकम् ॥
शूद्रागर्भे द्विजः कुर्यात्तद्वचान्द्रायणव्रतम् ।
चण्डाल्यां गर्भमारोप्य गुरुतल्पव्रतं चरेत्' ॥

इति । विधवागमने चतुर्विंशतिमतेऽभिहितम्—

'विधवागमने कृच्छ्रमहोरात्रसमन्वितम् ।
व्रतस्थागमने कृच्छ्रं सपादं तु समाचरेत्' ॥

इति । मुखमैथुने तूशनसोक्तम्—

'यस्तु पुनर्ब्राह्मणो धर्मपत्नीमुखे मैथुनं सेवेत स दुष्यति। (३१) प्राजापत्येन शुद्ध्यति'। (३२)

(उ. स्मृ. २. ३१-३२)

इति । रजस्वलागमने संवर्त्त आह—

'रजस्वलां तु यो गच्छेद् गर्भिणीं पतितां तथा ।
तस्य पापविशुद्ध्यर्थमतिकृच्छ्रो विशोधकः' ॥

( सं. स्मृ. १६३ )

---

* कापालिकाः कपालधारिणो वीरशैवापरपर्याया शैवाः । तज्जातीयां कापालिकीम् । कापालिकास्तावत् सुरा-मांसभोजिनो तामसाचाराः। अत एव तेषामन्नं निन्द्यत्वेनोक्तं यमेन ।

---

१. B. D. E. and H read कृच्छ्रार्धम् for कृच्छ्राब्दम्, while J. reads—
ज्ञानात्कृच्छ्र समुद्दिष्टमज्ञानादैन्दवद्वयम्।

२ B. and D. read विड्गर्भे तु for वैश्यागर्भे, C. and F. read द्विजगर्भे त्र्यहाधिकम् ३. The text reads अतिकृच्छ्र विधीयते for अतिकृच्छ्रो विशोधकः

इति । आपस्तम्बोऽपि—

'उदक्यां यदि गच्छेत ब्राह्मणो मदमोहितः ।
प्राजापत्येन शुद्ध्येत ब्राह्मणानां च भोजनात्' ॥
(आप. स्मृ. २. १३)

इति । चतुर्विंशतिमतेऽपि—

'रजस्वलां द्विजो गत्वा पराकं तु समाचरेत् ।
सान्तपनं द्वितीयेऽह्नि प्राजापत्यं परेऽहनि' ॥

इति । शातातपोऽपि—

'अनुदकमूत्र-पुरीषकरणे [1]श्व-काकस्पर्शने सचैलस्नानं महाव्याहृतिहोमश्च । रजस्वलाऽभिगमने [2]चैतदेव' ।
(शा. स्मृ. १. १९–२०)

इति । वसिष्ठोऽपि—

'*रजस्वलादिव्यवाये शुक्लमृषभं दद्यात् कृष्णलिङ्गम्' ।
(व. स्मृ. ० ० )

इति । मनुरपि—

'अमानुषीषु †[3]गोवर्जमुदक्यायामयोनिषु ।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत्' ॥
(म. स्मृ. ११. १७३ )

---

* अत्र सर्वत्र रजस्वलागमनविषयकाणि वचनानि स्वस्त्रीविषयकाणीति ध्येयम् । तत्रतत्रोक्तं प्रायश्चित्तं तस्यामेव गमने कर्तव्यत्वेनोपदिष्टं भवति । परस्त्रियां रजस्वलाया गन्तुः परस्त्रीगमनविषयकं रजस्वलाविषयकं चेति प्रायश्चित्तद्वयम् ।

† गोगमनस्य प्रायश्चित्ताधिक्याम्नानात् 'गोवर्जम्' इत्युक्तम् ।

१ I. reads श्व-पाक- for श्व-काक- २. I. reads चैव तदेव for चैतदेव.
३ The text reads पुरुष. for गोवर्जम्

इति। गौतमोऽपि—

'उदक्या गमने त्रिरात्रम्'।

( गौ. स्मृ. २४. ३२ )

इति। शङ्ख-लिखितावपि—

'रजस्वला-[१]ऽवधूतादिगमने त्रिरात्रो-
पवासो घृतप्राशनं च कुर्यात्'।

इति। अत्र यानि ह्रास-वृद्धियुतानि तान्युभयेच्छाऽन्यतरेच्छादिविषयत्वेन व्यवस्थापनीयानि। पितृष्वसृसुतादिविवाहे प्रायश्चित्तमाह सुमन्तुः—

'पितृष्वसृसुतां मातुलसुतां मातृसगोत्रां
समानार्षेयीं च[२] विवाह्य चान्द्रायणं
चरेत्। परित्यज्य[३] चैनां बिभृयात्'।

इति। शातातपोऽपि—

'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत्'॥

(शा. स्मृ. ३. २३)

इति। बौधायनोऽपि—

'सगोत्रां चेदमत्योपगच्छेत् मातृवदेनां[४] बि-
भृयात्। (३७) प्रजातां[५] चेत् कृच्छ्रपादं[६]

---

१. G. reads रजस्वलावधुनां गमने for रजस्वलाऽवधुतादिगमने २ C. G. and I. omit च. ३ H. reads परित्यज्यैनामन्यां बिभृयात्, while B and D. read परित्यज्यैनां बिभृयात् ४. The text reads भ्रातृवत् for मातृवत्. ५. B. D. and G read प्राजापत्यं चरेत्, C. E. F. and H. प्रज्ञाता चेत् and A and I. प्रज्ञाता चेत् for प्रजाता चेत् ६ The text substitutes कृच्छ्राब्द-पाद for कृच्छ्रपाद.

चरित्वा—यन्म आत्मनो मिन्दाभूत् पुनर-
ग्निश्चक्षुरदादिति एताभ्यां जुहुयात्' ।
(बौ. स्मृ. २. १. १३७-३८)

इति । ननु—पितृष्वसृसुता-मातुलसुतयोर्विवाहस्य तत्प्र-करणेऽङ्गीकृतत्वादत्र प्रायश्चित्तविधानं विरुद्धम्—इति चेत् । मैवम् । आसुरादिविवाहोढासुतायाः सापिण्ड्यानिवृत्त्या वि-वाहानङ्गीकारेण प्रायश्चित्तस्य तद्विषयत्वात् । ननु— गुरुत-ल्पगस्य पूर्वोदाहृतेभ्यो व्रतेभ्योऽन्यान्यपि कानिचिद्व्रतानि स्मर्यन्ते । तत्राङ्गिराः—

'महाव्रतं *चरेद्वाऽपि दद्यात् सर्वस्वमेव वा ।
गुर्वर्थे वा मृतो युद्धे मुच्यते गुरुतल्पगः' ॥
(अं. स्मृ. ६. १३)

इति । सुमन्तुरपि—

'गुरुदारगामी संवत्सरं कण्टकिनः† शाखां

---

* महाव्रतं द्वादशवार्षिकम् । तच्च—

'अधःशायी जटाधारी पर्ण-मूल-फलाशनः ।
एककालं समश्नीत वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुद्ध्यन्ति महापातकिनस्त्विमे' ॥

इत्यनेनोक्तम् ।

† कण्टकिनो वृक्षस्य शाखाम् । त्रिषवणः त्रिकालस्नायी । क्वचित् 'कण्टकिनी' इति 'त्रिषवणी' इति च पठ्यते ।

---

१ I reads निन्द्राभूत् for मिन्दाभूत्. The former is quite incorrect २. C. and F read -विवाहोक्त तयोरा निवृत्त्या for -विवाहोढासुतायाः सापिण्ड्यानिवृत्त्या and for the same E. and I read -विवाहोत्पन्नयोः सापिण्ड्यानिवृत्त्या J. differs from E. and I. in substituting -उत्पन्नायाः for -उत्पन्नयोः. ३ I. read विवाहाङ्गीकारेण. ४ B. D G H. and J substitute गुर्वर्थे for गुर्वर्थे. ५ C. and F read कण्टकानि and E. and I. कण्टकिनी for कण्टकिनः.

परिष्वज्याधःशायी त्रिषवणो भैक्षाहारः पूतो
भवतीति। अश्वमेधावभृथस्नानेन वा'।

इति। एतान्यपि पूर्वोक्तनीत्या गुरुतारतम्यं तत्पत्नीतारतम्यं तत्संयोगतारतम्यं चोपजीव्य व्यवस्थापनीयानि ॥१२-१३॥

पश्वादिगमनस्य पितृदारादिगमनादर्वाचीनत्वेन तत्राल्पं प्रायश्चित्तमाह—

पशु-वेश्यादिगमने महिष्युष्ट्री-कपीस्तथा।
खरीं च सूकरीं गत्वा प्राजापत्यव्रतं चरेत् ॥१४॥

इति। पशुरश्वादिः। वेशो भृतिः। तां जीवनहेतुतयाऽर्हतीति वेश्या। यद्यपि कपी सूकरी चाल्पदेहत्वान्न मनुष्यैर्गन्तुं योग्या तथापि केषुचिद्देशविशेषेषु प्रौढदेहयोरपि तयोः सद्भावात् तदुपगमनविषयमिदं व्रताभिधानम्। वेश्यायां गर्भात् प्रागिदमवगन्तव्यम्। गर्भे तु कण्व आह—

'प्रसूतो यस्तु वेश्यायां भैक्ष्ययुङ् नियतेन्द्रियः।
शतसाहस्रमभ्यस्य सावित्रीमेति शुद्धताम्' ॥

इति। चतुर्विंशतिमतेऽपि पशुगमने प्राजापत्यमुक्तम्—

'सर्वेषां पशुजातीनां गमने कृच्छ्रमाचरेत्।
शुनीं चैव द्विजो गत्वा *अतिकृच्छ्रं समाचरेत्' ॥

---

* क्वचित् 'जातिकृच्छ्रम्'—इति पठ्यते तथापि नायं कृच्छ्रविशेषः कुत्राप्युक्तः।

---

१ B and D read त्रिषवणी and I त्रिषवण- २ B, D and I substitute वा for च ३ H substitutes अर्वाचीनत्वम् for अर्वाचीनत्वेन and omits तत्र I. reads अल्पत्वेन for अर्वाचीनत्वेन. ४ I reads पशु-वेश्याभि- for पशु-वेश्यादि- ५ B, D E F H and J read महिष्युष्ट्र कपी, and I महिष्युष्ट्री कपी for महिष्युष्ट्री-कपीः ६ B D, and H substitute खरादि and G खर्यादि for अश्वादि ७ G substitutes भज्जति for भृति. ८ B C D E G H and J substitute सभाव्यत्वात् for सद्भावात् ९ I reads एव शुद्ध्यति for एति शुद्धताम्.

इति । वेदविदस्तु तिर्यग्गमने कूष्माण्डैर्मन्त्रैर्होमः । तदाह गौतमः—

'अमानुषीषु गोवर्जस्त्रीकृते कूष्माण्डैर्घृतहोमः' ।

( गो. स्मृ. २३. ४० )

इति ॥ १४ ॥

पश्वन्तरेभ्यो गोः प्रशस्तत्वात्तदभिगमनेऽधिकं प्रायश्चित्तमाह—

*गोगामी च त्रिरात्रेण गामेकां ब्राह्मणे ददन् ।

इति । शुद्ध्यतीति शेषः । एतच्च सकृद्गमने रेतःसेकात् प्राङ्निवृत्तौ द्रष्टव्यम् । रेतःसेकान्ते तु सकृद्गमने संवर्त्त आह—

'नरो गोगमने कुर्यात् कृच्छ्रं सान्तपनं तथा' ॥

( सं. स्मृ. १६९ )

इति । आवृत्तौ जाबालिराह—

'तप्तकृच्छ्रं तु गां गत्वा परदारांस्तथैव च ।
इतरेषां पशूनां तु कृच्छ्रपादो विधीयते' ॥

इति । बहुक्षीरादिगुणवत्यां गवि आवृत्तौ चतुर्विंशतिमते दर्शितम्—

'नरो गोगमनं कृत्वा चरेच्चान्द्रायणव्रतम्' ।

---

* धरणीधरस्त्विदं पूर्वार्धमुत्तरार्धत्वेन उत्तरार्धं च पूर्वार्धत्वेन पठित्वा सकृद्गमनविषयत्वेन व्याख्यातवान् ।

---

१ I reads गोवर्जं स्त्रीषु गमने for गोवर्जस्त्रीकृते. २ H. reads परदारान् for परदारान् and for the same C and F. read परदारां. ३ H. reads स्वर गोगमन for नरो गोगमन.

इति। तत्रैव विषयेऽत्यन्ताभ्यासे विष्णुराह—

'-कुर्यात्।(१) परदारगमने गोव्रतम्*।
(२) गोगमने च।(३) तिर्यग्योनावाकाशे
ऽप्सु दिवा गोयाने च सवासाः स्नानमाचरेत्'।
(वि. स्मृ. ५३. १-४)

इति। वेदविद्विप्रसम्बन्धिन्यां गवि गुणवत्यामत्यन्ताभ्यासे शङ्ख-लिखितावाहतुः—

'तिर्यग्योनिषु गोवर्जं सचैलं स्नातो यवसाहारं गोभ्यो दद्यात्। गोष्ववकीर्णः संवत्सरं प्राजापत्यं चरेत्'।

इति। यथोक्तविशेषणविशिष्टायां सवनस्थविप्रसम्बन्धिन्यां गवि गौतम आह—

'सखि-सयोनि-सगोत्रा-शिष्यभार्यासु स्नुषायां गवि च तल्पसमः।(१०) अवकर इत्येके'।(११)
(गौ. स्मृ. २४. १०-११)

इति। गोसंयुक्तशकटादिवाहनेऽवस्थाय स्त्रियं भुञ्जानस्य यम आह—

'यदि गोभिः समायुक्तं यानमारुह्य वै द्विजः।
मैथुनं सेवते तत्र मनुः स्वायम्भुवोऽब्रवीत्॥

* गोव्रतं यमेनोक्तमत्रानुसन्धेयम्

१. The text inserts च after परदारगमने २ The text reads पुस्यर्योनौ for तिर्यग्योनौ ३. I omits च ४ B D. and I. read सखि सयोनि-सगोत्र- ५ I. reads गुरुतल्पसम। अवकीर्ण इत्येके for तल्पसम.। अवकर इत्येके ६. H. reads वाहनावस्थाया for वाहनेऽवस्थाय; while G. reads वाहने वय-स्थास्त्रिय ७. G. reads तच्च for तत्र.

त्रिरात्रं क्षपणं कृत्वा सचैलं स्नानमाचरेत् ।
गोभ्यो यवाढकं दत्त्वा घृतं प्राश्य विशुद्धयति' ॥
(य. स्मृ. ९ ३–४)

इति । मनुरपि—
'मैथुनं तु समासेव्य पुंसि *योषिति वा द्विजः ।
गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्' ॥
( म. स्मृ. ११. १७४ )

इति ॥

पूर्वं महिष्या गमने यत् प्राजापत्यमुक्तं तदभ्यासविषयम् । सकृद्गमने त्विदानीमाह—

**महिष्युष्ट्री-खरीगामी त्वहोरात्रेण शुद्धयति ॥१५॥**

इति । महिषी च उष्ट्री च खरी च, ता गच्छतीति महिष्युष्ट्री-खरीगामी । स एकोपवासेन शुद्धयति इति ॥ १५ ॥

अथोत्तमजातिप्रसूताया नार्याश्चण्डालसम्पर्के प्रायश्चित्तं वक्तव्यम् । तस्य चापद्विषयत्वमभिप्रेत्यापद्विशेषानुवादेन तत्र तावत् पुरुषकर्तव्यमाह—

**डामरे[2] समरे वाऽपि दुर्भिक्षे वा जनक्षये ।**
**बन्दिग्राहे भयार्त्तौ वा सदा स्वस्त्रीं निरीक्षयेत् ॥१६॥**

---

* 'पुंसि तस्य मुखादौ । योषिति स्वयोषित्यपि'–इति सर्वज्ञनारायणः । 'यत्र देशे क्वापि पुरुषे मैथुनं सेवित्वा स्त्रियां + + मैथुन च सेवित्वा'–इति कुल्लूकभट्टः । 'पुंसि गुदादिषु योषिति स्वयोनिषु'–इति राघवानन्दः । पुंसि योषिति पुंसो योषितश्चोपर्यन्यथा सह मैथुनं समाप्येत्यर्थः'–इति नन्दनः ।

---

१. Except A and the text all read समारोप्य for समासेव्य २ H I. K. and L. read भमरे and C. and F डमरे for डामरे, but H gives a marginal reading डामरे, while K and L. substitute च for वा.

इति । डामरः परसैन्यकृतोपद्रवादिः । समरः सेनयो-र्युद्धम् । दुर्भिक्षं वृष्ट्यभावादिना अशनाभावः । जनक्षयः मारिकादेवतानिमित्तैः प्रचुरैः रोगविशेषैः बहूनां प्रजानां मरणम् । बन्दिग्राहो बलात्कारेण स्त्रीणामपहारः* । भया-र्त्तिश्चोर-राजादिकृत उपद्रवः । एवंविधासु आपत्सु पुरुषः स्वप्राणरक्षार्थं पलायमानो न स्त्रियमुपेक्षेत । किन्तु तस्या अपि यथा रक्षा भवति तथा निरीक्षणं कुर्यात् ॥ १६ ॥

यदा पुरुषो रक्षितुमशक्तः तदानीमापन्नायाः स्त्रियाः कथ-ञ्चिच्चण्डालसम्पर्के किं कर्त्तव्यमित्यत आह—

चण्डालैः† सह सम्पर्कं या नारी कुरुते ततः ।
विप्रान् दश[3] वरान् कृत्वा स्वकं दोषं प्रकाशयेत्॥१७॥
आकण्ठसम्मिते कूपे गोमयोदककर्दमे ।
तत्र स्थित्वा निराहारा त्वहोरात्रेण[4] निष्क्रमेत्॥१८॥
सशिखं वपनं कृत्वा भुञ्जीयाद् यावकौदनम् ।
त्रिरात्रमुपवासित्वा त्वेकरात्रं जले वसेत्॥१९॥
शंखपुष्पीलतामूलं पत्रं वा[5] कुसुमं फलम् ।
सुवर्णं पञ्चगव्यं च क्वाथयित्वा पिबेज्जलम् ॥२०॥

* युद्धपराजितानां स्त्रियोऽपहृत्य बलात् दासीकरणं बन्दिग्राहः। कारागारनिक्षेप इति केचित् ।

† 'चण्डालैः इति बहुवचनं श्वपचाद्यभिप्रायेण'-इति धरणीधरः ।

१ H. and J read अमर and C. and F. डमेर for डामर. २. B. D. E. F G. H and J. read वाद्यादि for उपद्रवादि and for the same C and F. read भयादि. ३ Except A G and I. all read दशावरान् for दश वरान्, while C. and I दश परान् ४ M reads एकरात्रेण for अहोरात्रेण. ५. M. reads च for वा.

एकभक्तं चरेत् पश्चाद् यावत् पुष्पवती भवेत् ।
व्रतं चरति तद् यावत् तावत् संवसेते बहिः ॥ २१ ॥

इति । वरान् 'वेद-वेदाङ्गवित्' (प. स्मृ.) इत्यादिप्रोक्त-गुणविशिष्टान् । तादृशान् दशसङ्ख्याकान् विप्रान् परिषदं कृत्वा तेषामग्रे स्वकीयं पापमवञ्चनेन निवेदयेत् । यद्वा 'चातुर्वेद्य' ( प. स्मृ. ) इत्यादिवचने प्रोक्तानां दशानां विप्राणां अग्रे निवेदयेत् । ततस्तैरनुज्ञाता व्रतमेवं समाचरेत् । कण्ठप्रमाणं कूपं खात्वा सोदकेन गोमयेन तमापूर्य तत्रैकं दिनं निरन्तरमवस्थायोपोष्य परेद्युर्निर्गच्छेत् । निर्गत्य च यावकान्नं भुञ्जीत । ततो दिनत्रयमुपोष्य चतुर्थं दिनमाकण्ठजले स्थित्वा पञ्चमे शङ्खपुष्पीमूलादिभिः पञ्चभिः सुवर्णेन पञ्चगव्येन च क्वथितं जलं पिबेत् । ततः षष्ठदिनमारभ्य यावदृतुदर्शनमेकभक्तं दिने* चरेत् । व्रतदिनेषु न गृहेऽवतिष्ठेत । किन्तु बहिरेव निवसेत् ॥ १७-१८-१९-२०-२१ ॥

---

* 'शङ्खपुष्पी' शङ्खिनीति सर्वत्र प्रसिद्धा । भाषायां 'शङ्खाहुली, सांखवेल' इति च ख्याता । परमियं चोरपुष्पीत्यभिधीयते न शङ्खपुष्पीति । यथाहामरसिंहः—

'शङ्खिनी चोरपुष्पी स्यात् केशिनी' ।

( ना. लिं. २. ४. १२६ )

इति । तस्मात् चोरपुष्पी शङ्खपुष्पी चैकैव वा भिन्ना वेति सुधीभिर्विचारणीयम् ।

---

१ I. reads संवर्तते for संवसेत्. २ A. and I. read परान् for वरान् while G. and J. read दशावरान for the same. ३. B. D E and H. read शेषं वचनेन for पापमवञ्चनेन, while J. reads पापवञ्चनेन ४ C. and F. omit उपोष्य. ५. B. D. G. H. and J. read तिष्ठेत् for निवसेत्

यथोक्तव्रताचरणानन्तरकर्तव्यमाह—

प्रायश्चित्ते ततश्चीर्णे कुर्याद् ब्राह्मणभोजनम्* ।
गोद्वयं दक्षिणां दद्याच्छुद्धिं[1] पाराशरोऽब्रवीत् ॥२२॥

इति । अयं च दक्षिणाशिरस्को व्रतविशेषः स्मृत्यन्तरेऽपि[2] दर्शितः—

'चण्डालेन तु सम्पर्कं यदि गच्छेत् कथञ्चन ।
सशिखं वपनं कृत्वा भुञ्जीयाद् यावकौदनम् ॥
त्रिरात्रमुपवासः स्यादेकरात्रं जले वसेत् ।
आत्मना सम्मिते कूपे गोमयोदककर्दमे ॥
तत्र स्थित्वा निराहारा त्रिरात्रं तु ततः क्षिपेत् ।
शङ्खपुष्पीलतामूलं पुष्पं वा कुसुमं फलम् ॥
क्षीरं सुवर्णसम्मिश्रं क्वाथयित्वा ततः पिबेत् ।
एकभक्तं चरेत् पश्चात् यावत् पुष्पवती भवेत् ॥
बहिस्तावच्च निवसेद् यावच्चराति सा व्रतम् ।
प्रायश्चित्ते ततश्चीर्णे कुर्याद् ब्राह्मणभोजनम् ॥
गोद्वयं दक्षिणां दद्यात् शुद्धिं[3] स्वायम्भुवोऽब्रवीत्' ॥
(अं. स्मृ. ९. ११-१७)

इति तदेतदकामकृतविषयम् । कामकृते तु सकृद्गमने ऋष्यशृङ्ग आह—

'सम्पृक्ता† स्यादथान्त्यैर्या सा कृच्छ्राब्दं समाचरेत्' ।

---

* अत्र ब्राह्मणसङ्ख्या नोक्ता तथापि 'गोद्वयं दक्षिणां दद्यात्' इत्युक्तेर्द्वावेव ब्राह्मणाविति प्रतीयते । धरणीधरोऽप्येवमेव मन्यते । 'पाराशरोऽब्रवीत्' इति पूर्वोक्तरीत्या पुराकल्पे वृद्धपराशरो यदुक्तवान् तस्यैवायमनुवाद इति मन्तव्यम् ।

† 'सम्पृक्ता' सङ्गता । इदमप्यमत्येति बोध्यम् ।

---

१. K. L and M. read शुद्धि for शुद्धिं. २. B. D G. and H. omit अपि.
३. B. D. and H. read शुद्धि, for शुद्धिं.

इति । यद्याहितगर्भाया एव पश्चाच्चण्डालादिव्यवायः तदा तेनैव विशेष उक्तः—

'अन्तर्वत्नी तु युवतिः सम्पृक्ता यान्त्ययोनिना[1] ।
प्रायश्चित्तं न सा कुर्याद् यावद् गर्भो न निःसृतः ॥
न प्रचारं गृहे कुर्यान्न चाङ्गेषु प्रसाधनम् ।
न शयीत समं भर्त्रा न च भुञ्जीत बान्धवैः ॥
प्रायश्चित्तं* गते गर्भे विधिं कृच्छ्रादिकं चरेत् ।
हिरण्यमथ वा धेनुं दद्याद्विप्राय दक्षिणाम्' ॥

इति । यदा तु कामतोऽन्त्यजसम्पर्कं[2] करोति तदोशनसोक्तं द्रष्टव्यम्—

'अन्त्यजेन तु सम्पर्के भोजने मैथुने कृते ।
प्रविशेत् सम्प्रदीप्ताग्नौ मृत्युना सा विशुद्ध्यति' ॥
(उ. स्मृ. ९. ६)

इति ॥ २२ ॥

रेतःसेकान्तस्य चण्डालगमनस्य प्रायश्चित्तमभिधाय रेतःसेकात् प्राङ्निवृत्तौ† प्रायश्चित्तमाह—

**चातुर्वर्ण्यस्य नारीणां कृच्छ्रं चान्द्रायणं व्रतम्[3] ।**
**यथा भूमिस्तथा नारी तस्मात्तां न तु दूषयेत् ॥२३॥**

---

* अन्त्यजसम्पर्केऽपि पूर्वधृतगर्भस्य नाशुचित्वम् ।
'न गर्भदोषस्तत्रास्ति संस्कार्यः स यथाविधि' ।
इति वक्ष्यमाणस्मृत्यन्तरवचनात् । 'गर्भे गते' उदरान्निर्गते सति प्रायश्चित्तं कर्तव्यम् । पूर्वं कृते सति गर्भनाशसम्भवात् ।

† इदमेव केचन कामतो गमने इति मन्यन्ते । तन्न युक्तमिति प्रतिभाति । यतो रेतःसेकस्यैव स्त्रीसङ्गे प्राधान्यात् तस्यैव दोषबाहुल्याच्च रेतःसेकासेकयोः प्रायश्चित्ताल्पत्व-बहुत्वयोर्वक्तुमुचिततत्वादिति सुधियो विदांकुर्वन्तु ।

---

१. B and D. read-आतिना for योनिना. २ C E. F G. I. and J. read अत्यन्तसम्पर्कं for अन्त्यजसम्पर्कं ३ I. reads स्मृतम् for व्रतम्.

इति। चण्डालगमनस्यात्यन्तजुगुप्सितत्वाद् योषितः परित्याग एव। न तु व्रतेन शुद्धिरित्याशङ्क्य तामाशङ्कां निवर्त्तयितुं भूमिदृष्टान्तमुपन्यस्यति[1]। भूमिर्हि चण्डालादिवासेनोपहताऽपि खनन-लेपनादिभिः संशोध्य पुनः स्वीक्रियते। एवं योषिदपि चरितव्रता पुनः स्वीकरणीया। न तु तां दूषयेत्। न परित्यजेदिति यावत्। यद्यप्यत्र चातुर्वर्ण्यस्येति सामान्येनाभिहितं तथाप्येतत् ब्राह्मणीव्यतिरिक्ताविषये सङ्कोचनीयम्। ब्राह्मण्याः[2] संवर्त्तेन विशेषाभिधानात्—

'चण्डालं पुल्कसं म्लेच्छं[3] श्वपाकं पतितं तथा।
ब्राह्मण्यकामतो गत्वा चान्द्रायणचतुष्टयम्॥
रजक[4]-व्याध-शैलूष-वेणुचर्मोपजीविनः।
ब्राह्मण्येतान् यदा गच्छेदकामादैन्दवत्रयम्[5]'॥
(सं. स्मृ. १६७–१६८)

इति॥ २३॥

आपत्काले चण्डालवशंगताया नार्या रेतःसेकासेकयोः प्रायश्चित्तमभिहितम्। इदानीं आपन्नाया एव बलात् शूद्रादिसम्पर्के सति रेतःसेकासेकयोः प्रायश्चित्तद्वयमाह—

**बन्दिग्राहेण या भुक्ता[6] हत्वा बद्ध्वा बलाद्भयात्।**
**कृत्वा सान्तपनं कृच्छ्रं शुद्ध्येत् पाराशरोऽब्रवीत्॥२४॥**
**सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्मभिः।**
**प्राजापत्येन शुद्ध्येत ऋतुप्रस्रवणेन च॥२५॥**

---

१ I. reads भूमि दृष्टान्तम् for भूमिदृष्टान्तम्. २ I. reads ब्राह्मण्यां for ब्राह्मण्याः. ३ The text reads पुक्कस चैव for पुल्कस म्लेच्छं ४ This śloka does not appear in the text. ५ I. reads-द्वयम् for-त्रयम्. ६. M. reads भुक्त्वा for भुक्ता, G. हत्वा for हत्वा and K. and L. बद्धा for बद्ध्वा.

इति। रज्ज्वादिभिर्बध्वा कशादिभिस्ताडयित्वा भयमुत्पाद्य या बलाद्भुक्ता भवति सा सान्तपनं कृत्वा शुद्ध्येदिति पराशरस्य मतम्। प्रासादमारुह्य प्रेक्षते इत्यस्मिन्नर्थे 'प्रासादात् प्रेक्षते' इति यथा पञ्चमी तथा भयमुत्पाद्येत्यस्मिन्नर्थे भयादिति पञ्चमी द्रष्टव्या। द्वितीयवचनेऽपि हत्वा बध्वेत्यनुषञ्जनीयम्। ब्राह्मण्याः प्रातिलोम्येन द्विजातिव्यवाये संवर्त्त आह—

'ब्राह्मण्यकामाद् गच्छेत्तु क्षत्रियं वैश्यमेव वा।
गोमूत्रयावकैर्मासात् तदर्धाच्च विशुद्ध्यति'॥
(वृ. सं. स्मृ. ९. ३०)

इति। षट्त्रिंशन्मतेऽपि—

'ब्राह्मणी क्षत्रिय-वैश्यसेवायामतिकृच्छ्रं* कृच्छ्रातिकृच्छ्रौ[1] चरेत्। क्षत्रिययोषितो ब्राह्मण-राजन्य-वैश्यसेवायां कृच्छ्रार्धं प्राजापत्यमतिकृच्छ्रं च। वैश्ययोषितो ब्राह्मण-राजन्य-वैश्यसेवायां कृच्छ्रपादः कृच्छ्रार्धं प्राजापत्यं च। शूद्रायाः शूद्रसेवने प्राजापत्यम्। ब्राह्मण-राजन्य-वैश्यसेवायामहोरात्रं त्रिरात्रं कृच्छ्रार्धम्'।

* ब्राह्मण्या ब्राह्मणगमने पूर्वत्र व्याघ्रोक्तं द्रष्टव्यम्। ब्राह्मणी क्षत्रियसेवायामतिकृच्छ्रं वैश्यसेवायां कृच्छ्रातिकृच्छ्रौ चरेदिति भावः। एवमेव क्षत्रिययोषित् वर्णक्रमेण कृच्छ्रार्धं प्राजापत्यमतिकृच्छ्रं च चरेदिति योजनीयम। नात्र वर्णत्रयस्य द्विजातेः स्त्रियाः शूद्रसेवने प्रायश्चित्तमुक्तम्। तस्य दोषबाहुल्यात् अन्यत्राभिधानाच्च।

१. I. reads कृच्छ्रातिकृच्छ्रं for कृच्छ्रातिकृच्छ्रौ.

इति। यदा त्वाहितगर्भैव पश्चात् शूद्रादिभिर्व्यभिचरति तदा गर्भपातशङ्कया प्रसवोत्तरकाले एव प्रायश्चित्तं कुर्यात्। तथा च स्मृत्यन्तरे—

'अन्तर्वत्नी तु या नारी समेताऽऽक्रम्य* कामिना।
प्रायश्चित्तं न कुर्यात् सा यावद्गर्भो न निःसृतः॥
जाते गर्भे व्रतं पश्चात् कुर्यान्मासं तु यावकम्।
न गर्भदोषस्तत्रास्ति संस्कार्यः स यथाविधि'॥
(शा. स्मृ. ३. ७–८)

इति॥ २४–२५॥

योषित्कृतापराधेन न केवलं तस्याः प्रायश्चित्तम्। किन्तु तद्भर्तुरपीत्याह—

**पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत्।**
**पतितार्धशरीरस्य निष्कृतिर्न विधीयते॥ २५॥**

इति। यस्य विप्रस्य ब्राह्मण्यादिषु चतसृषु भार्यासु अन्यतमा या काचित् सुरां पिबेत् तस्य विप्रस्य स्त्री-पुंसद्वयात्मकं यत् शरीरं तस्य शरीरस्यार्धं स्त्रीरूपं पतति। स्त्रिया अर्धशरीरत्वं† श्रुतिप्रसिद्धम्।

---

* कामिना पुरुषेण आक्रम्य बलात्कारेण भुक्ता इति व्याख्येयम्।

† स्त्रियास्तावत् पुरुषशरीरस्य वामार्धत्वेन सर्वत्र प्रसिद्धिः। सा च संसारयात्रायां स्त्री-पुरुषयोरुभयोरपि एकरूपत्वेन वर्तनात् स्त्रीपुरुषात्मकमेकमेव शरीरम्। स्त्रियाः पुरुषसाहाय्येनैव यात्रानिर्वहणात् गौणत्वम्। यथा शरीरे वामाङ्गस्य गौणत्वं तथा स्त्रिया अपि गौणत्वात् सा वामाङ्गत्वेनाभिधीयते। इदं चाभिधानं सर्गादौ सिसृक्षोर्ब्रह्मणः शरीरं द्विधा भूत्वा ताभ्यां रूपविभागाभ्यां स्वायंभुवो मनुः शतरूपा च सम-

---

१ I. reads कामिता for कामिना.

'अर्धो वा एष आत्मनो यत् पत्नी' ।

इति । तत्र पतितस्यार्धशरीरस्य स्त्रीरूपस्य सुरापानप्रोक्तव्रतेतव्यतिरिक्तेन स्वल्पव्रतेन निष्कृतिः परिशुद्धिर्न विद्यते । किन्तु सुरापानव्रतमेव तया कार्यमित्यर्थः । यद्वा पतितं स्त्रीरूपमर्धशरीरं यस्य पुरुषस्यासौ पतितार्धशरीरः । तस्य स्वयं सुरामपिबतोऽपि भार्याकृतापराधेन निष्कृतिः परिशुद्धिः कर्माधिकारलक्षणा न विद्यते । अतस्तदधिकारसिद्ध्यर्थं तेन प्रायश्चित्तमाचरितव्यम् । एतदेवाभिप्रेत्य मनु-वसिष्ठाभ्यामेतदेव वचनं पठितम् । योषित्कृतापराधेन पुरुषस्य यथा प्रत्यवायः तथा पुरुषानुष्ठितधर्मेण योषितो निष्कृतिर्भविष्यतीति न शङ्कनीयम् । यतो याज्ञवल्क्य आह—

'पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ।
इहैव सा शुनी गृध्री सूकरी चोपजायते' ॥

( या. स्मृ. ३. २५६ )

---

भवदिति पौराणीं कथामाश्रित्य प्रवृत्तमिति प्रतिभाति । यथाऽऽहुः पौराणिकाः—

'एवं युक्तकृतस्तस्य दैवं चावेक्षतस्तदा ।
कस्य रूपमभूद् द्वेधा यत् कायमभिचक्षते ॥
ताभ्यां रूपविभागाभ्या मिथुनं समपद्यत ।
यस्तु तत्र पुमान् सोऽभून्मनुः स्वायम्भुवः स्वराट् ॥
स्त्री याऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः ।
तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे' ॥

( भाग. ३. १२. ५१–५३ )

इति । श्रुतिरप्येवमेव स्त्रिया अर्धशरीरत्वमाह ।

---

१. C F. and H omit व्रत-. २. Except A and I all read तदेव for एतदेव.

इति । वसिष्ठोऽपि–

'या ब्राह्मणी[1] सुरां पीतवती[2]
न तां देवाः पतिलोकं नयन्ति ।
इहैव सा भ्रमति[3] क्षीणपुण्या
आस्योल्का भवति शुक्तिका वा[4]' ॥
(व. स्मृ. २१. ११)

इति ॥ २६ ॥

पतितार्धशरीरेण पुरुषेण यत् कर्त्तव्यं प्रायश्चित्तं तदाह–

**गायत्रीं जपमानस्तु कृच्छ्रं सान्तपनं चरेत् ।**

इति । जपमान इति[5] वर्त्तमानप्रयोगात् यावद्व्रतसमाप्तिस्तावज्जपः कर्त्तव्य इत्यवगम्यते ॥

सान्तपनस्यानेकधा भिन्नत्वादत्रविवक्षितं सान्तपनविशेषं दर्शयति–

***गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥२७॥**
**एकरात्रोपवासश्च[6] कृच्छ्रं सान्तपनं स्मृतम् ।**

इति । अत्र द्विरात्रं सप्तरात्रं चेति द्विविधं सान्तपनं निर्दिश्यते । तच्चोभयं प्रायश्चित्तकाण्डप्रथमाध्याये याज्ञवल्क्यवचनद्वयोदाहरणेन विशदीकृतम् ॥ २७ ॥

---

* 'एकैकं प्रत्यहं पिबेत्' इति जाबालवचनात् गोमूत्रादिकमेकैकदिने पिबेत् । अन्ते चैकोपवासः ।

---

१. The text inserts च after ब्राह्मणी २ L. reads पिबती for पीतवती and the text सुरापी for सुरां पीतवती. ३. The text reads चरति for भ्रमति. ४. All, except H and the text read च for वा, the text renders this quotation in the form of a Sûtra. ५ B. and D. substitute इह for इति. Also they insert another इह after वर्तमान-; while B. D G and H. read -प्रयोगवशात् for -प्रयोगात् ६ H reads स्यात् for च.

यथाकथञ्चित् परपुरुषेण संयुज्य तत उपरताया अनुतापं गताया योषितो यथोचितं प्रायश्चित्तं पूर्वत्राभिहितम् । अथानुतापरहिताया दुःसङ्गादनुपरतायास्त्यागमाह—

जारेण जनयेद्गर्भं मृतेऽत्यक्ते[1] गते पतौ ॥ २८ ॥
तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम् ।

इति । पत्यौ मृते वा देशान्तरसञ्चारेणाज्ञाततया गते वा या स्त्री निरङ्कुशा सती जारं स्वीकृत्यापत्यमुत्पादयति । पापं कर्तुं शीलमस्या इति पापकारिणी न कदाचित् पापादुपरता । अत एव पतितां तादृशीं स्वराष्ट्रादुत्सार्य* परराष्ट्रे प्रेषयेत् । ननु-स्त्रीपरित्यागश्चतुर्विंशतिमते निषिद्धः—

'स्त्रीणां नास्ति परित्यागो ब्रह्महत्यादिभिर्विना ।
तत्रापि गृहमध्ये तु प्रायश्चित्तानि कारयेत् ॥
परित्यक्ता चरेत् पापं बह्वल्पं[2] वाऽपि किञ्चन ।
तत् पापं शतधा भूत्वा बान्धवाननुगच्छति ॥
यावन्ति नारीरोमाणि तत्प्रसूतिकुलेषु च ।
तावद्वर्षसहस्राणि परित्यागी स पच्यते ॥
कुम्भीपाके महाघोरे ज्ञातयः पापकारिणः ।
वसन्ति स्त्रीपरित्यागाद् यावदाभूतसम्प्लवम् ॥

---

* इदं च राज्ञा कर्तव्यम् । इतरेषां तदशक्यत्वात् । अत्र जारशब्देन शूद्रजातीयजार एव ग्राह्यः । तस्यैवातिनिन्द्यत्वात् । द्विजातिजारे तु प्रायश्चित्तेन शुद्धिः पूर्वत्राभिहिता ।

---

१. M. reads त्यक्ते for -ऽत्यक्ते २ B D. and H. read बहुधा वाऽपि for बह्वल्पं वाऽपि; while B. and D. read किं न च for किञ्चन.

पितृ-मातृपरित्यागी भार्यात्यागी सुहृत्त्यजः।
असिपत्रवनं सेव्यं[१] चण्डालानां शतं* व्रजेत्' ॥

इति। मैवम्। परित्यागनिषेधस्यानुतापितप्रायश्चित्ताधिकारिस्त्रीविषयत्वात्। 'प्रायश्चित्तानि कारयेत्'—इत्यभिधानात्। श्वपाकोपहतानां परित्यागस्य तत्रैवाङ्गीकृतत्वात्।

'चतस्र एव सन्त्याज्याः पतने सत्यपि स्त्रियः।
श्वपाकोपहता या तु भर्तृघ्नी पितृ-पुत्रगा' ॥

इति। वसिष्ठो ऽपि—

'चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या।
पतिघ्नी तु[२] विशेषेण जुङ्गितोपगता च या' ॥

(व. स्मृ. २१. १०)

इति। जुङ्गितो जुगुप्सितः श्वपाकादिः। याज्ञवल्क्यो ऽपि[३]—

'व्यभिचारादृतौ† शुद्धिर्गर्भे त्यागो विधीयते।
गर्भ-भर्तृवधादौ च तथा महति पातके' ॥

(या. स्मृ १. ७२)

इति। यत्तु मनुनोक्तम्—

‡'विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि'।

(म. स्मृ. ११. १७६)

---

* 'चण्डालाना शतं' शतजन्मपर्यन्तं चण्डालकुले एव जन्म लभेतेति भाव।

† व्यभिचारोऽत्र मानस एव ग्राह्यः। पुरुषान्तरसम्भोगसङ्कल्परूपस्य मानसिकस्य व्यभिचारस्यैव ऋतुदर्शनेन शुद्धि। न पुनः कायिकस्य व्यभिचारस्य। तत्र प्रायश्चित्तदर्शनात्।

‡ विप्रदुष्टा विशेषेण प्रदुष्टा व्यभिचारादिदोषदूषितामित्यर्थः। तादृशां स्त्रियं 'अर्थस्य संग्रहे चैनाम्' (अ ३. १०६) इत्यादिना पूर्वोक्तेभ्यो गृहाधिकारेभ्यो निवर्तयेत्। 'एकवेश्मनि'—इत्यनेन त्यागनिषेधः सूचितो भवति।

---

१. G. H. and J read सेव्यं and I चैव for सेव्य २ The text reads च for तु. ३. B. and D. omit ऽपि.

इति न तत् मूलवचनेन समानविषयम् । भर्तृरहित-स्त्रीविषयत्वान्मूलवचनस्य । मनुवाक्ये तु 'निरुन्ध्यात्'-इति भर्तृकर्त्तव्यताऽभिधानात् । तदुपरितनवाक्येन प्रायश्चित्ता-भिधानाच्च ।

'यत् पुंसः परदारेषु तच्चैनां चारयेद्[1] व्रतम् ॥
सा चेत् पुनः प्रदुष्येत[2] सदृशेनोपमन्त्रिता ।
कृच्छ्रं चान्द्रायणं चैव तदस्याः पावनं स्मृतम्' ॥
(म. स्मृ. ११. १७६-१७७)

इति यदपि याज्ञवल्क्येनोक्तम्—

'हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम्' ॥
(या. स्मृ. १. ७० )

इति तदपि निरुन्ध्यादित्यनेन मनुवचनेन[3] समान-विषयम् । तस्मात् यथोक्तस्य स्त्रीपरित्यागस्य न किञ्चिद्बाध-कमस्ति[4] ॥ २८ ॥

'जारेण जनयेत्'-इत्यनेन प्रमितव्यभिचारवतीं प्रत्यभिहि-तम् । अथ शङ्कितव्यभिचारां प्रत्याह—

**ब्राह्मणी तु यदा गच्छेत् परपुंसा समन्विता ॥२९॥**
**सा तु नष्टा विनिर्दिष्टा[5] न तस्याऽऽगमनं पुनः ।**

---

१. Except H. and the text all read कारयेत् for चारयेत्. २ The text reads प्रदुष्येत्तु सदृशेनोपयान्विता for प्रदुष्येत सदृशेनोपमन्त्रिता, while C. F. and G substitute उपमन्त्रित. and G. and H उपयान्विता for उपम-न्त्रिता ३ I omits मनुवचनेन ४. J. substitutes इति for अस्ति. ५. K. and I read समुद्दिष्टा for विनिर्दिष्टा.

इति। स्त्रियास्तावद्रक्षका याज्ञवल्क्येन परिगणिताः—

'रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके* ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियाः'॥
(या. स्मृ. १. ८५)

इति। मनुरपि—

'पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥
(म. स्मृ. ९. ३)

बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने।
पुत्रस्य स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति'॥

इति। अत्र प्रोक्तेभ्यो रक्षकेभ्यः पित्रादिभ्यो व्यतिरिक्तः पुमान् पर इत्युच्यते। तेन पुंसा समन्विता प्रीत्यतिशयद्योतकहास्यादिव्यवहारपुरःसरं सम्यगन्विता ब्राह्मणी स्त्री यदा केनचिद्व्याजेन ग्रामान्तरं देशान्तरं वा गत्वा निवसेत् सा नष्टेति विनिर्दिश्या बन्धुमध्ये प्रख्यापनीया। न तु तस्याः पुनः स्वगृहागमनमस्ति। गृहं प्रत्यागताऽपि निर्वासनीयेत्यर्थः॥२९॥

---

* 'रक्षेत्' अकार्यकरणात् रक्षेदित्यर्थः। ज्ञातीनामप्यभावे

'पक्षद्वयावसाने तु राजा भर्ता प्रभुः स्त्रियाः'।

इत्यङ्गिरोवचनात् राज्ञा रक्षणं कर्तव्यम्। 'पक्षद्वयं' पितृकुलं भर्तृकुलं च। 'भर्ता' पालयिता।

---

१ C. and F omit the following —

* * * पुत्रास्तु वार्धके।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रिया'॥

इति। मनुरपि—

'पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥
बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने।

२. All, except H. I and J. read पाणिग्राह्यस्य for पाणिग्राहस्य. ३. A. reads पुत्रा. for पुत्रस्य. The text reads रक्षन्ति स्थविरे पुत्रा for पुत्रस्तु स्थाविरे भावे and all others except A. read स्थविरीभावे for स्थाविरे भावे.

परपुरुषेण सह यथोक्तसमन्वयाभावेऽपि स्वातन्त्र्येण चिरं निर्गता स्त्री परित्याज्येत्याह—

कामान्मोहात्तु या[1] गच्छेत् त्यक्त्वा[2] बन्धून् सुतान् पतिम् ॥ ३० ॥

सा तु नष्टा परे लोके मानुषेषु विशेषतः ।

इति । बन्ध्वादीनामन्यतमस्य समीपे स्थातव्यमिति स्त्रीधर्मः । तथा च तद्धर्मप्रकरणे याज्ञवल्क्य आह—

'पितृ-मातृ-सुत-भ्रातृ-श्वश्रू-श्वशुर-मातुलैः ।
*हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत्' ॥
(या. स्मृ. १. ८६)

इति । एवं च सति या स्त्री कामाद्वा यथोक्तस्त्रीधर्मापरिज्ञानाद्वा बन्ध्वादीन् परित्यज्य ग्रामान्तरादौ चिरं वस्तुं गच्छेत् सा तु शास्त्रोक्तधर्मोल्लङ्घनात् परलोके नष्टा नरकं प्राप्नोति । अथ कथञ्चित्कालान्तरे निर्विण्णा प्रायश्चित्तं चरित्वा परलोकं जयेत् तथापि मानुषेषु बन्ध्वादिषु सर्वथा प्रवेशं न लभते—इत्यभिप्रेत्य विशेषत इत्युक्तम् ॥ ३० ॥

---

* या 'भर्त्रा विना' भर्तृरहिता स्यात् तया पित्रादीनामाश्रयेण वर्तितव्यम् । यत उक्ताश्रयरहिता गर्हणीया स्यात् । इदं च ब्रह्मचर्यपक्षे । भर्तरि प्रेते स्त्रियास्तावत् द्वे गती भवतः ।

'ब्रह्मचर्यं तदन्वारोहणं वा' ।

इति विष्णुस्मरणात् । अन्वारोहणविषये विस्तरो मिताक्षरायां द्रष्टव्यः ।

---

१. I reads या तु, K and L. च या and M यदा for तु या  २ I. reads त्यक्त्वा for त्यक्त्वा.

उक्तार्थस्य निमित्तविशेषेणापवादमाह—

मद-मोहगता नारी क्रोधात् दण्डादिताडिता ॥३१॥
अद्वितीया गता चैव पुनरागमनं भवेत् ।

इति । मदः पति-श्वशुरादितिरस्कारजनको मानसो दोषः । पत्यादिशुश्रूषा स्त्रीणां परमो धर्म इति एतादृशस्य विवेकस्याभावो मोहः । उक्तदोषद्वयोपेतां नारीं शिक्षयितुं वृद्धाः पत्यादयो दण्डादिभिस्ताडयेयुः *तदा व्यथिता सा यथोक्तबन्ध्वादिसहायं विना स्वयमेकाकिन्येव स्वेच्छया यद्यपि गच्छेत् तथापि स्वगृहे पुनरागमनं प्राप्नुयादित्यर्थः । 'भू प्राप्तौ'—इत्यस्माद्धातोस्तच्छब्दनिष्पत्तेः । एतच्च मनुनाऽप्यभिहितम्—

'अधिविन्ना तु या नारी निर्गच्छेद्रुषिता[2] †गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ' ॥
(म. स्मृ. ९. ८३)

* 'ताडनं अधिवेदनस्याप्युपलक्षणम्'—इति धरणीधरः ।

† क्रोधोऽत्राधिवेदननिमित्तकः । निर्गतायाः स्त्रियः त्यागो निरोधश्च विकल्पेन विधीयेते । गृहान्निर्गतायाः पुनः स्वीकारः पराशरेणोक्तः । मनुना तावत् त्याग-निरोधौ विकल्पेनोक्तावतो न विरोध इत्यवगन्तव्यम् । निर्गमनं च गृहात् ग्रामाद्वेति ग्राह्यम् । न तु देशान्तरं गतवत्याः तस्याः शुद्धाचरणज्ञानमन्तरा स्वीकारो योग्यो भवितुमर्हति । पराशरेणाग्रिमश्लोके दशादिनावधेर्व्याख्यातत्वात् ।

१ M. omits this Sloka :—
मद-मोहगता नारी क्रोधात् दण्डादिताडिता ॥३१॥
अद्वितीयागता चैव पुनरागमन भवेत् ।,
while I. reads क्रुद्धा for क्रोधात् २ C. and F. read कुपिता for रुषिता.

इति। ननु—अधिवेदनं निर्गमननिमित्तमुपन्यस्तम्। मूल-वचने तु ताडनमिति वैषम्यमिति चेत्। न। तस्याऽप्रयोजक-त्वात्। निर्गमन-भ्रंशाभावयोरुभयत्र तुल्यत्वात्। अतस्तादृशी नारी सान्त्वनादिना केनाप्युपायेन गृह एव निरोद्धव्या। यदि कथञ्चिन्निरोद्धुमशक्या तदाऽपि कुलसन्निधौ त्याज्या तद्दोषशान्तिपर्य्यंतं बन्धुमध्ये स्थापनीयेति ॥ ३१ ॥

यावत् पुनरागमनं भवेदित्यत्रागमने प्रतीक्षणीयं काला-वधिमाह—

दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते ॥ ३२ ॥
दशाहं न त्यजेन्नारीं[3] त्यजेन्नष्टश्रुतां तथा।

इति। या ताडिता सती निर्गता, तस्याः पुनरागमनप्रतीक्षां दश दिनानि कुर्यात्। [4]दशमे दिने तया गृहे प्राप्ते सति नेयं प्रायश्चित्तभाग्भवति। ऊर्ध्वं तु कुलस्त्री व्यभिचारोचितप्रायश्चि-त्तभाग्भवति। अतो दशाहमध्ये तदीयव्यभिचाराश्रवणे तां न परित्यजेत्। यदि नष्टत्वेन सा श्रूयते तदा दशाहमध्ये स्व-कृतप्रायश्चित्तां तां परित्यजेत् ॥ ३२ ॥

अथ[5] नष्टां श्रुत्वाऽपि भर्त्रादयस्तां न परित्यजेयुः तदा तेषां प्रायश्चित्तमाह—

भर्त्ता चैव चरेत् कृच्छ्रं कृच्छ्रार्धं चैव बान्धवाः* ॥ ३३ ॥

इति। स्पष्टार्थः ॥ ३३ ॥

---

* 'बान्धवाः' पितृ-श्वशुरादयः। तेषां दोषाल्पत्वादर्धकृच्छ्रम्।

१. B, D and H read -नृशंसाभावयो for -भ्रंशाभावयो  २ B C, D, E, and F read आदोषशान्तिपर्य्यन्तं for तद्दोषशान्तिपर्यन्त.  ३ B D, and M read नारी for नारीं and K, and L read त्यजन्नष्टस्तु तां for त्यजेन्नष्टश्रुतां.
४. All, except C F and I, omit this sentence —
दशमे दिने तया गृहे प्राप्ते सति नेयं प्रायश्चित्तभाग्भवति।
५. C, and F, read अतो for अथ.

अकृतप्रायश्चित्तानां भर्त्रादीनां गृहे भोजनादिकमाचरन्नु-पवासेन शुद्ध्यतीत्याह–

तेषां भुक्त्वा च पीत्वा च अहोरात्रेण शुद्ध्यति।

इति। स्पष्टम्॥

ननु–या ब्राह्मणी परपुंसा समन्विता भवति युक्तस्तस्या-स्त्यागः। या तु ताडनेन वा निमित्तान्तरेण वा निर्गच्छ-न्त्यपि न पुरुषान्तरेण समन्वेति तस्याः को नाम दोषः? येन दशाहादूर्ध्वं तस्या अपि त्यागो विधीयते इत्यत आह–

ब्राह्मणी तु यदा गच्छेत् परपुंसा विवर्जिता॥ ३४॥
गत्वा पुंसां शतं याति त्यजेयुस्तां तु गोत्रिणः।

इति। यद्यपि क्रोधादिना निर्गच्छन्ती न तदानीं पुरुषा-न्तरेण समन्वेति तथापि गत्वा कालान्तरेण शतसङ्ख्याकेषु पुरुषेषु सञ्चरतीति* मत्वा बान्धवास्तां परित्यजेयुः। ब्राह्मण्या अपि बहुपुरुषसञ्चारिण्या गणिकात्वं भवति। तदाह प्रजापतिः–

'अभिगच्छति या नारी बहुभिः पुरुषैर्मिथः।
व्यभिचारिणीति सा ज्ञेया प्रत्यक्षं[1] गणिकेति च'॥

इति॥ ३४॥

---

* एकाकिन्याः सत्याः निवारकाभावात् शतपुरुषसम्भोगोऽपि सम्भा-व्यते इति मत्वा तस्यास्त्यागोऽभिहितः। परमियं सम्भावना न सर्वकालं सत्यत्वेन प्रतीयते। यदि सा न केनापि पुरुषेण सङ्गतेति निश्चयेन प्रती-येत तदा एकाकिन्या अपि गतायास्त्यागो न युक्तो भवेत्।

---

१. I. reads प्रत्यक्षगणिका for प्रत्यक्षं गणिका.

यथोक्ताया ब्राह्मण्याश्चण्डालसमत्वमभिप्रेत्य गृहप्रवेशं निषेधति—

पुंसो यदि गृहे गच्छेत्तदशुद्धं गृहं भवेत् ॥ ३५ ॥
पति-मातृगृहं यच्च जारस्यैव तु तद् गृहम् ।

इति । सेयं दुर्ब्राह्मणी स्वनिवासार्थं पत्युर्वा मातुर्वा जारस्यान्यस्य वा दाक्षिण्यविषयस्य कस्यचिद्बन्धोर्गृहं प्रविशति तद् गृहं चण्डालाध्युषितगृहवदत्यन्तमपवित्रं भवति ।

'अविज्ञातस्तु चण्डालो यत्र वेश्मनि तिष्ठति' ।
(प. स्मृ. ६. ३४.)

इत्यादिना चण्डालवासे तत्प्रवेशे च यथा गृहशुद्धिरभिहिता तथा पुंश्चल्या ब्राह्मण्याः प्रवेशेऽपि गृहशुद्धिः कर्त्तव्या ॥ ३५ ॥

तच्छुद्धिप्रकारमाऽध्यायपरिसमाप्तेर्दर्शयति—

उल्लिख्य तद्गृहं पश्चात् पञ्चगव्येन सेचयेत् ॥ ३६ ॥
त्यजेच्च मृण्मयं पात्रं वस्त्रं काष्ठं च शोधयेत् ।
सम्भारान् शोधयेत् सर्वान् गोवालैश्च फलोद्भवान् ॥ ३७ ॥
ताम्राणि पञ्चगव्येन कांस्यानि दश भस्मभिः ।
प्रायश्चित्तं चरेद्विप्रो ब्राह्मणैरुपपादितम् ॥ ३८ ॥
गोद्वयं दक्षिणां दद्यात् प्राजापत्यद्वयं चरेत् ।
इतरेषामहोरात्रं पञ्चगव्यं च शोधनम् ॥ ३९ ॥

---

१. L reads गच्छेत for यच्च　२. I reads तु गृह for तद्गृह, while K and L read शोधयेत and M शुद्ध्यति for सेचयेत　३. M reads त्यजेन्मृण्मयताम्राणि for त्यजेच्च मृण्मय पात्र　४ I J and M read गोकेशैश्च for गोवालैश्च　५. M. reads प्राजापत्यं समाचरेत् for प्राजापत्यद्वय चरेत्.
६ M reads पञ्चगव्येन for पञ्चगव्य च. After this line M inserts —
सपुत्र सहभृत्यश्च कुर्यात् ब्राह्मणभोजनम् ।.

उपवासैर्व्रतैः पुण्यैः स्नान-सन्ध्याऽर्चनादिभिः।
[१]जप-होम-दया-दानैः शुद्ध्यन्ते ब्राह्मणादयः॥ ४०॥
आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम्।
न [२]प्रदुष्यन्ति दर्भाश्च यज्ञेषु चमसा यथा॥ ४१॥

इति। उल्लेखनं भूमेः। तेन कुड्यादिलेपनादिकमुपलक्ष्यते। पञ्चगव्यसेचनं भूमौ कुड्यादिषु च समानम्। मृण्मयस्य भाण्डस्य त्याग एव। न तु पञ्चगव्यसेचनादिभिः शुद्धिः। वस्त्र-काष्ठयो[३]र्धान्यादिसम्भाराणां च द्रव्यशुद्ध्या यथोक्तं शोधनं कुर्यात्। नारिकेल-कपित्था-ऽलाबु-बिल्वादिफलसम्भूतानां पात्राणां गोवालैर्मार्जनम्। ताम्रस्याम्लादिना शुद्धिः पूर्वमुक्ता*। अत्र [४]तु पञ्चगव्येनेति विशेषः। कांस्यपात्राणां दशकृत्वो भस्मना घर्षणम्। गृहस्वामी तु परिषद्विनिर्दिष्टं सदक्षिणं प्राजापत्यद्वयं चरेत्। अन्येषां तु तद्गृहवासिनामुपवासः। पञ्चगव्यप्राशनं [५]वा। तद्गृहवासिभिः सह व्यवहर्तॄणां †गृहान्तरवासिनां

* 'ताम्रमम्लेन शुद्ध्यति' (प. स्मृ ७. २) इत्यत्रोक्ताऽनुसन्धेया।

† केचनैतदन्यथा व्याचख्यु.। तेषा मते इतरेषामित्यनेन क्षत्रिय-वैश्य-शूद्रा ग्राह्याः। तथा सति नास्य पूर्ववचनैः सम्बन्ध.। पूर्वोक्ता दुर्ब्राह्मणी यदि क्षत्रियादीनां गृहं प्रविशेत् तर्हि तद्गृहशुद्धिः पूर्वोक्तप्रकारेण कर्तव्या। गृहस्वामिनस्तु अहोरात्रोपवासेन पञ्चगव्यप्राशनेन वा शुद्धिर्भवतीति तात्पर्यम्।

१. For this line M reads —
जपैर्होमैस्तथा दानै शुद्ध्यन्ते ब्राह्मणा सदा।.
२ For this line M reads —
न दुष्यन्तीह दर्भाश्च यज्ञेषु च समास्तथा।,
while C. F G. H I J. K and L read न दुष्यन्ति च for न प्रदुष्यन्ति
३. I. reads धात्वादिसम्भवानां च द्रव्यशुद्ध्यादि for धान्यादिसम्भाराणां च द्रव्य-शुद्ध्या. ४. I omits तु. ५. I substitutes च for वा.

ब्राह्मणादीनां निर्दिष्टेनोपवासादीनामन्यतमेन शुद्धिः। तद्गृहस-म्बन्धिनामाकाशादीनां निर्लेपान्न प्रयत्नेन सम्पादनीया शुद्धिर-स्ति। तत्र दृष्टान्तो यज्ञेष्विति। ऋत्विङ्मुखसंस्पर्शेऽपि चमसानां यथा नोच्छिष्टदोषः। शास्त्रदृष्ट्या तेषां निर्लेपस्वभावात्। तद्वदाकाशादीनामवगन्तव्यम्। अत्र चण्डालीन्यायस्याभि-प्रेतत्वात् चिरकालविषयमिदं परिशोधनं द्रष्टव्यम्। सकृत्प्र-वेशे तु संमार्जनादिभिः शुद्धिर्निर्देष्टव्या ॥ ३६—३७—३८—३९—४०—४१ ॥

गम्येतराभिगमने सति निष्कृतिर्या
सा यत्र साधु हितकारणमभ्यधायि।
अध्यायमूर्जितमतिर्दशमं स्वयुक्त्या
व्याख्यात् पराशरकृताविह माधवार्यः ॥१॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वर-श्री-वीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ परा-शरस्मृतिव्याख्यायां माधवीयायां दशमोऽध्यायः ॥ १० ॥

# पराशरसंहिता।

## एकादशोऽध्यायः।

नीले[1]नीरदनिभं निरन्तरं
निर्जिताखिलनिशाचरं वयम्।
मन्महेऽमलविशाललोचनम्
मारुतात्मजविभुं रघूद्वहम्॥ १॥

दशमेऽध्याये ह्युपपातकविशेषस्यागम्यागमनस्य प्रायश्चित्तमभिधाय तत्प्रसङ्गाद् गुरुतल्पादीनामपि प्रायश्चित्तमभिहितम्। एकादशाध्याये त्वभोज्यभोजनस्य प्रायश्चित्तं प्राधान्ये[2]नोपवर्ण्यते। तच्चानुपातकमित्येके। सुरापानसमत्वेन मनुनोपवर्णनात्।

'ब्रह्मोज्झता[3]* वेदनिन्दा कूटसाक्ष्यं सुहृद्वधः।
गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्'॥
(म. स्मृ. ११. ५६)

---

*अधीतस्य वेदस्य अनभ्यासेन विस्मरणं नित्यस्वाध्यायविधेस्त्यागो वा ब्रह्मोज्झता। वेदस्यात्यन्तत्यागः अनभ्यासो वा ब्रह्मोज्झतेति सर्वज्ञनारायणः। वेदनिन्दा तु असच्छास्त्राश्रयणेन कुत्सनम्। 'गर्हितं' चण्डालादिसंसर्गदुष्टं 'अनाद्यं' जात्यैवाभक्ष्यं लशुनादि तयोर्जग्धिः भक्षणम्।

---

१ This verse do not occur in other manuscripts except A and I.
२ B C. E. D. H and J read प्राजापत्येन for प्राधान्येन ३. B C. D. F. and H. read ब्रह्मद्रूष्य for ब्रह्मोज्झता and for the same E G and J.

इति। उपपातकमित्यपरे। मनुनैव—

'आत्मार्थं* च क्रियारम्भो निन्दितान्नादनं तथा'।

(म. स्मृ. ११. ६४)

इत्यादिना कानिचिदनुक्रम्या अन्ते—

'नास्तिक्यं† चोपपातकम्'।

(म. स्मृ. ११. ६६)

इति निगमनात्। अत्रायं निर्णयः—यस्मिन्नभक्ष्यविशेषे गर्ह्याधिक्यात् कामकृतादभ्यासाद्वा प्रायश्चित्तगौरवं स्मर्यते तस्याभक्ष्यस्य भक्षणमनुपातकम्। यत्र[1] प्रायश्चित्ताल्पत्वं तदुपपातकम्। यथा पूर्वत्रागम्यागमनत्वोपाधिनैकाकारेऽपि प्रायश्चित्ताल्पत्वात् पारदार्यमुपपातकम्। मातृ-भगिन्यादिगमनं प्रायश्चित्तबाहुल्यादतिपातकमिति विष्णुनाऽभिहितम्। एवं सर्वत्र नाम[2]साम्येऽपि गौरव-लाघवाभ्यां तत्तदवान्तरविशेषो निश्चेतव्यः। तत्रादौ तावदमेध्यादिभोजने प्रायश्चित्तमाह—

**अमेध्य-रेतो गोमांसं चण्डालान्नमथापि वा।**
**यदि भुक्तं तु विप्रेण कृच्छ्रं चान्द्रायणं चरेत्॥१॥**

* क्रियारम्भो देव-पित्राद्युद्देशमन्तरेण केवलमात्मार्थमेव पाकक्रियारम्भः। स च वर्ज्यः। प्रायश्चित्तोपदेशात्। अत एव वैश्वदेवः क्रियते। स च नियतकालमेव भवति। एवंसत्यपि नातुरस्य प्रतिषेधः। 'गर्हितानाद्ययोर्जग्धिः'—इत्यनेनोक्तमभ्यासविषये अत्रोक्तं 'निन्दितान्नादनम्'—इति सकृद्विषये योजनीयमित्यविरोधः।

† नास्तिक्यं नास्ति परलोको नास्ति दत्तमिष्टं वेत्यभिनिवेशः।

---

१ B D and H. do not insert यत्र. २ H. substitutes आगम- for नाम-

इति । अमेध्यं विण्मूत्रादि* । तदुपस्पृष्टस्यान्नस्य भोजनममेध्यभोजनम् । न चात्र केवलस्यामेध्यस्य विप्रेण भोजनं क्वचित् सम्भवति । तदुपस्पृष्टान्नभोजनं तु सम्भाव्यते । बालापत्यसहभोजनस्य प्राचुर्येण लोके दर्शनात् । रेतोभोजनं तु गलयोन्यादिव्याधिग्रस्तेषु सम्भावितम् । तथा गोमांस-चण्डालान्नभोजनं बन्दिगृहीतादिषु । तत्र सर्वत्र चान्द्रायणेन शुद्धिः । अथवा । चतुर्विधं मेध्यम् । तद्विपरीतममेध्यम्[1] । तदाह देवलः—

'वक्ष्यतेऽतःपरं सर्वं मेध्यामेध्यसमुच्चयम्[2] ।
शुचि पूतं स्वयं शुद्धं पवित्रं चेति केवलम् ॥
मेध्यं चतुर्विधं लोके प्रजानां मनुरब्रवीत् ।
दूषितं कश्मलं दुष्टं वर्जितं चेति लिङ्गतः ॥
चतुर्विधममेध्यं च सर्वं व्याख्यास्यते पुनः ।
नवं वा निर्मलं वापि शुचीति द्रव्यमुच्यते ॥
शुद्धं पवित्रभूतं च पूतमित्यभिधीयते ।
स्वयमेव हि यद् द्रव्यं केवलं धन्यतां† गतम् ॥
स्थावरं जङ्गमं वाऽपि स्वयं शुद्धमिति स्मृतिः[3] ।
अन्यद्रव्यैरदूष्यं यत् तत् पवित्रमिति स्मृतिः ॥

* अमेध्य च कैश्चित् सङ्क्षेपत एवमुक्तम्—
'मानुषास्थि-शवं विष्ठा रेतो मूत्रार्तवं वसा ।
स्वेदाश्रुदूषिका श्लेष्मा मद्यं चामेध्यमुच्यते' ॥
इति । एषा सर्वेषा स्पर्श एव ।

† 'धन्यता' पवित्रतां गतं जात्यैव शुद्धमित्यर्थः । अन्यैरशुचिद्रव्यैरदूष्यं सुवर्णादि ।

१ G. omits तद्विपरीतममेध्यम् २. D. and J read -समुद्भवम् for -समुच्चयम् ३. G. omits this and following one line —
अन्यद्रव्यैरदूष्य यत् तत् पवित्रमिति स्मृति ॥
अथ सर्वाणि धान्यानि द्रव्याण्याभरणानि च ।,
while I. reads अदुष्ट for अदूष्य and all, except A. G. and I substitute च for यत्

अथ सर्वाणि धान्यानि द्रव्याण्याभरणानि च ।
अवर्ज्यं भक्ष्यजातं त्वा शुचीन्येतानि केवलम्' ॥
इत्यादिना चतुर्विधं मेध्यं निरूप्य दूषितादिचतुर्विध-
ममेध्यमित्थं निरूपितम्–
'शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते ।
मानुषास्थि-वसा-विष्ठा-रेतो-मूत्रार्त्तवानि च ॥
कुपूयं *पूयमित्येतत् कश्मलं चाप्युदाहृतम् ।
स्वेदाश्रुविन्दवः फेनं निरस्तं नख-रोम च ॥
आर्द्रचर्मासृगित्येतद्दुष्टमाहुर्द्विजातयः ।
व्यङ्गैः पतित चण्डालैर्ग्राम्यसूकर-कुक्कुटैः ॥
श्वा च नित्यं विवर्ज्याः स्युः षडेते धर्मतः समाः ।
दुर्वर्णकृमिका †भूमिर्मत्तोन्मत्त-रजस्वलाः ॥
मृतबन्धुरशुद्धश्च वर्ज्यते च स्वकालतः' ।
इति । अत्र वर्णितेन चतुर्विधेनामेध्येनोपहतस्यान्नस्य
शुद्धिमकृत्वा भोजने चान्द्रायणं चरेत् । रेतोमूत्रादिभक्षणे
चान्द्रायणं बृहस्पतिरप्याह–

*कुत्सितं पूयते 'पूयी' विसरणे इत्यस्माद्धातोः । कुपूयं गर्ह्यमित्यर्थः ।
'पूयं मलावहं निन्द्यं मलिनं चेति कीर्तितम्' ।
इति रभसात् पूयं मलिनमित्यर्थः ।
† दुर्वर्णशब्देन दुष्टो वर्ण एव ग्राह्यः। नतु रजतम्। दुर्वर्णा कृमियुक्ता च
[भूमि]ः इति व्याख्येयम्

१. I. reads सर्वाणि for द्रव्याणि. २ H substitutes शुक्रं for पूय, but it does not give good sense. ३ B D E and H read श्रवणं सूतिका भूमि, C. G and F. सवर्णसूतिकाभूमि. and J. स्रवण सूतिकाभूमिः for दुर्वर्णकृमिकाभूमि ४ B. and D. substitute व्रत- for मृत-. ५ Except A and I all other manuscripts substitute तत्र for अत्र ६ B. and D. do not insert अमे-ध्येन. ७. Except A. C. and I other manuscripts omit अपि.

'अलेह्यानामपेयानामभक्ष्याणां च भक्षणे।
रेतो-मूत्र-पुरीषाणां शुद्धिश्चान्द्रायणं स्मृतम्' ॥

इति। गोमांसादिभक्षणे चान्द्रायणं संवर्त्त आह–

'गोमासं मानुषं चैव सूतिहस्तात् समाहृतम्।
अभक्ष्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत्॥(१९१)
श्व-बिडाल-खरोष्ट्राणां कपेर्गोमायु-काकयोः।
प्राश्य मूत्रं पुरीषं वा चरेच्चान्द्रायणव्रतम्' ॥ (१९२)
(सं. स्मृ. १९१–१९२)

इति। मनुरपि–

'विड्वराह-खरोष्ट्राणां गोमायोः कपि-काकयोः।
प्राश्य मूत्र-पुरीषाणि[1] द्विजश्चान्द्रायणं चरेत्' ॥
(म. स्मृ. ११. १५४)

इति। शातातपोऽपि–

'गोमांसभक्षणे प्रायश्चित्तं पूर्वमृषिभिः कृतम्।
समयं नातिक्रामेत्[2]। यद्यतिक्रामेत्ततश्चान्द्रायणं चरेत्'।

इति। वृद्धपराशरोऽपि–

'अगम्यागमने* चैव मद्य-गोमांसभक्षणे।
शुद्ध्यै चान्द्रायणं कुर्यात् नदीं गत्वा समुद्रगाम् ॥
चान्द्रायणे ततश्चीर्णे कुर्यात् ब्राह्मणभोजनम्।
अनडुत्सहितां गां च दद्याद्विप्रेषु[3] दक्षिणाम्' ॥

---

*चान्द्रायणसाहचर्यात् सामान्योक्तिरियम्। अगम्याना चण्डाल्यादीनां गमने तारतम्येन न्यूनाधिकं प्रायश्चित्तमन्यत्रोक्तम्।

---

१ I. reads मूत्र पुरीष वा for मूत्र-पुरीषाणि; while B. and D. do not insert this whole line —
प्राश्य मूत्र-पुरीषाणि द्विजश्चान्द्रायणं चरेत्' ॥.

२. I. omits नातिक्रामेत् and shows as metrical version, but it appears in all other manuscripts as a prose. ३. I. reads विप्राय.

इति । शङ्ख-लिखितावपि—

'शृगाल-कुक्कुट-दंष्ट्रि-क्रव्याद-वानर-खरोष्ट्र-गज-वा-
जि-विड्वराह-गो-मानुषमांसभक्षणे चान्द्रायणम्'।

इति । चाण्डालान्नभक्षणे चान्द्रायणमङ्गिरा आह—

'अन्त्यावसायिनामन्नमश्नीयाद् यस्त्वकामतः ।
स तु चान्द्रायणं कुर्यात् तप्तकृच्छ्रमथापि वा' ॥
(आं. स्मृ. ३. १६)

इति । हारीतोऽपि—

'चाण्डालान्नं प्रमादेन यदि भुञ्जीत यो द्विजः ।
ततश्चान्द्रायणं कुर्यात् मासमेकं व्रतं चरेत्' ॥
(हा. स्मृ. ११. ७)

इति । यत्तु चतुर्विंशतिमतेऽभिहितम्—

'विण्मूत्रभक्षणे विप्रश्चरेच्चान्द्रायणद्वयम् ।
श्वादीनां चैव विण्मूत्रे चरेच्चान्द्रायणत्रयम् ॥
श्व-काकोच्छिष्ट-गोच्छिष्ट-कृमि-कीटादिभक्षणे ।
अमेध्यानां च सर्वेषां चरेच्चान्द्रायणत्रयम्' ॥

इति तदेतदभ्यासविषयम् । मूलवचने चान्द्रायणरूपं कृच्छ्रं चरेदित्यभिप्रेत्य व्याख्यातम् । यदा तु—कृच्छ्रमाचरेच्चा-न्द्रायणमाचरेत्—इति विभज्य व्याख्यायते तदा कृच्छ्रशब्देन ऋषिकृच्छ्र-तप्तकृच्छ्र-प्राजापत्यानि तन्त्रेणाभिधीयन्ते । तत्र ऋषिकृच्छ्रमाहाङ्गिराः—

१. B omits -मानुष- २. B. inserts इति after चान्द्रायणम् ३. Except A., I. and J. all other read यस्त्व कामत., but our reading is more correct. ४. H. substitutes तु त for व्रत.

'अलेह्यानामपेयानामभक्ष्याणां च भक्षणे ।
रेतो-मूत्र-पुरीषाणामृषिकृच्छ्रं विशोधनम्' ॥
(अं. स्मृ. ३. ४१)

इति । तप्तकृच्छ्रमाह देवलः—
'रेतो-मूत्र-पुरीषाणां प्राशने ऽमतिपूर्वके ।
नाश्नीयात्तु त्र्यहं, मत्या तप्तकृच्छ्रं चरेद् द्विजः'॥

इति । प्राजापत्यमाह संवर्त्तः—
'विण्मूत्रभक्षणे विप्रः प्राजापत्यं समाचरेत्' ।
( सं. स्मृ. १८९ )

इति । तप्तकृच्छ्रस्य विषयविशेषस्तद्वचने एव स्पष्टः ।
'अमत्या त्र्यहोपवासः । तप्तकृच्छ्रं मत्या' ।

इति तत्राभिधानात् । यत्तु प्राजापत्यकृच्छ्रं तत् भक्षितोद्गारितविषयम् । अल्पव्रतत्वात् । ऋषिकृच्छ्रं तु पूर्वोक्तचान्द्रायणद्वयेन समानविषयम् । अत्र सर्वत्र व्रतानुष्ठानानन्तरं पुनःसंस्कारः कर्त्तव्यः । तदाह यमः—
'असुरामद्यपाने* च कृते गोभक्षणे ऽपि वा ।
तप्तकृच्छ्रपरिक्लिष्टो मौञ्जीहोमेन शुद्ध्यति' ॥

इति । मनुरपि—
'अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः' ॥
( म. स्मृ. ११. १५० )

*सुरावर्जमद्यपाने । गोभक्षणे गोमांसभक्षणे । एतदपि क्रयादिनोपलब्धमांसभक्षण एव । भक्षणार्थं गोहनने तु पूर्वोक्त गोहत्याप्रायश्चित्तं मांसभक्षणप्रायश्चित्तं चेति प्रायश्चित्तद्वयमनुष्ठेयं भवति ।

१. D. substitutes मर्त्य for मत्या and H omits तु and reads त्रिरह for त्र्यह. २ D. and T omit -विशेष ; while C. and F. substitute त्रिघोष for the same. ३. I omits एव and reads सस्पष्ट. for स्पष्ट

इति । विष्णुरपि—

'विड्वराह-ग्रामकुक्कुट-वानर[1]-गोमांसभक्षणे च । (३)सर्वे[2]-ष्वेतेषु द्विजानां प्रायश्चित्तान्ते पुनः[3] संस्कारं कुर्यात्' । (४)

(वि. स्मृ. ५१. ३–४)

इति । तत्र विशेषमाह काश्यपः—

'चीर्णान्ते* प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्राम्य[4]पशूनां शब्दो न श्रूयते तस्मिन् देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य प्राक्प्रणीतेन विधिना पुनःसंस्कारमर्हति' ।

इति । यच्च बृहद्यमेनोक्तम्—

'वराहैकशफानां च काक-कुक्कुटयोस्तथा ।
क्रव्यादानां च सर्वेषामभक्ष्या ये च कीर्तिताः ॥
मांस-मूत्र-पुरीषाणि प्राश्य गोमांसमेव च ।
श्व[5]-गोमायु-कपीनां च तप्तकृच्छ्रं विशोधनम् ॥
उपोष्य द्वादशाहानि कूष्माण्डैर्जुहुयाद् घृतम्' ।

इति । तत्र कामतः तप्तकृच्छ्रः । अभ्यासे तु कूष्माण्डसहितः पराक इति व्यवस्था । यच्चोशनसोक्तम्—

* चीर्णान्ते यथोक्तप्रायश्चित्ताचरणानन्तरम् । 'यत्र ग्राम्यपशूनां शब्दो न श्रूयते' एतेन अरण्यमुपलक्षितं भवति । पुनरुपनयनस्य स्वत एव कर्तव्यत्वात् अरण्ये एकान्तेऽपि तत् कर्तुं शक्यमेव ।

१. We follow here A. and the text, while all others omit -वानर- and read -भक्षणेषु for -भक्षणे च. २ B and D omit सर्वेषु एतेषु ३ The text substitutes भूय for पुनः ४. B. and D read ग्रामे for ग्राम्य- and for the same C. E. F. G. H. and J. read ग्राम-. ५ B. D. G. and H. read सगोमायु for श्व गोमायु-

'नरमांसं श्वमांसं च गोमांसं च तथैव च।
भुक्त्वा पञ्चनखानां च महासान्तपनं चरेत्' ॥
(उ. स्मृ. ९. २५)

इति तदकामविषयम्। यत् पुनः शङ्खेनोक्तम्—

'भुक्त्वा चोभयतोदन्तान् तथैवैकशफानपि।
औष्ट्रं[1] गव्यं तथा भुक्त्वा षण्मासान् व्रतमाचरेत्'॥
(शं. स्मृ. १७. २८)

इति तत् कामतोऽत्यन्ताभ्यासविषयम्। यच्च स्मृत्यन्तरोक्तम्—

'जग्ध्वा[2] मांसं नराणां च विड्वराहं खरं तथा।
गवाश्व-कुञ्जरोष्ट्राणां सर्वान्[3]* पञ्चनखांस्तथा॥
क्रव्यादं कुक्कुटं ग्राम्यं कुर्यात् संवत्सरव्रतम्'।

इति तदत्यन्तानवच्छिन्नाभ्यासविषयम्[4]। यदप्याङ्गिरसेनोक्तम्[5]—

'अभक्ष्याणामपेयानामलेह्यानां च भोजने।
रेतो-मूत्र-पुरीषाणां प्रायश्चित्तं कथं भवेत्?॥
पद्मोदुम्बर-बिल्वानां कुशा-ऽश्वत्थ-पलाशयोः।
एतेषामुदकं पीत्वा सप्तरात्रेण शुद्ध्यति'॥
(अं. स्मृ. ३. २७-२८)

*अत्र 'पञ्च पञ्चनखा भक्ष्या' इत्यनेन विहितानां भक्षणे न दोषः। विशेषेण सामान्यस्य बाधात्। विहितातिरिक्तपञ्चनखभक्षणे एवास्य निषेधस्य प्रवृत्तिरिति प्रतिभाति।

१. I. reads ऋक्ष for औष्ट्रं. २. C. D F. and J. read तथा and B यथा both for जग्ध्वा. ३ G. and J read सर्वं पाञ्चनखं; while B. C D E. F and H. read सर्वं पञ्चनख. ४. We follow here A and G, while all others read -वच्छिन्न-. ५. B. and D. read अङ्गिरसेन for आङ्गिरसेन

इति तदीषदभ्यासविषयम् । यदपि मनुनोक्तम्—

'भुक्त्वा ऽतोऽन्यतमस्यान्नममत्या तु त्र्यहं क्षपेत् ।
*मत्या भुक्त्वा चरेत् कृच्छ्रं रेतो-विण्मूत्रमेव च' ॥

(म. स्मृ. ४ · २२२)

इति । अबुद्धिपूर्वे छर्दनासम्भवे त्र्यहोपवासो द्रष्टव्यः । गोमांसभक्षणस्यावृत्त्यनावृत्त्योर्व्यवस्थितं व्रतमाह प्रजापतिः—

'चान्द्रायणत्रयं कुर्यादभक्ष्यपशुभक्षणे ।
एकमेव सकृद्भुक्त्वा चरेदाह प्रजापतिः' ॥

इति । मूलवचने चण्डालान्नमित्यनेन महापातक्यादीनामन्नमप्युपलक्ष्यते । अत एव हारीतः—

'यदन्नं प्रतिलोमस्य शूद्रजस्योत्तमास्त्रियाम् ।
महापातकिनश्चैव यदन्नं स्त्री-कृतघ्नयोः ॥
आरूढपतितस्यैव सगोत्राभर्तुरेव च ।
पाषण्डानाश्रितानां च यतेश्चैव तथैव च ॥
अतिकृच्छ्रं चरेद्भुक्त्वा प्रमादाद् ब्राह्मणः सकृत् ।
मत्या चान्द्रायणं कुर्यादामं चेदर्धमेव च ।
तद्धस्तभोजने वाऽपि त्रिगुणं सहभोजने ।
चतुर्गुणं तदुच्छिष्टे पानीये चार्धमेव च ॥

* क्षपणं उपवासः । बुद्धिपूर्वे तु कृच्छ्रं चरेत् । तच्च स्मृत्यन्तरैकवाक्यत्वात् तप्तकृच्छ्रमेव । तत्र रेतो-विण्मूत्रप्राशने तप्तकृच्छ्रमाम्नातम् । मत्या पाने पयो-घृतमुदकं वायुः प्रतित्र्यहं तप्तातिकृच्छ्रः । ततः पुनरुपनयनम् । 'अन्यतमस्य'—इति षष्ठीनिर्देशात् प्रतिग्रहादुष्ट एवेदं प्रायश्चित्त मन्यते भगवान् मनुः । न पुनः काल-स्वभाव-संसर्गदुष्टे ।

१ All others except A and I. read इच्छार्दानामसम्भवे for छर्दनासम्भवे.
२ A. and J read एवमेव for एकमेव ३ B and D. read त्यक्त्वा for भुक्त्वा.

कृच्छ्राब्दपादमुद्दिष्टमभ्यासाज्ज्ञानभोजने[1]।
मत्याभ्यासे[2] तथा कुर्यात् त्रिंशत्कृच्छ्रं द्विजोत्तमः'॥
(हा. स्मृ. १९. ३१-३९)

इति। उत्तमस्त्री ब्राह्मणी तस्यां प्रातिलोम्येन शूद्रादुत्पन्न-श्चण्डालः*। महापातकी ब्रह्महादिः। यद्यपि स्त्री-यत्योर्म-हापातक्यादिवद्दुष्टत्वं नास्ति तथाप्यन्नदानाधिकाराभावात् तदीयमप्यन्नं पातक्यन्नवद् गर्हितमेव। यस्तु परेणोपकृतः सन् स्वयं न प्रत्युपकरोति नाप्यनुमोदते प्रत्युतापद्गतस्यापकारित्व-मापादयति स कृतघ्नः। उत्तमाश्रममारुह्य तं परित्यज्याधमाश्र-मे उन्मार्गे वा वर्त्तमान आरूढपतितः। यः समानगोत्रामुद्व-हति स सगोत्राभर्त्ता। वैदिककुले समुत्पन्नो वेदमार्गमुत्सृज्य जैन-बौद्धादिमार्गे वर्तमानः पाषण्डः। अनाश्रिताः सत्यपि सामर्थ्ये नास्तिक्येन कञ्चिदप्याश्रमं न प्राप्ताः। एतेषां सर्वे-षामन्ने समानं प्रायश्चित्तम्॥ १॥

विप्रस्यामेध्यादिभोजने प्रायश्चित्तमभिधायेतरेषां वर्णानां तदाह—

---

* एवं क्षत्रिय-वैश्यस्त्रियोरपि प्रतिलोमजौ निषिद्धावेव भवतः। त-दन्नमपि निषिद्धमेव इति प्रतिभाति।

---

१ B and D. read अभ्यासात् ज्ञातभोजने and I. अभ्यासादन्नभोजने for अभ्यासाज्ज्ञानभोजने. २ I reads अत्यभ्यासे for मत्याभ्यासे. ३. B. D. E. and H. omit स्त्री- and read only यतेर्दुष्टत्वं for स्त्री- यत्योर्महापातक्यादिवद्दु-ष्टत्व. and for the same C. F. and I read स्त्रीहत्यायां महापातक्यादिवद्दु-ष्टत्व; while G. does not insert the following portion:—

-श्चण्डालः। महापातकी ब्रह्महादि। यद्यपि स्त्री-यत्यो-
र्महापातक्यादिवद्दुष्टत्वं नास्ति। तथाप्यन्न-.

तथैव क्षत्रियो वैश्योऽप्यर्धं[1] चान्द्रायणं चरेत् ।
शूद्रोऽप्येवं यदा भुङ्क्ते प्राजापत्यं समाचरेत् ॥२॥[2]

इति । तथैवेत्यतिदिष्टस्योपदिष्टादल्पत्वेन क्षत्रियस्य पादोनं चान्द्रायणमवगन्तव्यम् । शूद्रोऽप्येवमित्यनेनामेध्यादिभोजनसाम्यं निर्दिश्यते । न तु भोजनसाम्यम् । व्रतान्तरस्य तत्र विधानात् ॥ २ ॥

व्रतान्ते[3] चतुर्भिर्वर्णैः[4] कर्त्तव्यमाह—

पञ्चगव्यं पिबेत् शूद्रो ब्रह्मकूर्चं पिबेद् द्विजः ।
एक-द्वि-त्रि-चतुर्गा वा[5] दद्याद् विप्राद्यनुक्रमात्[6] ॥३॥

इति । पञ्चगव्य-ब्रह्मकूर्चयोर्विधानमुत्तरत्र वक्ष्यते । तत्र शूद्रस्यामन्त्रस्यामन्त्रकं[7] पञ्चगव्यम् । इतरेषां समन्त्रकं ब्रह्मकूर्चम् । विप्रो गामेकां दक्षिणां दद्यात् । क्षत्रियो द्वे । वैश्यस्तिस्रः । शूद्रश्चतस्रः । गवामसम्भवे सुवर्णं दद्यादित्यभिप्रेत्य वा* शब्दः पठितः । तत्र सुवर्णस्य गोप्रत्याम्नायस्य परिमाणमाह प्रजापतिः—

* 'वा शब्दोऽनडुत्साहित्यार्थः । स्मृत्यन्तरे तथैवोक्तेः'—इति धरणीधरः । वस्तुतस्त्विदमसमञ्जसमिव प्रतिभाति । वा शब्दो हि विकल्पमाचष्टे । गावः सुवर्णेन विकल्पिता ।

१. M. reads वैश्यस्तदर्धं तु समाचरेत् for वैश्योऽप्यर्धं चान्द्रायणं चरेत् २ B. and D. omit this whole line.—

शूद्रोऽप्येव यदा भुङ्क्ते प्राजापत्यं समाचरेत् ॥ २ ॥

३ J. reads व्रतान्तरं for व्रतान्ते ४. I reads चतुर्वर्णानां for चतुर्भिर्वर्णैं. ५ Except I. all others read -चतुर्गावो for -चतुर्गा वा ; while M -चतुर्गाश्च for the same. ६. I. K L. and M. read विप्रादनुक्रमात् for विप्राद्यनुक्रमात. ७. We follow here A and I, while all others omit अमन्त्रस्य.

'गवामलाभे निष्कं वा निष्कार्धं पादमेव वा' ।

इति ॥ ३ ॥

विप्रस्य शूद्राद्यन्नभोजने प्रायश्चित्तमाह—

शूद्रान्नं सूतकान्नं च अभोज्यस्यान्नमेव च ।
शङ्कितं प्रतिषिद्धान्नं पूर्वोच्छिष्टं[1] तथैव च ॥ ४ ॥

यदि भुक्तं तु विप्रेण अज्ञानादापदा[2]ऽपि वा ।
ज्ञात्वा समाचरेत् कृच्छ्रं ब्रह्मकूर्चं[3] तु पावनम् ॥ ५ ॥

इति । अत्र शूद्रान्नस्य* गर्हितता[4]ऽङ्गिरसा प्रपञ्चिता—

'आहिताग्निस्तु यो विप्रः शूद्रान्नं प्रतिगृह्य तु ।
भोगात्तामसतां[5] याति तिर्यग्योनिं च गच्छति ॥
यस्तु वेदमधीयानः शूद्रान्नमुप[6]भुञ्जाति ।
शूद्रे वेदफलं याति शूद्रत्वं चापि[7] गच्छति ॥
घ्रात्वा चैवोष्मणा[8] चैव स्पृष्ट्वा च प्रतिगृह्य च ।
प्रशस्य स्वस्ति चेत्युक्त्वा भोक्तैव तु न संशयः ॥

---

* शूद्रस्वामिकमत्र शूद्रान्नम् । तत्र च अग्निमाङ्गिरसवाक्ये—

'घ्रात्वा चैवोष्मणा चैव स्पृष्ट्वा च प्रतिगृह्य च' ।

इत्येनेनोक्तं पक्वमन्नं शूद्रस्वामिकं द्विजातिपक्वमेव भवतीत्यवगन्तव्यम् । न तु शूद्रपाचितमिति विवेकः ।

---

१ Except A. I. K L and M others read शूद्रोच्छिष्ट for पूर्वोच्छिष्ट. २. I reads आपदो for आपदा. ३. A. reads ब्रह्मकूर्चेन for ब्रह्मकूर्चं तु. ४ Except A and I all others substitute गर्हा for गर्हितता ५ I. reads तत्समतां for तामसतां. ६. G reads अपि for उप. ७ A reads याति स द्विजः for चापि गच्छति, while B C D and F substitute वा for च. ८. I. reads आघ्रात्वा चोष्मणा चैव for घ्रात्वा चैवोष्मणा चैव.

एते दोषा भवन्तीह शूद्रान्नस्य प्रतिग्रहे ।
अनुग्रहं तु वक्ष्यामि मनुना चोदितं पुरा ॥
आमं वा यदि वा पक्वं शूद्रान्नमुपसाधयेत् ।
किल्बिषं भुंजते[1] भोक्ता यश्च विप्रः पुरोहितः ॥
गुर्वर्थे ह्यतिथीनां तु भृत्यानां च[2]विशेषतः ।
प्रतिगृह्य प्रदातव्यं न तु तृप्येत् *स्वयं ततः ॥
शूद्रान्नरसपुष्टस्य अधीयानस्य[3] नित्यशः ।
जपतो जुह्वतो वाऽपि गतिरूर्ध्वा[4] न विद्यते ॥
षण्मासानथ[5] यो भुङ्क्ते शूद्रस्यान्नं निरन्तरम् ।
जीवन्नेव भवेत् शूद्रो मृतः श्वा चाभिजायते[6] ॥
अकृत्वैव निवृत्तिं यः शूद्रान्नान्[7] म्रियते द्विजः ।
आहिताग्निर्विशेषेण स शूद्रगतिभाग्भवेत् ॥
(अ. स्मृ. ३. ७–१७)

इति । व्यासोऽपि–
[8]शूद्रान्नरसपुष्टस्य दित्सोरपि† च नित्यशः ।
जपतो[9] जुह्वतो वाऽपि गतिरूर्ध्वा[10] न विद्यते ॥

* 'प्रदातव्यं' यदर्थं प्रतिग्रहीतं तानेव तद्दातव्यम् न तु तेन स्वयं तृप्तो भवेत् । एवं सति प्रतिग्रहेऽप्यदोषः ।
† दित्सो· दानशीलस्येत्यर्थः ।

१. C E. F. and I read भजते for भुंजते २ B. C. E F. G and I. substitute तु for च. ३. I. only inserts हि before अधीयानस्य ४ C E. F. G. H and J read ऊर्ध्वां for ऊर्ध्वा ५ J. reads षण्मासादपि and B. C. D. F. and G. read षण्मासानापि. ६ I reads चापि for चाभि ७. All, except A. and I read शूद्रान्न for शूद्रान्नात्. ८ B. and D do not insert this and the following one line. ९ E. and I read यजतो for जपतो. १० H reads ऊर्ध्वं for ऊर्ध्वा.

मृत-सूतकपुष्टाङ्गो द्विजः शूद्रान्नभोजनः ।
अहमेव न जानामि कां कां योनिं स गच्छति ॥(६४)
गृध्रो द्वादशजन्मानि दशजन्मानि सूकरः ।
श्वा चैव सप्तजन्मानि इत्येवं मनुरब्रवीत् ॥ (६५)
शूद्रान्नेनोदरस्थेन यः कश्चिन् *म्रियते द्विजः ।
स भवेत् सूकरो ग्राम्यस्तस्य वा जायते कुले'॥(६६)
( व्या. स्मृ. ४. ६३–६६ )

इति । आपस्तम्बोऽपि—

'यस्तु भुञ्जीत शूद्रान्नं मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं† मृतः श्वा चाभिजायते ॥

---

* यद्यप्यत्र क्षत्रिय-वैश्यसामान्येन द्विजशब्देन वर्णत्रयस्यापि ग्रहणं भवति तथापि क्षत्रिय-वैश्ययोः प्रतिग्रहाधिकाराभावात् ब्राह्मण एव ग्राह्यः । इदमेवाग्रे प्रजापतिवचने स्पष्टं भविष्यति । 'तस्य' अन्नस्वामिनः शूद्रस्येत्यर्थः । अत्र ग्राम्य इति विशेषणात् पूर्वत्र पठितः सूकरशब्दः आरण्यसूकरवाचीत्यवसेयम् ।

† 'शूद्रत्वं' शूद्रसदृशत्वमित्यर्थः । अस्मिन्नेव जन्मनि शूद्रत्वप्राप्त्या 'आत्मा' नश्यति हीनत्वमाप्नोति । 'ब्रह्म' वेदः । स च–

'शूद्रान्नरसपुष्टस्य अधीयानस्य नित्यशः' ।

इत्याद्यङ्गिरसोक्तेरूर्ध्वगत्यभावात् निष्फलो भवतीति तात्पर्यम् ।

१ The text does not repeat कां and reads स गमिष्यति, while B. D G. and H. read च गच्छति and E and J हि गच्छति २ C E and F read मनुरुवाच ह and I मनुरुक्तवान् for मनुरब्रवीत् ३. Except A E and I. all others substitute भुंजाति for भुजीत, while the text reads this whole verse as follows :—

भुञ्जते ये तु शूद्रान्नं मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं जायन्ते ते मृता शुनि ॥

शूद्रान्नं शूद्रसम्पर्कः[1] शूद्रेण च[2] सहासनम् ।
शूद्राज्ज्ञानागमश्चैव[3] ज्वलन्तमपि पातयेत् ॥
आहिताग्निस्तु यो विप्रः शूद्रान्नेन प्रवर्तयेत्[4] ।
पञ्च[5] तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः' ॥
( आ. स्मृ. ८. ७-९ )

इति । सुमन्तुरपि[6] —

'राजान्नं तेज* आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मावकृन्तिनः[7] ॥
कारुकान्नं प्रजा हन्ति बलं निर्णेजकस्य च ।
गणान्नं गणिकान्नं च लोकेभ्यः[8] परिकृन्तति ॥
पूयं[9] चिकित्सिकस्यान्नं पुंश्चल्याश्चान्नमिन्द्रियम्[10] ।
विष्ठा[11] वार्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम् ॥
एतेभ्योऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्त्तिताः ।
तेषां त्वगस्थि-रोमाणि वदन्त्यन्नं[12] मनीषिणः' ॥
( म. स्मृ. ४. २१८-२२१ )

---

* 'तेजः' तपोबलम् । 'प्रागल्भ्यं सौन्दर्यं वा' इति राघवानन्दः । ये सुवर्णं जीवनार्थं घटयन्ति ते सुवर्णकारा इत्युच्यन्ते । एवमेव रजकादयोऽन्येऽपि द्रष्टव्या. । चिकित्सकस्य वैद्यस्यान्नं पूयं पूयतुल्यमित्यर्थः । एवं व्यभिचारिण्या अन्नं इन्द्रियं शुक्रं तत्तुल्यं, वार्धुषिकस्यान्नं मलतुल्यमिति व्याख्येयम् ।

---

१. Except A. and the text all others read शूद्रसस्पर्श for शूद्रसम्पर्क. २ The text substitutes एव for च. while H reads सहासनम् for सहासनम्. ३. The text reads कश्चित for चैव. ४ I. reads प्रवर्तते for प्रवर्तयेत्, while the text reads शूद्रान्नात् न निवर्तते for शूद्रान्नेन प्रवर्तयेत् ५. The text substitutes तथा for पञ्च ६ The following quoted eight lines are occurred in Manu ७. I reads चर्मावक्रान्तिन for चर्मावकृन्तिन ८. H reads रूपेभ्य. for लोकेभ्य. ९. Except A. all others read रूप for पूय. १०. I reads पुंश्चल्याश्च तथा श्रियम for पुंश्चल्याश्चान्नमिन्द्रियम् ११. B and D substitute विष्ठा for विष्ठा. १२. G. reads तुदन्त्यन्नं and H. वदन्त्यन्ने for वदन्त्यन्न.

इति। तदिदं गर्हितं शूद्रान्नमज्ञानाद्वाऽऽपत्काले वा यो विप्रो भुङ्क्ते स ब्रह्मकूर्चमाचरेत्। तस्य पावनत्वं बहुमन्त्रसंस्कृतत्वात्। यस्तु ज्ञात्वा शूद्रान्नं भुङ्क्ते स प्राजापत्यमाचरेत्। तथा च मनुः[1]—

'भुञ्जानोऽन्यतमस्यान्नममत्या क्षपणं त्र्यहम्।
मत्या भुक्त्वा चरेत् कृच्छ्रं *रेतो-विण्मूत्रमेव च' ॥
(म. स्मृ. ४. २२२)

इति। न च—ब्रह्मकूर्चस्यैकोपवासरूपत्वात् त्र्यहक्षपणेन विरोध—इति शङ्कनीयम्। तयोः शक्ता[2]शक्तविषयत्वात्। अत्र दिनत्रयोपवासं शङ्ख[3]-लिखितोऽप्याह—

'भुक्त्वा वार्धुषिकस्यान्नमवृ[4]त्तस्याऽसुतस्य च।
शूद्रस्य तु तथा भुक्त्वा त्रिरात्रं स्यादभोजनम्' ॥
(शं. स्मृ. ११. १८)

इति। प्रजापतिश्चात्र व्यवस्थितानि व्रतान्याह—

'ब्राह्मणस्यैव शूद्रान्नमभोज्यं प[5]रिकीर्त्तितम्।
सकृद्भुक्त्वा तदज्ञानाद्ब्रह्मकूर्चं सकृत् पिबेत् ॥
अभ्यासे च तदभ्यस्येदाममन्नमगर्हितम्।
मत्या त्रिरात्रं कुर्वीत कृच्छ्रमभ्यासतश्चरेत्' ॥

इति।

---

* अत्र 'रेतो-विण्मूत्रमेव च' इति प्रायश्चित्तातिशयद्योतनार्थमुक्तम्। वस्तुतस्तु रेत आदीनां प्राशनं न अभोज्यान्नभोजनतुल्यम्। तत्र पुनरुपनयनस्याभिधानात्।

---

१. We follow here A. and I., while all other manuscripts substitute सुमन्तु for मनु. and the text of Manu reads भुक्त्वाऽतो for भुञ्जानो. २ H. omits -अशक्त.- ३. I. does not insert शंख-. ४. B. C D. E F and H. read अवृत्तस्य सुतस्य च and C and F. substitute वा for च, while I अवृत्तस्यासुरस्य च for अवृत्तस्याऽसुतस्य च ५. J substitutes यदि for परि.

नरबलिं सङ्कल्प्य मनुष्यान्मारयितुं अन्नमध्ये गूढं विषं प्रक्षिपन्तीत्यस्ति महती प्रसिद्धिः। तादृशेषु गृहेषु विषशङ्कासम्भवात् शङ्कितमन्नमित्युच्यते। तत्तु न भोक्तुं योग्यम्।

'विषं* चोपविषं भुक्त्वा चरेच्चान्द्रायणव्रतम्'।

इति चतुर्विंशतिमते विषभोजननिन्दास्मरणात्। तथा केचित् श्रद्धालवः शूद्रादयः स्वगृहे श्रोत्रियो न भुङ्क्ते इत्यभिप्रेत्य श्रोत्रियान्तरगृहे द्रव्यं दत्वा भोजयन्ति। तादृशस्य श्रोत्रियान्तरस्य गृहे सिद्धमन्नं निन्द्यत्वेन शङ्कितम्। 'प्रतिषिद्धान्नं' गोघ्रातादि। तथा च याज्ञवल्क्यः—

* विषं तावत् द्विविधं स्थावरं जङ्गमं चेति। स्थावरं कन्द-फलादिषु स्थितं भवति। तच्च—१ कालकूटम् २ वत्सनाभम् ३ शाङ्कम्। ४ माल्कम् ५ दामवैराटिमुस्ताकम्। ६ शृङ्गी ७ पुण्डरीकम् ८ महाविषम् ९ हालाहलम् १० मर्कटकम् ११ काशपुष्पकम् १२ इन्द्रायुधम् १३ तलम् इति त्रयोदशभेदभिन्नं भवतीति संग्रहे उक्तम्। एतेषां लक्षणानि तत्रैव द्रष्टव्यानि। सर्पादिदंष्ट्रासु यत् व्यवस्थितं तज्जङ्गमम्।

उपमितेन विषेण इति उपविषम्। तच्च—

'अर्कक्षीरं स्नुहीक्षीरं तथैव कलिहारिका।
करवीरोऽथ धत्तूरः पञ्च चोपविषाः स्मृताः'॥

इति पञ्चविधम्। केषाञ्चिन्मते सप्तविधम्—

'अर्क-सेहुण्ड-धत्तूरा लाङ्गली करवीरकः।
गुञ्जा-ऽहीफेनमित्येताः सप्तोपविषजातय.'॥

इति शार्ङ्गधरे मध्यमखण्डे द्वादशाध्याये।

१. C. omits मनुष्यान्. २. C. and F. do not insert इत्यस्ति महती प्रसिद्धिः.

'अनर्चितं[*] वृथामांसं केश-कीटसमन्वितम्।
शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम्॥
गोघ्रातं शकुनोच्छिष्टं पदास्पृष्टं च कामतः।
उदक्या स्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत्'॥

(या. स्मृ. १. १६७–१६८)

इति। पात्रे पतितस्यान्नस्यार्धं भुक्त्वा शिष्टमन्नं कालान्तरे भोक्तुं यदि संगृह्यते तदा तदन्नं पूर्वोच्छिष्टमित्यभिधीयते। तेष्वेतेषु सूतकान्नादिषु पूर्वोच्छिष्टान्तेषु पञ्चसु भुक्तेषु शूद्रान्नवद् ब्रह्मकूर्च-कृच्छ्रौ वेदितव्यौ। सूतकान्ने ये वक्तव्यविशेषास्ते सर्वेऽप्युपरिष्टाद् वक्ष्यन्ते। यत्त्वभोज्यान्ने सुमन्तुनोक्तम्—

'अभिशस्त-पतित-पौनर्भव-पुंश्चल्यशुचि-शस्त्रकार-तैलिक-चाक्रिक-ध्वजि-सुवर्णकार-लेखक-लैङ्गिक-

---

[*] पूजार्हाय यदवज्ञया दीयते तदनर्चितम्। प्राणात्ययादिव्यतिरेकेण देवाद्यर्चनावशिष्टं यन्न भवति केवलमात्मार्थमेव साधितं तद्वृथामांसम्।

---

१ Except A C. and F. all others do not insert this and the following line.—

अनर्चितं वृथामांस केश-कीटसमन्वितम।
शुक्त पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम्॥.

२. The text and A C F place this line after the next line. ३. B and D read च शुनोच्छिष्ट, E H. J. तु शुनोच्छिष्ट for शकुनोच्छिष्ट ४. B C D E F. G H and J. read श्वस्पृष्ट पतितेक्षितम्. ५ I reads -सघृष्ट and J. -सस्पृष्ट for -सघुष्ट ६ I. reads विवर्जयेत् for च वर्जयेत् ७. B. and D. read पूर्वोद्दिष्ट for पूर्वोच्छिष्ट. ८. H. substitutes हि for अपि. ९. Except I. all others omit -लैङ्गिक-.

षण्डक-बन्धक-गणक-गणिकान्नानि*चाभोज्यानि। सौनिक-क्रव्याद-निषाद-बुरुड-चर्मकारा अभोज्यान्ना अप्रतिग्राह्याश्च अशन-प्रतिग्रहयोश्चान्द्रायणं चरेत्' ।

इति तत् कामकृताभ्यासविषयम् । यच्च शङ्खेनोक्तम्—

'शूद्रान्नं ब्राह्मणो भुक्त्वा तथा रङ्गावतारिणः ।
चिकित्सकस्य क्रूरस्य तथा स्त्री-शूद्र-जीविनः ॥
षण्ढस्य कुलटायाश्च तथा बन्धनरक्षिणः ।
अभिशस्तस्य चोरस्य अवीरायाः स्त्रियास्तथा ॥

* अभिशस्तादयः पूर्वं व्याख्याताः । चक्रमस्ति वाद्यत्वेन यस्य स चाक्रिकः । षण्डको वर्षवरः आकृष्टाण्डः पुमान् वा । कन्याविनिमयजातः पुत्रो बन्धकः । कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तं पक्वं च मांसं भुङ्क्ते इति क्रव्यादः । पृषोदरादित्वात् साधुः ।

'क्रव्यादः कृत्त-विकृत-पक्वमांसभुगुच्यते' ।

इति शब्दार्णवः ।

here A. and I., while all others read -बद्धक- for -बन्धक- २ B. D. and I read -गण- for -गणक- ३ H reads च न भोज्यानि B. D. and J read the same, but omit च. ४ The text reads the following lines of the quotation as follows —

बद्धस्य चैव चौरस्यावीरायाश्च तथा स्त्रिय ॥
कर्मकारस्य वेणस्य क्लीबस्य पतितस्य च ।
रुक्मकारस्य तक्ष्णश्च तथा वार्द्धुषिकस्य च ॥
कदर्यस्य नृशंसस्य वेश्याया कितवस्य च ।
गणान्नं भूमिपालान्नमन्नं चैवास्त्रजीविन ॥
सौनपान्न सूतिकान्नं भुक्त्वा मासं व्रत चरेत् ॥

५ G. and J. read -शूद्रजीविनाम्. ६. This and the following two lines do not occur in I:—

अभिशस्तस्य चोरस्य अवीरायास्त्रियास्तथा ॥
चर्मकारस्य वेणस्य क्लीबस्य पतितस्य च ।
कर्मारस्य तथा तक्ष्णो रजकस्य च वार्द्धुषे. ॥.

चर्मकारस्य वैणस्य क्लीबस्य पतितस्य च।
कर्मारस्य[1] तथा तक्ष्णो रजकस्य च वार्धुषेः॥
कदर्यस्य नृशंसस्य वेश्यायाः कितवस्य च।
गणान्नं गणिकान्नं[2] च मृगजीवि-श्ववृत्तिनाम्॥
सौनिकान्नं सूतिकान्नं भुक्त्वा मासं व्रती भवेत्'।
( शं. स्मृ. १७. ३६–३८ )

इति एतच्च पूर्वेण समानविषयम्। मासव्रतस्य चान्द्रायणरूपत्वात्। यदपि बृहस्पतिनोक्तम्—

'शौण्डिकान्नं नटस्यान्नं क्लीब-दण्डिकयोरपि*।
दुष्टान्नमपसृष्टान्नं[3] सोमविक्रयिणस्तथा॥
सौनिकान्न[4] सूतिकान्नं वार्धुषेः पतितस्य च।
एतेषां ब्राह्मणो भुक्त्वा द्वादशाहं यवान् पिबेत्'॥
( बृ. स्मृ. १. ३१–३२ )

इति यदपि शङ्ख-लिखिताभ्यामुक्तम्—

'अभिशस्त-पतित-रजक-चाक्रिक[5]-तैलिक-
ग्रामयाजक-शूद्र-सांवत्सरिक-कुलटा[6]-सु-
वर्णकार-चर्मकार-चित्रवृत्ति-पोषक[7]-तन्तु-
वाय-रङ्गावतारि-मानकूट-शौण्डिक-वध-

* दण्डो लगुडः तं प्रहृत्य जीवतीति दण्डिकः।

१ A. reads रुक्मकारस्य तक्ष्णश्च for कर्मारस्य तथा तक्ष्णो. २. All, except A and I substitute भूमिपालान्नं for गणिकान्न च ३ I. reads अवशिष्टान्नं for अपसृष्टान्न ४ B and D. read सूतान्न भूमिकान्नं च, C E F. H. and J. सूतान्नं सूतिकान्न च and I सूत्यन्न सूतिकान्न च for सौनिकान्न सूतिकान्नं. ५. B and D substitute -शाक्तिक- for -चाक्रिक-. ६ Except A. all others read -कुलिक- for कुलटा-. ७. I reads -घोषक- for -पोषक-

जीवि-नृशंस्योत्मविक्रयि-वार्धुषिक-श्या-
वक-नटवृत्ति-व्रात्य-तस्कर-गणान्नभो-
जनेष्वतिकृच्छ्रं चरेत्'* ।

इति एतदुभयं पूर्वोक्तविषये चान्द्रायणं कर्त्तुमशक्तस्यानि वेदितव्यम् । यदपि बृहस्पतिना दर्शितम्—

'गान्धर्वो लोहकारश्च सौनिकस्तन्तुवायकः ।
चक्रोपजीवी रजकः कितवस्तस्करस्तथा ॥
यजमानोपजीवी च शूद्राध्यापक-याजकौ ।
कुलटश्चित्रकर्मा च वार्धुषिश्चर्मविक्रयी ॥
समर्घं पण्यमाहृत्य महार्घं यः प्रयच्छति ।
स वै वार्द्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत् ॥
वृथा ऽऽश्रमाश्रमाणां च भेदकः पुण्यविक्रयी† ।

---

* अभिशस्तादयः पूर्वं व्याख्याताः । संवत्सरं वेत्तीति सावत्सरिकः ज्यौतिषिक इति यावत् । पोषकः व्यभिचारार्थं स्त्रीणां पोषणकर्ता । मानकूटः न्यूनमानकर्ता ।

† जप-यात्रा-यज्ञादिभिः सम्पादितं पुण्यं द्रव्यं गृहीत्वा विक्रीणाति—'मया कृतस्यामुकस्य कर्मणः यदुत्पन्नं श्रेयः तत् अमुकद्रव्यं गृहीत्वा तुभ्यमहं सम्प्रददे'—इति सङ्कल्प्य यो ददाति स पुण्यविक्रयी । गुरुः पित्रादिः स गुप्तो यस्य स गुरुगुप्तिकः । ख्यापने दोषाविष्करणं भवेदिति भिया यो पित्रादीन् न वक्ति स निन्द्यः । वर्णिकया जीवतीति वर्णिकः भूमिका ग्रहणकर्तेति यावत् । गान्धर्वादिवर्णिकान्तेषु यो विप्रो मोहात् तत्कर्मणा वर्तते स प्रायश्चित्तेन व्यवहार्यो भवेत् । सदेत्युक्तेरभ्यासोऽवगम्यते । ये च ब्राह्मणाः स्वयमेव तेषां कर्माण्याचरेयुः तेषां प्रत्यापत्ति शुद्धिम्—इत्यादि योजनीयम् ।

---

१ C and F read -नाराशंसि- for -नृशंसि-. २. I. reads -श्यावभटवृत्ति- for -श्यावक-नटवृत्ति-. ३. I. omits गण-. ४ Except A and I. all others substitute सूतिक for सौनिक, while H तुन्नवायक for तन्तुवायक ५. A. reads कुलश्च for -कुलटश् ६ B. D and G. read दारा for ऽऽश्रमा-. ७. A. read पण्यविक्रयी for पुण्यविक्रयी

विक्रयी ब्रह्मणो यश्च योनिसाङ्करिकश्च यः ॥
रङ्गोपजीवी कूटाशः[1] कुहको गुरुगुप्तिकः[2] ।
भिषक्[3] च गरदश्चैव रूपाजीवी[4] च सूचकः ॥
सौनिको[5] वणिकश्चैव निषादेन समाः स्मृताः ।
कर्मणा तेषु यो मोहाद् ब्राह्मणो वर्त्तते सदा ॥
प्रायश्चित्ते तु चरिते व्यवहार्यो[6] भवेत् स हि ।
एते ब्राह्मणचण्डालाः सर्वे ब्रह्महणः[7] किल ॥
तस्माद्[8] दैवे च पित्र्ये च वर्जितास्तत्त्वदर्शिभिः ।
एतेषामेव सर्वेषां प्रत्यापत्ति तु[9] मृग्यताम् ॥
भैक्ष्यान्नमुपभुञ्जानो द्विजश्चान्द्रायण चरेत् ।
एतेषां* ब्राह्मणो भुक्त्वा दत्वा कृत्वा प्रतिग्रहम् ॥
प्राजापत्येन शुद्ध्येत्तु तस्मात् पापान्न संशय'

(बृ. स्मृ. १. ३०–३१)

इति । तत्र चान्द्रायणं पूर्वोक्तचान्द्रायणेन समानविषयम् । प्राजापत्यं तु तस्मिन्नेव विषये वेदविदम्[10] प्रत्यवगन्तव्यम् । 'ब्राह्मण' इति विशेषाभिधानात् । यच्चोक्तमङ्गिरसा—

---

* एतेषां पर्वोक्तदोषदूषितानां गान्धर्वादीनामित्यर्थः ।

---

१ B D and H. read कूटी च, C. F and J कुटिश and G. कूटाद all for कूटाश. २ I. reads कुरुको गुप्तिकस्तथा for कुहको गुरुगुप्तिक. ३ I reads भिषजो for भिषक् च ४ G substitutes कूपजीवी for रूपाजीवी ५ J substitutes सौमिक for सौनिक ६ B C D E F G. H I. and J. read परिहार्यो for व्यवहार्यो. ७ B C. D and F read ब्रह्महता for ब्रह्महण ८. Except A and I. all substitute तथा for तस्मात् ९. All others except A. read प्रत्यापत्तिम्तु for प्रत्यापत्ति तु. १०. G. omits वेदविदम्

'अभोज्यानां तु सर्वेषां भुक्त्वा चान्नमुपस्कृतम् ।
अन्त्यावसायिनां भुक्त्वा पादकृच्छ्रेण शुद्ध्यति'॥
( अं. स्मृ. ३. १९ )

इति । यदपि विष्णुनोक्तम्—

'गण-गणिका-स्तेन-गायनान्नानि भुक्त्वा सप्तरात्रं पयसा वर्तेत । (७) तक्षान्नं चर्मकर्तुश्च । (८) वार्द्धुषिक-कदर्य-दीक्षित-बद्ध-निगडाभिशस्त-षण्ढानां च*। (९) पुंश्चली-दाम्भिक-चिकित्सक-लुब्धक-क्रूरोच्छिष्टभोजिनां च । (१०) अवीरास्त्री-स्वर्णकार-सपत्न-पतितानां च । (११) पिशुनानृतवादि-क्षतधर्मा-ऽऽत्म-रस-विक्रयिणां च । (१२) शैलूष-तन्तुवाय-कृतघ्न-रजकानां च । (१३) चर्मकारनिषाद-रङ्गावतारि-वैण-शस्त्रविक्रयिणां च । (१४) श्वजीवि-शौण्डिक-तैलिक-चैलनिर्णेजकानां च । (१५) रजस्वला-

* बद्धः रज्ज्वा पाशैर्वा बद्धः । निगडः शृङ्खला साऽस्यास्तीति निगडः । सपत्नः शत्रुः । स्वभार्याया उपपतिर्जारः सह वर्तते वेश्मनि सः।

१. B. and D. read अन्त्यावसायिन भुक्त्वा for अन्त्यावसायिनां भुक्त्वा २. I. reads -गणक- for -गणिका-. ३. Except A. I. and the text all others read अक्ष्णोान्नं for तक्षान्नं ४ Some manuscripts read -निगला , while the text बधनिका for -बद्ध निगडा-. ५. H. substitutes वा for च. ६ H. reads -सापत्न- for -सपत्न- ७. We follow here A. and the text, while all others read कृतधर्मसोम- for -क्षतधर्मा-ऽऽत्मरस- ८. Except A and I. all omit च and J. substitutes -मजक- for रजक-. ९ G and the text read कर्मकार- and B. C D. E F H and J. कर्मार- for चर्मकार-.

सहोपपतिवेश्मनां च । (१६) भ्रूण-
घ्नावेक्षितमुदक्या संस्पृष्टं पतत्रिणाऽव-
लीढं शुना संस्पृष्टं गवाघ्रातं च । (१७)
कामतः पादस्पृष्टमवक्षतं च । (१८)
मत्त-क्रुद्धा-ऽऽतुराणां च । (१९) अनर्चितं
वृथामांसं च । (२०) पाठीन-रोहित-
राजीव-सिंहतुण्ड-शकुलवर्जं सर्वमत्स्यमां-
साशने त्रिरात्रमुपवसेत् । (२१) सर्वजलज-
मांसाशने च । (२२)

(वि. स्मृ. ५१. ७–२२)

इति । तत्र त्रिरात्रोपवासो ऽकामकृतसकृद्भोजनविषयः। तस्मिन्नेव विषये मूलवचनोक्तब्रह्मकूर्चस्त्वशक्तम्प्रति वेदितव्यः । सप्तरात्रपयोव्रतमकामकृताभ्यासविषयम् । शङ्कित-प्रतिषिद्धान्नयोर्हारीत आह–

‘मृत-सूतक-शूद्रान्नं सदोषेणापि* संस्कृतम् ।
शङ्कितं प्रतिषिद्धान्नं विद्विषोऽन्नमथापि वा ॥
यदि भुञ्जीत विप्रो यः प्रायश्चित्ती ध्रुवं भवेत् ।
एकरात्रोपवासश्च गायत्र्यष्टशतं जपेत् ॥

* सदोषेण महापातकादिदोषदूषितेन । पञ्चगव्यस्य पृथक् पृथक् पञ्च मन्त्राः पूर्वत्रोक्ता अत्रानुसन्धेयाः ।

१. I. reads -रोहित च राजिल- सिंहतुण्ड च for -रोहित-राजीव-सिंहतुण्ड-. २ Except the text and A read -सशल्कवर्जं for -शकुलवर्जं. ३ Except A and I. all others read सरोषं वापि for सदोषेणापि ४. B. C. D. E. F. G. H. and J. read प्रायश्चित्तं for प्रायश्चित्ती.

प्राशयेत् पञ्चभिर्मन्त्रैः पञ्चगव्यं पृथक् पृथक् ।
एतेन शुद्ध्यते विप्रो ह्यन्यैश्चाभोज्यभोजनैः'॥
(हा. स्मृ. १३. १-३)

इति । एतच्च ब्रह्मकूर्चवद् व्याख्येयम् । पूर्वोच्छिष्टे तु ब्रह्मकूर्चसमानं व्रतं स्मृत्यन्तरे दर्शितम्—

'स्वमुच्छिष्टं तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभाजने*[१]।
एवं वैवस्वतः प्राह भुक्त्वा सान्तपनं चरेत्'॥

इति ॥ ९ ॥

पूर्वोच्छिष्टस्य पुनर्भोजने व्रताचरणमभिहितम् । तेनैव दृष्टान्तेन बालाद्युच्छिष्टस्याभोज्यत्वमाशङ्क्य स्वल्पशुद्ध्या भोज्यत्वमाह—

†बालै[२]र्नकुल-मार्जारैरन्नमुच्छि[३]ष्टितं यदा ।
तिल-दर्भोदकैः प्रोक्ष्य शुद्ध्यते नात्र संशयः॥ १० ॥

इति । उच्छिष्टितं उच्छिष्टतामापादितम् । प्रोक्षितस्यान्नस्य भो[४]जने श्रद्धाजडस्योच्छिष्टत्वशङ्काऽनपायात् पु[५]नर्व्रतमाचरणीय-

* भोजनकाले पात्रालम्भन विहितम् । तदकृत्वा यो भुङ्क्ते स मुक्तभाजने भुङ्क्त इत्यर्थः ।

† यद्यपि 'बाल आषोडशात् वर्षात्'—इत्युक्तं तथाप्यत्र आपञ्चमाद्वर्षात् इत्येव वक्तुमुचितम् । ततः परं तस्य सज्ञानत्वात् । धरणीधरस्तु—'बालाः पञ्चवर्षाधिकवर्षाः। पञ्चवर्षात् परस्येति स्मरणात्'—इत्याह । तदसमञ्जसम् । पञ्चवर्षाधिकस्य प्रायश्चित्ताभिधानादित्यन्यत्र विस्तरः । बहुवचनात् मूषकादीनामपि ग्रहणमिति केचित् ।

१. B. reads शुक्तभाजन., D. भक्तभाजनः, C. E F. and J मुक्तभाजनः and G भुक्तभोजने all for मुक्तभाजने. २ M. reads व्याले for बाले ३ K. and L read उच्छेषितं for उच्छिष्टितं. ४. I. does not insert भोजनं ५ I reads पूर्ण- for पुनर्.

मिति संशयः स्यात्। अतो नात्र संशयः कर्त्तव्य इत्युक्तम्। प्रोक्षणमकृत्वा भुक्ते सति पञ्चगव्यं पातव्यम्[1]। तदाह संवर्तः—

'श्व-काकोच्छिष्ट-गोच्छिष्टभक्षणे तु त्र्यहं क्षपेत्[2]॥(१८९)
बिडाल-मूषकोच्छिष्टे पञ्चगव्यं पिबेत् द्विजः'।
(सं. स्मृ. १८९–१९०)

इति। शास्त्रीयपञ्चगव्यपाने योऽशक्तः तम्प्रत्युक्तं स्मृत्यन्तरे[3]—

'भुक्त्वोच्छिष्टं तु काकानां विशुद्ध्यत त्र्यहोषितः।
भुक्त्वोच्छिष्टं बिडालादेः पञ्चगव्यं पिबेत् द्विजः'॥

इति। मनुः[4]—

'बिडाल-काकाखूच्छिष्टं* जग्ध्वा श्व-नकुलस्य च।
केश-कीटावपन्नं च पिबेद् ब्राह्मीं सुवर्चलाम्[5]'॥
(म. स्मृ. ११. १५९)

* इदं तावदकृतप्रायश्चित्तस्य ब्रह्मचारिणः 'व्रतशेषं समापयेत्'—

१ B D. and G omit पातव्यम्, while H. omits the following —

पञ्चगव्यं पातव्यम्। तदाह संवर्तः—
'श्व-काकोच्छिष्ट-गोच्छिष्टभक्षणे तु त्र्यहं क्षिपेत्।
बिडाल-मूषकोच्छिष्टे - - - - - - - - - -'॥.

२. B. C D. F. and J जपेत्, I क्षिपेत्, and the text द्विजः for क्षपेत्-

३ The text does not insert ब्राह्मी and F omits the following portion.—

'- - - - - - - - - - नाविशुध्येत् त्र्यहोषित।
भुक्त्वोच्छिष्टं बिडालादेः पगगव्यं पिबेद् द्विज'।
इति। मनु —
'बिडाल-काकाखू - - - - - - - -'॥

and it substitutes मनुरपि for विष्णुरपि the same.

४. All, except A. and I. add आह after मनु. ५. The text reads ब्रह्मसुवर्चलाम् for ब्राह्मी सुवर्चलाम्.

इति । विष्णुरपि[1]—

'बिडाल-काक-नकुलाखूच्छिष्टभोजने ब्राह्मीं
सुवर्चलां* पिबेत् । ( ४६ ) श्वोच्छिष्टाशने[2]
दिनमेकमुपोषितः पञ्चगव्यं पिबेत् । ( ४७ )
पञ्चनखविण्मूत्राशने सप्तरात्रम् । ( ४८ )
आमश्राद्धाशने त्रिरात्रं पयसा वर्त्तेत[3] । ( ४९ )
ब्राह्मणः[4] शूद्रोच्छिष्टभोजने[5] त्रिरात्रमुपवसेत् ।

( म. स्मृ. ११. १९८ ) इत्यनेन पूर्ववाक्ये व्रतशेषसमापनेऽनधिकारमाह । अवपन्नं केश-कीटादिभिर्दूषितम् । ब्राह्मीं पिष्ट्वा उदकेन सह पिबेदेकाहम् ।

* इदं चाकामतः सकृद्भक्षण एव । कामतस्तु पूर्वोक्तं ब्रह्मकूर्चम् । एकदिनोपोषणमकामतः सकृद्भक्षणे । कामतोऽभ्यासे तु त्रिदिनमुपोषणं प्राजापत्यं च । मानुषातिरिक्तपञ्चनखानां विण्मूत्राशने सप्ताहमुपोषितोऽष्टमेऽह्नि पञ्चगव्यं पिबेदिति योजना । इदमपि कामत एव । ब्रह्मचार्यतिरिक्तस्यामश्राद्धाशने त्रिरात्रं पयःपानम् । इदं चाकामतः । अकामतः शूद्रोच्छिष्टभोजने त्रिरात्रोपवासः । कामतस्तु त्रिरात्रोपवाससहित एकदिनमुदकवासः । ब्रह्मचारिणोऽयं मधु-मांसाशननिषेधः । वैश्य-राजन्योच्छिष्टाशने पञ्चरात्र-त्रिरात्रं कामतः । राजन्यस्य शूद्र-वैश्ययोरुच्छिष्टाशने पञ्चरात्र-त्रिरात्रं कामत. । वैश्यस्य शूद्रोच्छिष्टाशने त्रिरात्रोपवासः । चण्डालाः पूर्वोक्ताः तेषां आममन्नं भुक्त्वा त्रिरात्रमुपवसेत् ।

---

१. D. and J. omit the following — विष्णुरपि—
'बिडाल-काक-नकुलाखूच्छिष्टभोजने ब्राह्मी सुवर्चलाम्,
while C. substitutes मनुरपि for विष्णुरपि. २ E. and I read स्वोच्छिष्टाशने for श्वोच्छिष्टाशनं. ३. We follow here A. and the text, while all others do not insert the following portion —सप्तरात्रम् । (४८) आमश्राद्धाशने ४ I. includes ब्राह्मण in forty-nine sûtra. ५ The text substitutes -अशने for -भोजने and omits the following·—
त्रिरात्रमुपवसेत् । (५०) दिनमेकं चोदके
वसेत । (५१) मधु मांसाशने प्राजापत्य.

(५०) दिनमेकं चोदके वसेत्। (५१) मधु-मांसाशने प्राजापत्यं सप्तरात्रम्। (५२) वैश्योच्छिष्टभोजने पञ्चरात्रम्। (५३) राजन्योच्छिष्टभोजने त्रिरात्रम्। (५४) राजन्यः शूद्रोच्छिष्टाशी पञ्चरात्रम्। (५५) वैश्योच्छिष्टाशी त्रिरात्रम्। (५६) वैश्यः शूद्रोच्छिष्टाशी च। (५७) चण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत्। (५८) सिद्धान्नं भुक्त्वा पराकम्[१]। (५९)

(वि. स्मृ. ५१. ४६–५९)

इति। उशना अपि—

'ब्राह्मणोच्छिष्टभोजने प्राणायामशतं कुर्यात्। क्षत्रियोच्छिष्टभोजने प्राणायामसहस्रम्। वैश्योच्छिष्टभोजने दशसहस्रं प्राणायामम्*। मतिपूर्वं प्राजापत्यमतिकृच्छ्रं कृच्छ्रातिकृच्छ्रं च। शूद्रोच्छिष्टभोजने सप्तरात्रं यवागूपानम्। मतिपूर्वं चेत् पराकः। एवं द्विजात्युच्छिष्टभोजने शूद्राणां च। ब्राह्मणोच्छिष्टानामपां पाने षोडश प्राणायामान् धारयेत्।

---

* शत-सहस्र-दशसहस्रप्राणायामा अकामत एव। एवमेवाग्रेऽपि।

---

१ All, except A. and the text omit च, while I interchanges the word in the sûtras fifty-three to fifty-six respectively. २. G. reads प्राजापत्यमिति। कृच्छ्र कृच्छ्रातिकृच्छ्रं च, while F. omits च ३ B D. and G. substitute द्विज- for द्विजाति-. ४. I. reads प्राणायाम for प्राणायामान्.

क्षत्रियाणां[१] त्रिंशत् वैश्यानां चत्वारिंशत् । शूद्राणां कुशवारिपानं त्र्यहम्[२] । बुद्धिपूर्वं चेत् त्र्यहं चतुरहं पंचरात्रं[३] सप्तरात्रं च पञ्चगव्यपानं क्रमेण । अन्त्यजानामुच्छिष्टभोजने बुद्धिपूर्वे महासान्तपनम् । अबुद्धिपूर्वे चान्द्रायणम्[४] ।

(उ. स्मृ. ३. २०–२२)

इति । मनुरपि—

'शूद्रोच्छिष्टाश्च पीत्वापः[५]* कुशवारि पिबेत् त्र्यहम् ।(१४८)
अभोज्यानां तु भुक्त्वाऽन्नं स्त्री-शूद्रोच्छिष्टमेव च ।
जग्ध्वा मांसमभक्ष्यं च सप्तरात्रं यवान् पिबेत् ।। (१५२)

(म. स्मृ. ११. १४८–१५२)

इति । जातूकर्ण्योऽपि—

'जम्बूक-काक-मार्जार-श्व-गोधानां गवामपि ।
मत्स्योच्छिष्टं द्विजो भुक्त्वा कृच्छ्रं सान्तपनं चरेत्' ।।

---

* शूद्रपीतोच्छिष्टा आपः पीत्वा विधिवत् सान्तपन-कुशोदकग्रहणमन्त्रेण संस्कृतं कुशमिश्रितं वारि त्र्यह पिबेत् । इदमकामत एवेति ज्ञेयम् । अभोज्या अश्रोत्रियादय । 'शूद्रजातिग्रहणादेव जातिनिर्देशात् 'स्त्रीग्रहणं लब्धसवर्णार्थं विज्ञेयम्' –इति मेधातिथिः। इदं च सप्तरात्रं यवपानं कामतः शूद्रोच्छिष्टानामपां पाने इति विज्ञेयम् । कामाकाम-अभ्यासानभ्यासतारतम्येन एकगुण-द्विगुणादिकं योजनीयम् ।

---

१ All, except A. and I read क्षत्रिये for क्षत्रियाणां २. G reads अहम् for त्र्यहम ३. I. omits पंचरात्रं, while G. and H omit सप्तरात्र. ४ I. reads ऽबुद्धिपूर्वे महासांतपनम् । बुद्धिपूर्वे, but it seems to be a mistake ५ I reads शूद्रोच्छिष्ट च पीत्वा तु for शूद्रोच्छिष्टाश्च पीत्वाप

इति । याज्ञवल्क्योऽपि—

'विप्रार्धं क्षत्रियस्य स्यात् वैश्यानां च तदर्धकम्* ।
तदर्धमेव शूद्राणां प्रायश्चित्तं विदुर्बुधाः' ॥
(य. स्मृ. ३.१९)

इति । बृहद्विष्णुः—

ब्राह्मणः शूद्रोच्छिष्टाशने सप्तरात्रं पञ्चगव्यं पिबेत् । (५०) वैश्योच्छिष्टाशने पञ्चरात्रम् । (५१) राजन्योच्छिष्टाशने त्रिरात्रम् । (५२) ब्राह्मणोच्छिष्टाशने एकाहम्'† । (५३)
(वि. स्मृ. ५१. ५०–५३ आन्ध्रपु०)

इति । शङ्ख-लिखितौ—

'ब्राह्मणोच्छिष्टाशने महाव्याहृतिभिरभिमन्त्र्यापः पिबेत् । क्षत्रियोच्छिष्टाशने ब्राह्मीरसपक्केन त्र्यहं क्षीरेण वर्तयेत् । वैश्योच्छिष्टभाजने त्रिरात्रोपो-

---

* जातिभेदेनायं प्रायश्चित्तभेदः सर्वत्र तारतम्येन योजनीयः ।
† एतानि सर्वाण्यप्यकामत इति विज्ञेयम् । कामतस्तु द्विगुणादिकम् ।

---

१. A. and J substitute कण्वोऽपि for याज्ञवल्क्योऽपि and the quoted verse does not occur in याज्ञवल्क्यस्मृति. २ B D. G and H read वृद्धविष्णु for बृहद्विष्णु, but the quoted sûtras occur in Vishnu Smriti (Te MS.) ३. In Vishnu Smriti the words पञ्चगव्य पिबेत् are omitted, and B D. E and H omit the following —

सप्तरात्र पंचगव्यं पिबेत् । वैश्योच्छिष्टाशने पञ्चरात्रम् ।
राजन्योच्छिष्टाशने त्रिरात्रम् । ब्राह्मणोच्छिष्टाशने एकाहम्' ।
इति । शंख लिखितौ—
'ब्राह्मणोच्छिष्टाशने महाव्याहृतिभिरभि-
मन्त्र्याप पिबेत् । क्षत्रियोच्छिष्टाशने

४. Except A all others read शङ्ख for शङ्ख लिखितौ ५. I reads wrongly ब्राह्मणी for ब्राह्मी-.

षितो ब्राह्मीं सुवर्चलां पिबेत् । शूद्रोच्छिष्टभोजने
षड्रात्रमभोजनम्'* ।

इति । यमः—

'भुक्त्वा सह ब्राह्मणेन प्राजापत्येन शुद्ध्यति ।
भूभुजा सह भुक्त्वान्नं तप्तकृच्छ्रेण शुद्ध्यति ॥
वैश्येन सह भुक्त्वाऽन्नमतिकृच्छ्रेण शुद्ध्यति ।
शूद्रेण सह भुक्त्वाऽन्नं चान्द्रायणमथाचरेत्'† ॥
( य. स्मृ. ६. १-२)

इति । आपस्तम्बः—

शूद्रोच्छिष्टभोजने तु सप्तरात्र-
मभोजनम् । (४) स्त्रीणाम् । (५)
( आ. ध. सू. १. ९. २६. ४-५ )

इति । शङ्खः—

'शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः ।
क्षत्रियस्य तु सप्ताहं ब्राह्मणानां तथा दिनम्'‡ ॥
( शं. स्मृ. १७. ४२ )

---

* इदं चोच्छिष्टमन्नमेव । मासाद्यभक्ष्योच्छिष्टभोजने उच्छिष्टभोजननिमित्तमभक्ष्यभक्षणनिमित्तं चेति प्रायश्चित्तद्वयं कर्तव्यम् । कामाकाम-अभ्यासानभ्यासतारतम्येन प्रायश्चित्तावृत्त्यादि कल्पनीयम् ।

† सहभोजनं एकस्मिन् पात्रे भोजनम् । न त्वेकपङ्क्तौ ।
'सह भुक्त्वा ब्राह्मणेन ब्रह्मकूर्चं पिबेत् त्र्यहम्' ।
इत्याङ्गिरोवचनेन तत्र प्रायश्चित्तस्याल्पत्वाभिधानात् ।

‡ पूर्वत्र शङ्खलिखितोक्तमापस्तम्बोक्तं इदं च प्रायश्चित्तविधानं एकस्मिन्नेव विषये विभिन्नमपि दोषतारतम्येन योजनीयम् ।

---

१ We follow here A and G., while all others read सप्तरात्रेण for तप्तकृच्छ्रेण, but the reading seems to be incorrect २ The text reads these two Sutras as follows.—

शूद्रस्य सप्तरात्रमभोजनम । (४) स्त्रीणां चैवम् । (५).

इति । बृहद्यमः—

‘माता वा भगिनी वाऽपि भार्या वाऽन्याश्च योषितः।
न ताभिः सह भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्’ ॥
( य. स्मृ. ६. ९ )

इति । आपस्तम्बः—

‘अन्त्यानां भुक्तशेषं तु भक्षयित्वा द्विजातयः ।
चान्द्रं कृच्छ्रं तदर्धं तु ब्रह्म-क्षत्र-विशां विधिः’ ॥[1]
( आ. स्मृ. ५. ९ )

इति । अङ्गिराः—

‘चण्डाल-पतितादीनामुच्छिष्टान्नस्य भक्षणे ।
चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत् ॥
षड्रात्रं च त्रिरात्रं च वर्णयोरनुपूर्वशः’* ।
( अं. स्मृ. ३. ६३–६४ )

इति । वृद्धशातातपः—

‘पीतशेषं तु यत् किञ्चिद्भाजने[2] मुखनिःसृतम् ।
अभोज्यं तद् विजानीयाद् भुक्त्वा चान्द्रायणं चरेत् ॥
पीतोच्छिष्टं तु पानीयं पीत्वा तु ब्राह्मणः क्वचित् ।[3]
त्रिरात्रं तु व्रतं कुर्याद् वामहस्तेन वा पुनः’† ॥

* वैश्य-शूद्रयोः षड्रात्र-त्रिरात्रे अनुक्रमेण । इदमपि अकामतः सकृदेव भक्षणे । कामतोऽभ्यासे त्वधिकं कल्पनीयम् ।

† इदं तु स्वस्यैवोच्छिष्टम् । यदि किञ्चित् पीत्वा पानीयपात्रं भूमौ निधाय पुनस्तदेव पिबति तदोच्छिष्टपानदोषनिरासार्थं त्रिरात्रव्रतं कुर्यात् ।

१. The text reads चान्द्रायण तदर्धार्धं for चांद्रकृच्छ्रं तदर्धं तु २ J reads भोजने for भाजने , while G and H मुखतश्च्युतम् for मुखनि.सृतम्. ३. This verse does not occur in I but all others insert it.

इति । शातातपः—

'शूद्रस्योच्छिष्टभोजी तु त्रिरात्रोपोषितः शुचिः ।
सुराभाण्डोदकं पीत्वा च्छर्दितो घृतसेवकः* ॥
अहोरात्रोपवासेन शुद्धिमाप्नोति वै द्विजः' ।
(शा. स्मृ. ६. ७–८)

इति । षट्त्रिंशन्मते—

'दीपोच्छिष्टं तु यत्तैलं रात्रौ रथ्याहृतं तु यत् ।
अभ्यङ्गाच्चैव यच्छिष्टं भुक्त्वा नक्तेन शुद्ध्यति' ॥

इति । अत्र बालोच्छिष्टप्रसङ्गादुदाहृतेषु वचनेष्वेकस्मिन्निषये श्रूयमाणानां बहूनां व्रतानामावृत्तितारतम्यविषयत्वेन व्यवस्था वर्णनीया ॥ ६ ॥

भुक्तोच्छिष्टभोजने प्रायश्चित्तमभिधाय पङ्क्त्युच्छिष्टभोजने प्रायश्चित्तमाह—

एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने ।
यद्येकोऽपि त्यजेत् पात्रं शेषमन्नं न भोजयेत् ॥७॥
मोहाद्भुञ्जीत यस्तत्र पङ्क्तावुच्छिष्टभोजने ।
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं तथा ॥८॥

* घृतसेवनमेकवारमेव ।

---

१. A. substitutes क्वचित् for शुचिः. २ B. reads छर्दनात् घृतसेवनात् for छर्दितो घृतसेवक ३ H reads कस्मिन् for एकस्मिन्. ४ Except A and I. all others read -भोजने for -भाजने, while M मोहाद्वा लोभतस्तत्र for मोहाद् भुञ्जीत यस्तत्र. ५. K and L read तदा for तथा and insert the following line—

अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ।

इति। एको विप्रः सहसा स्वभोजने समाप्ते[1] वा भोजनमध्ये येन केनचिद्विघ्नेन वा भोजनपात्रं परित्यज्य इतरेषु विप्रेषु भुञ्जानेष्वेव सत्सु स्वयमुत्थाय[2] यदि गच्छेत् तदा विप्रान्तरैः स्वस्वपात्रेषु भुक्तावशिष्टमन्नं न भोक्तव्यम्। तमिमं शास्त्रीयनिषेधमज्ञात्वा यो भुङ्क्ते स सान्तपनं चरेत्। निमित्तस्याल्पत्वादत्र द्विरात्रसान्तपनं वेदितव्यम्। अस्मिन्नेव विषये समानं व्रतं स्मृत्यन्तरे दर्शितम्—

'यस्तु भुङ्क्ते द्विजः पङ्क्तावुच्छिष्टायां[3] कदाचन।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्धयति'॥
(अं. स्मृ. ९. १)

इति। वन्ह्यादिव्यवधाने पङ्क्त्युच्छिष्टदोषो नास्ति। एतच्चाचारकाण्डे दर्शितम्॥ ७–८॥

अभिनवक्षीरादिभोजने प्रायश्चित्तमाह—

पीयूषं श्वेतलशुनं वृन्ताकफल-गृञ्जने।
पलाण्डु-वृक्षनिर्यास-देवस्व-कवकानि च॥ ९॥
उष्ट्रीक्षीरमविक्षीरमज्ञानाद् भुञ्जते[4] द्विजः।
त्रिरात्रमुपवासेन[5] पञ्चगव्येन शुद्धयति॥ १०॥

इति। पीयूषं अभिनवं पयः[6]। पयसोऽभिनवत्वं प्रसवकालीनत्वमित्येके। दशाहान्तःपातित्वमित्यपरे। दशाहादूर्ध्वमपि

१. C and F. read समाप्तेऽसमाप्ते, B. D. E. G. and J प्राप्ते समाप्ते both for समाप्ते वा २ J. reads स्वयं त्वापदि यदि गच्छेत् ३. Except A. and I. all others read पङ्क्त्याम् ४ B D and G read पिबते for भुजते and K. and L. द्विजा. for द्विज ५. M. reads उपवासी for उपवासेन ६. I. substitutes पीयूषत्वं for पीयूषमभिनवं पय •

प्रसवप्रयुक्तरक्ताद्यार्द्रतासद्भावकालीनत्वमिति केचित् । श्वेत-शब्दो लशुन-वृन्ताकाभ्यां सम्बध्यते। तेन रक्तलशुन-कृष्ण-वृन्ताकादौ नेदं प्रायश्चित्तमित्युक्तं भवति । गृञ्जनं पत्रवि-शेषः । यदीयं चूर्णं गायकाः कण्ठशुद्ध्यर्थं भक्षयन्ति । वेश्याश्च मदाद्यर्थम् । मूलविशेषो वा गाजरापरपर्यायः । पलाण्डुः स्थूलकन्दो लशुनविशेषः । वृक्षनिर्यासो हिङ्गु-कर्पूरा-दिव्यतिरिक्तः । हिङ्ग्वादीनां भोज्यत्वाभ्यनुज्ञानात् । देवतार्थ-मुपकल्पिते क्षेत्रादावुत्पन्नमन्नं देवस्वम् । कवकं भूमौ छत्रा-द्याकारेणोत्पन्नं शिलीन्ध्रशब्दवाच्यम् । पीयूषादिभोजी त्रिरात्र-मुपोष्य चतुर्थे दिवसे पञ्चगव्यं पिबेत् । मतिपूर्वे तु भोजने मनुराह—

> 'छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
> पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः'† ॥
> (म. स्मृ. ५. १९)

* भाषायां 'गांजा' इति प्रसिद्धः पत्रविशेष एवायमिति प्रतिभाति तस्मिन् कण्ठशुद्धिकरत्वं मदजनकत्वमुभयमप्यस्तीति प्रसिद्धमेव ।

† छत्राकं द्विविधम् । भूजं वृक्षजं चेति । द्विविधमप्यभक्ष्यम् । अत्र पतेत् इति यदुक्तं तत्—

> 'द्विजातिकर्मभ्यो हानिः पतनम्' ।
> (गौ. स्मृ. २१. ४)

इति गौतमोक्तपातित्यवान् भवति । तेन उक्तप्रायश्चित्ताचरणात् प्राक् सन्ध्यावन्दनादावनधिकारः । एवमेव महापातकादिपातित्यापाद-कव्यतिरिक्तेषु पापेषु यत्रयत्र पातित्यमुक्तं तत्र सर्वत्र कर्महानिरूपं पातित्यमित्यवगन्तव्यम् ।

१. B. D. G. H. and J. omit इदं and read न प्रायश्चित्तं for नेदं प्रायश्चित्त. २. B D. E. G. H. and J. read विशश्च and C F. I. विटाश्च for वेश्याश्च, and I. substitutes स्वराद्यर्थं for मदाद्यर्थं. ३ G. reads गृञ्जनपर्याय., while I. गृञ्जनापरपर्याय· for गाजरापरपर्याय. ४ I reads ग्राम्यकुक्कुटम् for ग्रामकुक्कुटम ५ I reads पलाण्डुगृञ्जन for पलाण्डुं गृञ्जनं.

इति । अमतिपूर्वे स एवाह—

'अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् ।
यतिचान्द्रायणं वा ऽपि शेषेषूपवसेदहः'*॥

(म. स्मृ. ५. २० )

इति । तत्र सप्तरात्रात्मकं सान्तपनं वेदितव्यम्—

'अबुद्धिपूर्वे सान्तपनं सप्तरात्रं वा'[१] ।

( गौ. स्मृ. २३. २५ आन्ध्राक्षरपुस्तके. )

इति गौतमेन सप्तरात्रोपवाससमविकल्पस्मरणात् । एवं च सति मूलवचनोक्तत्र्यहोपवासो भक्षितोद्गारितविषयो द्रष्टव्यः । चान्द्रायणं त्वावृत्तिविषयम् । 'शेषेषूपवसेदहः'–इत्येतत् कुसुम्भादिषु[३] द्रष्टव्यम् । तथा च[४] चतुर्विंशतिमते—

'पलाण्डुं श्वेतवृन्ताकं कुसुम्भं वनकुक्कुटम्[५] ।
नालिकां[६] बालपुष्पं च भुक्त्वा दिनमभोजनम्' ॥

इति । न चैतस्य पलाण्डोर्मूलवचनविरोधः शङ्कनीयः । अवान्तरजातिभेदेन व्यवस्थापनात् ।

'पलाण्डोर्दश जातयः' ।

---

* षट्स्वप्येतेषु एकमपि भुक्तं चेत् प्रायश्चित्तं समानमेव । शेषेषु लोहितवृक्षनिर्यासादिष्वभक्ष्येषु । येषु प्रतिपदोक्तं प्रायश्चित्तं नोक्तं तेष्वित्यर्थः । सान्तपनमत्र द्व्यहसाध्यं वक्तमात्रप्रवेशो । सम्यग्भक्षणे तु यतिचान्द्रायणमिति व्यवस्था कर्तव्येतिसर्वज्ञनारायणस्याशयः । तन्मते सान्तपनयतिचान्द्रायणयोर्न समविकल्पः ।

---

१. Except A. and I. all others read अबुद्धिपूर्वे. २ E. G. H and J. substitute च for वा　३. J. substitutes कुसुमादिषु for कुसुम्भादिषु. ४ I omits च. ५ We follow here A. and I., while H. नवकण्टकम् and B. C. D. E. F. G. and J. वनकण्टकम्　६ B. D. and H. read नालिकं for नालिकां

इत्यभिधानात् । यत्तु सुमन्तुनोक्तम्[1]—

'लशुन-पलाण्डु-गृञ्जनभक्षणे सावित्र्यष्टसहस्रेण मूर्ध्नि सम्पातान्नयेत्'[2] ।

इति तद् बलात्कारेणाऽनिच्छतो भक्षणविषयम् । तदेकसाध्यव्याध्युपशमनार्थं भक्षणविषयं वा । अत एवानन्तरं तेनैवोक्तम्—

'एतान्येवातुरस्य भिषक्क्रियायामप्रतिषिद्धानि भवन्ति । यानि चान्यान्येवम्प्रकाराणि तेष्वप्यदोषः'।

इति । यानि तु व्रतान्तराण्यनुक्रान्तपीयूषादिविषये मुनिभिः स्मर्यन्ते तेषु[3] सर्वेषु व्रतगौरवानुसारेण वृत्तिगौरवविषयत्वं कल्पनीयम् । व्रतान्तराणि तु लिख्यन्ते । तत्र शातातपः[4]—

'लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनीम्[5] ।
छत्राकं[6] विड्वराहं च ग्राम्यं कुक्कुटमेव च ॥
उष्ट्रीं च महिषीं[7] भार्सीं रासभीक्षीरभोजनात् ।
उपनयनं पुनः[8] कुर्यात् तप्तकृच्छ्रं चरेन्मुहुः[9]'॥

( शा. स्मृ. ५. ३)

इति । याज्ञवल्क्यः—

'पलाण्डुं विड्वराहं च छत्राकं[10] ग्रामकुक्कुटम् ।

---

१. J. reads समन्तोक्तम् for सुमन्तुनोक्तम्. २ F reads सम्पातं and I. सम्पतान् for सम्पातान्. ३. C. and F insert च after तेषु, while B. omits सर्वेषु. ४. B. and D. substitute पराशरः for शातातपः, but it seems to be a mistake ५. I. reads कृष्णवृन्तकम् for च तथा शुनीम्. ६. This line does not appear in all other manuscripts except A. and I. ७. B. D. and I. read मानुषीं for महिषीं and I. substitutes वापि for भार्सीं. ८. B and D. read ततः for पुनः. ९ J. reads चरेदिति for चरेन्मुहुः. १०. B. C D. G. H. and J. read वृन्ताक for छत्राक.

लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत्' ॥
(या. स्मृ. १.१७६)

इति । बृहद्यमः–

'नालिकां नालिकेरीं च श्लेष्मातकफलानि च ।
भूतृणं शिग्रुकं चैव खट्वाङ्गं[1] कवकं तथा ॥
एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद् द्विजः' ।
(य. स्मृ. ३. ४१)

इति । विष्णुः–

'शुनां मांसाशने च[2] । (३३) छत्राक-कवकाशने सान्तपनम् ।(३४) यव[3]-गोधूमजं पयोविकारं स्नेहाक्तं च[4] शुष्क[5]खाण्डवं च वर्जयित्वा पर्युषितं प्राश्यो[6]पवसेत् । (३५) व्रश्चनामेध्यप्रभवान् लोहितांश्च[7] वृक्षनिर्यासान् । (३६) शेलुं[8] च वृथाकृसर[9]-संयाव-पायसा-ऽपूप-शष्कुलीश्च[10] देवान्नानि हवींषि च । (३७) गो-ऽजावि-महिषीवर्जं सर्वपयांसि च । (३८) अनिर्दशाहितान्यपि च । (३९) स्यन्दिनी-सन्धिनी-विवत्साक्षीरं च । (४०) अमे-

---

१ B and D. read खट्वाभं, C and F. खट्वाकं, E खट्वाह्व, G. खट्वाद्य, I. खट्वाङ्ग and J खट्वां च all for खट्वाङ्ग, while H. substitutes कतकं for कवक. २. We follow here A. and the text, while all others do not insert च ३ The text reads यव-गोधूम-पयोविकारं for यव-गोधूमजं पयोविकारं ४. B. D. and the text do not insert च. ५. The text reads शुक्तं for शुष्क-. ६ The text adds तत्प्राश्य, but it is useless here. ७ Except A. and the text all others insert च after लोहितान्. ८. B and D शेषं, C E and F. सेलुं and I तैलं for शेलुं, while the text शालूक- for शेलुं च ९ I reads कृसर च यव-पायसा- १०. The text reads शष्कुलीदेवान्नानि

ध्यभुजश्च ।(४१) दधिवर्जं केवलं सर्वशुक्तानि ।(४२) ब्रह्मचर्याश्रमी श्राद्धाशने त्रिरात्रमुपवसेत् ।(४३) दिनमेकं चोदके वसेत्'। (४४)

(वि. स्मृ. ५१.३३—४४)

इति । यमोऽपि—

'लशुनं च पलाण्डुं च गृञ्जनं कवकानि च ।
चतुर्णां भक्षणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति' ॥

(य. स्मृ. ३. १९)

इति । कूर्मपुराणे—

'अलाबुं किंशुकं चैव भुक्त्वाऽप्येतद् व्रतं चरेत् ।
उदुम्बरं च कामेन तप्तकृच्छ्रेण शुद्ध्यति' ॥

(कू. पु. १. २. ३३. २१)

इति । शङ्ख-लिखितौ—

'लशुन-पलाण्डु-गृञ्जन-क्रियातु-कुसुम्भभक्षणे द्वादशरात्रं पयः पिबेत् । अलाबु-शिग्रु-श्लेष्मातक-कोविदार-घन-च्छत्राक-वृन्ताकभक्षणे पञ्चगव्यं पिबेत्' ।

इति । चतुर्विंशतिमतेऽपि—

---

१ I. reads -भोजनं for -भुजः. २ B and D do not insert यमोऽपि, while C E F G. H and I omit अपि. ३ I. reads औदुम्बर, while the text substitutes कालेन for कामेन ४ B and D. omit the following —

'लशुन पलाण्डु गृञ्जन-क्रियातु-कुसुम्भभक्षणे द्वादशरात्रं पय. पिबेत । अलाबु-शिग्रु-श्लेष्मातक-कोविदार घन-च्छत्राक-वृन्ताकभक्षणे पंचगव्यं पिबेत्' ।

इति । चतुर्विंशतिमतेऽपि —

५. I reads -क्रियाकुवकुसुंभ-, C F. G. and J. क्रियारु, while J -कुम्भाकु- for कुसुम्भ- and for the same C and F -कुम्भीकल-, G and H. -कुम्भीक-
६ I reads कलञ्ज सिग्रु- for अलाबु-शिग्रु-.

'लशुनं गृञ्जनं चैव तृणराजफलं तथा ।
[1]वल्लीं चैव द्विजो भुक्त्वा चरेच्चान्द्रायणव्रतम् ॥
कन्द-मूल-फलादीनि अज्ञानाद्भक्षयेत्तु यः ।
उपवासो भवेत्तस्य पराशरवचो यथा' ॥

[2]इति । तथा—

'स्त्रीक्षीरं तु द्विजः पीत्वा कथञ्चित् काममोहितः ।
पुनः संस्कृत्य चात्मानं प्राजापत्यं समाचरेत्' ॥

[3]इति । संवर्तः—

'[4]अजोष्ट्री-सन्धिनीक्षीरं मृगाणां वनचारिणाम् ।
अनिर्दशाहगोश्चैव पीत्वा दिनमभोजनम्' ॥
(सं. स्मृ. १०६)

इति ॥ ९–१० ॥

पूर्वत्र गोमांसस्यैव भक्षणे प्रायश्चित्तमुक्तम् । न त्वन्यस्य । इदानीं मांसान्तरस्य भक्षणे प्रायश्चित्तमाह—

**मण्डूकं भक्षयित्वा तु मूषिकामांसमेव च ।**
**ज्ञात्वा विप्रस्त्वहोरात्रं यावकान्नेन शुद्ध्यति॥११॥**

इति । अज्ञानकृते सकृद्भक्षणे व्रतमिदमवगन्तव्यम् । असकृद्भक्षणे तूशनसोक्तं द्रष्टव्यम्—

'बलाक-प्लव-हंस-कंटक-चक्रवाक-खञ्जरीट-गृह-कपोत-[5]भार(त?)-चटक-रक्तपादोलूक-शुक-सारस-

---

१ G and J read उल्ली for वल्ली २ I does not insert इति तथा and C. E F J. insert इति and omit तथा ३ I omits इति संवर्त and C. E F. J insert इति and omit, संवर्त. ४ G. H and J. read अङ्गुष्ठी- for अजोष्ट्री- ५. B D. and G. read -भासचटक-, C E. and F. -भारवटक- for भारचटक-.

टिट्टिभ-मद्गु-चाष-भास-जालपाद-नक्र-क्रुञ्चिक[1]-
विकृतमत्स्य-क्रव्यादामेध्यानां भक्षणे पञ्चग-
व्यं पिबेत् त्रिरात्रम्' ।

(उ. स्मृ. २. १७)

इति[2] । शङ्ख-लिखितौ मतिपूर्वं प्रत्याहतुः—

'बक-बलाक-हंस-प्लव-चक्रवाक-खञ्जरीट-काक-
कारण्डव-कट-भारक-चटक-गृहकपोत-शुक-सा-
रस-टिट्टिभोलूक[4]-रक्तपाद-जालपाद-चाष-भास-म-
द्गु-शिशुमार-नक्र[5]-मकर-तिमि-तिमिङ्गिल -नकुल-
बिडाल-सर्प-मण्डूक मूषक-वल्मीकादि[6]मांसभक्ष-
णे द्वादशाहमनाहारः । पिबेद्वा गोमूत्रयावकम्' ।

इति । एतच्च[7] कामकृताभ्यासविषयम् । कामकृतसकृद्भ[8]-
क्षणे* तु याज्ञवल्क्य आह—

* विज्ञानेश्वरस्तु– 'सन्धिन्यनिर्दशा'—( १. १७० ) इत्यादीन्यनु-
क्रान्तानि कामतो भक्षयित्वा त्रिरात्रमुपवसेत् । अकामतस्त्वहोरात्रम्'
–इत्याह । 'सकृद्भक्षणे' इति तु न तन्मतमिति प्रतिभाति ।

१. I. reads -कुचि-, while C F. and G. read -कुञ्चिक-, E. and H. -कुविक- for -कुञ्चिक-. २ B and D subtitute अपि for इति ३. B and D. read खञ्जरीटक-क्षारण्डक -चटक-गृध्र-, C and F खञ्जरीट-काक-कारंड-करट-लारवटक-गृह-, E. and J. खजरीटक-कारंडव-कटभार-चटक-गृह-, G and H. खंजरीटक-कारंड-कटक-भार-चटक-गृध्र- all for खंजरीट-काक-कारंडव-कटक-भार-चटक-गृह-. ४. I. reads -टिट्टिभ-मद्गु-भल्लूक-वक्रपाद- for टिट्टिभोलूक-रक्तपाद-. ५ .J. substitutes -चक्र- for -नक्र-, while B. C. D F. read -तिमिमकर- for -मकर-. ६ B D. C. F. and G. read -वल्मीकादि-, E H. and J. -वलिकादि- for वल्मीकादि-. ७ B and D. omit the following —

'द्वादशाहमनाहार । पिबेद्वा गोमूत्रयावकम्' ।
इति । एतच्च कामकृताभ्यासविषयम् । कामकृतसकृद्भक्षणे तु

८ G. reads अकामकृते तु सकृद्भक्षणे for कामकृतसकृद्भक्षणे तु.

'देवतार्थं हविः शिग्रुं[1] लोहितान् व्रश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि[2] कवकानि च ॥
क्रव्याद-पक्षि-दात्यूह-शुक - प्रतुद-टिट्टिभान् ।
सारसैकशफान् हंसान् सर्वांश्च ग्रामवासिनः ॥
कोयष्टि-प्लव-चक्राह्व[3]-बलाका-बक[4]-विष्किरान् ।
वृथाकृसर-संयाव-पायसापूप-शष्कुलीः ॥
कलविंकं स[5]काकोलं कुररं रज्जुदालकम् ।
जालपादान् खञ्जरीटानज्ञातांश्च मृग-द्विजान् ॥
चाषांश्च रक्तपादांश्च[6] सौनं वल्लूरमेव[7] च ।
मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्'॥
( या. स्मृ. १. १७१–१७६ )

इति । विष्णुस्तु जीवविशेषेण व्यवस्थितं प्रायश्चित्तमाह—
' खरोष्ट्र-काक-श्व-हंसाशने[8] चान्द्रायणं कुर्यात् ।
( २६ ) प्राश्याज्ञातं सूनास्थं शुष्कमांसं[9] च ।
(२७) क्रव्याद-मृग-पक्षिमांसाशने तप्तकृच्छ्रम् ।
(२८) कलविङ्क-प्लव[10]-हंस-चक्राह्व-सारस-रज्जुदा-
लक[11]-दात्यूह-शुक-सारिका-बक-बलाक-कोकिल-

---

१ B. D. E. G H I. and J read शिग्रु-for शिग्रुं २. B. D. and I. read विड्वानि for विड्जानि. ३ I. reads –चक्राख्य– for –चक्राह्व–. ४ H. substitutes -बल-विष्किरान् for बक-विष्किरान् ५ I. substitutes च for स- and reads रज्जुबालुकं, C and F रज्जुजालकं for रज्जुदालकं ६ I. reads वक्रपादांश्च सौरं for रक्तपादांश्च सौनं ७. G reads वल्लरं for वल्लूरम्. ८ B. C E. D. F G and H. read -काक-श्वमासे, J. -काकमासे and the text -काकमांसाशने for -काक-श्व-हंसाशने ९ All, except A I and the text omit च, while B. and D substitute शुक- for शुष्क–. १०. The text reads -प्लव-चक्रवाक- हंस- for -प्लव-हंस-चक्राह्व- ११. I. reads -रज्जुबालक- for -रज्जुदालक-, while B. and D. substitute only -रज्जु- for the same.

खञ्जरीटाशने त्रिरात्रमुपवसेत् । (२९) एकश-
फोभयदन्ताशने च । (३०) तित्तिरि-कपिञ्जल-
लावक-वर्तिका-मयूरवर्जं सर्वपक्षिमांसाशने चा-
होरात्रम् । (३१) कीटाशने दिनमेकं ब्राह्मीं सुव-
र्चलां पिबेत् । (३२) शुनो मांसाशने च । (३३)
( वि. स्मृ. ५१. २६–३३ )

इति । शङ्खस्तु भक्ष्याभक्ष्यविभागपुरःसरमभक्ष्येषु प्राय-
श्चित्तमाह—

'भुक्त्वा पलाण्डुं लशुनं मद्यं च कवकानि च ।
नारं शौनं तथा मांसं विड्वराहं खरं तथा ॥
गामश्वं कुञ्जरोष्ट्रौ च सर्वान् पञ्चनखांस्तथा ।
क्रव्यादं कुक्कुटं ग्राम्यं कुर्यात् संवत्सरव्रतम् ॥
भक्ष्याः पञ्चनखास्त्वेते गोधा-कच्छप-शल्यकाः ।
खड्गं च शशकं चैव तान् भुक्त्वा नाचरेद् व्रतम् ॥

---

१ I. omits this and the following Sûtras.—
तित्तिरि-कपिञ्जल-लावक वर्तिका-मयूरवर्जं
सर्वपक्षिमांसाशने चाहोरात्रम् । (३१) कीटा
शने दिनमेकं ब्राह्मीं सुवर्चलां पिबेत् ।
( ३२ ) शुनो मांसाशने च । ( ३३ ).

E has the same, but after त्रिरात्रमुपवसेत् there is a mark of correction. २. B. D and H. read -लावकावर्तिमयूरवर्जं, G. -लाव-वर्तिक-मयूरवर्जं for -लावक-वर्तिका मयूरवर्जं ३ B C D. F G. H and J substitute तु for च. ४. The text reads मत्स्यसुवर्चलां for ब्राह्मीं सुवर्चला. ५. The text reads शुनां for शुन·. ६. The text reads करकाणि for कवकानि. ७. The text substitutes मलं for शौनं ८ B. and D read ग्रामखड्ग-खरोष्ट्रौ च for गामश्वं कुंजरोष्ट्रौ च ; while the text गौधेर-कुंजरोष्ट्री च for the same. ९ We follow here A. and the text, while all others read चैव for स्त्वेते. १० B and D read भुक्त्वा चारयेत व्रतम् and the text हत्वा तु चरेद् व्रतम्. for भुक्त्वा नाचरेद् व्रतम

हंसं मद्गुं[1] च काकोलं काकं वा खञ्जरीटकान्।
मत्स्यादांश्च तथा मत्स्यान् बलाकाः शुक-सारिकाः॥
चक्रवाकं प्लवं कोकं[2] मण्डूकं भुजगं तथा।
मासमेकं व्रतं कुर्याद् भूयश्च न च भक्षयेत्[3]॥
राजीवान् सिंहतुण्डांश्च सशल्कांश्च[4] तथैव च।
पाठीन-रोहितौ चापि[5] भक्ष्या मत्स्येषु श्राद्धिकाः॥
स्थलेचरांश्च[6] जलजान् प्रतुदान्[7] नखविष्किरान्।
रक्तपादांस्तथा[8] जग्ध्वा सप्ताहं व्रतमाचरेत्॥
तित्तिरिं च मयूरं च लावकं च कपिञ्जलम्।
वार्ध्रीणसं[9] वर्त्तुकं च भोज्यानाह यमः सदा॥
भुक्त्वा चोभयतोदन्तांस्तथैवैकशफानपि[10]।
दंष्ट्रिणश्च[11] तथा भुक्त्वा मांसं मासं समाचरेत्॥
माहिषं[12] चाऽऽजमौरभ्रं मार्गं[13] रौरवमेव च।

---

१. I. reads मत्स्यं for मद्गुं २. I. reads काक for कोकं and C. and F. substitute मद्गुकं for मण्डूकं. ३. The text reads नात्र कार्या विचारणा for भूयश्च न च भक्षयेत्. ४. A. reads शललान्, G. सशल्कान् and the text शकुलान् for सशल्कान्. ५ The text reads भक्ष्यौ मत्स्येषु परिकीर्तितौ for चापि भक्ष्या मत्स्येषु श्राद्धिका. ६. H. reads जलेचरांश्च स्थलजान् and I. ग्रामेचरान् जालपादान् for स्थलेचरांश्च जलजान्. ७. The text reads मुखपादान् सुविष्किरान्. ८. The text substitutes जालपादान् for तथा जग्ध्वा. ९ We follow here A. and the text; while I. and some others read पाठीनं चैव संवर्तं for वार्ध्रीणसं वर्त्तुकं च and some are quite mistaken. १०. The text reads तथैकशफदंष्ट्रिण for तथैवैकशफानपि. ११. The text reads this line as follows:—

तथा भुक्त्वा तु मांसं वै मासार्धं व्रतमाचरेत्।.

१२. This and the following five lines of the quotation do not occur in our copy of the text. १३ I reads मार्जारं सार्पमेव च for मार्गं रौरवमेव च, but it seems to be a mistake.

भक्ष्यं मांसं समुद्दिष्टं यच्च वै पौर्षितं भवेत् ॥
वाराहं च ततो भुक्त्वा महारण्यनिवासिनम् ।
मांसमज्ञानतो भुक्त्वा मासं प्रोक्तं समाचरेत् ॥
शुनो मांसं शुष्कमांसमात्मार्थे च तथा कृतम् ।
भुक्त्वा मासव्रतं कुर्यात् प्रयतः सुसमाहितः' ॥

( शं. स्मृ. १७. १९ )

इति । अत्र शुना व्रतविशेषा आवृत्तितारतम्यविषयत्वेन व्यवस्थापनीयाः ॥ ११ ॥

'शूद्रान्नं सूतकान्नं च' (प. स्मृ. ११. ४)–इत्यत्र ब्राह्मणस्य शूद्रान्नभोजननिषेधमभिप्रेत्य तत्र प्रायश्चित्तमभिहितम् । तेनैव न्यायेन हीनवर्णत्वसाम्यात्

'राजान्नं हरते तेजः' ।

(य. स्मृ. १. ५६ )

इत्यादिशास्त्राच्च क्षत्रियाद्यन्नभोजनेऽपि विप्रस्य प्रायश्चित्तं प्रसज्ज्येत अतस्तदपनुत्तये क्षत्रियाद्यन्नभोजनमनुजानाति–

क्षत्रियश्चापि वैश्यश्च क्रियावन्तौ शुचिव्रतौ ।
तद्गृहे तु द्विजैर्भोज्यं हव्य-कव्येषु नित्यशः ॥१२॥

इति । क्रियावन्तौ विहिताध्ययन-यजनादियुक्तौ । शुचिव्रतौ व्रतं स्मार्तो धर्मः । तच्च यथाविध्यनुष्ठितं शुचि भवति ।

---

१. I. reads भक्षमार्गं for भक्ष्य मांसं and except A. and J others read भक्षं मार्गं. २ I. reads पार्षव for पार्षतं. ३. A. reads मांसं मद्यं च वै ; while all others except I read मांसमद्यावतो for मांसमज्ञानतो. ४. I. reads शुनां for शुनो ५ Except A K and L all others read तद्गृहेषु for तद्गृहे तु.

तद्युक्तौ शुचिव्रतौ । श्रौत-स्मार्त्तधर्मनिष्ठयोः क्षत्रिय-वैश्ययोर्गृहेषु हव्ये कव्ये वा शिष्टैर्विप्रैर्भोक्तव्यम् । क्रियावन्तौ शुचिव्रताविति विशेषणात् अतद्विधक्षत्रियादिविषयाणि तदन्ननिषेधशास्त्राणीत्यवगन्तव्यम् । तथा च चतुर्विंशतिमते तदन्ननिषेधमभिप्रेत्य प्रायश्चित्तमभिहितम्—

'सहस्रं तु जपेद्देव्याः क्षत्रियस्यान्नभोजने ।
तथोपवासं वैश्यस्य सहस्रं सार्धमेव च' ॥

इति ॥ १२ ॥

क्षत्रियान्नवत् शूद्रान्नस्यापि घृतादिद्रव्यविशेषरूपस्याभ्यनुज्ञामाह—

घृतं तैलं तथा क्षीरं भक्ष्यं स्नेहेन पाचितम् ।
गत्वा नदीतटे विप्रो भुञ्जीयात् शूद्रभोजनम् ॥ १३ ॥

इति । स्नेहपाचितं पूरिका-शष्कुल्यादि । भुज्यते इति भोजनं भोज्यद्रव्यम् । शूद्रस्य सम्बन्धि भोजनं शूद्रभोजनम् । तादृशघृतादिकं यदा भोक्तव्यं भवति तदा क्षत्रियादिगृहेष्विव न शूद्रगृहे भोक्तव्यम् । किं तर्हि तद्गृहीत्वा शूद्रगृहान्निर्गत्य नदीतीरादौ भुञ्जीत । एतच्च क्षत्रियादिवर्णत्रयभोजनस्याभ्यनुज्ञानं मार्गश्रान्त्यादौ पूर्ववर्णासम्भवे वेदितव्यम् * । आपदि

---

* नेदं कलौ निषिद्धमिति मन्तव्यम् । पराशरधर्माणां कलौ मु-

---

१. E. and H read तद्धीन- and I तदितर- for अतद्विध-. २. C. F. and M. गुडं तैलेन पाचितम् for भक्ष्यं स्नेहेन पाचितम् and B D. E. G. and H. read गुडतैलेन and J. K. L. गुडं स्नेहैन for भक्ष्यं स्नेहेन. ३. B. C. D. E. F. G. and H. read तैलपाचितं for स्नेहपाचितं. ४. I. reads यथा for यदा.

यावता विना प्राणरक्षणं न भवति तावदन्नमनुज्ञायते । नतु ततो ऽधिकम् । अत एव छन्दोगा उद्गीथपर्वण्युषस्तिकाण्डे परमामापदं प्राप्तस्योषस्तेर्गजोच्छिष्टानां पुनर्गजपालोच्छिष्टानां कुल्माषाणां जीवनाय भक्षणं ततोऽधिकस्य तदीयोच्छिष्टोदकपानस्य प्रतिषेधं चामनन्ति—

'हन्तानुपानमिति उच्छिष्टं वै मे पीतं स्यादिति होवाच (३) नास्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमा न खादन्निति होवाच । कामो म उदकपानमिति*'।

( छा. उ. १. १०. ३–४. )

इति एतच्च ।

---

श्लोकद्वयेनाभ्यनुज्ञातं क्षत्रियादिवर्गत्रयभोजनमापद्विषयत्वेन माधवाचार्यैर्व्यवस्थापितं तदपि न समञ्जसम् । तथाहि—यदि

'क्रियावन्तौ शुचिव्रतौ'।

इति विशेषणात् क्षात्रय-वैश्यान्ननिषेधशास्त्राणि अतद्विधविषयाणि इति व्यवस्था युक्ता भवति तर्हि वर्णत्रयभोजनानुज्ञानस्यापद्विषयत्वमयुक्तं स्यादित्यलमतिगहनावगाहेन ।

* पाषाणवृष्ट्यादिना सस्यादिनाशेन नष्टेषु कुरुषु जायया सह इतस्ततः अशनार्थं भ्रममाणो उषस्तिः कस्मिंश्चिद्ग्रामे गजपालस्य गृहे उवास । सोऽन्नार्थमटन् तमेव गजपालं कुत्सितान् माषान् भक्षयन्तं दृष्ट्वोपसृत्य याचितवान् । तदा तमुषस्तिमुवाच गजपालः—

'अस्मात् मया भक्ष्यमाणादुच्छिष्टराशेः अन्ये कुल्माषा न विद्यन्ते । ये मम भाजने निहितास्त एव राशौ प्रक्षिप्ताः । अतः किं करोमि'।

'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्'* ।

( ब्रा. सू. ३. ४. २८ )

इत्यस्मिन् वैय्यासिके सूत्रे सम्यङ् मीमांसितम् । स्मृतिश्च भवति—

'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' ॥[१]

( म. स्मृ. १०. १०४)

---

गजपालेनेत्थमुक्त उषस्तिः प्रत्युवाच—

'एतान् मे देहि' ।

इत्युक्तो गजपालस्तस्मा उषस्तये कुल्माषान् ददौ । स चोच्छिष्टानपि तान् चखाद । अनन्तरं गजपालः—

'हन्त समीपस्थमिदमुदकमपि गृहाण' ।

इत्याह । उषस्तिः प्रत्युवाच—

'उच्छिष्टं पीतं स्यात्' ।

इति । गजपाल आह—

'किं न स्विदेते कुल्माषा अप्युच्छिष्टाः ?' ।

इति । उषस्तिराह—

'नवा अजीविष्यमिमान् कुल्माषान् अखादन्' ।

उदकपानं तु इच्छातः लभ्यते' ।

इति अयमभिप्रायः—प्राणरक्षणार्थत्वात्कुल्माषभक्षणं न दोषावहम् । ऐच्छिकत्वादुदकपानं निषिद्धमिति ।

*एतदुक्तं भवति प्राणात्यय एव हि परस्यामापदि सर्वमन्नमदनीयत्वेनाभ्यनुज्ञायते । श्रुत्यादिषु तथैव दर्शनात् ।

---

१ The verse occurs in Manu, but Manu Smriti reads the second line of the verse as follows :—

आकाशमिव पङ्केन न स पापेन लिप्यते ॥

इति । याज्ञवल्क्योऽपि—

'आपद्गतः सम्प्रगृह्णन् भुञ्जानोऽपि यतस्ततः ।
लिप्यते नैनसा विप्रो ज्वलनार्कसमो हि सः' ॥
(या. स्मृ. ३. ४१)

इति । एतदेवानेकोपाख्यानपुरःसरं मनुराह—

'सर्वतः प्रतिगृह्णीयाद् ब्राह्मणस्त्वनयं गतः ।
पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते ॥
नाध्यापनाद् याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलनार्कसमा हि ते ॥
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
आकाशमिव पङ्केन न स पापेन लिप्यते ॥
अजीगर्तः सुतं हन्तुमुपासर्पद्* बुभुक्षितः ।
न चाऽलिप्यत दोषेण क्षुत्प्रतीकारमाचरन् ॥

उक्तं चैतत् [illegible]नःशेपाख्यान एतरेयब्राह्मणे

'तस्मा उपाकृताय नियुक्तायाप्रीनाय पर्यग्निकृताय वि-
शसितारं न विविदुः । (३) स होवाचाजीगर्तः सौय-
वसिर्मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति तस्मा
ते अपरं शतं ददुः । (४) सोऽसिं निःशान एयाय' ।
(ऐ. ब्रा. ७. १६. ३–५)

अत्र च 'उपासर्पद्बुभुक्षितः'—इत्यनेन दारिद्र्यदोषेण क्षुत्प्रतीकारसा-
धनभूतमन्नमलभमानः यथा शतद्रव्येण स्वपुत्रं शुनःशेपं विक्रीतवान् ।
यथा च अपरेण शतेन तं नियुक्तवान् । तथैवान्येन शतेन तं हन्तुमुपा-
सर्पत् । नतु तन्मांसं भक्षितुमित्यर्थो ऽवसेयः ।

---

१. The text substitutes वा for अपि, while G. reads इतस्ततः for यतस्तत २. B C. D E. F. H. J. and the text read न लिप्येतैनसा, G. लिप्यते न च सो for लिप्यते नैनसा. ३. The text substitutes -अम्बु- for -अर्क-,

श्वमांसमिच्छन्नार्तोऽत्तुं[*] धर्माधर्मविचक्षणः ।
प्राणानां रक्षणार्थाय वामदेवो न लिप्तवान् ॥
भरद्वाजः[†] क्षुधार्त्तस्तु सपुत्रो निर्जने वने ।
बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः ॥
क्षुधाऽऽर्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम्[‡]।

* श्वमांसमत्तुमिच्छन्नपि पापेन न लिप्तवान् । अस्या आख्यायिकाया युगान्तरविषयत्वात् कृतादिषु युगेषु सङ्कल्पादिनापि पाप-पुण्यसम्भवात् वामदेवेन श्वमांसभक्षणे इच्छा कृता तथापि न पापेन लिप्तो ऽभवादिति विशेषः ।

† वृधो नाम तक्षा । स च प्रतिग्रहानर्हः । तादृशादप्रतिग्राह्यादपि प्राणरक्षणार्थं भरद्वाजो नाम ऋषिः बह्वीर्गाः प्रतिजग्राह तथापि पापेन न लिप्तवान् । गोविन्दराजस्तु—'बृबुतक्ष्णोर्महामनाः' इति पपाठ ।

‡ उक्तं चैतदाख्यानं महाभारते शान्तिपर्वणि आपद्धर्मेषु—

'विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन् ।
क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम् ॥
क्षुधितः कलुषं यातो नास्ति ह्रीरशनार्थिनः ।
क्षुच्च मां दूषयत्यत्र हरिष्यामि श्वजाघनीम् ॥
अवसीदन्ति मे प्राणाः श्रुतिर्मे नश्यति क्षुधा ।
दुर्बलो नष्टसंज्ञश्च भक्ष्याभक्ष्यविवर्जितः ॥
सोऽधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् ।
अटन् भैक्ष्यं न विन्दामि यदा युष्माकमालये ॥
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम्' ।
(म.भा. शां १४१. ४९—५२)

इत्यादिना । अत्रापि अत्तुमभ्यागात् प्रवृत्तो बभूव न त्वत्तवान् इति बोध्यम् ।

१. B. C. D. E. F. H. and J. read आर्तस्तु, G. आर्तस्य for अर्तोत्तु २. B. and D. read बृहदश्वो, C F. and J. बृहत्तज्ञो, G. बृहत्तक्ष्णो and E. H. and I. बृहत्प्रज्ञो all for वृधोस्तक्ष्णो

चण्डालहस्तादादाय धर्माधर्मविचक्षणः' ॥

(म. स्मृ. १०. १०२–१०८)

इति । स्नेहपाचितेत्यनेनारनालादय उपलक्ष्यन्ते । तथा च चतुर्विंशतिमते—

'आरनालं तथा क्षीरं कान्दुकं दधि सक्तवः ।
स्नेहपक्कं च तक्रं च शूद्रस्यापि न दुष्यति' ॥

इति । अङ्गिराश्च शूद्रप्रतिग्रहं प्रक्रम्याह—

'मांसं दधि घृतं धान्यं क्षीरमाज्यमथौषधम् ।
गुडो रसस्तथोदश्विद् भोज्यान्येतानि नित्यशः ॥
अमृतं चारनालं च कान्दुकाः सक्तवस्तिलाः ।
फलानि पिण्याकमथो ग्राह्यमौषधमेव च' ॥

( अं. स्मृ. ३. ४० )

इति ॥ १३ ॥

घृताद्यन्नभोजने हेयोपादेयौ शूद्रौ विविनक्ति—

मद्य-मांसरतं नित्यं नीचकर्मप्रवर्त्तकम् ।
तं शूद्रं वर्जयेद् विप्रः श्वपाकमिव दूरतः ॥१४॥
द्विजशुश्रूषणरतान् मद्य-मांसविवर्जितान् ।
स्वकर्मणि रतान् नित्यं न तान् शूद्रान् त्यजेत् द्विजः॥१५

---

१. I. reads कौतुक for कान्दुकं through mistake. २. I. reads शूद्रं for शूद्र- and omits प्रतिग्रहं ३ C. and I. read कान्दका- for कान्दुकाः. ४. I. reads माक्षीक- for पिण्याक-. ५. These two verses do not occur in M—

मद्य-मांसरतं नित्यं नीचकर्मप्रवर्तकम् ।
तं शूद्रं वर्जयेद् विप्रः श्वपाकमिव दूरतः ॥ १४ ॥
द्विजशुश्रूषणरतान् मद्य-मांसविवर्जितान् ।
स्वकर्माणि रतान् नित्यं न तान् शूद्रान् त्यजेद् द्विजः ॥ १५ ॥

इति । जातिशूद्राः नीचाः प्रतिलोमजाः सूत-मागधादयः । तेषां कर्म अश्वसारथ्यादि । तस्य प्रवर्त्तकाः तेन जीविताः । तादृशात् शूद्रात् श्वपाकादिवत्[१] घृतादिकं न स्वीकार्यम् । ये तु मार्गवर्त्तिनः शूद्रा विहिते[२] पाकयज्ञादिकर्मणि निरताः तान् शूद्रान् घृतादिभोजने न परित्यजेत् ॥ १४–१५ ॥

'शूद्रान्नं सूतकान्नं च'–(प. स्मृ. ९.३१) इत्यत्र सूतकान्नस्य सामान्येन प्रायश्चित्तमभिहितम् । इदानीं सूतकिजातिविशेषाननूद्य तत्र व्रतविशेषान् प्रश्नपूर्वकमाह—

अज्ञानाद् भुञ्जते विप्राः सूतके मृतकेऽपि वा ।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत्? ॥१६॥
गायत्र्यष्टसहस्रेण शुद्धिः[३] स्यात् शूद्रसूतके ।
वैश्ये पञ्चसहस्रेण त्रिसहस्रेण क्षत्त्रिये ॥ १७ ॥
[४]ब्राह्मणस्य यदा भुङ्क्ते द्वे सहस्रे तु दापयेत् ।
अथवा वामदेव्येन साम्नैवैकेन[५] शुद्ध्यति ॥१८ ॥

इति । सूतकिनः शूद्रस्यान्नं विप्रो भुक्त्वाऽष्टौ सहस्राणि गायत्रीं जपेत् । सूतकिनो विशोऽन्नं[६] भुक्त्वा पञ्चसहस्रगाय-

---

१ A B C and I. read श्वपाकादिव, while A adds भोजने न परित्यजेत् before घृतादिक. २. I reads विहितपाकयज्ञादि-. ३ B. D. and M. read शुद्धः for शुद्धि.. ४. M. reads —

ब्राह्मणस्य यदा भुङ्क्ते प्राणायामेन शुद्ध्यति ।.

५ Except A. K. and L साम्ना चैकेन for साम्नैवैकेन. ६ C. and F omit अन्न and read भुक्त्वा पञ्चसहस्र गायत्रीजप कुर्यात् and omit the following portion —

क्षत्रिये सूतकिनि सति तदन्न भुक्त्वा त्रिसहस्र-
गायत्रीजपं कुर्यात् सूतकिनो ब्राह्मणस्यान्न यो
भुङ्क्ते तं प्रति द्विसहस्रगायत्रीजप विदध्यात् ।.

त्रीजपेन शुद्धिः। क्षत्रिये सूतकिनि सति तदन्नं भुक्त्वा त्रिसहस्रगायत्रीजपं कुर्यात्। सूतकिनो ब्राह्मणस्यान्नं यो भुङ्क्ते तम्प्रति द्विसहस्रगायत्रीजपं विदध्यात्।

'कयानश्चित्र आभुवत्'।

(ऋ. सं. ३. ६. २४. १)

इत्यस्यामृच्युत्पन्नः सामगानां प्रसिद्धो गानविशेषो वामदेव्यं साम। तस्यैकस्य साम्नः सकृज्जपो द्विसहस्रगायत्रीजपेन विकल्प्यते। ऐते[1] च जपरूपा व्रतविशेषा अशक्तविषये वेदितव्याः। शक्तम्प्रति[2] तु छागलेय आह—

'अज्ञानाद् भुञ्जते विप्राः सूतके मृतके तथा।
प्राणायामशतं कृत्वा शुद्ध्यन्ते शूद्रसूतके॥
वैश्ये षष्टिर्भवेच्छ्राद्धि विंशतिर्ब्राह्मणे दश।
एकाहं च त्र्यहं पञ्च सप्तरात्रमभोजनम्॥
ततः शुद्धिर्भवेत्तेषां[3] पञ्चगव्यं पिबेत्ततः'।

इति। ब्राह्मणादिक्रमेणैकाह-त्र्यहादयो योज्याः। यत्तु मार्कण्डेयेनोक्तम्—

'भुक्त्वाऽन्नं ब्राह्मणाशौचे चरेत् सान्तपनं द्विजः।
भुक्त्वा तु क्षत्रियाशौचे चरेत् कृच्छ्रं तथैव हि॥
वैश्याशौचे तथा भुक्त्वा महासान्तपनं चरेत्।
शूद्राशौचे[4] तथा भुक्त्वा द्विजश्चान्द्रायणं चरेत्'॥

(मा. पु. १.१४–१६)

१. G ते, I. ते च. for एते. २. I. reads शक्त तु प्रेति. ३. B. D. G. H. substitute एषां for तेषां. ४. G. reads शूद्रस्यैव for शूद्राशौचे.

इति एतत्तु कामकारविषयम्। यच्च शङ्खेनोक्तम्—

'शूद्रस्य सूतके भुक्त्वा षण्मासान् व्रतमाचरेत्।
वैश्यस्य च तथा भुक्त्वा त्रीन् मासान् वै व्रतं चरेत्॥
क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत्।
ब्राह्मणस्य तथाऽशौचे भुक्त्वा मासं व्रतं चरेत्'॥

(शं. स्मृ. १. ३९-४१)

इति तदभ्यासविषयम्। यदपि गर्गेणोक्तम्—

'शावे च सूतके चैव मत्या भुक्त्वैन्दवं चरेत्।
मत्याऽभ्यासे तथा कुर्यात् कृच्छ्रं चान्द्रायणोत्तरम्॥
त्र्यहं वा कामतः कुर्यादभ्यासे कृच्छ्रमेव च।
द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि च।
क्षत्र-विट्-शूद्रजातीनामाशौचं परिकीर्त्तितम्॥
सवर्णानां तु सर्वेषां विप्रवन्निष्कृतिः स्मृता।
क्रमादूर्द्ध्वं क्रमाद्धीनं हीनजात्युत्तमेष्वपि'॥

(ग. स्मृ. ३. ३६)

---

१. The text reads सतत for सूतके, while B. and D. omit the following portion:—

शूद्राशौचे तथा भुक्त्वा द्विजश्चान्द्रायण चरेत्॥
इति। एतत्तु कामकारविषयम्। यच्च शङ्खेनोक्तम्—
'शूद्रस्य सूतके भुक्त्वा षण्मासान् व्रतमाचरेत्।.

२. I reads चतुर्मासान् व्रत चरेत्, while the text reads this line as follows:—

वैश्यस्य च तथा स्त्रीणां मासमेकं व्रतं चरेत्।,

but it seems to be a mistake. ३. G reads मासमेकं व्रती भवेत्, while except A. and I. others substitute भवेत् for चरेत् ४. I. substitutes चा- for वा. ५. I. reads आशौचे for आशौच. ६. B. D. G. H. read क्षत्रादिसर्ववर्णानां for सवर्णानां तु सर्वेषां ७. B. D. and H. read -उत्तमेष्वयम् and I. -उत्तमं प्रति for -उत्तमेष्वपि.

इति तदेतद् गुणहीनसूतकिविषयतया योजनीयम् । गुणवत्सूतकिविषये तु मूलवचनोक्तं द्रष्टव्यम् । सर्वत्राशौचोत्तरकालमेव प्रायश्चित्तं द्रष्टव्यम् ।

'ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति
तस्य तावदेवाशौचं यावत्तेषाम् । (१)आशौचापगमे च(२) प्रायश्चित्तं कुर्यात्' । (९)
(वि. स्मृ. २२. ८–९.)

इति विष्णुस्मरणात् । यत्र विष्णुनैव व्रतमुक्तम्—

'सवर्णस्याशौचे द्विजो भुक्त्वा स्रवन्तीमासाद्य (४)तस्यां निमग्नस्त्रिरघमर्षणं जप्त्वोत्तीर्य सावित्र्यष्टसहस्रं(५) जपेत् । (१०) (६)क्षत्रियाशौचे ब्राह्मण एतदेवोपोषितः कृत्वा शुद्ध्यति । (११) वैश्याशौचे ब्राह्मणस्त्रिरात्रोपोषितश्च । (१२) ब्राह्मणाशौचे राजन्यः क्षत्रियाशौचे वैश्यश्च स्रवन्तीमासाद्य गायत्रीशतपञ्चकं जपेत् । (१३) वैश्यश्च ब्राह्मणाशौचे गायत्र्यष्टशतं जपेत् । शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यं(७)व्रतं चरेत् ॥(१४) शूद्रश्च द्विजाशौचे स्नानमात्रं समाचरेत् । (१५)(८)

१. H. omits आशौच यावत्तेषाम् २ The text does not insert च. ३ B. and D. do not insert व्रतम् ४. G H and the text read तन्- and B C. D. E. and F तस्मिन्- both for तस्यां ५. C. E. I and J read -अष्टशतं for -अष्टसहस्रं ६. C. F. I and J omit the following:—

ब्राह्मण एतदेवोपोषित कृत्वा शुद्ध्यति । वैश्याशौचे .

७. The text omits व्रतम् and H reads प्राजापत्य समाचरेत् ८ The text reads स्नानमाचरेत् for स्नानमात्र समाचरेत्, while I. reads this line as follows —

शूद्रो वैश्यो द्विजाशौचे ब्राह्मण स्नानमाचरेत् ।.

शूद्रः[1] शूद्राशौचे स्नातः पञ्चगव्यं पिबेत्। (१६)

( वि. स्मृ. २२. १०–१६ )

इति एतन्मूलवचनेन समानविषयतया योजनीयम्। यदपि वसिष्ठेन—

'आशौचे यस्तु शूद्रस्य सूतके वाऽपि भुक्तवान्*।
स गच्छेन्नरकं घोरं तिर्यग्योन्यां च जायते॥ (३१)
अनिर्दशाहे पारशावे[2] शूद्रान्नं भुक्तवान् द्विजः।
कृमिर्भूत्वा[3] स देहान्ते तद्विष्ठामुपजीवति[4]॥ (३२)
द्वादश मासान् द्वादशार्धमासान् वा अनश्नन्[5]
संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते'। (३३)

( व. स्मृ. ४. ३१–३३ )

इति तदेतदत्यन्ताभ्यासविषयम्। ननु—उक्तरीत्या[6] जाति-

* उपलब्धेषु सर्वेष्वप्यादर्शपुस्तकेषु—

कृमिर्भूत्वा स देहान्ते तद्विष्ठामुपजीवति॥ (३१)
अनिर्दशाहे परशावे शूद्रान्नं भुक्तवान् द्विजः।
स गच्छेन्नरकं घोरं तिर्यग्योनौ च जायते॥ (३२)

एवमेव पाठो दृश्यते। परमेतदसङ्गतमिव भवति।

---

१. I. reads,—

शूद्राशौचे द्विजः स्नात पंचगव्यं पिबेत् सदा।

for

शूद्रः शूद्राशौचे स्नात पञ्चगव्य पिबेत्।

२ C F. and I read पारशने for पारशावे and for the same G. J. and the text परशावे ३. All others except A. interchanges the fourth line for the second and second for the fourth ४ Except A and I all others substitute तां for तत् ५ I. omits अनश्नन्. ६. B. C D F. H. and J substitute -नीत्या for -रीत्या.

विशेषेण व्रतविशेषाणां व्यवस्थितौ सत्यां ब्राह्मणादिजातिवि-शेषरहितस्य सामान्यसूतकिनः कस्यचिदभावात् ।

'शूद्रान्नं सूतकान्नं च' ।

(प. स्मृ. ११. ४)

इत्युक्तस्य विषयः कोऽपि न लभ्येत । तत्र हि प्राजापत्यं ब्रह्मकूर्चं चेति व्रतद्वयमभिहितम् । नायं दोषः । सामान्यतः प्रोक्तस्य प्राजापत्यस्य विष्णुप्रोक्ते विशेषे पर्यवसानात्[2] । विष्णुना[3] हि–

'शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यं चरेत्' ।

(वि. स्मृ. २२. १६)

इति प्रोक्तम्[4] । ब्रह्मकूर्चं तु गर्ग[5]प्रोक्तत्र्यहव्रत[6]समानविषयतया योजनीयम् । दशाहविषये अङ्गिरा आह–

'अन्तर्दशाहे भुक्त्वाऽन्नं सूतके मृतकेऽपि वा' ।

त्रैपक्षिके* तदर्धं तु पञ्चगव्यं द्विमासिके' ॥

(अं. स्मृ. १. ११)

इति ॥

मूलवचनोक्तसूतकान्नभोजनप्रसङ्गेन श्राद्धभोजने प्रायश्चित्तानि लिख्यन्ते । तत्र विष्णुः–

---

* त्रैपक्षिकं त्रैपक्षिकश्राद्धम् । एवं द्विमासिकमपि श्राद्धमेव ।

---

१. J. substitutes -जातिशेष. for -जातिविशेष-. २ I. reads व्यवस्थापनात्. ३. I. reads विष्णु for विष्णुना हि ४ I. does not insert प्रोक्तम्. ५. C. E. F. G. and H. substitute गार्ग्य- for गर्ग-. ६ Except A and I all others omit -व्रत-. ७. Except A. and J. all others do not insert this line —

त्रैपक्षिके तदर्धं तु पञ्चगव्य द्विमासिके' ॥.

'प्राजापत्यं नवश्राद्धे [१]पादोनं त्वाद्यमासिके।
त्रैपक्षिके तदर्धं तु पञ्चगव्यं द्विमासिके' ॥
(वि. स्मृ. ६१. ६०)

इति इदं चापद्विषयम्। अनापदि तु—

'चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मिश्रके[२]।
एकाहं तु पुराणेषु प्रायश्चित्तं विधीयते' ॥
(हा. स्मृ. ९. ३१.)

इति हारीतोक्तं द्रष्टव्यम्।

'प्राजापत्यं तु मिश्रके'।

इत्येतदाद्यमासिकविषयम्। ऊनमासिकादिषु [३]पादोन-प्राजापत्यादीनि कर्त्तव्यानि। तदुक्तं चतुर्विंशतिमते—

'प्राजापत्यं नवश्राद्धे [४]पादोनं मासिके तथा।
त्रैपक्षिके तदर्धं स्यात् पादौ द्वौ मासिके ततः ॥
पादोनं कृच्छ्रमुद्दिष्टं षाण्मासे चाब्दिके तथा।
त्रिरात्रं चान्यमासेषु प्रत्यब्दं चेदहः [५]स्मृतम्' ॥
(य. स्मृ. २. २६–२७)

इति। क्षत्रियादिश्राद्धभोजने त्वनापदि तत्रैव विशेष उक्तः—

'[६]चान्द्रायणं नवश्राद्धे पादोनं मासिके स्मृतम्।
त्रैपक्षिके सान्तपनं कृच्छ्रं मासद्वये स्मृतम् ॥

१. C. and F. omit the following portion —
'त्रैपक्षिके तदर्धं तु पञ्चगव्य द्विमासिके" ॥ इति .

२. C F and H. substitute मासिके for मिश्रके. ३. J omits पादोन-. ४ Except A. and I all others substitute पराक for पादोन ५. B D. and H. substitute तत and G. तथा for स्मृतम्. ६ G omits this line·—
चान्द्रायणं नवश्राद्धे पादोन मासिके स्मृतम्।.

क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम् ।
वैश्यस्य त्वधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः ॥
शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम् ।
सार्धं चान्द्रायणं मासे त्रिपक्षे त्वैन्दवं स्मृतम् ॥
मासद्वये पराकः स्यादूर्ध्वं सान्तपनं स्मृतम्' ।

(य. स्मृ. १.३१–३४)

इति यत्तु शङ्खवचनम्–

'चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः ।
पक्षत्रयेऽतिकृच्छ्रं स्यात् षाण्मासे कृच्छ्र एव तु ॥
आब्दिके कृच्छ्रपादः स्यादेकाहः पुनराब्दिके* ।
अत ऊर्ध्वं न दोषः स्याच्छङ्खस्य वचनं यथा' ॥

इति तत्सर्पादिहत[2]विषयम् ।

'ये स्तेन-पतित-क्लीबा'ः ।

(म. स्मृ. ३. १५०)

इत्यपाङ्क्तेयविषयं वा ।

'चण्डालादुदकात् सर्पात् ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च नखिभ्यश्च मरणं पापकर्मणाम् ॥
पतनानाशकैश्चैव विषोद्बन्धन[3]कैस्तथा ।
भुक्त्वैषां षोडशश्राद्धे कुर्यादिन्दुव्रतं द्विजः'† ॥

इति ।

* पुनराब्दिके द्वितीय-तृतीयाब्दिके । तदनन्तरं न दोषः ।
† अत्रापि वर्णभेदेन प्रायश्चित्तन्यूनाधिक्यमूह्यम् ।

१. B. D. G. and J. read वैश्यस्यार्धाधिक प्रोक्त क्षत्रियात्तु and C. F. and I. वैश्यस्यार्धाधिक प्रोक्त क्षत्रियस्य for वैश्यस्य त्वधिक प्रोक्तं क्षत्रियात्तु. २. I. reads सर्पादिमरणविषयं वा ३ Except A. and I. all read विषोद्बन्धोदकै-

'अपाङ्क्तेयान् यदुद्दिश्य श्राद्धमेकादशेऽहनि ।
ब्राह्मणस्तत्र भुक्त्वाऽन्नं शिशुचान्द्रायणं चरेत् ॥[1]
आमश्राद्धे[2] तथा भुक्त्वा तप्तकृच्छ्रेण शुद्धयति ।
सङ्कल्पिते* तथा भुक्त्वा[3] त्रिरात्रक्षपणं भवेत्' ॥

इति भरद्वाजेन प्रायश्चित्तविशेषाभिधानात् । ब्रह्मचारिणस्तु बृहद्यमो विशेषमाह—

'मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः ।
त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्धयति'।
(य. स्मृ. २. १९)

इति । इदमज्ञानविषयम् । ज्ञानपूर्वके तु स एवाह—

'मधु मांसं च योऽश्नीयात् श्राद्धे सूतक एव च ।
प्राजापत्यं चरेत् कृच्छ्रं व्रतशेषं समापयेत्' ॥
(य. स्मृ. २. १६)

इति । आमश्राद्धे तु सर्वत्रार्धम् ।

'आमश्राद्धे भवेदर्धं प्राजापत्यं तु सर्वदा' ।

इति षट्त्रिंशन्मतेऽभिधानात् । यत्तूशनसोक्तम्—

'दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः ।
ततः सन्ध्यामुपासीत शुद्धयेच्च तदनन्तरम्' ॥
(उ. स्मृ. ३. ७)

इति तदनुक्तप्रायश्चित्तश्राद्धविषयम् । संस्काराङ्गश्राद्ध-

* सङ्कल्पिते साङ्कल्पिकेन विधिना कृते

१. C. and F insert इति before चरेत्. २ J reads मासश्राद्धे for आमश्राद्धे. ३. H. omits तप्तकृच्छ्रेण शुद्धयति । सङ्कल्पिते तथा भुक्त्वा.

भोजने व्यासेन विशेष उक्तः—

'चूडाहोमे निर्वृत्ते तु प्राङ्नामकरणात्तथा।
चरेत् सान्तपनं भुक्त्वा जातकर्मणि चैव हि ॥
अतोऽन्येषु च भुक्त्वान्नं संस्कारेषु द्विजोत्तमः।
नियोगादुपवासेन शुद्ध्यते निन्द्यभोजनात्' ॥
(व्या. स्मृ. ३. २३–२४)

इति। सीमन्तोन्नयनादिषु तु धौम्यो विशेषमाह—

'ब्रह्मोदने च सोमे च सीमन्तोन्नयने तथा।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्' ॥

इति। तत्र ब्रह्मौदनाख्यं कर्माऽऽधानाङ्गभूतम्। सोमसाहचर्यात्। यत्तु भरद्वाजेनोक्तम्—

'भुक्तं चेत् पार्वणश्राद्धे प्राणायामान् षडाचरेत्।
उपवासस्त्रिमासादिवत्सरान्तं प्रकीर्त्तितः ॥
प्राणायामत्रयं वृद्धावहोरात्रं सपिण्डने।
असरूपे स्मृतं नक्तं व्रतं पार्वणके तथा ॥
द्विगुणं क्षत्त्रियस्यैव त्रिगुणं वैश्यभोजने।
साक्षाच्चतुर्गुणं चैव स्मृतं शूद्रस्य भोजनम्' ॥

इति एतदप्यापद्विषयम्। अनापद्यधिकप्रायश्चित्तस्योक्तत्वात् ॥ १६–१७–१८ ॥

---

१. J substitutes -विषये for -भोजने. २. All, except A. read निवृत्ते चूडहोमे for चूडाहोमे निवृत्ते. ३. I. reads ततः for तथा. ४. B. and D. read अन्येषु for अन्येषु. ५. B. and D. omit तु ६. B D. and G. read भारद्वाजेन, while A. यदपि स्मृत्यन्तरम् for यत्तु भरद्वाजेनोक्तम् ७. G reads भुक्त्वा च for भुक्तं चेत. ८. B., D. G and H. read व्रतं पारणके and C F E., I. and J. व्रतपारणके for व्रत पार्वणके. ९. G. reads क्षत्त्रियश्चैव for क्षत्त्रियस्यैव

'घृतं तैलं तथा क्षीरम्' (प. स्मृ. ११. १३)—इत्यत्र शूद्रसम्बन्धिनां घृतादीनां[1] भोजनमभ्यनुज्ञातम्। इदानीं शूद्रतण्डुलादीनभ्यनुजानाति—

**शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आगतम्[2]।**
**पक्वं विप्रगृहे भुक्तं[3] भोज्यं[4] तन्मनुरब्रवीत्॥१९॥**

इति। शुष्कान्नं व्रीहि-तण्डुलादि। गोरसः क्षीरादिः *। स्नेहस्तैलादिः। तत् सर्वं शूद्रगृहादानीय ब्राह्मणगृहे यदि पक्वं भवति तदा तदन्नं भोज्यम्। यस्त्वाम-पक्वयोः साधारणो निषेधः पूर्वमुदाहृतः सोऽसच्छूद्रविषयः[5]। अत एव 'मद्य-मांसरतम्' (प. स्मृ. ११. १४)—इत्युक्तम्॥ १९॥

पूर्वम् 'अज्ञानादापदोऽपि वा' (प. स्मृ. ११. ९)—इत्यत्रापन्नस्य विप्रस्य शूद्रान्नभोजने ब्रह्मकूर्चव्रतमभिहितम्। तद्[6]विद्वद्विषयम्। इदानीं † विद्वांसम्प्रत्याह—

**आपत्कालेषु विप्रेण भुक्तं शूद्रगृहे यदि।**
**मनस्तापेन शुद्ध्येत द्रुपदां वा जपेच्छतम्॥२०॥**

इति। द्विविधा हि[7] विद्या। वेदपाठमात्रावसायिनी तदर्थ-

---

* 'गोरसो घृतादिः। पुनरत्रोपादानं गव्यत्वार्थम्'— इति धरणीधरः।

† धरणीधरो न विद्वद्विषयत्वं मन्यतेऽग्रिमवचनस्य। स तु—आपदि शूद्रान्नभोजने प्रायश्चित्तान्तरमाहेत्यवतारयति।

---

१. B. and D. omit घृतादीनां. २ K. and L. read आहृतम् for आगतम्. ३ M. reads पूत for भुक्तं ४ K. and L. read भोज्यान्न for भोज्य तत्. ५. I adds अयम् before असच्छूद्रविषय. ६. G. H. J. add एतद् after तत्. ७. C. F. and G. omit हि.

शानानुष्ठानपर्यन्ता च । तयोर्मध्येऽनुष्ठाता आहिताग्निर्मनस्तापेन शुद्ध्यति । केवलवेदपाठकस्तु—

'द्रुपदादिवेन्मुमुचानः' ।

(तै. ब्रा. २. ६. ६. ४.)

इत्येतामृचं गायत्रीच्छन्दसं शतकृत्वो जपेत्[१] । मनस्तापस्य शुद्धिहेतुत्वं याज्ञवल्क्यो ऽप्याह—

'पश्चात्तापो निराहारः सर्वेऽमी[२] शुद्धिहेतवः' ॥

(या. स्मृ. ३. ३१)

इति । मनुरपि—

'ख्यापनेनानुतापेन[३] तपसा ऽध्ययनेन च ।
पापकृन्मुच्यते पापात् तथा दानेन चापदि' ॥

(म. स्मृ. ११. २२७)

इति । बौधायनोऽपि—

'परित्यागस्तपो दानमनुतापो ऽनुकीर्त्तितम् ।
विद्याभ्यासो ह्युपस्पर्शः सप्ताङ्गं पापनाशनम्[४]' ॥

इति । द्रुपदायाः पापविनाशकत्वं याज्ञवल्क्येनोक्तम्[५]—

'द्रुपदा नाम गायत्री यजुर्वेदे प्रतिष्ठिता ।
सर्वपापहरा जप्तुर्महतोऽप्येनसः स्मृतम्' ॥[६]

(बृ. यो. या. ७. ८१)

इति ॥ २० ॥

---

१. B. D. and H. read सकृज्जपेत् for शतकृत्वो जपेत् २. B. C. D. E. F. and H. substitute सर्वे ते for सर्वेऽमी. ३. B and D read मनस्ताप्यापनेन. ४. H reads पावन स्मृतम् for पापनाशनम्. ५. C. and F. substitute वर्णितम् for उक्तम्. ६. Except A and I. all others do not insert this line and substitute इत्यादिना for इति. The quoted verse is not found in Yâdnyavalkya Smriti.

'द्विजशुश्रूषणरतान्'

(प. स्मृ. ११. १९)

इत्यत्र भोज्यान्नाः शूद्राः सामान्येन निर्दिष्टाः । तानेता-निदानीं विशेषतो निर्दिशति–

दास-नापित-गोपाल-कुलमित्रा-ऽर्धसीरिणः ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥२१॥

इति । दासादय आत्मनिवेदकान्ताः षट् शूद्रा भोज्यान्नाः॥२१॥

दासादीनां लक्षणमाह–

शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कारात्तु भवेद्दासः असंस्कारात्तु नापितः॥२२॥

क्षत्रियात् शूद्रकन्यायां समुत्पन्नस्तु यः सुतः।
स गोपाल इति ज्ञेयो भोज्यो विप्रैर्न संशयः॥२३॥

वैश्यकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
स ह्यार्धिक इति ज्ञेयो भोज्यो विप्रैर्न संशयः॥२४॥

इति । ब्राह्मणः शूद्रकन्यामूढ्वा तस्यां यं पुत्रमुत्पादयति

---

१. Except A. and I. all others omit एतान्. २. B. D G. and H. substitute दर्शयति for निर्दिशति ३ J. reads संस्थित for संस्कृत . ४. A. reads —

सस्कृत' स्याद्दासवर्गो असंस्कारेण नापिकः ।;

while M. —

संस्कृतस्तु भवेद्दासो ह्यसस्कारैस्तु नापितः ।.

५. I and J. reads सूतो जायेत नामत . ६. B C. F H. and J. read ख्यातो for ज्ञेयो ७. Except A. and M. all others read -समुद्भूतो for -समुत्पन्नो. ८ K. reads सो ह्यार्द्धिक L. सो ह्यर्धिक and C E. F. G. H. and J. read स ह्यर्धिक , for स ह्यार्धिक.

स यज्ञमन्त्रकैर्निषेकादिभिः संस्कारैः संस्कृतो भवति तदा दास इत्युच्यते संस्काराभावे तु यं पुत्रमुत्पादयति स नामतो गोपालेत्यत्र विवक्षितः। नत्वर्थतः । गोरक्षणरूपस्यार्थस्य[२] कृष्यादिवद्वैश्यकर्मत्वात् ।

यद्यपि क्रमप्राप्तस्य कुलमित्रस्यात्र लक्षणं नोक्तं तथापि शब्दसामर्थ्यात्[३] प्रक्रमबलाद्वा तल्लक्षणमुन्नेयम् । शब्दसामर्थ्यनस्तावत् कुलस्य मित्रं कुलमित्रमिति व्युत्पत्त्या पितृपितामहादिक्रमादायात[४] आप्तः शूद्रः कुलमित्र इत्यभिधीयते । प्रक्रमानुसारेण त्वेवमुपसंख्यातव्यम् । वैश्यःशूद्रकन्यामूढ्वा तस्यां यं पुत्रमुत्पादयति स कुलमित्र इति ।

ब्राह्मणः वैश्यकन्यामूढ्वा तस्यां यं पुत्रमुत्पादयति, संस्कृतः स नाम्ना आर्धिक इति वा अर्धसीरीति वाऽभिधीयते । यस्तु वाङ्मनः-काय-कर्मभिस्तवाहमित्यात्मानं निवेदयति स आत्मनिवेदकः। यद्वा आर्धिकसाहचर्यात् क्षत्रियायां ब्राह्मणेनोत्पादितः क्रमतः[५] संस्कृत आत्मनिवेदकोऽस्तु[६]। अस्मिन् पक्षे यद्यप्यशूद्रावार्धिकात्मनिवेदकौ तथापि नीचजातित्वसामान्येनाभोज्यान्नत्वशङ्कायां तदपनोदनायेदमभिधीयते—इत्यदोषः ।

---

१. G. reads —

संस्काराभावे तु नापित इति अभिधीयते । क्षत्रिय शूद्रकन्यामूढ्वा तस्यां यं पुत्रमुत्पादयति स नामतो गोपालेत्यत्र विवक्षित ।

२. B and D. read गोरक्षणार्थरूढ्या, G गोरक्षणार्थरूढ्या वा and H. गोरक्षणार्थस्य रूढ्यादिवत् for गोरक्षणरूपस्यार्थस्य कृष्यादिवत्, while C F and J. omit रूपस्य. ३. G. substitutes-साम्यत्वात् for -सामर्थ्यात्. ४ G reads -मातामहादि- for -पितामहादि-. ५ B. D. E. G. I and J. omit क्रमत . ६. I, omits अस्तु

दासादीनां भोज्यान्नत्वं याज्ञवल्क्योऽप्याह—

'शूद्रेषु दास-गोपाल-कुलमित्रा-ऽर्धसीरिणः।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्* ॥

(या. स्मृ. १. १६६)

इति। चतुर्विंशतिमतेऽपि[1]—

'आर्धिकः[2] कुलमित्रश्च गोपालो दास-नापितौ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥

इति। दासादिवत् कुम्भकारोऽपि भोज्यान्न एव। तदाह देवलः—

'स्वदासो[3] नापितो गोपः कुम्भकारः कृषीवलः।
ब्राह्मणैरपि भोक्तव्याः पञ्चैते शूद्रयोनयः'॥

इति। स्मृत्यन्तरेऽपि—

'गोपाल-नापित-कुम्भकार-कुलमित्रार्धसीरि-
निवेदितात्मानो भोज्यान्नाः'।

इति ॥ २२–२३–२४ ॥

---

* पराशरोक्तानि दास-नापित-गोपालाधिकाणां विशिष्टानि लक्षणानि नान्यत्रोपलभ्यन्ते। सामान्यतो दासादीना लक्षणानि यथा—

दासा गर्भ-भक्तदासादयः। गवां पालनेन यो जीवति स गोपालः। कुलमित्रम्-पितृ-पितामहादिक्रमायातं मित्रम्। अर्धसीरी कृषिफलभागग्राही। नापितः गृहव्यापारकारयिता नापितः। यश्च वाङ्-मनः-काय-कर्मभिरात्मानं तवाहमिति निवेदयति स आत्मनिवेदकः। एते शूद्रेषु भोज्यान्ना इति।

१ G. omits अपि २ E. G. and H read अर्धिक. for आर्धिक. ३ C. ıd F. read दासोऽपि and G. स दासो for स्वदासो.

पूर्वत्राभोज्यान्नानां नटादीनामन्ने भुक्ते प्रायश्चित्तमभिहितम्। इदानीं तेषामेव जलादौ पीते प्रायश्चित्तं प्रश्नपूर्वकमाह—

भाण्डस्थितमभोज्येषु जलं दधि घृतं पयः।
अकामतस्तु यो भुङ्क्ते प्रायश्चित्तं कथं भवेत्?॥२५॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा उपसर्पति।
ब्रह्मकूर्चोपवासेन योऽज्यवर्णस्य निष्कृतिः॥२६॥
शूद्राणां नोपवासः स्यात् शूद्रो दानेन शुद्ध्यति।
ब्रह्मकूर्चमहोरात्रं श्वपाकमपि शोधयेत्॥२७॥

इति। अभोज्येष्वभोज्यान्नानां नटादीनां गृहेषु यद्भाण्डं तत्र स्थितं जलादिकं पात्रान्तरव्यवधानमकृत्वा भुक्तं चेत् तदा ब्रह्मकूर्चं पातव्यम्। यथा सूतकान्ने ब्राह्मणादिवर्णभेदेन व्रतभेदा अभिहिताः न तथा जलादिपाने। किन्तु चतुर्णामपि वर्णानां ब्रह्मकूर्चं समानमित्यभिप्रेत्य ब्राह्मणाद्युपन्यासः। उपसर्पति प्रायश्चित्तमनुज्ञापयितुं परिषदमुपसादयतीत्यर्थः। अहोरात्रमुपोष्य दिनान्तरे ब्रह्मकूर्चं पातव्यम्। ब्रह्मकूर्चहेतुरुपवासो ब्रह्मकूर्चोपवासः। तेन यजनयोग्यस्य त्रैवर्णिकस्य निष्कृतिर्भवति। शूद्रस्य तूपवासप्रत्याम्नायो दानम्। अतः शूद्रो दानं

१. M. यथावर्णस्य, B. and D. या त्रिवर्णस्य and all others except H. and I. योज्या वर्णस्य read याज्यवर्णस्य. २ I. reads शूद्रस्य for शूद्राणां. ३. H. substitutes शूद्रादीनां for नटादीनां. ४ B. reads सूतकान्नादौ, while C. and F. सूतकान्ते- for सूतकान्ने. ५. G. reads उपपादयति for उपसादयति and J. उपसीदति, while C. and F. substitute अनुज्ञातुं and B. and D. अनुज्ञापितुं for अनुज्ञापयितु.

कृत्वा पश्चाद्ब्रह्मकूर्चं[1] पिबेत् । तदिदमहोरात्रोपवासपूर्वकब्रह्मकूर्चं श्वपाकसदृशमत्यन्तपापकारिणमपि शोधयति । तत्र किमु वक्तव्यमल्पपापेन[2] निषिद्धजलादिपानेनोपेतं शोधयतीति ॥२५–२६–२७ ॥

ब्रह्मकूर्चस्य द्रव्याण्याह—

> गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
> निर्दिष्टं पञ्चगव्यं तु पवित्रं पापशोधनम्[3] ॥ २८ ॥

इति । गोमूत्रादिकं पञ्चगव्यं यच्च कुशोदकं तदुभयं स्वतः पवित्रं अतः पापशोधनमिति धर्मशास्त्रेषु निर्दिष्टम् ॥ २८ ॥

इति । ब्रह्मकूर्चाङ्गभूतानां गोमूत्रादीनां पञ्चानां कारणभूताः पञ्च गावः तासां वर्णविशेषानाह—

> गोमूत्रं कृष्णवर्णायाः श्वेतायाश्चैव[4] गोमयम् ।
> पयश्च ताम्रवर्णाया[5] रक्ताया गृह्यते दधि[6] ॥२९॥
> कपिलाया घृतं ग्राह्यं सर्वं कापिलमेव वा ।

इति । विचित्रवर्णानां पञ्चानां गवामसम्भवे गोमूत्रादिपञ्चकं सर्वमपि कापिलमेव ग्राह्यम् ॥ २९ ॥

गोमूत्रादीनां कुशोदकान्तानां षण्णां द्रव्याणां प्रत्येकं परिमाणविशेषमाह—

---

१. B. and D. read यच्च ब्रह्मकूर्चं पिबेत् तदितर for पश्चात् ब्रह्मकूर्चं पिबेत्। तदिदम्. २. B and D read अल्पपापिनं निषिद्धजलादिपानिनम् for अल्पपापेन निषिद्धजलादिपानेनोपेतम् ३. M reads -नाशनम् for -शोधनम् ४. M. reads श्वेताया गोमयं हरेत् for श्वेतायाश्चैव गोमयम् ५. G substitutes कृष्णवर्णाया for ताम्रवर्णाया ६. M reads दधि चोच्यते for गृह्यते दधि.

मूत्रमेकपलं* दद्यादङ्गुष्ठार्धं तु गोमयम् ॥ ३० ॥
क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते ।
घृतमेकपलं दद्यात् पलमेकं कुशोदकम् ॥ ३१ ॥

इति । पर्वद्वयोपेतमङ्गुष्ठम्[२] । तत्रोपरितनेन[३] पर्वणा समानपरिमाणं गोमयं ग्राह्यम् । दद्यात्[४] एकस्मिन् पलाशादिपात्रे यथोक्तपरिमाणानि षड् द्रव्याणि निक्षिपेत् । तत्र पात्रं प्रजापतिराह—

'पालाशं[५] पद्मपत्रं वा ताम्रं वाऽथ हिरण्मयम् ।
गृहीत्वाऽऽसादयित्वा च ततः[६] कर्म समाचरेत्' ॥

इति । वृद्धपराशरस्तु गोमूत्रादीनां परिमाणान्तरमाह—

'गोमूत्रे माषकान्यष्टौ गोमयस्य तु षोडश ।
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्त्तिताः ।
गोमूत्रवद् घृते ज्ञेयं[७] तदर्धं तु कुशोदकम्' ॥

---

* 'पलं सुवर्णाश्चत्वार' इत्युक्तलक्षणं पलम् ।

---

१. M. reads this and the following two lines as follows:—

गोमूत्रस्य पल दद्याद्दध्नस्त्रिपलमुच्यते ॥ ३० ॥
आज्यस्यैकपल दद्यादङ्गुष्ठार्धं तु गोमयम् ।
क्षीर सप्तपल दद्यात् पलमेकं कुशोदकम् ॥ ३१ ॥.

२ J. reads अङ्गुष्ठमात्रम् for अङ्गुष्ठम् ३ J. reads उपरिगतेन for उपरितनेन.
४ I. reads दध्यादीनि for दद्यात्, but seems to be mistake. ५ Except A. and I. others read पलाश- for पालाश, while J. reads एकपात्र for पद्मपत्रं and A. and I. पद्मपात्र. ६. B C D. E and F. read यथा and G. and H. तथा for तत , while B. and D. समारभेत् for समाचरेत्. ७. B. C. D. F. and G. read ज्ञेया for ज्ञेयम and I. reads घृतस्याष्टौ तदर्धं तु कुशोदकम् for घृते ज्ञेय तदर्धं तु कुशोदकम.

इति । एतदशक्त-बालादिविषयं द्रष्टव्यम् । प्रजापतिस्तु प्रकारान्तरमाह—

'गोमयात् द्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गुणम् ।
क्षीरमष्टगुणं देयं दधि पञ्चगुणं तथा' ॥

इति । अत्र गोमयस्य परिमाणविशेषानभिधानात् वचनान्तरानुसारेणाङ्गुष्ठार्धपरिमितं गोमयं स्वीकृत्य यथोक्तोत्तराभिवृद्ध्या गोमूत्रादीनि योजयेत् । एतत् च मूलवचनोक्तपरिमाणेन सह विकल्प्यते । वैषम्यस्याल्पत्वात्॥ ३०–३१॥

गोमूत्रादीनां षण्णां[1] प्रत्येकं मन्त्रानाह—

*गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णस्तथा[2] दधि॥३२॥
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ।
पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ ॥ ३३ ॥

इति । ऋचेतिपदं गायत्र्यादिभिः प्रत्येकमभिसम्बद्ध्यते । 'तेजोसि' 'देवस्य त्वा' इत्यनयोर्मन्त्रत्वसाम्यात् ऋक्त्वमुपचरितम् । तैरेतैर्मन्त्रैर्गृहीतं पञ्चगव्यं होमार्थमग्निसन्निधौ स्थापयेत्[3] ॥ ३२–३३ ॥

---

* गायत्री प्रसिद्धा । 'गन्धद्वारां'–( ऋ. सं. परि. ४. ४. २. ७–८) 'आप्यायस्व'–( ऋ.सं. १. ६. २२. १. ), 'दधिक्राव्णो'–(ऋ. सं ३. ७. १३.६ ), 'तेजोऽसि शुक्रं'–( मा. सं. ० ० ० ), 'देवस्य त्वा' ( मा. सं. ० ० ० ), इत्यादयो मन्त्रा द्रष्टव्याः ।

---

१. G reads पञ्चानां for षण्णां. २ M. reads दधिक्राव्णेति वै for दधिक्राव्णस्तथा. ३ G. and J. omit स्थापयेत्.

स्थापयित्वा चाऽऽलोडना-ऽभिमन्त्रणे[1] कर्त्तव्ये इत्याह—

**आपोहिष्ठेति चालोड्य मानस्तोकेति * मन्त्रयेत्[2] ।**

आपोहिष्ठा—इत्यादिकं त्र्यृचं विज्ञेयम्[3] । प्रायशस्तथा विनियोगात् । मानस्तोके-इत्येकैव[4] ऋक् ।

अत्रावदान-होमसाधनानां स्रुवादीनामभावात् केनाऽवदाय होतव्यम्?—इत्याकाङ्क्षायामाह—

**सप्तावरास्तु[5] ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥२४॥**

**एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ।**

इति । सप्तसंख्या अवरा अधमा[6] येषां दर्भाणां ते सप्तावराः । सप्ताष्टाद्यधिकसंख्या[7] गृहीतव्या । न तु षट्-पञ्चादि-न्यूनसंख्ये-[8]त्यर्थः । अच्छिन्नमग्रं[9] येषां ते अच्छिन्नाग्राः । शुकवत् त्विट् दीप्तिर्येषां ते शुकत्विषः । हरिद्वर्णा इति यावत् । आर्द्राणां छायाशुष्काणां वा भवति हरितत्वम् । तैर्दर्भैरवदाय पलाशपत्रेण होतव्यम् । तथा च प्रजापतिः—

---

* 'आपोहिष्ठा'—( ऋ. सं. ७, ६, ५. १. ), 'मानस्तोके'—( ऋ. सं. १. ८. ६. ३. इत्यत्र द्रष्टव्याः ।

---

१. B. and D omit च and read आलोडनाऽभिमन्त्रेण for आलोडनाभिमन्त्रणे; while H आलोडमन्थने मन्त्रेण for the same. २. K. and L substitute मन्ययेत् for मन्त्रयेत्. ३. Except A and I. all others omit त्र्यृचं विज्ञेयम् and read प्रायेण for प्रायश ; while G. विनियोग for विनियोगात्. ४. Except A. and I all others read मान इत्यृक् एकैव ५ B D. K. and L read सप्तवारा for सप्तावरा. ६. B. and D substitute अधरा for अधमा , while G. सप्तवारा· for सप्तावरा ७ G reads सप्तभ्य. for स प्ताष्टादि-. ८ G substitutes -ऊन- for -न्यून-, while H. omits it. ९. B C D. E F. H. and I. omit अच्छिन्नमग्रमेषां ते अच्छिन्नाग्रा

'स्थापयित्वा तु[1] दर्भेषु पालाशैः पत्रकैरथ ।
तत्समुद्धृत्य होतव्यं देवताभ्यो यथाक्रमम्' ॥

इति । दर्भेष्वित्यभिधानात् पात्रस्याधस्तादपि[2] दर्भानास्तृणु-यात् ॥ ३४ ॥

अथ होममन्त्रानाह—

*इरावती इदं विष्णुर्मानस्तोकेति[3] शंवती ॥३५॥
एताभिश्चैव होतव्यं हुतशेषं पिबेद्[4] द्विजः ।

इति । इरेत्यादीनि त्रीणि[5] ऋक्प्रतीकानि । शमित्येष शब्दो यस्यामृचि अस्ति सा शंवती ।

'शमग्निरग्निभिः करच्छन्नः ।
(ऋ. सं. ६. १. २६. ४)

इति वा

'शंनो देवीरभिष्टये' ।
(ऋ. सं. ७. ६. ९.४)

इति वा सा[6] द्रष्टव्या । एतच्चाग्नये स्वाहेत्यादीनामपि मन्त्रा-णामुपलक्षणम् । अत एव प्रजापतिः—

'अग्नये चैव सोमाय सावित्र्यै[7] च तथैव च ।

---

* 'इरावती'–(ऋ. सं. ४. ४. ७. २; ५. ६ २४. ३. शुक्ल. य सं. ५. १५. १६ ) 'इदं विष्णुः'–( ऋ. सं. १. २. ७. २, शु. य. सं. ५. १५. १५ ), 'मानस्तोके'–( ऋ. सं. १- ८. ६. ३ ) इत्यत्र द्रष्टव्याः ।

---

१ Except C and F all others read ऽथ for तु २ Except A. D. and G all others substitute पत्रस्य for पात्रस्य. ३ We follow here. A. B and D ; while I. substitutes तु and others च for इति ४. M. reads स्वयं पिबेत् for पिबेद् द्विज ५ G. omits त्रीणि ६ B D G and H omit सा. ७. Except A and I all read सावित्र्या for सावित्र्यै.

प्रणवेन तथा हुत्वा स्विष्टकृच्च तथैव च ॥
एवं हुत्वा च तच्छेषं पिबेच्चैव समाहितः'।

इति ॥ ३५ ॥

अथ पानेस्येतिकर्त्तव्यतामाह[२]—

**आलोड्य प्रणवेनैव निर्मन्थ्य प्रणवेन तु ॥ ३६ ॥**
**उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु ॥**

इति । आलोडनं हस्तेन । निर्मन्थनं काष्ठेनेति तयोर्भेदः* ॥ ३६ ॥

ननु—गोवधादिषु यः प्रत्यवायः स केवलादृष्टरूपत्वात् तस्य प्रायश्चित्तजन्येन सुकृतापूर्वेण निवृत्तिर्युज्यते। अभक्ष्य-भक्षणजन्यस्तु प्रत्यवायो न केवलमदृष्टरूपः । किन्तु दृष्ट-रूपोऽपि । तस्याहारस्य त्वगस्थ्यादिरूपेण परिणतत्वात्। अ-तो न तस्य व्रतेन निवृत्तिर्युज्यते—इत्यत आह—

**यस्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम् ॥३७॥**
**ब्रह्मकूर्चो दहेत् सर्वं प्रदीप्ताग्निरिवेन्धनम्[३] ।**

इति । अभक्ष्याणि यथा त्वगस्थ्यादिरूपेण परिणतानि तथा गोमूत्रादीन्यपि तेन रूपेण परिणमन्ति । परिणम्य चाग्निः काष्ठानीव स्वविरोध्यभक्ष्यपरिणामानदृष्टमुखेनापि

* काष्ठमत्र याज्ञियम् । उभाभ्यां हस्ताभ्यामुद्धरणम् प्रणवमुच्चार्य अशब्दं पिबेत् ।

१ We follow here A and I., while G. reads हुत्वा च हुतशेषं पिबेत्, and others हुत्वा च तच्छेषं पिबेत् for एवं हुत्वा च तच्छेषं पिबेच्चैव समाहित. २. B. and D substitute प्रणवस्य, while G. omits अथ. H. also omits the same ३ M reads यथैवाग्निरिव for प्रदीप्ताग्निरिव

विनाशयन्ति। न तु केवलं दृष्टेनैव मुखेन। तस्माद्ब्रह्मकूर्चेनाभक्ष्यभक्षणनिवृत्तिरुपपद्यते। ब्रह्मकूर्चस्य कालविशेषं प्रजापतिराह—

'चतुर्दश्यामुपोष्याथ पौर्णमास्यां समाचरेत्'।

इति। जाबालिरपि—

'अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः।
पञ्चगव्यं पिबेत् प्रातर्ब्रह्मकूर्चमिति* स्मृतम्'॥

इति। देशविशेषं शातातप आह—

'नदीतीरेषु गोष्ठेषु पुण्येष्वायतनेषु च।
तत्र गत्वा शुचौ देशे ब्रह्मकूर्चं समाचरेत्'॥

इति॥ ३७॥

ब्रह्मकूर्चस्य सर्वपापदाहकत्वमुपपादयति—

पवित्रं त्रिषु लोकेषु देवताभिराधिष्ठितम्॥ ३८॥
वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः।
दध्नि वायुः समुद्दिष्टः सोमः क्षीरे घृते रविः॥३९॥

इति। वरुणादिभिरधिष्ठितत्वात् पापदाहकत्वमुपपन्नम्।
॥ ३८–३९॥

* यत् ब्रह्मकूर्चमिति स्मृतं पञ्चगव्यं तत् प्रातः पिबेत्। ब्रह्मकूर्चलक्षणं पूर्वमुक्तम्।

१. I. reads तत for इति २. B and D read समारभेत for समाचरेत.
३. M. omits the following three lines—

पवित्रं त्रिषु लोकेषु देवताभिरधिष्ठितम्॥ ३८॥
वरुणश्चैव गोमूत्रे गोमये हव्यवाहन.।
दध्नि वायु समुद्दिष्ट सोम क्षीरे घृते रवि ॥ ३९॥.

अभोज्यान्नानां भाण्डेऽवस्थितं जलादिकं पीत्वा व्रतं चरेदित्युक्तं पूर्वम् (प. स्मृ. ११. २९) । अथ जलस्य स्वमुखनिःसृतस्य पुनः पाने प्रायश्चित्तमाह—

पिबतः पतितं तोयं भाजने[1] मुखनिःसृतम् ।
अपेयं तद्विजानीयात् पीत्वा चान्द्रायणं चरेत् ॥४०॥

इति । जलं पिबतः पुरुषस्य मुखनिःसृतं भोजनादिपात्रे पतितं यत्तोयं तत् त्रैवर्णिकैः पुनर्न पेयम् । कथञ्चित् पीते सति चान्द्रायणेन शुद्धिः । यत्तु मुखं प्रविश्य न निःसृत किन्त्वेकस्मिन् पात्रे अर्धं पीत्वाऽवशेषितं तस्य पाने त्रिरात्रोपवासमाह शङ्खः—

'पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित् ।
त्रिरात्रं तु व्रतं कुर्याद् वामहस्तेन वा पुनः' ॥
(शं. स्मृ. १३. ४१)

इति ॥ ४० ॥

श्व-सृगालादिमरणोपहतकूपादिजलपाने वर्णविशेषेण प्रायश्चित्तविशेषमाह—

कूपे च पतितं दृष्ट्वा श्व-सृगालौ च मर्कटम् ।
अस्थि-चर्मादि पतितं पीत्वाऽमेध्या अपो द्विजः ॥४१॥
नारं तु[2] कुणपं काकं विड्वराह-खरोष्ट्रकम् ।
गावयं सौप्रतीकं च मायूरं खाङ्गकं[3] तथा ॥ ४२ ॥

---

१. B. C. D. F. and I read भोजने for भाजने. २. B. and D सारगं for नारं तु ३. C. F G. and I. read खड्गक for खाङ्गक.

वैय्याघ्रमार्क्षं सैंहं वा कूपे[1] यदि निमज्जति।

तटाकस्याथ[2] दुष्टस्य पीतं स्यादुदकं यदि ॥४३॥

प्रायश्चित्तं भवेत् पुंसः क्रमेणैतेन सर्वशः।

विप्रः शुद्ध्येत् त्रिरात्रेण क्षत्रियस्तु दिनद्वयात् ॥४४॥

एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुद्ध्यति।

इति। कूपे पतित्वा मृतं श्वादिकं वा अस्थ्यादिकं[3] वा दृष्ट्वा तादृशीरमेध्या अपः पीत्वा प्रायश्चित्ती भवेदिति शेषः। नरस्य मनुष्यस्य सम्बन्धि कुणपं नारम्। काकस्य सम्बन्धि काकम्। विड्वराहादिषु सम्बन्धवाची तद्धितो लुप्तो[4] द्रष्टव्यः। तथा च सति वैड्वराहं खारं औष्ट्रमित्युक्तं भवति। गवयस्य सम्बन्धि गावयम्। शोभनाः पुष्टाः[5] सुप्रतीका अवयवा यस्य गजस्य स सुप्रतीकः। तस्य सुम्बन्धि सौप्रतीकम्। मयूरस्य सम्बन्धि मायूरम्। खड्गो मृगविशेषः तस्य सम्बन्धि खाड्गकम्। व्याघ्रस्य सम्बन्धि वैय्याघ्रम्। ऋक्षस्य सम्बन्धि आर्क्षम्। सिंहस्य सम्बन्धि सैंहम्। एतेषामन्यतमं पतितं कुणपं दृष्ट्वा तद्युक्तयोः कूप-तटाकयोः स्नान-पाने यदि[6] कुर्यात् तदा तादृशस्य पुंसः सर्ववर्णसम्बन्धिनः। एतेन—समनन्तरं निर्दिश्यमानेन

---

१. G. substitutes च for वा; while except A. and I all others कपेर् for कूपे and M. reads कुणपं यदि मज्जति for कूपे यदि निमज्जति २ B. and D read अतिदुष्टस्य for अथ दुष्ट अस्य ३. B. and D omit वा अस्थ्यादिक, while I substitutes व्याघ्रादिक वा. ४. B. and D. do not insert लुप्तो ५. B. and D omit पुष्टा, while H. reads सुष्टु पुष्टा for पुष्टा.. ६. I. reads य for यदि.

क्रमेण प्रायश्चित्तं भवेत् । स च क्रमः त्रिरात्रोपवासादिः । त्र्यहादिव्रतचरणानन्तरं पञ्चगव्यं पिबेत् । तदाह विष्णुः—

'मृतपञ्चनखात् कूपादत्यन्तोपहतमुदकं पीत्वा
ब्राह्मणस्त्र्यहमुपवसेत् । (२) द्व्यहं राजन्यः ।
(३) एकाहं वैश्यः । (४) शूद्रो नक्तम् ।
(५) सर्वे चान्ते पञ्चगव्यं पिबेयुः' । (६)
(वि. स्मृ. ५४. २–६)

इति । यदा तु तत्रैव शवमुच्छूनतयोद्भिन्नं भवति तदा हारीतो विशेषमाह—

'क्लिन्ने भिन्ने शवे तोयं तत्रस्थं यदि तत्पिबेत् ।
शुद्ध्यै चान्द्रायणं कुर्यात् तप्तकृच्छ्रमथापि वा ।
यदि कश्चित् ततः स्नायात् प्रमादेन द्विजोत्तमः ।
जपंस्त्रिषवणस्नायी अहोरात्रेण शुद्ध्यति '॥
(हा. स्मृ. २१. ३–४)

इति । इदं चान्द्रायणं कामतो मानुषशवोपहतकूपजलपानविषयम् । अकामतस्तु षड्रात्रम्—

'क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते ।
पयः पिबेत् त्रिरात्रेण मानुषे द्विगुणं स्मृतम्' ॥

इति देवलस्मरणात् । मद्यभाण्डस्थितोदकपाने यम आह—

'सुरा भाण्डस्थिता आपो यदि कश्चित् पिबेत् द्विजः ।
कुशमूलविपक्केन त्र्यहं क्षीरेण शुद्ध्यति ॥

---

१. The text adds व्रतस्य after अन्ते. २. Except A and I. all others substitute शुद्धौ for शुद्ध्यै. ३. H. and I. read तत्र for ततः. ४. C. and F. read स्नेहपाने for -उदकपाने.

द्वादशाहं तु[2] पयसा पिबेद्ब्राह्मीं सुवर्चलाम्।
गायत्र्यष्टसहस्रं[3] वा जपं कुर्वीत मानसम्' ॥
(य. स्मृ. ३. ४१-४२)

इति। एतन्मतिपूर्वकाभ्यासविषयम्। अकामतोऽभ्यासे* तु मनुराह—

* मेधातिथिस्तु समनन्तरोक्तवचनं—' यत्र सुरारसोऽनुभूयते तत्र तद्भाजनस्थानामपां पाने प्रायश्चित्तमेतत्—' इत्याह। 'सुरारस-गन्धवर्जिता अपः पीत्वा '— इति कुल्लूकभट्टः।

१ C and F. do not insert the following portion.—
'द्वादशाहं च पयसा पिबेद् ब्राह्मी सुवर्चलाम्।
गायत्र्यास्तु सहस्रं वा जपं कुर्वीत मानसम्'॥
इति। एतन्मतिपूर्वकाभ्यासविषयम्। अकामतोऽभ्यासे तु मनुराह—
आप· सुराभाजनस्था मद्यभाण्डस्थितास्तथा।
पञ्चरात्र पिबेत् पीत्वा शङ्खपुष्पीशृतं पय ॥
इति। यत्तु विष्णूक्तम—
'अप सुराभाजनस्था पीत्वा सप्तरात्रं
शखपुष्पीशृतं पय पिबेत्'।
इति तत् कामत सकृत्पाने द्रष्टव्यम्। यत्तु शातातपेनोक्तम्—
'सुराभाण्डोदकपाने छर्दन
घृतप्राशनमहोरात्रोपवासश्च'।
इति तत् शुष्कसुराभाण्डस्थोदकपानविषयम्। तत्रैव पर्युषितोदकपाने तेनैवोक्तम्—
'सुरापानस्य यो भाण्डे आपः पर्युषिता पिबेत्।
शंखपुष्पादिपक्क तु क्षीर स तु पिबेत् त्र्यहम्'॥
इति। सुरापस्य मुखगन्धाघ्राणे तु मनुराह—
'ब्राह्मणस्तु सुरापस्य मुखमाघ्राय सोमपः।
प्राणानप्सु त्रिरायम्य घृत प्राश्य विशुद्ध्यति'॥
इति। स्त्र्याद्युच्छिष्टपाने हारीत आह—
'स्त्रियोच्छिष्टस्थिता आपो यदि काश्चित् पिबेत् द्विज।
शंखपुष्पीविपक्केन त्र्यहं क्षीरेण शुद्ध्यति॥
शूद्रोच्छिष्टस्थिता आपो यदि काश्चित् पिबेत् द्विज।
कुशमूलविपक्केन त्र्यहं क्षीरेण यापयेत्'॥ इति।.

२ I. substitutes च for तु. ३. I. reads गायत्र्यास्तु सहस्रं for गायत्र्यष्टसहस्रं.

'आपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।
पञ्चरात्रं पिबेत् पीत्वा[1] शङ्खपुष्पीशृतं पयः' ॥
(म. स्मृ. ११–१४७)

इति । यत्तु विष्णूक्तम्–

'अपः सुराभाजनस्थाः पीत्वा सप्तरात्रं
शङ्खपुष्पीशृतं पयः पिबेत्' ।
(वि. स्मृ. ५१. २३)

इति तत् कामतः सकृत्पाने द्रष्टव्यम् । यत्तु शातातपेनोक्तम्–

'सुराभाण्डोदकपाने छर्दनं
घृतप्राशनमहोरात्रोपवासश्च' ।

इति तत् शुष्कसुराभाण्डस्योदकपानविषयम् । तत्रैव पर्युषितोदकपाने तेनैवोक्तम्–

'सुरापानस्य यो भाण्डे आपः पर्युषिताः पिबेत् ।
शङ्खपुष्प्यवपक्कं[2] तु क्षीरं स तु पिबेत् त्र्यहम्' ॥
(शा. स्मृ. ५. ३१)

इति । सुरापानस्य मुखगन्धाघ्राणे तु मनुराह–

'ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय[3] सोमपः* ।

---

* सोमपः दर्श-पूर्णमासयाजी यज्ञावशिष्टभोजी वा । सोमप इति विशेषणात् तादृशस्यैव ब्राह्मणस्योक्तं प्रायश्चित्तम् । असोमपस्य प्राणायाममात्रम् ।

---

१. G and J read पश्चात् for पीत्वा. २. B and D. read खरपुष्पीच पक्क, E. and H शखपुष्पावपक्कं. G. reads शंखपुष्पीयपक्कं, J. शखपुष्पीच पक्कं and I. शखपुष्पाह्रिपक्कं for शंखपुष्प्यवपक्कं ३. I. reads मुखम् for गन्धम्.

प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुद्ध्यति' ॥

(म. स्मृ. ११. १४९)

इति। स्त्र्याद्युच्छिष्टपाने हारीत[1] आह—

'स्त्रियोच्छिष्टस्थिता आपो यदि कश्चित् पिबेद् द्विजः।

शङ्खपुष्पीविपक्केन[2] त्र्यहं क्षीरेण यापयेत्[3]॥

शूद्रोच्छिष्टस्थिता आपो यदि कश्चित् पिबेद् द्विजः।

कुशमूलविपक्केन त्र्यहं क्षीरेण पावयेत्[4]' ॥

हा. स्मृ. ११. ४१-४२)

इति। यमः[5]—

'शुनोच्छिष्टस्थिता आपो यदि कश्चित् पिबेद् द्विजः।

शङ्खपुष्पीविपक्केन त्र्यहं क्षीरेण शुद्ध्यति'* ॥

(य. स्मृ. ३. ६०)

इति ॥ ४१-४२-४३-४४ ॥

---

* अत्र सर्वत्र पानीयपात्रस्थितमेवोच्छिष्टं वेदितव्यम्। न भूमिष्ठम्। तस्य उच्छिष्टत्वासम्भवात्। त्र्यहं क्षीरपानेन शुद्ध्यतीति योजना।

---

१. J. adds अपि after हारीत. २. J. reads शङ्खपुष्पाविपक्केन ३ G. substitutes वर्तयेत् and I. शुद्ध्यति for यापयेत्; while B. and D. omit these two lines —

शङ्खपुष्पीविपक्केन त्र्यहं क्षीरेण यापयेत्।

शूद्रोच्छिष्टस्थिता आपो यदि कश्चित् पिबेत् द्विज ॥ इति।.

४ B D. E. and H. substitute शुद्ध्यति for पावयेत्, while G. omits the following lines :—

'कुशमूलविपक्केन त्र्यहं क्षीरेण पावयेत्'॥

इति यम —

'शुनोच्छिष्टस्थिता आपो यदि कश्चित् पिबेत् द्विज'।.

५. B D E. and H. omit the following portion.—

यम.—

शुनोच्छिष्टस्थिता आपो यदि कश्चित् पिबेत् द्विज.।

शङ्खपुष्पीविपक्केन त्र्यहं क्षीरेण शुद्ध्यति॥ इति।.

ब्राह्मणेष्वेव केषुचिदभोज्यान्नत्वमभिप्रेत्य तदन्नभोजने प्रायश्चित्तमाह—

परपाकनिवृत्तस्य परपाकरतस्य च ॥४५॥
अपचस्य च भुक्त्वाऽन्नं द्विजश्चान्द्रायणं चरेत्।

इति। परपाकनिवृत्तादीनां त्रयाणां स्वरूपं स्वयमेव वक्ष्यति। तदीयान्नभोजनं यद्यप्यल्पनिमित्तं तथाप्यभ्यासाभिप्रायेण महद्व्रतमविरुद्धम्। अनभ्यासे[2]त्वीदृशान्नभोजने भरद्वाज आह—

'[3]परपाकनिवृत्तस्य परपाकरतस्य च।
निराचारस्य विप्रस्य निषिद्धाचरणस्य च॥
अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम्'।

इति॥ ४५॥

अपचस्यान्नप्रदत्वे तदन्नभोक्तुरेव प्रत्यवायोऽभिहितः। यदा श्वपचो भुङ्क्ते इतरः प्रयच्छति तदानीमुभयोः प्रत्यवाय इत्याह—

अपचस्य च यद्दानं दातुश्चास्य कुतः फलम् ॥४६॥
दाता प्रतिग्रहीता च तौ द्वौ निरयगामिनौ।

इति। अपचस्य अपचायेत्यर्थः। तस्मै यद्दानमन्येन क्रियते तस्मिन् दाने तस्य दातुर्दानफलं नास्ति। न केवलं फलाभावः किन्त्वसौ[5] दाता सह प्रतिग्रहीत्रा[6] नरकं याति॥ ४६॥

---

१. C. E. F. and I. read केषाञ्चित् for केषुचित् २ I. reads अनभ्यासेन.
३. Except A. and I. all others omit the following line—

परपाकनिवृत्तस्य परपाकरतस्य च।

४ B. C. D. F. and G. omit इति and read प्रत्यवायम् ५. B. D. and G. read किन्त्वन्नदाता for किन्त्वसौ दाता. ६. I. substitutes गृहीत्रा for प्रतिगृहीत्रा.

परपाकनिवृत्तादीनां त्रयाणां क्रमेण लक्षणमाह—

गृहीत्वाऽग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत् ॥४७॥
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ।
पञ्चयज्ञान् स्वयं कृत्वा परान्नेनोपजीवति ॥ ४८ ॥
सततं प्रातरुत्थाय परपाकरतस्तु स्सः ।
गृहस्थधर्मा यो विप्रो ददाति परिवर्जितः॥ ४९ ॥
ऋषिभिर्धर्मतत्त्वज्ञैरपचः परिकीर्त्तितः ।

इति । परस्य पुरुषान्तरस्य गृहे क्रियमाणः पाकः परपाकः । तस्मान्निवृत्तः परपाकनिवृत्तः परान्नभोजनपरित्यागीति यावत् । यद्वा वैश्वदेवाद्यर्थं क्रियमाणः पाक उत्कृष्टत्वात् परपाक इत्युच्यते । तस्मात् परपाकान्निवृत्तः पञ्चमहायज्ञरहित इत्यर्थः । तच्चोभयं विवक्षितत्त्वात्तन्त्रेणोच्चरितम् । तथा च सति परान्नवर्जनस्य गुणत्वेऽपि पञ्चमहायज्ञादिराहित्यस्य

१. J. reads परान्न for परान्नेन २. M substitutes हि for तु, while B. and D. omit the verse —

सतत प्रातरुत्थाय परपाकरतस्तु स ।
गृहस्थधर्मा यो विप्रो ददाति परिवर्जित. ॥ ४९ ॥

३. E. and H. read गृहस्थधर्मे, G I. J and M गृहस्थधर्मो for गृहस्थधर्मा. ४. B. and D. omit the following portion.—

परपाक । तस्मान्निवृत्तः परपाकनिवृत्त. । परान्नभोजनपरित्यागीति
यावत् । यद्वा वैश्वदेवाद्यर्थं क्रियमाण. पाक .

५ H. reads वैश्वदेवार्थं for वैश्वदेवाद्यर्थं. ६ B and D. substitute तच्च for तत् and read उभय विवक्षितम् for उभयं विवक्षितत्वात्. H. also reads तत्र, but corrects in the margin अत्र, while C. E. F. and J. substitute अत्र for तच्च.

दोषत्वादस्य पुरुषस्य निन्द्यत्वम्। अक्षरार्थस्तु—अग्निं गृहीत्वा विवाहं कृत्वा स्मार्त्ताग्नौ केवलमौपासनं कृत्वा तमग्निमात्मनि समारोपयति, न तु तस्मिन्नग्नौ वैश्वदेवादिकं करोति। सोऽयं वैश्वदेवाद्यनुष्ठानरहितः पुरुषोऽत्र परपाकनिवृत्तशब्देन विवक्षितः। एतस्माद्विपरीतः परपाकरतः। उभयविधपाकरहितत्वात्। तत्र पञ्चमहायज्ञानुष्ठानस्य गुणत्वेऽपि परान्नभोजनस्य दोषत्वात्तादृशस्य पुरुषस्य निन्द्यत्वम्। प्रतिदिनं प्रातरुत्थाय यथाविधि पञ्चमहायज्ञान् कृत्वा परान्नेनोपजीवतीति योजनीयम्।

यस्तु विप्रो विधानेन गार्हस्थ्यं स्वीकृत्य अन्नदानादिवर्जितः केवलं स्वयमेव भुङ्क्ते सोऽपच इत्युच्यते। तस्य निन्दा प्रत्यक्षश्रुतावाम्नायते—

'नार्यमणं पुष्यति नो सखायं
केवलाघो भवति केवलादी'।
(ऋ. सं. ८. ६. २३. १.)

इति। 'ददाति परिवर्जितः'—इत्यत्र ददातीत्यर्थनिर्देशत्वाद्दानक्रियामाचष्टे।

'ईक्षतेर्नाशब्दम्।
(व्या. सू. १. १. ५)

इत्यस्मिन् व्याससूत्रे,

१. B. C. D. E. F. and H omit the following— स्मार्ताग्नौ केवलमौपासन कृत्वा २ I. omits अग्निम् ३. B. C. D. and G. read पाकादिक for वैश्वदेवादिक. ४. B. D. E and I. omit -निवृत्त-. ५. J omits परपाकरत ; while E. and I. read-विधपरपाकरतत्वात for विधपाकरहितत्वात्

'त्यज्यतेः पूर्ववत्त्वम्'।

( पू. मी. ७. ४. १ )

इत्यस्मिन् जैमिनिसूत्रे चार्थनिर्देशेऽपि श्तिप्प्रत्ययप्रयोगदर्शनात्।

'इक्-श्तिपौ धातुनिर्देशे'

( वा. पा. ३. १९ )

इत्येतत्तु वाररुचं वार्तिकं प्रचुरप्रयोगाभिप्रायम्। न त्वर्थनिर्देशव्यवच्छेदकम्।

परपाकनिवृत्तादिवद्वृथापाकादेरप्यन्नं न भोक्तव्यम्। तद्भोजने तु प्रायश्चित्तं कर्तव्यम्। तदाहतुः शातातप-बृहस्पती—

'योऽगृ[2]हीत्वा विवाहाग्निं गृहस्थ इति मन्यते।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः॥
वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद् द्विजः।
प्राणायामान् त्रिरभ्यस्य घृतं प्राश्य विशुद्ध्यति'॥

( शा. स्मृ. ३. ६१–६२ )

इति। 'प्राणायामशतं कृत्वा'–इति पाठे त्वावृत्तिविषयत्वं कल्पनीयम्। वृथापाके यत् प्रायश्चित्तं तदेव ब्राह्मणनिन्दकादावपि द्रष्टव्यम्। निन्दावचने सहपाठात्। तथा च व्यासः—

'पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः।
[4]आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः'॥

( व्या. स्मृ. ४. ७० )

---

१. Except A. C F. G. and I. all others omit वाररुच. २. Except A and I. all others read यो हि हित्वा for यो ऽगृहीत्वा. ३. I. reads भुक्त्वाऽन्न. ४. G. and J. substitute भस्याशी for आदेशी.

इति। वेदविक्रयिणः स्वरूपमाह शातातपः—

'प्रख्यापनं* प्रत्ययनं प्रश्नपूर्वं[1] प्रतिग्रहः।
याजनाध्यापने[2] वादः षड्विधो वेदविक्रयः'॥

(ऋग्विधाने ४. ८१)

इति॥ ४७-४८-४९॥

ननु—उक्तरीत्या कलियुगे सर्वेऽप्यभोज्यान्ना अभक्ष्यभक्षणाश्च। तथा सत्येतद्विषयं प्रायश्चित्तशास्त्रं निरर्थकम्। कृतेऽपि प्रायश्चित्ते पुनरपि तत्प्रवृत्तेरुपरन्तुमशक्यत्वात्[3] प्रायश्चित्तविधायिकायाः परिषदोऽसम्भवाच्च। नहि पापप्रवृत्तानां परिषत्त्वं युक्तम्[4]।

'स्वधर्मरतविप्राणाम्[5]'।

(प. स्मृ. ८. २)

इति तल्लक्षणात्। न च—अभक्ष्यभक्षणादिभ्यः पापेभ्यो निवृत्तानां शिष्टानां परिषत्त्वं स्यात्—इति शङ्कनीयम्। तादृशस्य कस्याप्यदृष्टचरत्वात्[6]। अतः कलियुगे सर्वेषां निन्द्यत्वा-

* उपलभ्यते चैतद्वचनं वृद्धशौनकोक्ते ऋग्विधानेऽन्तिमाध्याये। नास्ति अस्मद्दृष्टेषु शातातपस्मृतिपुस्तकेषु।

१. I. reads प्रश्नपूर्वं. २ Except A and I. all read -ध्यापनं. ३ B. and D. omit पुनरपि; while I. substitutes परिहर्तुम् for उपरन्तुम् ४ B. and D read पापनिवृत्तानां शिष्टानां for पापप्रवृत्तानां and omit प्रवृत्तानां परिषत्त्व युक्तम्। स्वकर्मरतविप्राणामिति तल्लक्षणात्। न चाभक्ष्यभक्षणादिभ्य पापेभ्यो. ५. I reads स्वकर्मरत-. ६ I. adds पुरुषस्य and J. विप्रस्य before कस्यापि, while B has quite mistaken

देतदेव युगमुद्दिश्य प्रवृत्तस्य पाराशरधर्मशास्त्रस्य निर्विषयत्वं[1] स्यात्–इत्याशङ्कचाह[2]—

युगे युगे तु[3] ये धर्मास्तेषु तेषु[4] च ये द्विजाः॥ ५०॥
तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः[5]।

इति। अस्याक्षरार्थः प्रथमाध्याये वर्णितः। अयमाशयः—द्विविधा ह्यधर्मप्रवृत्तिः। युगप्रयुक्ता[6] प्रमादालस्यादिप्रयुक्ता च। तत्र युगप्रयुक्तायाः[7] प्रवृत्तेरपरिहार्यत्वान्न[8] तन्निवृत्तये पराशरस्योद्यमः। या तु प्रमादालस्यादिप्रयुक्ता[9] प्रवृत्तिः तत्र सावकाशं धर्मशास्त्रम्। तद्यथा। अध्ययनविधिस्तावदर्थज्ञानपर्यन्तं साङ्गवेदपाठमाचष्टे*। नच–कलौ युगे[10] तादृशं विप्रं कञ्चिदप्युपलभामहे। तथा ब्रह्मचारिप्रकरणे तदाश्रमधर्मा अध्ययनधर्माश्च सहस्रशः स्मर्यन्ते। नच तान् सर्वान् यथावद-

* 'स्वाध्यायोऽध्येतव्यः'–इत्ययमध्ययनविधिः। तस्य अर्थज्ञानपर्यन्तं साङ्गवेदाध्ययनेन पूर्तिर्भवतीति पूर्वमीमांसकाः। वेदग्रहणमेव विधिफलम्। पूर्वकाण्डार्थज्ञानं कर्मानुष्ठानाक्षिप्तम्। उत्तरकाण्डार्थज्ञानं काम्यश्रोतव्यविधिप्राप्तम्– इति उत्तरमीमांसकाः।

१. I. reads पराशरधर्मशास्त्रस्य, while B. and D. पराशरस्य शास्त्रस्य, E. H. and J. पराशरस्य धर्मशास्त्रस्य for पाराशरधर्मशास्त्रस्य २ B. D. H and I निर्विषयत्वादित्याशक्याह and C. and F निर्विषयत्वमित्याशक्याह. ३ M substitutes च for तु, while B D and H. read युगेयुगेषु for युगेयुगे तु ४. M. substitutes धर्मेषु for तेषु च. ५ M. substitutes ब्राह्मणा for ते द्विजा ६ B. D and G. read युगप्रवृत्ता for युगप्रयुक्ता ७ B and D. read युगप्रवृत्ताया. ८. B D and H. read अपहार्यत्वात् for अपरिहार्यत्वात् and B. and D omit न. ९. Except A. and I. all omit -आलस्य- १०. H. omits युगे.

नुतिष्ठन् माणवकः कोऽप्युपलभ्यते । यदा अध्ययनस्यैव ईदृशी गतिः तदा कैव कथा साङ्गकृत्स्नवेदार्थानुष्ठानस्य । तथा सति शास्त्रीयमुख्यब्राह्मण्योपेतस्य कस्याप्यभावात्[1] क्षत्रिय-वैश्यजात्योश्च स्वरूपेणैवोच्छिन्नत्वात् शुश्रूषयितव्यानां द्विजानामसम्भवे तच्छुश्रूषकस्य मुख्यस्य शूद्रस्यात्यन्तानाश[2]-ङ्कनीयत्वात् किं[3] चातुर्वर्ण्यमुद्दिश्य प्रवृत्तं धर्मशास्त्रं स्वरूपेणैव लुप्यताम्? किंवा मुख्यासम्भवेऽपि यथासम्भवं चातुर्वर्ण्यमाश्रित्य धर्मशास्त्रं प्रवर्त्तताम्?—इति मीमांसायां, स्वरूपलोपात् वरं यथासम्भवानुष्ठानमित्याभिप्रेत्य युगप्रवृत्तां सर्वैरप्यवर्जनीयामधर्मप्रवृत्तिमदोषत्वेनाभ्युपगम्य 'तेषां निन्दा न कर्त्तव्या'—इत्युक्तम् । ततः सम्भाविताध्ययनाद्युपेतानां[4] शक्यायां धर्मप्रवृत्तौ प्रमादालस्यादिरहितानां च परिषत्त्वं कुतो न स्यात्? कृतप्रायश्चित्तस्य पुनः प्रमादालस्यादिवर्जनस्य सुकरत्वात् प्रायश्चित्तशास्त्रं च सार्थकमिति ॥ ५० ॥

इत्थमुपपातकविशेषस्याभक्ष्यभक्षणस्य[5] प्रायश्चित्तमभिधाय जातिभ्रंशकरस्य ब्राह्मणतिरस्कारस्य प्रायश्चित्तमाह—

हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारं च[6] गरीयसः ॥५१॥
स्नात्वा तिष्ठन्नहःशेषमभिवाद्य प्रसादयेत्[7] ।

---

१. B. and D. omit कस्य; while H. substitutes एकस्य for the same. २. I. reads अत्यन्तमनाशकनीयत्वात् for अत्यन्तानाशकनीयत्वात् ३. B. D. G and H. add तु after किं. ४. B. and D read सम्भवानुभवाध्ययनाद्युपेतानां for सम्भाविताध्ययनाद्युपेतानां. ५. C. and F. substitute इति for इत्थम्. ६ K. and L. substitute तु for च. ७. L. reads प्रकाशयेत् for प्रसादयेत.

इति। ब्राह्मणो वेदपारगो ब्रह्मविद्वा[1]। तम्प्रति लौकिके शास्त्रीये वा व्यवहारे तद्धर्षनाय हुङ्कारं यः प्रयुङ्क्ते यश्च वयसा विद्यया वा ज्येष्ठं पुरुषम्प्रति त्वमित्येकवचनं प्रयुङ्क्ते[2] तावुभौ स्नात्वा यावदस्तमयं निराहारौ स्थित्वा रात्रावभिवादनेन तं क्षमापयेताम्[3]। तत्र[4] निराहारत्वं मनुराह—

'हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारं तु[5] गरीयसः।
स्नात्वाऽनश्नन्नहःशेषमभिवाद्य प्रसादयेत्'॥
(म. स्मृ. ११. २०४)

इति। यमोऽपि—

'हुङ्कारं[6] ब्राह्मणस्योक्त्वा प्रायश्चित्तं विधीयते।
अहोरात्रोषितः स्नात्वा प्रणिपत्य प्रसादयेत्'॥
(य. स्मृ. २. ६)

इति। शङ्खोऽपि—

'हुङ्कारं[7] ब्राह्मणस्योक्त्वा त्वङ्कारं च गरीयसः। (५०)
दिनमेकं व्रतं कुर्यात् प्रयतः सुसमाहितः'।
(शं. स्मृ. १७. ५०–५१)

इति। एतदभ्यासविषयम्[8]। ननु—

---

१ Except A. and I. all substitute ब्रह्मविद्वान् for ब्रह्मविद्वा. २ B. D. and H. substitute प्रयुञ्जते for प्रयुङ्क्ते. ३ I reads क्षमापयेत् for क्षमापयेताम्. ४. I. does not insert तत्र. ५. The text substitutes च for तु. ६. I. reads this verse as follows :—

'हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारं तु गरीयस।
स्नात्वा तिष्ठन्नहःशेषं प्रणिपत्य प्रसादयेत्'॥.

७. The text substitutes त्वङ्कारं for हुङ्कारं. ८. Except A. and I. all others omit एतदभ्यासविषयम्.

'ब्राह्मणस्य रुजःकृत्या'।

(म. स्मृ. ११. ६८)

इति जातिभ्रंशकरेषु परिगणनाद्वक्ष्यमाणं ताडनादिकमेव जातिभ्रंशकरम्। न तूक्तम्—इति चेत्। न। हुङ्कारादिनाऽपि ब्राह्मणस्य मनसि रुज उत्पादनात्[1]॥ ५१॥

ताडनादौ प्रायश्चित्तमाह—

ताडयित्वा तृणेनापि कण्ठे बध्वापि वाससा॥५२॥
विवादेनापि निर्जित्य प्रणिपत्य प्रसादयेत्।

इति। यद्यपि तृणताडन-वस्त्रबन्धन-विवादजयैर्न शरीरोपघातः तथापि प्रायश्चित्तं चरितव्यमित्यपि शब्दस्यार्थः। प्रणिपातेनोपवासोऽप्युपलक्ष्यते। तदाह बृहस्पतिः—

'गुरुं त्वंकृत्य गर्वेण विप्रं निर्जित्य वादतः।
ताडियत्वा तृणेनापि प्रसाद्योपवसेद्दिनम्'॥

(बृ. स्मृ. २. २७)

इति। याज्ञवल्क्योऽपि—

'गुरुं त्वंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः।
बद्ध्वा वा वाससा क्षिप्रं प्रसाद्योपवसेद्दिनम्[2]'॥

(या. स्मृ. ३. २९२)

इति। यत्तु बौधायनेनोक्तम्—

'वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्'॥

(बौ. स्मृ. ४. १. ६)

१. I. reads रुजः समुत्पादनात्. २. H. reads द्विज for दिनम्

इति तदभ्यासविषयम्। पादस्पर्शादौ स एवाह—

'पादेन ब्राह्मणं स्पृष्ट्वा प्रायश्चित्तविधित्सया।
दिवसोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत्॥
अवाच्यं ब्राह्मणस्योक्त्वा प्रायश्चित्तं विधीयते।
कृच्छ्रातिकृच्छ्रं जित्वा[1] तु प्रणिपत्य प्रसादयेत्॥
आक्रोशमनृतं[2] कृत्वा कृच्छ्रं कुर्वीत मानवः।
(बौ. स्मृ. ४. १. ८–९)

इति॥ ९२॥

ब्राह्मणावगुरणादौ[3] प्रायश्चित्तमाह—

अवगूर्य त्वहोरात्रं त्रिरात्रं क्षितिपातने॥९३॥
अतिकृच्छ्रं च रुधिरे कृच्छ्रोऽभ्यन्तरशोणिते[4]।

इति। अवगूर्य वधार्थं दण्डमुद्यम्य दिनमेकमुपवसेत्। भूमौ निपात्य त्रिरात्रमुपवसेत्। प्रहारेण रुधिरे निर्गते अति[5]कृच्छ्रं चरेत्। अनिर्गतं रुधिरमन्तरेकत्र घनीभूतं चेत्तदा कृच्छ्रं चरेत्। अवगूरणादेः[6] शतसंवत्सरादिनरकहेतुत्वोपन्यासपुरःसरं प्रतिषेधः प्रत्यक्षश्रुतावुपलभ्यते। यथा च* तैत्तिरीयब्राह्मणम्—

* अग्रिमं वचनं न तैत्तिरीयब्राह्मणे कुत्राप्युपलभ्यते। किंतु तैत्तिरीयसंहितायामेव। तत्किमयं लेखकप्रमादः आचार्यचरणानामेव वा विस्मृतिर्वेति न जानीमः।

१ I reads कृत्वा for जित्वा २ C. and F. substitute अनिशं for अनृत. ३ I reads अवगोरणादौ and some others अवगूरणादौ ४ M. reads कृछ्मन्तरशोणिते for कृछ्रोऽभ्यन्तरशोणिते. ५. C and F substitute सति for अति-. ६. Except A G. and T. all others read अवगोरणादे for अवगूरणादे.

'यो† ऽवगुरेत् शतेन यातयात् यो निहन्-
नत् सहस्रेण यातयात् यो लोहितं
करवत् यावतः प्रस्कद्य पाँसून्
संगृह्णात्तावतः संवत्सरान् पितृलोकं
न प्रजानादिति तस्माद्ब्राह्मणाय नाव-
गुरेत् न निहन्यात् न लोहितं कुर्या-
देतावता हैनसा युक्तो भवति'।

(तै. सं. २. ६. १०)

इति। गौतमोऽपि—

'अभिक्रुध्यावगूरणं ब्राह्मणस्य वर्षशतमस्वर्ग्यम्।
(२०) निपाते सहस्रम् (२१)। लोहितदर्शने
यावतः प्रस्कन्द्य पांसून् संगृह्णीयात्'। (२२)

(गौ. स्मृ. २२. २०–२२)

---

*अवगूरणादिप्रतिषेधो ऽयमर्थवादः। अवगोरणं ताडनार्थं दण्डाद्युद्यमनम्। अत्र मूले (संहितायां) 'योऽपगुराते' इति पाठो वर्तते भाष्येऽपि तथैव दृश्यते। तथापि उपलब्धेषु सर्वेष्वप्यादर्शपुस्तकेषु 'योऽवगुरेत्' इत्येव पाठः। सम्प्रदायविदोऽपि 'अपगुराते' इत्येव पठन्ति तत्सुधियो विदाङ्कुर्वन्तु किमत्र युक्तम्। यो ऽवगुरेत् स शतेनाब्दानां यातयेत्। नरके यातनाभाग्भवेदित्यर्थः। एवं यो निहनेत् स सहस्रेणाब्दानाम्। यो लोहितमुत्पादयेत् स, तल्लोहितं भूमौ पतितं सत् यावन्तो पांसून् सङ्गृह्णीयात् तावन्त्यब्दसहस्राणि पितृलोकं न विंदेत इति

---

१. The text reads योऽपगुराते for योऽवगुरेत्. २. Except A. and the text all others read निहनेत् for निहनत्. ३. Except the text and A. others read प्रस्कन्द्य for प्रस्कद्य. ४. The text अभिक्रुद्धावगोरणे अभिक्रुध्यावगूरणं, while A reads ऽगूरणे four ऽगूरणं. ५. A. reads निहते and all others except H. and I. read निखाते and the text निघाते for निपाते. ६. The text adds तत् to प्रस्कन्द्य, while G. reads गृण्हीयात् for संगृण्हीयात्.

इति । मनुरपि—

'अवगूर्य[1] त्वब्दशतं सहस्रमभिहत्य तु[2] ।
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥
शोणितं यावतः पांसून् संगृह्णीयाद् द्विजन्मनः[3] ।
तावन्त्यब्दसहस्राणि तत्कर्ता नरके वसेत् ॥
अवगूर्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने ।
कृच्छ्रातिकृच्छ्रौ[4] कुर्वीत विप्रस्योत्पाद्य* शोणितम्' ॥
(म. स्मृ. ११. २०६–२०८)

इति । याज्ञवल्क्योऽपि—

'विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो[5] निपातने† ।
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽभ्यन्तरशोणिते' ॥
( या. स्मृ. ३. २९३ )

इति । यमः[6]—

* पूर्वत्र 'ब्राह्मणस्य रुजःकृत्या' (म स्मृ ११. ६७ )—इत्यत्र यदुक्तं रुजःकरणं यच्च जातिभ्रंशकरेषु परिगणितं तत् शोणितोत्पादनादन्यत्रेति बोध्यम् । अथवा तेनेदं विकल्पनीयम् ।

† जिघांसया विप्रदण्डोद्यमे । नतु नर्मणा । निपातनं ताडनम् ।

१. C. and F. substitute अभिगूर्यत्वब्दशतं, G. अवगूरन्त्वब्दशतं, H. अवगूर्य त्वथ शतं for अवगूर्य त्वब्दशतं. २ The text substitutes च for तु. ३. The text reads संगृह्णाति महीतले for संगृह्णीयाद् द्विजन्मनः. ४. B. D. E. and H. omit the following :—

कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम्' ॥

इति । याज्ञवल्क्योऽपि—

'विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने ।

५ I reads कृच्छ्रमतिकृच्छ्र and all others except A. read कृच्छ्रस्त्वतिकृच्छ्र ६ A. adds अपि after यम.

'ताडने च्छेदने चैव शोणितस्य प्रवर्त्तने ।
कृच्छ्रातिकृच्छ्रौ कुर्वीत चान्द्रायणमथाचरेत् ॥
दशसंख्याश्च गा दद्युरङ्गच्छेदो यदा भवेत्'[1] ।
.(य. स्मृ. ९. ४–९)

इति । बृहस्पतिः—

'काष्ठादिना ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् ।
अस्थिभेदे ऽतिकृच्छ्रस्तु पराकस्त्वङ्गकर्त्तने'[2] * ॥
(बृ. स्मृ. १. ४३)

इति । पैठीनसिरपि—

'† त्वङ्कार-हुङ्कारावगूरणे[3]-निपातन-लोहितप्रवर्त्त-
नोत्तरजयेषु प्रणिपातैकरात्रोपवास-कृच्छ्रातिकृ-
च्छ्रं चरित्वा प्रसादयेत् यथासंख्यम्' ।

इति । एतत् सर्वं सजातीयविषयम् । विजातीये तु प्रजा-
पतिराह—

---

* अङ्गकर्तनं शस्त्रादिना अङ्गच्छेदः ।

† त्वङ्कार-हुङ्कारयोरेकादिनव्रताचरणपूर्वकं[4] प्रणिपातः । अवगूरण-निपातनयोः कृच्छ्राचरणपूर्वकं प्रणिपातः । लोहितप्रवर्तने वादेषूत्तर-पक्षग्रहणपूर्वकं पराजये च अतिकृच्छ्रं चरित्वा प्रणिपत्य प्रसादयेत्—इत्यन्यत्र विस्तरः ।

१. B. and D omit following :—

दशसंख्याश्च गा दद्युरङ्गच्छेदो यदा भवेत् ।
इति । बृहस्पतिः—
'काष्ठादिना ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् ।

२. B. and D substitute अङ्गवर्तने for अङ्गकर्तने. ३. Here also some read -गोरण. ४ I reads प्रणिपत्यैक-.

'द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि वा।
क्षत्र-विट्-शूद्रजातीनां ब्राह्मणस्य वधे व्रतम्' ॥

इति। आक्रोशादौ शङ्ख-लिखितावाहतुः—

'आक्रोशेऽनृतवादे वा एकरात्रं त्रिरात्रं[1] चोपवासः'[2]।

इति। समन्तुः—

'देवर्षि-गो-ब्राह्मणा-ऽऽचार्य[3]-मातृ-पितृ-नरेन्द्राणां
प्रतिषेधने आक्रोशने जिह्वां दहेद्धिरण्यं दद्यात्'।

इति ॥ ५३ ॥

'अतिकृच्छ्रं च रुधिरे' (प. स्मृ. ११. ५४ पूर्वार्धे) -इत्युक्तम्। कोऽसावतिकृच्छ्रः? -इत्याकाङ्क्षायां तत्स्वरूपमाह—

**नवाहमतिकृच्छ्री[4] स्यात् पाणिपूरान्नभोजनः ॥५४॥**
**त्रिरात्रमुपवासी[5] स्यादतिकृच्छ्रः स उच्यते।**

इति। अतिकृच्छ्रमाचरन् विप्रस्त्रिरावृत्तैकभक्त-नक्तायाचितदिनेषु नवसु यावता पाणिः पूर्यते तावदेव भुञ्जीत। उपवासदिनेषु प्राजापत्यवदुपवासमेव चरेत्। सोऽयमतिकृच्छ्र इत्युच्यते। एतदेवाभिप्रेत्य याज्ञवल्क्यः प्राजापत्यमुपदिश्य[6] तस्यैव गुणविकृतित्वेनातिकृच्छ्रं निर्दिशति—

---

१ A. substitutes च for वा. २. B and D. do not insert त्रिरात्रं. ३. J reads -गो-ब्राह्मणे च स्यार्थे for -गो-ब्राह्मणाचार्य-. ४ I. reads नवाहमतिकृच्छ्र for नवाहमतिकृच्छ्री. ५ B C. D and I. read उपवास for उपवासी ६ H reads प्राजापत्यप्रतिकृतित्वेन for प्राजापत्यमुद्दिश्य तस्यैव गुणविकृतित्वेन.

'अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः'[१]।

(या. स्मृ. ३. ३२०)

इति। गौतमोऽपि प्राजापत्यं प्रपञ्च्यानन्तरमाह—

'एतेनैवातिकृच्छ्रो व्याख्यातः।

(गौ. स्मृ. २६. १८)

इति। यद्वा[२] नैरन्तर्येण नवसु दिनेषु पाणिपूरान्नं भुक्त्वा त्रिषु दिनेषु उपवसेत्। तदाह यमः—

'एकैकं पिण्डमश्नीयात् त्र्यहं कल्पे त्र्यहं निशि।

अयाचितस्त्र्यहं चैव वायुभक्षः परं त्र्यहम्॥

अतिकृच्छ्रं चरेदेतत् पवित्रं पापनाशनम्'।

(य. स्मृ. ३. ७१–७२)

इति॥५४॥

'अतिमानादतिक्रोधात्' (प. स्मृ. ४. १)—इत्यारभ्य 'कृच्छ्रोऽभ्यन्तरशोणिते' (प. स्मृ. ११. ५४)—इत्यन्तेष्वष्टस्वध्यायेषु नानाविधान् पापविशेषाननूद्य प्रायश्चित्तविशेषा निरूपिताः। यानि त्वन्यानि प्रतिपदोक्तप्रायश्चित्तरहितानि[३] शङ्कितानि तेषां साधारणं प्रायश्चित्तमाह—

सर्वेषामेव पापानां सङ्करे समुपस्थिते॥ ५५ ॥

दशसाहस्रमभ्यस्ता[४] गायत्री शोधनं परम्।

इति। अयं च गायत्रीजपः प्राजापत्यादीनामुपलक्षकः।

१. I. reads-भोजने for-भोजन  २. A reads यावद् for यद्  ३ B and D. do not insert प्रतिपदोक्त-; while H. substitutes प्रतिपादोक्त- and I. omits शङ्कितानि  ४ M. substitutes शत- for दश-.

तानि च प्रतिपदोक्तप्रायश्चित्तव्यतिरिक्तानि व्रतानि मुनिभिः प्रपञ्चितानि। तत्र अत्रि-मनु-विष्णु-विश्वामित्राः—

'अनुक्तनिष्कृतीनां तु पापानामपनुत्तये* ।
शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत्' ॥
(म. स्मृ. ११. २०९)

इति। याज्ञवल्क्यः—

'देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः।
प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः'॥
(या. स्मृ. ३.२९४)

इति। शङ्ख-लिखितावपि—

'क्रय-विक्रय-दुष्टभोजन-प्रतिग्रहेष्वनादिष्टप्रायश्चित्तेषु सर्वेषु चान्द्रायणं प्राजापत्यं च'।

इति। स्मृत्यन्तरे—

---

* अनुक्ता निष्कृतयः प्रायश्चित्तानि येषां कर्मणां तानि अनुक्तनिष्कृतीनि। यथा चाण्डालादिप्रतिलोमवधे प्रतिपदोक्ता निष्कृतिर्नास्ति। तत्र शक्तिं पापं च अवेक्ष्य प्रायश्चित्तं कल्पयेत्। शक्तिः प्रायश्चित्तिनः। तपोदानाद्यासु निष्क्रियासु प्रायश्चित्ती यां कर्तुं समर्थः स्यात् तामेव कल्पयेत्। एवं पापस्य गुरुत्वं लघुत्वं कामकृतत्वमकामकृतत्वं अभ्यासमनभ्यासं च अवेक्षयेत्। यतो दण्ड-प्रायश्चित्तयोस्तुल्यत्वमतः देशकालादिकं सर्वं विचार्य प्रायश्चित्तं देयं भवति।

---

१. We follow here A., while B. D and G substitute अत्र for तत्र and A. E I omit अत्रि- G and J omit तत्र. ३ Except A. and J. all others do not insert अपि. ४ A. adds- दुष्ट -before - प्रतिग्रहेषु

'भक्ष्याभक्ष्याण्यनेकानि ब्राह्मणानां विशेषतः ।
तत्र शिष्टा यथा ब्रूयुस्तत्कर्त्तव्यमिति* स्थितिः'[१]॥

इति । शातातपः—

'अनुक्तेषु[२] विधिं ज्ञात्वा प्राजापत्यं[३]† समाचरेत् ।
सर्वत्र सर्वपापेषु द्विजश्चान्द्रायणं चरेत्' ॥
(शा. स्मृ. ६. ३)

इति । उशनाः—

'यथोक्तं यत्र वा नोक्तमिह[४] पातकनाशनम् ।
प्राजापत्येन कृच्छ्रेण शुद्ध्यते नात्र संशयः‡'॥
(उ. स्मृ. ३. ९९)

इति ॥ ९९ ॥

अभोज्ये भोज्यत्व[५]प्रमितिमभिसंकल्प्य मनसा
प्रसक्तिं स्वाच्छन्द्यादिह विदधतः संस्मृतिमतः[६] ।
मतं प्रायश्चित्तं दधतमिममेकादशमसा-
वकार्षीदध्यायं स्फुटविवरणं माधवसुधीः ॥ १ ॥

इति श्रीमहाराजाधिराज-वैदिकमार्गप्रवर्त्तक-परमेश्वरश्री-वीरबुक्कभूपालसाम्राज्यधुरंधरस्य माधवमात्यस्य कृतौ पराशर-स्मृतिव्याख्यायां माधवीयायां एकादशोऽध्यायः ॥ ११ ॥

---

* शिष्टैरुक्तेन प्रायश्चित्तेनानुष्ठितेन पापनिष्कृतिर्भवतीति भावः ।

† सर्वसाधारणमिदं प्राजापत्यम् ।

‡ पातकनाशनं प्रायश्चित्तम् । इहास्मिन् प्रायश्चित्तप्रकरणे । यत्र प्राजापत्यकृच्छ्रमुक्त तत्र तेन अन्येन वा यथोक्तेन प्रायश्चित्तेन शुद्धिर्भवत्येव । यत्र नत्वोक्तं तत्रापि प्राजापत्यकृच्छ्रेण भवतीत्यत्र नास्ति संशयः।

---

१. Except A and G. all others substitute स्मृति for स्थिति·. २ B. and D. अनुक्तस्य, G अशक्तेषु and J. अनुक्ते तु for अनुक्तेषु. ३. I. reads प्रायश्चित्त for प्राजापत्य. ४. C and F substitute ऽन्योक्तम् for नोक्तम्; while B and D अतिपातक for इह पातक·. ५. H. reads अभिज्याभोज्यत्व·, but it seems to be a mistake. ६. I. only reads सस्कृतिमतः.

The names occurring in the Parâs'ara Samhitā

## ADHYÂYAS IV—XI

## A list of the names of authors, works, etc., occurring in Mâdhavâchâryâ's Commentary on the Parâśar Sâmhita, Adhyâyâs IV—XI.

# Index of Quotations,
## Vol. II., Part I.

*Vol. II., Part I.*

*Vol. II., Part I.*

९. ईश्वरवादिनः–



१०. उपमन्युः–



११. उशनाः–

१२. ऋक्संहिता–



१३. ऋष्यशृङ्गः–

३६. धौम्यः–



३७. नारदः–



३८. नारदीयपुराणम्–



३९. न्यायः–



४०. पराशरः–

५१. बृहत्संवर्तः—



५२. बृहस्पतिः—

९३. बौधायनः—

५४. ब्रह्मगर्भः—



५५. ब्रह्मपुराणम्—

६२. मन्त्रलिङ्गम्–



६३. महाभारतम्–

६७. याज्ञवल्क्यः—

## *Vol. II., Part I.*

### ७०. वाररुचं वार्तिकम्—



### ७१. विश्वामित्रः—



### ७२. विष्णुपुराणम्—



### ७३. विष्णुः—

८३. शङ्ख-लिखितौ—

८५. शातातपः–

८६. शास्त्रम्–



८७. श्रुतिः—

**९०. सामगाः—**



**९१. सुमन्तुः—**



**९२. स्कन्दपुराणम्—**



**९३. स्मरणम्—**

१४. स्मृतिः—



१५. स्मृत्यन्तरम्—

**१६. हारीतः—**

## १७. ANONYMOUS QUOTATIONS.

# BOMBAY SANSKRIT SERIES.

*Edited under the superintendence of*

*Prof. A. V. Kâthavate and Prof. S R Bhandarkar.*

| | Rs | a. | p |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V Edited, with Notes, by Dr G. Buhler. ... . ... ... .. .. | 0 | 4 | 0 |
| No. II.—Nâgojibhatta's Paribhâshendusekhara. Edited and explained by Dr. F Kielhorn. The Sanskrit Text and various Readings, Part I. .. .. .. .. | 0 | 8 | 0 |
| No. III.—Pañchatantra, Books II. and III. Edited, with Notes, by Dr. G. Buhler. ... .. ... .. .. | 0 | 4 | 0 |
| No. IV.—Pañchatantra, Book I. Edited, with Notes, by Dr. F Kielhorn .. ... . .. ... ... .. | 0 | 6 | 0 |
| No. V.—The Raghuvamśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S P. Pandit, M. A, Part I, Cantos I.—VI. .. . | 1 | 8 | 0 |
| No. VI.—Mâlavikâgnimitra· a Sanskrit Play by Kâlidâsa. Edited, with Notes, by Shanker P. Pandit, M. A. .. | 2 | 2 | 0 |
| No. VII—Nâgojibhatta's Paribhâshendusekhara. Edited and explained by Dr. F. Kielhorn Part II (Translation and Notes), Paribhâshas I—XXXVII .. . | 0 | 8 | 0 |
| No. VIII—The Raghuvamśa of Kâlidâsa, with the Commentary of Mallinâtha Edited, with Notes, by S.P. Pandit, M. A. Part II., Cantos VII—XIII. | 0 | 12 | 0 |
| No. IX.—Nâgojibhatta's Paribhâshendusekhara Edited and explained by Dr. F Kielhorn. Part II. ( Translation and Notes), Paribhâshâs XXXVIII—LXIX . | 0 | 8 | 0 |
| No X.—The Daśakumâracharita of Dandin Part I. Edited with Critical and Explanatory Notes, by Dr. G Buhler. ... . .. ... ... ... . | 0 | 8 | 0 |
| No XI.—The Nîtiśataka and Vairâgyaśataka of Bhartrihari, with extracts from two Sanskrit Commentaries Edited, with Notes, by Kâshinâth Trimbak Telang, M. A (Copies not available.) | | | |
| No. XII—Nâgojibhatta's Paribhâshendusekhara. Edited and explained by Dr F. Kielhorn Part II (Translation and Notes), Paribhâshâs LXX.—CXXII. ... | 0 | 8 | 0 |
| No. XIII.—The Raghuvamśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P Pandit, M. A. Part III, Cantos XIV.—XIX. | 0 | 8 | 0 |
| No. XIV.—Vikramânkadeva-Charita. Life of king Vikramâditya Tribhuvanamalla of Kalyâna composed by his Vidyâpati Bilhana Edited, with an Introduction, by Dr G. Buhler. (Copies not available ) | | | |

| | Rs. | a. | |
|---|---|---|---|
| No. XV.—Mâlatî-Mâdhava : a Drama by Bhavabhûti. Edited, with Critical and Explanatory Notes, by Dr. R G. Bhândârkar, M. A. (Second Edition in the Press) | | | |
| No. XVI.—Vikramorvasî . a Drama by Kâlidâsa. Edited, with Notes, by Shankar P Pandit, M. A. (Under revision) | | | |
| No. XVII.—Hemachandra's Desînâmamâlâ. Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R Pischel and Dr. G. Bühler. Part I. Text and Critical Notes by Professor Pischel . | 1 | 0 | |
| No. XVIII.—Vyâkarana-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn, Vol. I. complete, Parts I, II. and III. .. .. .. .. .. | 9 | 0 | |
| No. XIX.—Ditto ditto by ditto Vol. I. Part II. .. | 1 | 0 | |
| No. XX.—Ditto ditto by ditto Vol I. Part III. . | 1 | 0 | |
| No XXI—Ditto ditto by ditto. Vol. II Part I. .. | 1 | 0 | |
| No. XXII.—Ditto ditto by ditto Vol. II Part II. . | 1 | 0 | |
| No. XXIII.—Vâsishthadharmaśastram. Edited, with Notes, by Dr. A. A Fuhrer . ... ... .. ... | 0 | | |
| No XXIV.—Kâdambarî by Bâna and his son Vol I. Sanskrit Text, complete. Edited by Dr P. Peterson. Do Vol. II. Introduction and Notes, by do. Third Edition. | | | |
| No. XXV.—Kîrti-Kaumudî Edited, with Notes, by Prof. A V Kâthavate. (Copies not available.) | | | |
| No. XXVI.—Vyâkarana-Mahâbhâshya of Patañjali Edited by Dr. F Kielhorn. Vol II. Part III. . | 1 | 0 | 0 |
| No. XXVII.—Mudrârâkshasa, by Viśâkhadatta, with the Commentary of Dhundhirâja. Edited, with Notes, by K. T. Telang. (Copies not available.) | | | |
| No XXVIII.—Vyâkarana-Mahâbhâshya of Patañjali. Edited by Dr. F Kielhorn. Vol III Part I. | 1 | 0 | |
| No XXIX.—Do do of do by do Vol. III Part II. | 1 | 0 | |
| No. XXX.—Do do. of do. by do. Vol. III. Part III. | 1 | 0 | |
| No. XXXI.—Subhâshitâvali of Vallabhadeva. Edited by Dr P. Peterson and Pandit Durgâprasâda ... | 2 | 8 | 0 |
| No. XXXII.—Tarka-Kaumudî of Laugâkshi Bhâskara. Edited by Professor M. N. Dvivedi (Copies not available.) | | | |
| No XXXIII.—Hitopadeśa of Nârâyana, by Dr. P. Peterson. ... ... .. .. .. . .. ... ... . | 0 | 14 | |
| No. XXXIV.—The Gaudavaho by Vâkpati, Edited by Shankar P. Pandit. . .. . ... .. | 3 | 0 | |
| No XXXV.—Mahânârâyana-Upanishad. Edited by Colonel G. A Jacob . .. ... .. ... .. ... | 0 | 7 | |
| No. XXXVI.—University Selections of Hymns from the Rigveda. Edited by Dr. P. Peterson. (2nd Edition). | 4 | 0 | |

| | Rs. | a. | p |
|---|---|---|---|
| No XXXVII.—Sârngadharapaddhati Edited by Dr. P. Peterson. Vol. I. ... .. ... . . . | 3 | 0 | 0 |
| No. XXXVIII—Naishkarmyasiddhi. Edited by Col G. A Jacob .. ... ... ... .. .. | 2 | 0 | 0 |
| No XXXIX—A Concordance to the principal Upanishads and Bhagavadgîtâ, by the same author. | 8 | 0 | 0 |
| No XL.—Eleven Atharvana Upanishads, with Dîpikâs, by the same author . ... .. ... .. .. | 2 | 8 | 0 |
| No. XLI.—Handbook to the Study of the Rigveda, by Dr. P. Peterson Part I .. . .. ... ... | 3 | 0 | 0 |
| No. XLII—The Daśakumâracharita of Dandin, Part II. (completing Dr. G. Buhler's Edition). Edited with Critical and Explanatory Notes, by Dr P. Peterson. | 0 | 8 | 0 |
| No. XLIII—Handbook to the Study of the Rigveda, by Dr P. Peterson. Part II. comprising the Seventh Mandala with the Commentary of Sâyana . .. | 5 | 0 | 0 |
| No. XLIV.—Aphorisms of the Sacred Law of the Hindus, an Index of the Sûtras and the various readings of the Hiranyakeśi-Dharmasûtra, by Dr G Buhler. Part I. . . ... .. ... . | 2 | 12 | 0 |
| No. XLV.—Râjataranginî. Edited by Pandit Durgâprasâda. Part I. containing the first 7 (seven) Tarangas . . | 3 | 0 | 0 |
| No. XLVI—Patañjali's Yogasûtras Edited with the Scholium of Vyâsa and the Commentary of Vâchaspati, by Mahâmahopâdhyâya Râjârâma Shâstri Bodas. | 3 | 4 | 0 |
| No XLVII.—Pârâśara Dharma Samhitâ with the Commentary of Sâyana Mâdhavâchârya, Vol. I. Part I Edited by Pandit Vâman Shâstri Islâmpurkar ... | 4 | 4 | 0 |
| No. XLVIII—Ditto do of do by do Vol. I Part II | 4 | 0 | 0 |
| No. XLIX—Nyâyakośa, 2nd Edition Edited by Mahâmahopâdhyâya Bhîmâchârya Zalkîkar. ... ... | 12 | 0 | 0 |
| No. L—Apastamba Dharmasûtra, Part II. Edited by Dr. G Buhler. ... .. ... . ... | 2 | 4 | 0 |
| No LI.—Râjataranginî Edited by Pandit Durgâprasâda, Vol II Taranga VIII. . . ... .. . | 2 | 8 | 0 |
| No. LII.—Mrichchhakatika, Vol. I with two Commentaries and various readings, by Mr. N B Godbole. . | 3 | 8 | 0 |
| No. LIII.—Navasâhasânkacharita, Part I. Edited by Pândit Vâman Shâstri Islâmpurkar. .. . .. | 3 | 4 | 0 |
| No. LIV—Râjataranginî of Kalhana, Vol III Edited by Dr P. Peterson. .. ... . . . .. ... | 2 | 4 | 0 |
| No. LV—Tarkasangraha of Annambhatta. Edited with the author's Dîpikâ and Govardhana's Nyâya-Bodhinî and Critical and Explanatory Notes, by the late Rao Bahadur Y V. Athalye. ... .. ... ... .. .. ... | 3 | 4 | 0 |
| No LVI.—Bhatti Kâvya, Vol. I Edited by Mr. Kamalâshankar P Trivedi. .. ... ... ... ... ... ... | 9 | 0 | 0 |
| No. LVII—Do. Vol. II. Edited by do. ... ... . | 6 | 0 | 0 |
| No. LVIII.—A second selection of Hymns from the Rigveda. Edited by Dr. P. Peterson ... ... ... ... | 4 | 0 | 0 |

The Department of Public Instruction, Bombay.

THE

# PARÂŚARA DHARMA SAMHITÂ

OR

## PARÂŚARA SMṚITI,

WITH

## THE COMMENTARY

OF

## SÂYAṆA MÂDHAVÂCHÂRYA.

EDITED WITH VARIOUS READINGS, CRITICAL NOTES, INDEXES, APPENDICES, &c

BY

PAṆDIT VÂMAN ŚÂSTRI ISLÂMPURKAR.

VOLUME II., PART II.

( 500 COPIES.)



Bombay

GOVERNMENT CENTRAL BOOK DEPÔT.

1906



*Price, Rs 5.*

Bombay Sanskrit Series No. LXIV.

# पराशरधर्मसंहिता

अथवा

## पराशरस्मृतिः

## सायणमाधवाचार्यकृतटीकासहिता.



पाठान्तराणि, अर्थविवेचकटिप्पणी, वाक्यसूची, परिशिष्टानि च इत्यादिभिः सहिता.

धर्मं चरत माऽधर्मं सत्यं वदत माऽनृतम् ।
दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम् ॥

( वसिष्ठः )

## प्रायश्चित्तकाण्डम्.

द्वादशोऽध्यायः ।

इस्लामपुरग्रामजनुषा विद्वद्वरगोविंदशास्त्रिसूनुना
वामनशर्मणा संशोधिता.

मुंबई:

शके १८२५.

राजकीयशकाब्दाः ११०

# TABLE OF CONTENTS.

# PARÂŚARA DHARMA SAṂHITÂ.

## VOL. II., PART II.

## PREFATORY NOTES.

This part forms the concluding portion of the second volume of the great Parâśara Dharma Saṃhitâ with Sâyana Mâdhavâchârya's learned commentary on it It consists of a single chapter, and treats of some of those questions of *âchâra* ( usages, customs, and general conduct of life ) and *prâyaśchitta* ( atonements and expiatory rites) which have not been noticed anywhere in the preceding chapters. It can, therefore, be said to be a supplementary chapter on this vast subject of *âchâra* and *prâyaśchitta*. In fact the author himself regards the chapter as such.

As we have already seen the author has devoted the first three chapters of the work to *âchâra* and the next eight to *prâyaśchitta*. He has thus dealt with these two divisions of the subject almost independently of each other in the main part of the work But in the present chapter he has departed from this method ; for instead of dealing separately with the two divisions he has intermixed them, though thereby no inconvenience of any kind is caused to the reader.

For the purpose of collating and editing I have here used as my basis the same manuscripts as those which were used by me to prepare and edit the first part of this second volume. As these manuscripts have all been

already described in my prefatory notes to that part, a repetition of their description is, I think, needless here.

The learned Commentator, Sâyaṇa Mâdhavâchârya, quotes copiously from various authors and works in this part, as he does all throughout the work. I here subjoin, in alphabetical order, short notes on twenty of them, they being such authors and works as have not been previously referred to anywhere by the Commentator in the course of this work. The other authors and works I have already briefly noticed elsewhere, as a reference to my prefatory notes to the preceding parts will show.

I cannot close these notes without observing that although our author has now practically concluded the subject of *âchâra* and *prâyaśchitta*, he does not feel satisfied that he has done full justice to it. For, in the very opening paragraph of this chapter he significantly remarks :—

अतिरिक्तानां परिशिष्टानां केषाञ्चिदाचाराणां प्रायश्चित्तानां च विधानायाऽयं द्वादशोऽध्याय आरभ्यते,

implying thereby that he takes up *a few* only of those questions of *âchâra* and *prâyaśchitta* which have escaped his notice in the preceding chapters.

I have annexed at the end of this part two appendices of a general nature :—one, a list of the words occurring in the text of the two volumes now before the public; and the other, a general index to Mâdhavâchârya's numerous quotations. It is hoped that these additional appendices will prove to be of use to the reader as a means to easily find whatever reference he requires from either the text or the quotations in the commentary. It was my intention at first to attach these two appendices to the last (third) volume of the work which is now

in the press; but upon further consideration I thought it more proper and expedient to place them in as close a proximity as possible to that part of the work wherein the words and the quotations in question are met. Another reason which induced me to allot the said place to the appendices is that our author, the great sage Parâśara, has nothing whatever to do with the third volume, the same being all exclusively the work of the Commentator, Sâyana Mâdhavâchârya. A further reason is that that volume does not deal with any question of *Âchâra* or of *Prâyaś-chitta*, it being solely devoted to questions of *Vyavahâra*, or the judicial or legal side of *Dharma.** For these reasons the most appropriate place for the two appendices, I thought, was at the end of the second volume. That place, therefore, I have assigned to them.

### BRIEF OBSERVATIONS ON SOME OF THE AUTHORS &c., QUOTED BY SÂYANA MÂDHAVÂCHÂRYA IN HIS COMMENTARY ON THIS CHAPTER.

(1) अभिधानम् (*Abhidhânam*):—I have not come across any copy of any work on Dharmaśâstra of this name printed or manuscript, nor have I been aware of the existence of any work bearing this title. Mâdhavâ-chârya quotes *one* line under this heading. Exactly

* It will be a mistake to presume from this that the great Parâśara was not well versed in Vyavahâra Though disinclined to treat the subject himself, he has duly hinted about it The question then naturally arises, why did he not take up the subject himself ? This question I propose to discuss at some length when a more fitting opportunity occurs. Mâdhavâchârya also slightly refers to this question in his introduction to the Commentary almost at the very outset. ( See verses 8-24, pages 15-18, Part I , Vol. I ).

the same line appears, however, in *Brahmapurâṇa* (*vide* also my reference at page 206 of the text).

(2) उद्दाहरणम् (*Uddâharaṇam*):— Though not extant now, at one time this **work** appears to have been a standard authority on questions of *dharma* (religious, moral, and civic duty). Mâdhavâchârya in his allusion to it gives it the epithet "Śâstra." He quotes from it two lines (page 273); and the idea conveyed in them is found expressed in many places in the *Śântiparva* of the great Hindu epic *the Mahâbhârata.*

(3) ऋग्विधानम् (*Rigvidhânam*) :— I know of only one manuscript bearing this name. It contains 600 *ślokas* (verses) and ends with the colophon "शके १४२३ आश्विन शु०१ वातापिक्षेत्रे लिखितं" which means "transcribed at the holy place Vâtâpi on the first of the bright half of *Âśvina* in the Śaka year 1423." This date proves that the manuscript is very old. Vâtâpikshetra† is perhaps our modern Vâi in the Satara District. Most of the thirty lines quoted by Mâdhavâchârya at pages 279-281 as from this work are found in this manuscript I may as well mention that in my search for manuscripts I once came across one bearing the title बृहदृग्विधानम् (Brihadrigvidhânam). This too I found to be a very old manuscript, containing 1,000 *ślokas* (verses), and it bore the Śaka year 1691 as the year of its transcription.

† The writer of the colophon had perhaps in his mind the Paurâṇika story of Vâtâpi and Ilvala who lived near the Sahya-mountains. And there is no *kshetra* near the Sahya-mountains except *Vâi* which bears a close resemblance to the word Vâtâpi kshetra The editor is aware that modern scholars have tried to identify Vâtâpi with Bâdâmî in the Bijapur District. But Bâdâmî was never known as a *kshetra,* nor can it be said to be in the vicinity of the Sahya-mountains.

None of the lines quoted by the Commentator could, however, be traced in it.

(4) चमत्कारखण्डम् (*Chamatkârakhaṇḍam* ):—This is a portion of the great Skanda-purâṇa. Our Commentator, Mâdhavâchârya, also says so when he quotes from it. He borrows twenty-two lines from it at pages 220-221. What part this *Chamatkârakhaṇḍa* forms of Skanda-purâṇa it is not possible to say. The *Purâṇa* itself consists of six volumes called *samhitâs*, each *samhitâ* being sub-divided into several parts called *khaṇḍas*. A complete copy of *Skanda-purâṇa* in any form has not yet been found anywhere Some portions of it are found at one place and some others at another ; but all these even if collected and put together can hardly make up a complete copy of the original voluminous work. I have seen a manuscript copy of a book styled Chamatkârakhaṇḍa, but Mâdhavâchârya's quotations cannot be traced in it.

(5-6) तैत्तिरीयारण्यकम्, तैत्तिरीयसंहिता (*Taittirîyâraṇyakam, Taittirîyasaṁhitâ*):—These two works belong to the Black Yajurveda. I have noticed them elsewhere at some length. Mâdhavâchârya makes a few quotations under both these titles at pages 48, 53 and 282.

(7) नन्दिपुराणम् (*Nandi-purâṇam*) :— It is not possible to say definitely what author or work our Commentator exactly alludes to under this title. There is a नन्दिकेश्वरपुराणम् (*Nandikeśvarapurâṇam*), a नन्दिपुराणम् (*Nandipurâṇam*)and a नन्दिधर्म. (*Nandidharmaḥ*). The first two of these, differing as they slightly do from each other in their titles, may after all be identical so far as the subject they treat of is concerned.

I have in my possession a manuscript entitled *Nandikeśvara-purâna*. It is an old manuscript consisting of 76 folios, but it is incomplete and without date or colophon. Of the seventeen lines quoted by Mâdhavâchârya as from *Nandipurâṇa* at pages 242 and 243, six are found in this manuscript. It can, therefore, be presumed that *Nandipurâṇa* and *Nandikeśvara-purâṇa* are one and the same. But at the same time the four lines which the Commentator quotes at page 375 of Part 1, Volume I., of this work as from नन्दिकेश्वर cannot be traced in it

नन्दिधर्मः ( *Nandi-dharmaḥ* ) cannot surely be a work of the same class or kind as Nandi-purâṇa, or Nandikeśvara-puraṇa, as the very name implies. It has undoubtedly some reference to *dharma* or religious and moral conduct. I regret that I have not been able to find or trace any copy of any work bearing this name. The only information that I have about it is from Mâdhavâchârya himself. From his remarks Nandi appears to be the name of an author, and in the list of law-givers copied by him from the Âśvamedhika-parva of the Mahâbhârata the name Nandi occurs ( *vide* page 109, Part 1, Vol. I., of this work ). But this name cannot be found anywhere else among authors of *dharma*, and in the absence of any definite information on the point, it is impossible to hazard any opinion as to who or what Nandi is and what is meant by Nandi-dharma. One surmise, more probable than any other, appears to me to be that Nandi is a mythological name of God Śiva's Bull, and not the name of any human person. It was usual in old days to introduce, in the course of big epics and other works dialogues on metaphysical

इति । यो विप्रः शूद्राद्दक्षिणामादाय तदीयं हविः शान्ति-पुष्ट्यादिसिद्धये वैदिकैर्मन्त्रैर्जुहोति तस्य ब्राह्मणस्यैव तत्र प्रत्यवायः । शूद्रस्तु होमफलं लभेदिति ॥ ३९ ॥

अथ भोजनकाले मौनं विदधाति—

मौनव्रतं समाश्रित्य आसीनो न वदेद् द्विजः ।
भुञ्जानो हि वदेद् यस्तु तदन्नं परिवर्जयेत्[१] ॥ ४० ॥

इति । यस्तु मौनेन भोक्तव्यमिति व्रतं* तपोरूपेण स्वीकृत्य वर्त्तते स भोक्तुमासीन उत्थानपर्यन्तं किमपि वचनं न वदेत् । यदि प्रमादाद्भोजनमध्ये किञ्चिद्वाक्यं वदेत् तदानीम्[२]वशिष्टमन्नं परित्यजेत् न[३] तु भुञ्जीत ॥ ४० ॥

भोजनपात्रेण जलपानं निषेधति—

अर्धे[४] भुक्ते तु यो विप्रः तस्मिन् पात्रे जलं पिबेत् ।
हतं[५] दैवं च पित्र्यं च आत्मानं चोपघातयेत् ॥ ४१ ॥

इति । कांस्यादिपात्रे प्रक्षिप्तमन्नं भुक्त्वा भोजनसमाप्तेः प्रागेव तत्पात्रमुद्धृत्य जलं यः पिबेत् तेनानुष्ठितं हव्यं कव्यं च देवान् पितॄन् न तर्पयेत् । तेन दोषेण स्वात्मानं नरके पात-यित्वोप[६]घातयेत् ॥ ४१ ॥

* प्राणाहुतिग्रहणपर्यन्तं मौनं नित्यम् । तदन्तरं भोजनसमाप्तिपर्यन्तं यन्मौनं तदैच्छिकं व्रताङ्गं वा भवति ।

१. J reads वर्जयेद् द्विज for परिवर्जयेत्. २ E and I read तदा for तदानीं ३. E. and I do not insert न तु भुञ्जीत ४. G. reads अर्धे भुक्त्वा तु, B and D. अर्धभुक्तौ तु, C and F. अर्धभुक्त्वे तु and I अर्धभुक्ते तु all for अर्धे भुक्ते तु. ५. L. reads हतदैव and चैव घातयेत् for हतं दैव and चोपघात-येत्. K. also substitutes चैव घातयेत् for चोपघातयेत् ६. I. reads अवघातयेत् for उपघातयेत्.

पङ्क्त्युच्छिष्टकारित्वं प्रतिषेधति—

भुञ्जानेषु तु विप्रेषु योऽग्रे पात्रं विमुञ्चति ।
स मूढः स च[2] पापिष्ठो ब्रह्मघ्नः स[3] खलूच्यते ॥ ४२ ॥[1]

इति । एकपङ्क्त्युपविष्टेषु भुञ्जानेषु सत्सु तन्मध्ये कश्चिदितरभोजनसमाप्तेः पूर्वमेव स्वपात्रं परित्यज्य भोजनान्ते चुलकं[4]* पीत्वोत्तिष्ठति तस्य निन्दाऽतिमहती । तदर्थमेव मूढादिशब्दाः प्रयुक्ताः ॥ ४२ ॥

श्राद्धकाले भोजनपात्रचलनात् पूर्वं स्वस्तिवाचनं निषेधति—

भोजनेषु[5] च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।
न देवास्तृप्तिमायान्ति[6] निराशाः पितरस्तथा ॥ ४३ ॥

इति ॥ ४३ ॥

अस्नातभोजनादिकं निषेधति—

अस्नात्वा[7] नैव भुञ्जीत अजप्त्वाऽग्निमहूय[8] च ।
पर्णपृष्ठे न भुञ्जीत रात्रौ दीपंविना तथा ॥ ४४ ॥

इति । यद्यपि स्नान-जप-होमानां भोजनकालात् प्राचीन-

---

* 'चुलकं' उत्तरापोशनम् । यद्यप्यत्र मूढादिशब्दप्रयोगेण महती निन्दावगम्यते तथापि न तस्य कश्चिदपि दोषोऽभिहितः । अत एव उत्थानं शिष्टसम्प्रदायविरुद्धमित्येवेति प्रतिभाति ।

---

१. M. does not insert this Śloka. २ K and L substitute तु for च. ३. I. substitutes च for स. ४ I. reads उदक पीत्वा तिष्ठति for चुलकं पीत्वोऽत्तिष्ठति ५. B. and D. read भोजनेषु. ६ B. and D. read स्वस्तिम् for तृप्तिम्. ७ H. and M do not insert this Śloka, while K. and L read स्नात्वा नैव च for अस्नात्वा नैव. ८. G. reads अहुत्वा for अजप्त्वा and all others except A. and J. substitutes ऽग्निमपूज्य, while I. ऽऽज्यमहूय both for ऽग्निमहूय.

काले विहितत्वादस्नातभोजनादिकं न प्रसक्तं तथापि कदाचित् केनचिन्निमित्तेन स्वस्वकालेष्वननुष्ठितेषु यदि भोजनकालः प्राप्तः स्यात् तदा स्नानादिकमकृत्वा भोजनं न कुर्वीत। तथा पत्रावल्यां भुञ्जानः पत्राणामन्तर्भागे भुञ्जीत। न तु पृष्ठभागे। तथा रात्रावन्धकारे न भुञ्जीत ॥ ४४ ॥

अथाऽपहारादिना धनार्जनं प्रतिषेधति—

गृहस्थस्तु[1] दयायुक्तो धर्ममेवानुचिन्तयेत्।
पोष्यवर्गार्थसिद्ध्यर्थं[2] न्यायवर्त्ती सुबुद्धिमान्[3] ॥ ४५ ॥
न्यायोपार्जितवित्तेन कर्त्तव्यं ह्यात्मरक्षणम्[4]।
अन्यायेन तु यो जीवेत् सर्वकर्मबहिष्कृतः ॥ ४६ ॥

इति। गृहस्थः[5] पुत्र-मित्र-कलत्रादयः सर्वथा रक्षणीया इत्यनया दयया युक्तोऽपि पोष्यवर्गपोषणरूपस्यार्थस्य सिद्धये धर्ममेव शास्त्रीयमेव याजनादिरूपं द्रव्यार्जनोपायं चिन्तयेत्। एवं च सति न्यायवर्त्ती सन् परलोकविषयप्रधानत्वेन बुद्धिमान्[6] भवति। तस्मात् न्यायोपार्जितेनैव याजनादिसाध्येन वित्तेनात्मनः कुटुंबस्य[7] च रक्षणं कर्त्तव्यम्। यस्त्व-

---

१ M reads यदा for दया-. २ E H M. read पोष्यधर्मार्थसिद्ध्यर्थं for पोष्यवर्गार्थसिद्ध्यर्थं ३ I. and J. read तु बुद्धिवान्, G. स बुद्धिवान् for सुबुद्धिमान् ४ K and L read स्वात्मरक्षण, G आत्मरक्षणम् and M ज्ञानरक्षणम् for ह्यात्मरक्षणम्. ५ B and D read गृहस्थस्य, G and H. गृहस्थै both for गृहस्थ ६ C E F. and H. read शुद्धिमान् for बुद्धिमान् ७. C and F read आत्मार्थी कुटुबस्य, I आत्मरक्षण for आत्मनः कुटुबस्य च रक्षणम् and E. G H and J. आत्मार्थं कुटुबस्य for the same. B and D. follow our reading, but omit च.

न्यायेन चौर्यापलापादिना लब्धेन वित्तेन जीवेत् स दैवे पित्र्ये च कर्मण्यनर्हो भवति । यत्तु मनुवचनम्—

'वृद्धौ च माता-पितरौ सती भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्'* ॥
(म. स्मृ. ११. ११)

इति तदापद्विषयम् ॥ ४५–४६ ॥

अथ पुण्यवस्तुदर्शनं विधत्ते—

अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत्तु नित्यशः ॥ ४७॥

इति । इष्टकाचयनसंस्कृतेनाग्निना युक्तोऽग्निचित् । कपिला कपिलवर्णा धेनुः । सत्री द्वादशाहमारभ्य सहस्रसंवत्सरपर्यन्तेषु सत्रेषु यस्य कस्यचित् सत्रस्यानुष्ठाता । शास्त्रीयेण मार्गेण प्रजानां पालको राजा । चतुर्थाश्रमस्य यथावत्पालको भिक्षुः । महोदधिर्लवणसमुद्रादिः । एते दृष्टाःसन्तो द्रष्टारं पुनन्ति । कुश-हिरण्यादयो द्रष्टव्यविशेषाः पुनन्तोऽपि धारणादिकमपेक्षन्ते । न तु दर्शनमात्रेण पुनन्ति । अतस्तद्वैलक्षण्याय दृष्टमात्राः इत्युक्तम् ॥ ४७ ॥

रक्षणमात्रेण शुद्धिप्रदान् पदार्थानाह—

---

* उदाहृतोऽयं श्लोकः पूर्वमाचारकाण्डे ( प. १९८ पं. १४ ) अत्र चाचार्येण मनूक्तत्वेनोदाहृतः तथापि नायं मनुस्मृतिपुस्तकेषु सर्वत्रोपलभ्यते । नापि टीकाकृद्भिर्व्याख्यातः । क्वचित् 'भृत्यानामुपरोधेन' ( म. स्मृ. ११. १० )-इत्यस्मादग्रे दृश्यते ।

---

१ B. D and I. substitute साध्वी for सती. २ I. reads पश्येत for पश्येत्तु

अरणिं कृष्णमार्जारं चन्दनं सुमणिं घृतम्।
तिलान् कृष्णाजिनं छागं गृहे चैतानि रक्षयेत्॥४८॥

इति।

'योऽश्वत्थः शमीगर्भः'।
(तै. ब्रा. १. २. ८.८)

इत्यादिभिर्मन्त्रैः संस्कृतो वह्निमन्थेनोपयुक्तः काष्ठविशेषोऽरणिः। सुमणिः पद्मरागादिः॥ ४८॥

अथ गोचर्मदानं विधातुं गोचर्मनिरूपणमाह—

गवां शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम्।
तत् क्षेत्रं दशगुणितं गोचर्म परिकीर्तितम्॥ ४९॥

इति। एकेन वृषेण सहितं गोशतं सैकवृषम्। तच्च गोशतं नियन्त्रणरहितं विश्रामाय यावन्तं भूप्रदेशमाक्रम्यावतिष्ठते तावद्भूप्रदेशो दशगुणितः सन् गोचर्मशब्देनाभिधीयते। मनुस्तु प्रकारान्तरमाह—

'तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः॥
वितस्तिद्वितयं हस्तमिति स्वायम्भुवोऽब्रवीत्।
दशहस्तेन दण्डेन त्रिंशद्दण्डं[१] निवर्तनम्॥
पञ्च चाभ्यधिकं कृत्वा एतत् गोचर्म कीर्तितम्॥
(म. स्मृ. १२. ७–८)

इति। वृद्धमनुः—

---

१. Except A., all others read त्रिंशत तु समन्तत, while G त्रिंशत तु.

'सप्तहस्तेन दण्डेन त्रिंशद्दण्डं निवर्तनम् ।
तान्येव दश गोचर्म दाता[1] पापैः प्रमुच्यते* ॥
(म. स्मृ. १२. १०)

इति ॥ ४९ ॥

पापक्षयकामिनां[2] गोचर्मदानं विधत्ते—

**ब्रह्महत्यादिभिर्मर्त्यो मनो-वाक्काय-कर्मजैः ।**
**एतद्गोचर्मदानेन† मुच्यते सर्वकिल्बिषैः[3] ॥ ५० ॥**

इति । मनो-वाक्काय-कर्माणि व्यापारास्तेभ्यो जातानि मनो-वाक्काय-कर्मजानि । नचैतेषां त्रयाणामल्पाधिकभावेन व्यवस्थितानां साधारणो निवृत्तिहेतुरयुक्त[4]—इति वाच्यम् । अत्यन्तावृतानां मानसानामीषदावृतानां वाचिकानां सकृत्[5]कृतानां कायिकानां च समत्वसम्भवात् ॥ ५० ॥

---

* विज्ञानेश्वरस्त्विदमेव वाक्यं बृहस्पतिनाम्नोदाजहार ( आचाराध्याये २१० श्लोकव्याख्यायाम् ) । तत्र 'पापैः प्रमुच्यते' इत्यस्य स्थाने 'स्वर्गे महीयते' इति भेदः ।

† यद्यपि गोचर्मप्रमाणं तत्र तत्र मतभेदात् विभिन्नमानं दृश्यते तथाप्यन्यतमग्रहणान्न दोष इति सिद्ध्यति । ब्रह्महत्यादिरित्यादिशब्दात् सुरापान-सुवर्णस्तेय-गुरुतल्पगमनानां ग्रहणम् । न तु संसर्गस्य । तस्य कलौ महापातकत्वस्य निषिद्धत्वात् । आदिशब्देन विवक्षितग्रहणे सर्वशब्दग्रहणं महापातकसमानानामुपसङ्ग्रहार्थम् । मनो-वाक्काय-कर्मजैरित्यस्य मनसा सङ्कल्प्य वाचाऽभिलप्य कर्मणोपपादितैरित्यर्थः । तेन कायकृतत्वं लभ्यते । तथा च कामकृतेषु महापापेष्विदं प्रायाश्चत्तं कर्तव्य-

---

१. C. H F. read दाता for दत्वा B. and D. दानात् for the same २. B. and D. read पापक्षयार्थं रोगिणा चर्मदानं, C and F पापक्षयकामिनो गोधर्मदानं, G पापक्षयाय रोगिणो गोचर्मदान J पापक्षयरागिणो चर्मदानं all for पापक्षयकामिनां गोचर्मदान ३. K and L. substitute पातकै for किल्बिषै· ४. G and J. read निष्कृतिहेतुः for निवृत्तिहेतु . ५ B and D. do not insert सकृत्.

दानस्य फलातिशयहेतुं पात्रविशेषमाह—

कुटुम्बिने दरिद्राय श्रोत्रियाय विशेषतः।
यद्दानं दीयते तस्मै तद्दानं शुभकारकम्[१]॥ ५१॥

इति। विशेषत इति पदं कुटुम्बित्वादिभिस्त्रिभिः पात्राति-[२]
शयविशेषणैः प्रत्येकं सम्बन्ध्यते। तथा च सति यस्य
महत् कुटुम्बं दारिद्र्यं चाधिकं[३] बहुवेदपाठेन श्रोत्रियत्वम-
तिशयितं तादृशाय दीयमानं शुभस्य फलातिशयस्य कारकं
भवति॥ ५१॥

परकीयभूम्यपहरणे प्रत्यवायाधिक्यमाह—

वापी-कूप-तडागाद्यैर्वाजपेयशतैर्मखैः[४]।
गवां कोटिप्रदानेन भूमिहर्त्ता न शुद्ध्यति॥ ५२॥

इति। वाप्यादीनामेकैकस्य शुद्धिहेतुत्वं शास्त्रान्तरेषु
प्रसिद्धम्। तादृशैर्बहुभिरपि न शुद्ध्यतीत्युक्तेः प्रत्यवायाधि-
क्यं प्रतीयते। न च सर्वात्मना* शुद्धिर्नास्तीत्येवम्परमिदं

---

मिति। अन्यथा मनोवाग्व्यापारयोः पातित्यानाधायकतया तयोर्ग्रहणम-
नर्थकं स्यात्—इति सुधियो विचारयन्तु।

* केचन पूर्वोक्तगोचर्मप्रमाणभूमिहरणदोषस्य निवृत्तिर्न भवतीत्याहुः।
न तत्र मूलं पश्यामः।

---

१ E G and H. read तद्दायुर्वृद्धिकारकम् for तद्दान शुभकारकम् २ H. substitutes पाठातिशय- for पात्रातिशय-, while B C D E. F G and I. omit पात्रातिशय-. ३. B. C D. E F. G. and H. read दारिद्र्यादिकं for दारिद्र्य चाधिक; while J reads दारिद्र्यमधिकं बहुवेदपाठकत्वात् श्रोत्रियता बह्वी and H बहुवेदपाठे च श्रोत्रियत्व for बहुवेदपाठेन श्रोत्रियत्वमतिशयितं. E. does not insert अतिशयित ४. I and J. read -शतैरपि for शतैर्मखैः; while M. does not insert this śloka.

वचनम् । तथा सति सुवर्णस्तेयधर्मेषु सम्भावितशुद्धिषु मध्ये तत्पाठानुपपत्तेः ॥ ५२ ॥

अथ रजस्वलाविषये काञ्चिद्विशेषमाह[1]—

अष्टादशदिनादर्वाक्[2] स्नानमेव रजस्वला ।
अत ऊर्ध्वं त्रिरात्रं स्यादुशना मुनिरब्रवीत्[3] ॥ ५३ ॥

इति । रजोदर्शनमारभ्य चतुर्थे दिवसे स्नाता स्त्री पुनस्तत आरभ्य[4] अष्टादशदिनादर्वाग्रजस्वला भवति चेत् तदा स्नानमेवाचरेत् । न तु त्रिरात्राशौचं कुर्यात् । अष्टादशदिनादूर्ध्वं रजोदर्शने त्रिरात्राशौचं कर्तव्यम् ॥ ५३ ॥

रजस्वलाप्रसङ्गेन शुद्धिस्थानां चाण्डालादीनां व्यवधाने देशपरिमाणमाह—

युगं युगद्वयं चैव त्रियुगं च चतुर्युगम् ।
चाण्डाल-सूतिकोदक्या-पतितानामधः क्रमात् ॥ ५४ ॥

इति । अधःक्रमाद्विपरीतक्रमादित्यर्थः । ततश्चैवं योजनीयम् । पतितस्य व्यवधानमेकेन युगेन । उदक्याया युगद्वयेन । सूतिकाया युगत्रयेण । चाण्डालस्य युगचतुष्टयेनेति । युग[5]-परिमाणं लोकव्यवहारादवगन्तव्यम्* ॥ ५४ ॥

* युगपरिमाणमुक्तं मार्कण्डेयपुराणे —
'द्वे वितस्ती तथा हस्तो ब्राह्मतीर्थादिवेष्टनम् ।
चतुर्हस्तं धनुर्दण्डो नाडिका युगमेव च' ॥
(मा. पु. ४९. ३९)

---

१. G. substitutes किंचित् for काञ्चित् while B and D रजस्वलाविषयकविशेषमाह for रजस्वलाविषये काञ्चिद्विशेषमाह २ E G. and M. read आषोडशदिनात् for अष्टादशदिनात् ३. B and D substitute उशना मनुरब्रवीत् for उशना मुनिरब्रवीत्. ४ G. and H. read षोडशदिनात् for अष्टादशदिनात् and E and H रज स्नाता for रजस्वला while I. omits चेत्. ५ G. reads युगादीनां परिमाणं for युगपरिमाणं.

उक्तव्यवधानाऽभावे शुद्धिमाह[1]—

ततः सन्निधिमात्रेण सचैलं स्नानमाचरेत् ।
स्नात्वाऽवलोकयेत् सूर्यमज्ञानात् स्पृशते यदि ॥५५॥

इति । मात्रशब्देन स्पर्शो व्यावर्त्यते । स्पर्शाभावे स्नानमेव । स्पर्शेऽपि अकामकृते स्नानं सूर्यावलोकनं च । कामकृते द्वैगुण्यं शुद्ध्यन्तरं वा द्रष्टव्यम् । सङ्कटादिषु सत्यपि सन्निधौ स्पर्शाभावे स्नानाभावः । यथासम्भवव्यवधानस्य संवर्तेनाभ्युपगतत्वात्[2]—

'संकटे विषमे चैव दुर्गे चैव विशेषतः ।
हट्ट-पट्टनमार्गे च सम्भवं तु यथा भवेत्' ॥
(सं. स्मृ. १८९)

इति ॥ ५५ ॥

अथ तडागादौ पशुवत् मुखेन जलपानं निषेधति—

विद्यमानेषु हस्तेषु[3] ब्राह्मणो ज्ञानदुर्बलः[4] ।
तोयं पिबति वक्त्रेण श्वयोनौ[5] जायते ध्रुवम् ॥५६॥

इति । 'स्नानानि पञ्च पुण्यानि' (प. स्मृ. ० ०)—इत्यारभ्य

---

इति तथा च मेदिन्याम्—
'युगो रथ-हलाद्यङ्गे न द्वयोस्तु कृतादिषु ।
युग्मे हस्तचतुष्केऽपि वृद्धिमानौषधेऽपि च' ॥
( गान्तवर्गे १७ )
इत्यादिभिः हस्तचतुष्टयं युगमिति सिद्ध्यति ।

---

१ E reads -भावेऽशुद्धिमाह for -भावे शुद्धिमाह and H -भावेऽप्यशुद्धिमाह. २. G. reads अभ्यनुज्ञातत्वात् for अभ्युपगतत्वात् ३ I. reads पात्रेषु for हस्तेषु. ४. G. reads -दुर्लभ for दुर्बल. ५ C. and F read अयोनौ for श्वयोनौ

'अयोनौ जायते ध्रुवम्'—इत्येतदन्तेन ग्रन्थसन्दर्भेण यो ऽयमाचारशेषः प्रतिपादितः तस्य सर्वस्य प्रपञ्चः पूर्वकाण्डे प्रायेण कृत इति नात्र पुनः[१] प्रपञ्च्यते। न चैवं सति पुनरुक्तिः शङ्कनीया। मूलवचनेषु तत्र[२] सङ्गृहीतार्थस्यात्र विवृतत्वात् ॥५६॥

अथ प्रायश्चित्तकाण्डशेषः।

तत्र केनचिन्निमित्तेन शपथमुल्लङ्घितवतः प्रायश्चित्तमाह—

यस्तु क्रुद्धः पुमान् ब्रूयाज्जायायास्तु[३] अगम्यताम्।
पुनरिच्छति चेदेनां[४] विप्रमध्ये तु श्रावयेत् ॥ ५७ ॥
श्रान्तः[५] क्रुद्धस्तमोन्धो वा क्षुत्पिपासा-भयार्दितः।
दानं पुण्यमकृत्वा तु[६] प्रायश्चित्तं दिनत्रयम् ॥ ५८ ॥
उपस्पृशेत्[७]त्रिषवणं महानद्युपसङ्गमे[८]।
चीर्णान्ते[९] चैव गां दद्याद्ब्राह्मणान् भोजयेद्दश ॥५९॥

इति। यः[१०] केनचिन्निमित्तेन क्रुद्धः सन् स्वभार्याया अगम्यतां प्रतिजानीयात्—'अतः परं त्वां न गमिष्यामि। त्वं मम माता भगिनीति'। पुनरपि कालान्तरे क्रोधोपशमे[११] सति एनां गन्तुं यदी-

---

१ B. and D omit नात्र पुन and I प्रपचित for प्रपञ्च्यते २ I. repeats तत्र. ३. B. C. D E G. and J substitute प्रेयात् for ब्रूयात्, while I. भार्याया मातृगम्यताम् for जायायास्तु अगम्यताम्. M reads this line as follows.—

यस्तु क्रुद्ध पुमान भार्यां प्रतिज्ञायाप्यगम्यताम्।.

B. and D substitute न गम्यताम् for अगम्यताम् ४ M reads तां गन्तुं for चेदेनां. ५. B. and D read शान्त, C and F. स तु and K and L आर्त्त. all for श्रान्तः, while M. reads तमोभ्रान्त्या for तमोऽधो वा ६ B C. D. E F. G H and J substitute वा for तु ७. J reads उपवास for उपस्पृशेत. ८ I and J. read महानद्योस्तु for महानद्युप- ९. J. reads चीर्णे चैव तु for चीर्णान्ते चैव. १० H. and J. insert क्रुद्ध after यः and then again after निमित्तेन. ११. G. reads क्रोधास्तमये for क्रोधोपशमे.

च्छति तदा पर्षदग्रे स्वकीयं पापं विनिवेदयेत्। 'अहं शपथ-प्रतिज्ञावेलायां ग्रामान्तरगमनेन गृहव्यापारेण वा श्रान्त आसम्। मदीये वचस्युल्लङ्घिते सति क्रुद्धोऽभूवम्। तस्या अपराधाभावेऽपि तमसा भ्रान्त्या अन्धः परामर्शरहितोऽभूवम्। क्षुधा-पिपासया राजादिभयेन वा पीडित आसम्। अत एवमादिदोषप्रयुक्तमिदमगम्यताप्रतिज्ञानम्। न तु विवेकपूर्वकम्। तस्मादस्य पापस्य प्रायश्चित्तमनुगृह्णन्तु भवन्त'—इति। यस्तु दानं करिष्यामीति शपथपूर्वं प्रतिज्ञाय तयैवाशया[1] समागताय ब्राह्मणाय किमपि न प्रयच्छति, तथा काशीयात्रादिकं सङ्कल्प्य यथाकथंचित्[2] किञ्चित् दूरं गत्वा पश्चाद् अश्रद्धां प्राप्तस्तत् पुण्यं न करोति तेष्वेतेषु[3] त्रिषु निमित्तेषु विप्रैर्निर्दिष्टमिदं प्रायश्चित्तमाचरितव्यम्। द्वयोर्महानद्योः सङ्गमे गत्वा त्रिषवणस्नानपूर्वकं त्रिरात्रोपवासं कुर्यात्। चतुर्थदिने गां दद्यात् दश ब्राह्मणांश्च भोजयेत्॥ एतेष्वाद्य[4]निमित्तेषु वर्णभेदेन प्रायश्चित्तमाह यमः—

'स्वभार्यां तु यदा क्रोधादगम्येति च यो[5] वदेत्।
प्राजापत्यं चरेद्विप्रः क्षत्रियो दिवसान् नव॥
षड्रात्रं तु चरेद्वैश्यस्त्रिरात्रं शूद्र आचरेत्'।
(य. स्मृ. ६. १३)

इति। 'एतस्य[6] कार्यस्याऽकरणे चतुर्षु वर्णेषु अन्यतमं हतवा-

---

१ G. and J. read तथैवाश्रमसमागताय for तयैवाशया समागताय, while B. C. D E and F read तथैवा- for तयैवा-. २ G and J. omit -कथंचित्. ३. I. omits एतेषु and B and D निमित्तेषु. ४. B and D. read एतेष्वद्यनिमित्तेषु, J. एतेष्वनिमित्तेषु and G एतेष्वेव निमित्तेषु for एतेष्वाद्यनिमित्तेषु, but these are incorrect. ५. I reads अगम्येति नरो for अगम्येति च यो. ६. J. substitutes अस्य for एतस्य.

नस्मि'—इति शपथं कृत्वा येस्तत् कार्यं न करोति तस्य प्राय-श्चित्तं यम एवं आह—

'विप्रस्य वधसंयुक्तं कृत्वा तु शपथं नृपः ।
ब्रह्महा यावकान्नेन व्रतं चान्द्रायणं चरेत् ॥
क्षत्रियस्य पराकं तु प्राजापत्यं चरेद् द्विजः ।
वृषलस्य त्रिरात्रं तु व्रतं शूद्रहणश्चरेत् ॥
केचिदाहुरपापं तु वृषलस्य वधं मृषा ।
नैतन्मम मतं यस्मात्तद्धस्तेन भवत्यसौ'* ॥
(य. स्मृ. ६. १६–१८)

इति । मनुरप्यनृतप्रायश्चित्तमाह—

'वाग्दैवतैस्तु चरुभिर्यजेरंस्ते सरस्वतीम्† ।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् ॥

*यः शपथं कृत्वा तत् कार्यं न करोति स ब्रह्महा भवति । एवमेव क्षत्र-वैश्य-शूद्रवधशपथं कृत्वा तत् कार्यं न कुर्वीत चेत् तत्तद्वर्णहन्ता भवति इति योजयेत् । शूद्रवधशपथो न दोषावह इति केचिदाहुः तन्न । यमस्य सम्मतम् । यतस्तेन शपथेन सपुरुषः इतरवत् 'तद्धः' तं शूद्रं हन्तीति तद्धः भवति । शूद्रहत्यायाः प्रायश्चित्तमस्त्येव ततश्चैवमुक्तं भवति—वर्ण-त्रयेण शूद्रहत्याशपथकरणे शूद्रेण च स्ववर्णस्येतरस्य वा हत्याशपथकरणे दोषोस्त्येवेति यमस्य मतम् ।

† यत्र साक्षिणोऽनृतं वदन्ति तत्र ते वाग्दैवतैश्चरुभिः सरस्वतीं यजे-रन् । अनवस्त्रावितान्नरूपपक्वौदने चरुशब्दः प्रसिद्धः । बहुवचननि-र्देशादत्र कपिञ्जलन्यायेन चरुत्रयं वेदितव्यम् । कूष्माण्डा नाम मन्त्रा

१. Except A. and I all omit य.. २. Except A. and I. all others do not insert एव ३. B D. and I. read तथा for चरेद् ४. B. and D. read शूद्रश्चरेदिह for शूद्रहणश्चरेत ५. G and I read तस्मात् for यस्मात् while I कृत and others हत for तद्ध . ६. All, except C F G. and I others read प्राग्दैवतै for वाग्दैवतै ७. Except A. and the text all others read तत्र for तस्य.

कूष्माण्डैर्वापि जुहुयाद्घृतमग्नौ[1] यथाविधि।
उदित्यृचा वा[2] वारुण्या तृचेनाप्दैवतेन च[3]' ॥
( म. स्मृ. ८. १०५–१०६ )

इति। प्रजापतिः[4]—

'अनृती सोमपः[5] कुर्यात्त्रिरात्रं परमं तपः।
पूर्णाहुतिं[6] वा जुहुयात् सप्तवत्या घृतेन तु[7]' ॥

इति। प्रतिश्रुत्यानृतोक्तौ हारीत आह—

'प्रतिश्रुत्यानृतं ब्रूयान्मिथ्या सत्यमथापि वा[8]।
स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणं व्रतम्' ॥

इति। ब्रह्मचारिविषये गर्ग आह—

'त्रिरात्रमेकरात्रं वा अनृतोक्तौ व्रतं चरेत्[9]।
मासं भुक्त्वा ब्रह्मचारी पुनःसंस्कारमाचरेत् ॥

---

यजुर्वेदे प्रसिद्धाः। 'यद्देवा देवहेडनं' (मा. सं. २०. १४) इत्येवमादय। उदित्यृचा 'उदुत्तमं वरुण पाशम्'—इत्यनया ऋचा वरुणदेवताकया। अप्दैवतेन 'आप्यायस्व' इति तृचेन सूक्तेन। राघवानन्दस्तु 'तदित्यृचा' इति पाठमाश्रित्य–'तदित्यृचा गायत्र्या। तदादिकेत्युक्तत्वात् उदुत्तमं वरुण पाशमित्येतया वारुण्या' इति व्याचख्यौ।

---

१ H. reads व्रतमस्मिन् for घृतमग्नौ. २ B D. H. and I substitute च for वा and all others except A. and the text read वारुण्यबऋचेन for वारुण्या तृचेन. ३. The text substitutes वा for च ४. B. and D do not insert प्रजापति ५. B and D read अनृतोक्तौ तु समय, C and F. अनृते सोम and G H and I अनृतोक्तौ सोमप all for अनृती सोमप ६ I. reads पूर्णाहुतीर् for पूर्णाहुतिं. ७. All, except A and I others read सप्त तेन घृतेन तु for सप्तवत्या घृतेन तु ८ B D and G. substitute च for वा. ९. B and D. read ब्रह्मचार्यनृते चरेत्, E F G H and I. ब्रह्मचार्यनृतं चरेत् and C. F. प्रत्याचार्यानृतं चरेत् all for अनृतोक्तौ व्रत चरेत्

अभ्यासे चैन्देवं[1] प्रोक्तं नैष्ठिको द्विगुणं चरेत्[2] ।
वनस्थस्त्रिगुणं कुर्याद्यतिः कुर्याच्चतुर्गुणम् ॥
मांसाशनेऽनृतोक्तौ च शवनिर्हरणे तथा' ॥

इति । क्वचित्तु[3] निमित्तविशेषे अनृतमपि बुद्धिपूर्वं वक्तव्यम् । तदाह याज्ञवल्क्यः—

'वर्णिनां हि[4] वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः' ॥
( या. स्मृ. २. ८३ )

इति । सत्याभिभाषणे[5] गुरुतरपापस्य वर्णिवधस्य निमित्तता प्रसज्ज्येत । तत् पापं मा भूदिति स्वल्पपापमनृतमपि[6] वक्तव्यम्* । तस्य शुद्ध्ये सारस्वतश्चरुर्निर्वाप्यः । वर्णिवधवदात्मवधप्राप्तावपि अनृतं वदेत् । तदाह व्याघ्रः[7]—

'यत्रोक्तावात्मनः[8] पीडा नितान्तं तु[9] भवेद्यदि ।
तत्र वक्तव्यमनृतं व्याघ्रस्य वचनं यथा' ॥

इति ॥ ५७–५८–५९ ॥

---

* अन्यान्यपि निमित्तान्याह शुक्राचार्यः—
'स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे ।
गो-ब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम्' ॥
( भा. पु. ८·१९·४३ )
इति । न जुगुप्सितं न दोषावहमित्यर्थः ।

---

१. Except A. B. and D. all others read चैन्दव चैव for चैन्दव प्रोक्त. २. B and D. read नैष्ठिके द्विगुणं भवेत् ३ G. and H do not insert तु ४. Except A. B and D. all others substitute तु for हि. ५ B D. read सत्यपि भाषणे. ६. Except A. B. and D. all others omit अपि ७. I. reads ब्राह्म for व्याघ्र, but it seems to be a mistake. ८ B. and D. substitute अत्र for तत्र ९. We follow here A. B. and D, while all others read भवतीति चेत् for तु भवेद्यदि.

दुर्ब्राह्मणगृहभोजने प्रायश्चित्तमाह—

दुराचारस्य विप्रस्य निषिद्धाचरणस्य च[1] ।
अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम् ॥ ६० ॥

इति । दुराचारत्वं विहिताननुष्ठानम् । यो विप्रो विहितं नानुतिष्ठति निषिद्धं त्वा[2]चरति तस्य गृहे भुक्त्वा दिनमेकमुपवसेत् ॥ ६० ॥

तदशक्तौ प्रायश्चित्तान्तरमाह—

सदाचारस्य विप्रस्य तथा वेदान्तवेदिनः ।
भुक्त्वान्नं मुच्यते पापादहोरा[3]त्रान्तरान्नरः ॥ ६१ ॥

इति । एकस्मिन् दिने सकृदसकृद्वा दुर्ब्राह्मणगृहे भोजनेन यत् कृतं पापं तस्य सदा[4]चारविप्रस्य वेदान्तिगृहे वा भोजनेन शुद्धिः । य[5]द्वा एकस्मिन् दिने सम्प्राप्तं यत् पिपीलिकावधादिक्षुद्रपा[6]पजातं तत्सर्वं वि[7]शिष्टान्नभोजनेन विशुद्ध्यति । पवित्रगृहान्नभोजनेन पापविशुद्धिं बौधायनोऽप्याह—

---

१. C. and F substitute वा for च. २ All others except A. and I. substitute तु for च. ३ K and L read अहोरात्रांतरान्तर. and M. reads अहोरात्रं तु वै नर. ४. All others except A G. and I. do not insert सदाचारविप्रस्य वेदान्तिगृहे and omit वा, while G. omits the whole portion, as—

एकस्मिन् दिने सकृदसकृद्वा दुर्ब्राह्मणगृहे भोजनेन यत् कृतं
पापं तस्य सदाचारविप्रस्य वेदान्तिगृहे वा भोजनेन शुद्धि ।.

५. B D. and G. omit यद्वा, while B. D. substitute तत् पिपीलिका- for यत् पिपीलिका-. ६ G inserts -महा- between -क्षुद्र- and -पाप-. ७. I reads शिष्टान्नभोजनेन शुद्धयति.

'भैक्ष्याहारोऽग्निहोत्रिभ्यो मासेनैकेन शुद्ध्यति ।
*यायावर-वनस्थेभ्यो दशभिः पञ्चभिर्दिनैः ॥
एकाहधनिनोऽन्नेन दिनेनैकेन शुद्ध्यति ।
कपोतव्रतनिष्ठस्य पीत्वाऽऽपः शुद्ध्यते त्रिभिः' ॥
(बौ. स्मृ. ४. ५. २७–२८)

इति ॥ ६१ ॥

मरणकालोपहतेः प्रायश्चित्तमाह—

ऊर्ध्वोच्छिष्टमधोच्छिष्टमन्तरिक्षमृतौ तथा ।
कृच्छ्रत्रयं प्रकुर्वीत अशौचमरणे तथा ॥ ६२ ॥

इति । मरणकाले वान्त्यादिकमूर्ध्वोच्छिष्टं मूत्रादिकमधोच्छिष्टम् । तयोरन्यतरद्यदा सम्पद्यते तदा संस्कर्ता पुत्रादिर्धनादिना प्रत्याम्नायेन प्राजापत्यत्रयं कुर्यात् । मंचकादौ मरणमन्तरिक्षमृतिः । रजस्वला-सूतिकामरणमशौचमरणम् । तस्मिन् द्विविधेऽपि मरणे कृच्छ्रत्रयं कुर्यात् ॥ ६२ ॥

प्राजापत्यकृच्छ्रस्य चतुरः प्रत्याम्नायानाह—

* ये प्रत्यहं धान्ययाच्ञा कृत्वा पञ्चयज्ञादिविहितानुष्ठानपूर्वकं गृहस्थधर्मानाचरन्ति ते यायावराः एकाहनिर्वाहपर्याप्तं धनं यस्य स एकाहधनी तस्य । कपोतव्रतं कपोतवृत्तिः । सा च (भा. पु. ९.१८.२९ टीकायां) श्रीधरस्वामी ।

१. B. and D. read एकाहात् for एकाह-; while A. C. E F G and I एकाह धनिन for एकाहधनिन २ The text reads वृत्ति-for -व्रत - ३ I. reads शुद्ध्यति for शुद्ध्यते, while except A. and the text others read द्विजः for त्रिभि. ४ K and L read अन्तरोच्छिष्टम् for अधोच्छिष्टम् ५. Except A. all others omit अपि ६. B and D. omit-कृच्छ्रस्य and read प्राजापत्यस्य.

कृच्छ्रं[1] देव्ययुतं चैव प्राणायामशत[2]द्वयम्।
पुण्यतीर्थेऽनार्द्रशिरःस्नानं द्वादशसङ्ख्यया॥ ६३॥
द्वियोजने[3] तीर्थयात्रा कृच्छ्रमेकं[4] प्रकल्पितम्।

इति। देवी गायत्री। तस्या अयुतसङ्ख्याको जपो देव्ययुतम्। स एकः प्रत्याम्नायः। प्राणायामानां शतद्वयं द्वितीयः प्रत्याम्नायः। अनार्द्रं शिरो यस्याः सावनार्द्र[5]शिरास्तस्य स्नानमनार्द्रशिरःस्नानम्। सकृत् स्नात्वा तदङ्गानुष्ठानं च विधाय केशान् शोषयित्वा ततो द्वितीयं स्नानमाचरेत्। एवंविधं स्नानद्वादशकं पुण्यतीर्थे कृतं तृतीयः प्रत्याम्नायः। पुण्यतीर्थमुद्दिश्य योजनद्वयगमनं चतुर्थः। त[6]थोदकवासादयोऽपि प्रत्याम्नाया अवगन्तव्याः। तदु[7]क्तं चतुर्विंशतिमते—

'कृच्छ्रोऽयुतं च गायत्र्या उदवासस्तथैव च।
धेनुप्रदानं विप्राय सममेतच्चतुष्टयम्॥
तिलहोमसहस्रं तु वेदस्याध्यायमेव[8] च।
विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च॥
अन्यानि वा पवित्राणि[9] समान्याहुर्मनीषिणः'।

इति॥ ६३॥

अथ रेतस्खलनप्रायश्चित्तमाह—

---

१ F K and L read कृच्छ्रो for कृच्छ्र २ M. reads -शतत्रयम्. ३ I. reads द्वियोजने for द्वियोजनं. ४ M reads एव for एक ५ B. and D. omit तस्य and read अनार्द्रशिर स्नानम् for अनार्द्रशिरास्तस्य स्नानम् ६. H reads तत for तथा ७ G reads यदुक्त ८. I reads वेदाध्ययनमेव for वेदस्याध्यायमेव ९ B. D. G and J. read अन्या वा पावनी काचित्., H. अन्यानि वा पावनानि for अन्यानि वा पवित्राणि.

गृहस्थः कामतः कुर्याद्रेतसःस्खलनं[1] भुवि ॥६४॥
सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह ।

इति । अकामकृते याज्ञवल्क्य आह—

'यन्मेद्य रेत इत्याभ्यां स्कन्नं रेतोऽभिमन्त्रयेत् ।
स्तनान्तरे भ्रुवोर्मध्ये[2] तेनानामिकया स्पृशेत्' ॥
(या. स्मृ. ३. २७८)

इति ।

'यन्मेद्य रेतः'
(तै. आ १. ३०. १)

इत्येकस्या ऋचः प्रतीकमिदम् ।

'पुनर्मामैत्विन्द्रियम्'[3]
(तै. आ. १. ३०. १)

इत्युपरितनो मन्त्रस्ताभ्यां मन्त्राभ्यामनामिकया रेत आदाय स्तनयोर्भ्रुवोर्वा मध्यमुपस्पृशेत् । यतीनां[4] वनवासिनां च प्रयत्नोत्सर्गे कण्वोक्तं द्रष्टव्यम्—

'यत्नोत्सर्गं गृही कृत्वा वारुणीभिरुपस्पृशेत्* ।
वानप्रस्थो यतिश्चैव चरेच्चान्द्रायणव्रतम्'[5] ॥

* 'वारुणीभिः' वरुणदैवत्याभिः 'इमं मे वरुण'—इत्यादिभिः ऋग्भिः उपस्पृशेत् ।

१ M reads सेचनं for स्खलन २ B D and E. read स्तनान्तर भ्रुवोर्मध्य, H and the text स्तनान्तर भ्रुवोर्मध्य, G and J स्तानान्तरे भ्रुवोर्मध्ये all for स्तनान्तरे भ्रुवोर्मध्ये ३ H. reads पुनर्मामैत्वशुद्धमिति for पुनर्मामैत्वि-न्द्रियमिति ४ G omits the following portion —

यतीनां वनवासिनां च प्रयत्नोत्सर्गे कण्वोक्त द्रष्टव्यम्—
'यत्नोत्सर्गं गृही कृत्वा वारुणीभिरुपस्पृशेत् ।
वानप्रस्थो यतिश्चैव चरेच्चान्द्रायणव्रतम्' ॥
इति । स्वप्ने तु काश्यप आह—
'सूर्यस्य त्रिर्नमस्कारं स्वप्ने सिक्त्वा गृही चरेत् ।.

५ H. and I. read -त्रयम् for -व्रतम्.

इति। स्वप्ने तु काश्यप आह—

'सूर्यस्य त्रिर्नमस्कारं स्वप्ने सिक्त्वा गृही चरेत्।
वानप्रस्थो यतिश्चैव त्रिः कुर्यादघमर्षणम्'॥

(का. स्मृ. ६. ११)

इति। ब्रह्मचारिणम्प्रति मनुराह—

'स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वाऽर्कमर्चयित्वा [२]त्रिः पुनर्मामित्यृचं जपेत्'* ॥

(म. स्मृ. २, १८१)

इति। भयादौ प्रजापतिराह—

'भये रोगे तथा स्वप्ने सिक्त्वा शुक्रमकामतः।
आदित्यमर्चयित्वा तु पुनर्मामित्यृचं जपेत्'॥

(प्र. स्मृ. ३. १९)

इति। नैष्ठिकस्य हारीत आह—

'उपकुर्वाणस्तु यत् कुर्यात्कामतोऽकामतोऽपि वा।
तदेव द्विगुणं कुर्याद्ब्रह्मचारी च नैष्ठिकः'॥

इति॥ ६४॥

अथ ब्रह्मवधस्य महापातकस्य प्रायश्चित्तमाह—

* पुनर्मामिति ऋक् उपरितनयाज्ञवल्क्यवचनव्याख्याने निर्दिष्टा

१. C. F. read कश्यप· for काश्यप. २. I. and F. substitute तु for त्रि.; while G omits the following portion —

'स्नात्वाऽर्कमर्चयित्वा त्रि पुनर्मामित्यृच जपेत्'।

इति। भयादौ प्रजापतिराह—

'भये रोगे तथा स्वप्ने सिक्त्वा शुक्रमकामत.।.

चतुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके ॥ ६५ ॥
समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत् ।

इति । ऋग्वेदादयश्चतस्रो वेदाश्चतुर्विद्याः । ताभिरुपपन्न-स्तदध्ययनानुष्ठानवान् । एतेन

'चातुर्वैद्यो विकल्पी च'

(अ. स्मृ. ३. १९)

इत्यादिराङ्गिरसा प्रोक्ता सर्वा परिषदुपलक्ष्यते । समुद्रे दाशरथिना बद्धः सेतुः समुद्रसेतुः । तद्यात्रां ब्राह्मणघातके पुरुषे यथाविध्यनुष्ठेयत्वेन निर्दिशेत् ॥ ६५ ॥

विधिवदित्युक्तम् । कोऽसौ विधिरित्याकाङ्क्षया तदिति-कर्तव्यतामाह—

सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत् ॥ ६६ ॥
वर्जयित्वा विकर्मस्थान् छत्रोपानद्विवर्जितः ।

इति । चतुर्णां वर्णानां यानि कर्माणि शास्त्रविहितानि तेभ्यो विरुद्धानि विकर्माणि तेषु तात्पर्येण तिष्ठन्तीति विकर्मस्थाः । तान् वर्जयित्वा यथाशास्त्रं वर्तमानाच्चातुर्वर्ण्यात् सेतुबन्धमार्गे भिक्षां चरेत् । छत्रोपानद्विवर्जित इति न केवलं भिक्षावेलायाम् । किन्तु मार्गगमनेऽपि द्रष्टव्यम् ॥ ६६ ॥

---

१. I. reads चतुर्विद्योपपन्ने तु २. K. and L. read विप्रघातके for ब्रह्मघातके ३ I. and J read ऋगादयः चतस्रो. ४. I. reads चातुर्विद्योपपन्नेन द्वाभ्यां च for चातुर्विद्यो विकल्पी च. ५ C F and G. omit समुद्रसेतु. and C. and F also omit तद्यात्रां · ६ B D and H. read चातुर्वर्ण्ये for चातुर्वर्ण्यात्. ७. Except E and I. others insert विकर्मस्थांश्च, while G. reads विकर्मस्थ for the same. ८ I. omits मार्ग-, while G substitutes इति for अपि.

भिक्षमाणेन वक्तव्यमुक्तिप्रकारमाह–

अहं दुष्कृतकर्मा वै महापातककारकः ॥ ६७ ॥
[१]गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ।

इति । पापप्रख्यापनस्य प्रायश्चित्ताङ्गत्वात् प्रतिभिक्षागृहं अहं दुष्कृतकर्मेत्यादिवाक्येन स्वपापं प्रख्यापयेत् । अप्रख्यापने बाधमाहाङ्गिराः–

'कृत्वा पापं न गूहेत गूह्यमानं विवर्धते' ।

(अं. स्मृ. १.४७)

इति । दुष्कृतकर्मा, महापातककारको, ब्रह्मघातक इति पदत्रयस्य महा[२]सामान्या-ऽवान्तरसामान्य-तद्विशेषवाचित्वादपुनरुक्तिः ॥ ६७ ॥

अध्वश्रान्तस्यावस्थातुं देशविशेषमाह–

गोकुलेषु वसे[३]च्चैवं ग्रामेषु* नगरेषु वा ॥ ६८ ॥
[४]तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु वा[५] ।

इति । बहूनां गवां ग्रामे स्थापयितुमशक्यत्वेनारण्ये स्थापनाय कल्पितो व्रजप्रदेशो गोकुलम् । यत्र व्याघ्रादिभयात् ग्रा[६]माद्बहिर्निवासो[७]ऽशक्यः । तत्र ग्रामे नगरे वा प्रविश्य गोशाला-

* कतिपयजननिवासो ग्रामः । चातुर्वर्ण्यानेकजननिवासो नगरम् । मुन्यादिनिवासस्तपोवनं नैमिषादिकम् ।

१. B. and D read the following line as follows:—

गृहद्वारेषु भिक्षामि तिष्ठामि ब्रह्मघातक ।.

२. C. and F read अवान्तर सामान्याभ्या तद्विशेषवाचित्वात् ३. K. and L. read वापि for च्चैव. ४. M reads तथा वनेषु for तपोवनेषु ५ Except C. and F all others substitute च for both वा. ६. J. omits मामात् ७. B. D. and G. read ऽशक्त for ऽशक्य also substitute तदा for तत्र.

देवायतनादौ पुण्यप्रदेशे निवसेत् । असति तु व्याघ्रादिभ्यो भये तपोवनादिषु निवसेत् । नदी-प्रस्रवणेभ्योऽन्यानि तीर्थानि पम्पासरोवरादीनि ॥ ६८ ॥

न केवलं भिक्षागृहेष्वेव पापप्रख्यापनम् । किन्तु निवासस्थानेष्वपीत्याह—

एतेषु ख्यापयन्नेनः[2] पुण्यं गत्वा तु सागरम् ॥ ६९ ॥
दशयोजनविस्तीर्णं शतयोजनमायतम् ।
रामचन्द्रसमादिष्टनलसञ्चयसञ्चितम् ॥ ७० ॥
सेतुं* दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ।

इति । यथोक्तप्रकारेण पापप्रख्यापनपुरःसरं यात्रां कृत्वा सेतौ दृष्टे सति तत्पापक्षयः ॥ ६९–७० ॥

सेतुदर्शनानन्तरकर्तव्यमाह—

सेतुं दृष्ट्वा विशुद्धात्मा त्ववगाहेत सागरम् ॥ ७१ ॥

---

* 'दशयोजनविस्तीर्णं शतयोजनमायतम्'—इति सेतोर्विशेषणद्वयम् । स च सेतुर्दशयोजनविस्तीर्णः शतयोजनमायतः दीर्घः । यथा श्रीमद्रामायणे—

'दशयोजनविस्तीर्णं शतयोजनमायतम् ।
ददृशुर्देव-गन्धर्वा नलसेतुं सुदुष्करम्' ॥
(वा. रा. ६. २२. ७२)

इति । रामचन्द्रेण समादिष्टेन नलनाम्ना वानरेण योऽयं काष्ठ-पाषाणादिसञ्चयः कृतः तेन सञ्चितं बद्धम् ।

---

१. I. omits तु २ B and D read तेषु प्रख्याप्य यत्नेन, J एतेषु ख्यापयन्नेव, K. and L. एतेषु ख्यापयन्नेक. all for एतेषु ख्यापयन्नेन . ३. B. D. G. H. I. J. and M. read -समादिष्ट for -समादिष्ट- ४ Except H all others read सेतोर्दर्शने for सेतौ दृष्टे ५ B. D. G. and I read सेतुदर्शनानंतरं for सेतुदर्शनानतर-. ६ K. L. and M. do not insert this line.

इति । स्पष्टोऽर्थः ॥ ७१ ॥

सेतुं द्रष्टुमशक्नुवतो भूपतेः पक्षान्तरमाह–

यजेत वाश्वमेधेन राजा तु पृथिवीपतिः ।

इति । अश्वमेधे[2]ऽप्यऽशक्तस्य तदुपासनं वेदितव्यम् । तथा च तैत्तिरीयब्राह्मणे* श्रूयते–

'सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरन् सर्वं पाप्मानं तरति तरति ब्रह्महत्यां यो ऽश्वमेधेन यजते य उ चैनमेवं वेद' ।

(तै. सं. ५. ३. १२. १. २)

इति । तदुपासनं च–

'उषा वा अश्वस्य' ।

(तै. सं. ७. ६. २५. १)

* अत्र सर्वेष्वप्यादर्शपुस्तकेषु 'तैत्तिरीयब्राह्मणे' इत्येव वर्तते, तथापि 'सर्वं वे'त्याद्यग्रिमं वाक्यं तैत्तिरीयसंहितायामेव वर्तते न ब्राह्मणे । तदर्थं

१. Except I. all others omit स्पष्टोऽर्थ. २. E has in the margin —

'अनुपातकिनस्त्वेते महापातकिनो यथा ।
अश्वमेधेन शुद्ध्यन्ति तीर्थानुसरणेन वा' ॥

इति । तत्र अश्वमेध सार्वभौमविषय· ।

'राजा सार्वभौमोऽश्वमेधेन यजेत' ॥

इति श्रुते ।

We are unable to find out whether the above portion can be found in this book or others. ३ The quoted portion does not occur in Taittirîya Brâhmana, but is found in Taittirîya Samhitâ and the next sentence also in the Samhitâ and not in Taittirîya Brâhmaṇa.

इत्यादौ वाजसनेयिब्राह्मणे तैत्तिरीयब्राह्मणे* च प्रपञ्चितम् ॥७१॥

सेतुयात्रां समाप्य पुनः प्रत्यागतस्य कर्तव्यमाह—

पुनः प्रत्यागतो वेश्मवासार्थमुपसर्पति ॥ ७२ ॥
सपुत्रः सह भृत्यैश्च[1] कुर्याद्ब्राह्मणभोजनम् ।
गाश्चैवैकशतं दद्याच्चतुर्विद्येषु[2] दक्षिणाम् ॥ ७३ ॥
ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते ।

इति । ब्राह्मणानां प्रसादो नाम-विपापो विशुद्धस्त्वमसीत्येवमाद्युक्तिः । इदं च व्रतं गुणविहीनस्य ब्राह्मणस्य[3] वधे द्रष्टव्यम् । अस्मिन्नेव विषये व्रतान्तरमाह याज्ञवल्क्यः—

'पात्रे धनं[4] वा पर्याप्तं दत्वा शुद्धिमवाप्नुयात्' ॥
( या. स्मृ. ३. २५० )

इति । विद्या-तपोयुक्ते पात्रे गो-भू-हिरण्यादिकं जीवनोपायपर्याप्तं दद्यात् । वा शब्देन सर्वस्वं सपरिच्छेदं वा गृहं दद्यात् । तदाह मनुः

लेखकप्रमादो वा माधवाचार्यस्यैव नाम विस्मृतिर्वेति न ज्ञायतेत्यलं महतां प्रमादोद्घाटनेन ।

* 'उषा वा' इत्येतद्वाक्यं न तैत्तिरीयब्राह्मणे दृश्यते । अपि तु तैत्तिरीयसंहितायामेव वर्तते 'तैत्तिरीयब्राह्मणे' इति तु प्रामादिकमेवेति प्रतिभाति ।

१. C. and F read सहपुत्र सह भृत्यैश्च, J सहपुत्र सभृत्यैश्च and K. L. सपुत्रः सहभृत्यश्च all for सपुत्र सह भृत्यैश्च २. B. D and H. read चातुर्वैद्येषु and E. I. चातुर्वैद्येषु for चातुर्विद्येषु. ३ B D. and I omit ब्राह्मणस्य ४ C. and F read घृत for धन

'सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत्* ।
धनं वा जीवनायाऽलं गृहं वा सपरिच्छदम्' ॥
(म. स्मृ. ११. ७६)

इति । अपुत्रस्य सर्वस्वदानं पुत्रवतः सपरिच्छदं गृहदानमिति व्यवस्था ॥ ७२–७३ ॥

अथान्यमुनिप्रणीतानां व्रतविशेषाणां व्यवस्थां वर्णयामः। तत्र याज्ञवल्क्यः—

'शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्' ॥
(या. स्मृ. ३. २४३.)

इति । स्वव्यापादितब्राह्मणशिरःकपाल-ध्वजवान्—

'कृत्वा शवशिरोध्वजम्' ।
(म. स्मृ. ११. ७२)

इति मनुस्मरणाच्च ।

'ब्राह्मणो ब्राह्मणं घातयित्वा तस्यैव शिरःकपालमादाय तीर्थान्यनुसंचरेत्' ।
(शा. स्मृ. ९. २६)

---

* अत्रायमर्थवादः 'धनं वा जीवनायालम्—इति । यावता धनेन दत्तेन प्रतिग्रहीतुर्जीवनं पर्याप्तं भवति तावता धनेन तस्मै जीवितं दत्तं भवति एतदेव साम्यम् ।

---

१. The text reads स वेदविदुषे for वा वेदविदे. २. H. reads जीवनायालम्-गृह for जीवनायाल. ३. Except A, all others omit पुत्रवत. ४. H. reads -कपालो for -कपाली.

इति शातातपस्मरणाच्च । एतदुभयं पाणिनैव ग्राह्यम्–

'खट्वाङ्ग-कपालपाणिः' ।

( गौ. स्मृ. २२. ४ )

इति गौतमस्मरणात् । खट्वाङ्गशब्देन दण्डारोपितशिरः-कपालात्मको ध्वजो गृह्यते । भिक्षार्थं त्वन्यदेव मृत्कपालं ग्राह्यम् ।

'*मृण्मयकपालपाणिर्भिक्षार्थे ग्रामं प्रविशेत्' ।

( गौ. स्मृ. २२. ६ )

इति गौतमस्मरणात् । तथा शङ्खोऽपि–

'ब्रह्महा परिषदानुमतः खट्वाङ्गी गर्दभाजिनी मृण्मयपात्रपतितशिष्टान्नभोजी स्वकर्म विख्यापयन् चरेद्भैक्ष्यमेककालाहारः । शून्यागार-नदी-

---

* अस्मद्दृष्टगौतमस्मृतिपुस्तकेषु नेदं सूत्रं कुत्राप्युपलभ्यते । नापि व्याख्याकृता हरदत्तेन विवृतम् । भिक्षार्थं मृण्मयपात्रं ग्राह्यमित्यपि न तस्य सम्मतमिति प्रतिभाति । यतस्तेन 'खट्वाङ्ग' इत्येतत्सूत्रव्याख्यायां— 'खट्वाङ्गं दक्षिणे पाणौ । कपालं सव्ये भिक्षार्थं पानीयपानार्थं भोजनार्थं च । तथा चापस्तम्बः—

'पुरुषशिरः प्रतिपानार्थमादाय खट्वाङ्गं दण्डार्थे' ।

( आ. ध. सू. १. १०. २७. २१ )

इत्युक्तम् ।

१. B. D. G. omit this:—

एतदुभयं पाणिनैव ग्राह्यम् ।

'खट्वाङ्ग-कपालपाणि.' ।

इति गौतमस्मरणात् ।

२. I. J. does not insert -कपाल-. ३. B. D. and G. omit मृण्-. ४ I. reads -भिक्षान्न- for -शिष्टान्न-.

पर्वत-वृक्षमूल-गुहानिकेतनः स एवं द्वादशे वर्षे शुद्धिमाप्नोति' ।

( शं. स्मृ. १६. ९ )

इति । वनादिवासिना तेन भवितव्यम् । यथाह मनुः—

'ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ।(७२)
कृतवापनो वा निवसेद् ग्रामान्ते गोव्रजेऽपि वा ।
आश्रमे वृक्षमूले वा सर्वभूतहिते रतः'* ॥ (७८)

(म. स्मृ. ११. ७२–७८)

इति । 'कृतवापनो वा' इति वाशब्देन जटाधारणेन सह विकल्पोऽवगम्यते[†] । अत एव संवर्तः—

'ब्रह्महा द्वादशाब्दानि वालवासा[‡] जटी ध्वजी'।

( सं. स्मृ. १०९ )

इति । लोहितमृण्मयखण्डशरावेण भिक्षा ग्राह्या । तथा-चापस्तम्बः—

* तृण-पर्णादिकृतो निकेतो वर्षातप-शीतत्राणादिहेतु गृहं कुटी । द्वादशाब्दिकव्रतस्यैव 'कृतवापन' इत्यादिर्विशेषः। गोविन्दराजस्तु 'समाप्ते द्वादशे वर्षे' (म. स्मृ. ११. ८१) इत्यभिधानात् द्वादशवार्षिकस्याय गुणविधिरिति मन्यते ।

† नाय विकल्पो मेधातिथ्यादिसम्मतः ।

‡ लोमवद्वसन इत्यर्थः ।

१ G substitutes स कतनं for स एव, while I omits स　२ G. reads तथा च for यथाह　३ The text substitutes -समा for -अब्दानि　४ The text omits वा　५. E. and H substitute आसने for आश्रमे.　६. The text substitutes गो-ब्राह्मणहिते रतः for सर्वभूतहिते रत　७ The text reads ब्रह्मघ्नस्तु वनं गच्छेत् वल्कवासा for ब्रह्महा द्वादशाब्दानि वालवासा.

'लोहितकेन मृण्मयखण्डशरावेण भिक्षायै ग्रामं प्रविशेत्'।
(आ. ध. सू. १ ९. २४. १४)

इति। अत्र मृष्टं लभ्यत–इति सङ्कल्पमकृत्वा भैक्ष्यमाचरेत्। तदाह वसिष्ठः–

'सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्ष्यमेककालाहारः'।
(व. स्मृ. २१. ९)

इति। इदं च भैक्ष्यमशक्तविषयम्। तथा च संवर्तः–

'ब्रह्मघ्नस्तु वनं गच्छेद्वनवासी जटी ध्वजी।
वन्यान्येव फलान्यश्नन् सर्वकामविवर्जितः॥
भिक्षार्थी विचरेद् ग्रामं वन्यैर्यदि न जीवति।
चातुर्वर्ण्यं चरेद्भैक्ष्यं खट्वाङ्गी संयतः पुनः॥
भैक्ष्यं चैव समादाय वनं गच्छेत्ततः पुनः।
वनवासी ह्यपः स्पृश्येत् सदाकालमतन्द्रितः॥
ख्यापयन्नात्मनः पापं ब्रह्मघ्नः पापकृत्तमः।
अनेन तु विधानेन द्वादशाब्दं व्रतं चरेत्'॥
(सं. स्मृ. १०९–११२)

---

१ The text reads as follows:—

खण्डेन लोहितकेन शरावेण ग्रामे प्रतिष्ठेत।

२ G. substitutes यत्र for अत्र. ३ E. reads मिष्टं for मृष्टं. ४. B and D. omit चरेद् ५. The text reads वल्कवासा, B. C. D. F. and J वालवासा and H. वनवासो all for वनवासी. ६. The text reads च चरेद् for विचरेद्. ७ G. reads सयुत for सयत and J. खट्वांगीलयित for खट्वाङ्गी सयत. ८ B and D. ह्यप स्पृश्य, C. and F ह्युपस्पृष्ट्वा and E. G. and H. ह्यप. स्पृश्यात् all for ह्यप स्पृश्येत्; while the text स पापश्च for the same ९. H. reads पापकृत्तर for पापकृत्तमः and the text reads this line as follows —

ख्यापयन्नेन तत पापं ब्रह्मघ्न पापकृत्तर।

इति । नियमान्तराण्याह[1] यमः—

‘अथ वै ब्रह्महत्यायां खट्वाङ्गी मितभोजनी[2] ।
मृण्मयेन कपालेन स्वकर्म श्रावयंस्तथा[3] ॥
ब्राह्मणावसथान् सर्वान्[4] देवागाराणि वर्जयेत् ।
शोचन् विनिन्दन्नात्मानं संस्मरन् ब्राह्मणं च तम्* ॥
चरेद् व्रतं यथोद्दिष्टं देव-ब्राह्मणपूजकः[5] ।
एवं दृढव्रतो नित्यं सत्यवादी जितेन्द्रियः ॥
सप्तागाराण्यपूर्वाणि यान्यसङ्कल्पितानि च ।
सञ्चरेत्तानि शनकैर्विधूमे भुक्तिवर्जिते ॥
ब्रह्मघ्ने[6] देहि मे भिक्षामिनो विख्याप्य[7] सञ्चरेत् ।
एककालं चरेद्भैक्ष्यमलब्ध्वोपवसेद्दिनम् ॥
एवं सञ्चरमाणस्तु ब्रह्महत्यां ब्रुवन् सदा ।
पूर्णे तु द्वादशे वर्षे ब्रह्महत्यां[8] व्यपोहति’ ॥
(य. स्मृ. ६. २१–२६)

इति । ब्रह्मचर्यादिनियममाह[9] गौतमः—

‘खट्वाङ्ग[10]-कपालपाणिर्वा द्वादशसंवत्सरान् ब्रह्म-
चारी भिक्षार्थे ग्रामं प्रविशेत् कर्माचक्षाणः

---

* यस्तेन हतः तं ब्राह्मणं संस्मरन् । ‘ब्रह्मघ्ने देहि मे भिक्षाम्’— इति एनः पापं विख्याप्य भिक्षेत् ।

१. C. and F read विषयान्तराणि for नियमान्तराणि. २ G. and I read मितभोजन for मितभोजनी ३ B. D. I read ख्यापयन् for श्रावयन् ४ B. D read देवागाराणि च विवर्जयेत् for सर्वान् देवागाराणि वर्जयेत् ५ B and D. substitute -पूजन for -पूजक. ६ We follow here A. and I; while all others read भ्रूणघ्ने. ७. B. D. E. and I. substitute अभिख्याप्य for विख्याप्य. ८ A. B. C D. and F read ब्रह्महत्या for ब्रह्महत्यां. ९ G. H read भैक्ष्य- for ब्रह्म- and B. and D -चर्यव्रतानि for -चर्यादिनियमम्. १० I. reads खड्गाङ्गी for खट्वाङ्ग ; while except A. and the text all others omit वा.

( ४ ) यथोपक्रामेत् सन्दर्शनादार्यस्य ।
( ५ ) स्थानासनाभ्यां विहरन् सवनेषूदको-
पस्पर्शी शुद्ध्येत् । ( ६ )

( गौ. स्मृ. २२. ४–६ )

इति । काश्यपोऽपि—

'पवित्रपाणिर्दण्डी च पङ्कदन्तो रजस्वलः ।
तीर्थावासी कुशाच्छादी जटिलो ब्रह्महा भवेत्' ॥

(का. स्मृ. ३. १४)

इति । इयं विशुद्धिरकामकृतब्राह्मणवधविषया । तथा च मनुरेतद्द्वादशवार्षिकमुपक्रम्य बहूनि व्रतान्यभिधायान्ते निगमयति—

'इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' ॥

( म. स्मृ. ११. ८९ )

इति । आवृत्तब्रह्मवधे चतुर्थात्प्राग्व्रतमभ्यावर्तनीयम् । तदाहतुर्मनु-देवलौ—

'विधेः प्राथमिकादस्माद् द्वितीये द्विगुणं चरेत् ।
तृतीये त्रिगुणं चैव चतुर्थे नास्ति निष्कृतिः' ॥

१. G reads यथोक्तक्रमात and H. यथोपक्रमेत् both for यथोपक्रामेत्. २ Except A. H. I. and the text all others read उदकस्पर्शी for उदकोपस्पर्शी ३. A. and J substitute कण्वोऽपि for काश्यपोऽपि. ४ C and F read पङ्कदिग्धो and I. पक्षदन्तो for पङ्कदन्तो. ५ B D. read तीर्थवासी कुशच्छेदी for तीर्थावासी कुशाच्छादी and all others except A. and J. read तीर्थवासी for तीर्थावासी.

इति[1]

'यत् स्या[2]दनभिसन्धाय पापं कर्म[3] सकृत्कृतम्।
तस्येयं निष्कृतिर्दृष्टा[4] धर्मविद्भिर्मनीषिभिः' ॥

इति। तदेतद्[5]बलेन सकृदनुष्ठानस्य सकृत्कृतपापविषयत्वाभिधानात्।

'प्रतिनिमित्तं नैमित्तिकमावर्तनीयम्'।

इति न्यायाच्चावृत्तौ द्वैगुण्यादिसिद्धिः। यस्तु न साक्षाद्ब्राह्मणं हन्ति किंतु तिरस्कारादिद्वारात्तन्निमित्ततामापद्यते तम्प्रति सुमन्तुराह—

'तिरस्कृतो यदा विप्रो ह[6]त्वात्मानं मृतो यदि।
निर्गुणः सहसा क्रोधाद्गृह-क्षेत्रादिकारणात् ॥
त्रैवार्षिकं व्रतं कुर्यात् प्रतिलोम सरस्वतीम्।
गच्छेद्वापि विशुद्ध्यर्थं तत्पापस्येति निश्चितम्'* ॥

* यो गुणहीनो विप्र. स्वकीयैः परकीयैर्वा तिरस्कृतः सन् आत्मानं व्यापादयेत्। इदं च तिरस्करणं सनिमित्तम्। सहसा क्रोधात् वा गृह-क्षेत्रादिनाशेनापहारेण वा दुःखितः सन् यो म्रियेत तस्य विशुद्ध्यर्थं तिरस्कारादिकर्त्रा मरणनिमित्तभूतेन तत्पुत्रादिना वा त्रैवार्षिकं व्रतं वा सागरसङ्गमारभ्योगमपर्यंतं सरस्वतीतीरसेवनं कर्तव्यम्। इदं च निर्गुणविप्रमरणविषये निमित्तभूतस्य गुणवत एव। गुणवति मृते त्वधिकम्।

१ I. does not insert इति २ C. F. and G. substitute यस्मात् for यत् स्याद्. ३ B and D read पापहर्ता सकृत् for पापं कर्म सकृत् ४ G. reads दृष्टा for दृष्टा ५ G. omits तदेतद् ६ C. and F. read क्रममाणो, E. and H. ऽक्षममाणो for हत्वात्मानं

इति। निर्निमित्तं[1] भर्त्सने स एव आह—

'अत्यर्थं निर्गुणो विप्रो ह्यत्यर्थं[2] निर्गुणोपरि।
क्रोधाद्वै म्रियते यस्तु[3] निर्निमित्तं तु भर्त्सितः[4] ॥
वत्सरत्रितयं कुर्यात्ततः[5] कृच्छ्रं विशुद्धये'* ॥

इति। यदा पुनर्निमित्ती[6] अत्यन्तगुणवान् आत्मघाती चात्यन्तनिर्गुणः तदैकवर्षमेव ब्रह्महत्याव्रतं कुर्यात्।

'केश-श्मश्रु-नखादीनामकृत्वा[7] वपनं वने।
ब्रह्मचर्यं चरन् विप्रो वर्षेणैकेन शुद्ध्यति'॥

इति तेनैवाभिधानात्। यथा हन्ता प्रायश्चित्ती यथा वा निमित्ती तथैवानुमन्त्रादयोऽपि[8] प्रायश्चित्तभाजः। तथा च पैठीनसिः—

'हन्ता[9] मन्त्रोपदेष्टा च तथा सम्प्रतिपादकः।
प्रोत्साहकः सहायश्च[10] तथा मार्गोपदेशकः ॥
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणः[11]।
उपेक्षकः[12] शक्तिमांश्चेद्दोषवक्ताऽनुमोदकः ॥

*निर्गुणविप्रमरणनिमित्तभूतस्य गुणवत प्रायश्चित्तमभिहितम्। इदानीमत्यन्तनिर्गुणमरणनिमित्तस्यात्यन्तनिर्गुणस्य प्रायश्चित्तमाह। 'अत्यर्थं निर्गुण' इति। सनिमित्तभर्त्सने तु न्यूनम्।

१. B. and D. read निमित्ततो मृते, C. and F. निर्निमित्तना मते, G निर्निमित्तं मृते and H. निर्निमित्ततो मृते all for निर्निमित्त भर्त्सने. २ J reads प्रत्यर्थं for ह्यत्यर्थं. ३. G. reads च for तु. ४ J reads गर्हित. ५ C. F. and I substitute नर for तत. ६. H reads यदा पुनर्नर निमित्ते for यदा पुनर्निमित्ती ७ I reads कृत्वा तु वपन for अकृत्वा वपनं ८ B D. G. H. read अनुमन्त्रादिरपि प्रायश्चित्तमाह पैठीनसि ९. B and D read कर्ता for हन्ता. १० B. and D. read सहाचार तथा चाग्नोपदेशक for सहायश्च तथा मार्गोपदेशक, while C. F. and I मार्गानुदेशक for मार्गोपदेशक. ११. I reads विकर्मिणाम १२ B. and D substitute उपदेशक for उपेक्षक and all others except A. and I. read शक्तिमांश्च for शक्तिमांश्चेत्

अकार्यकारिणस्तेषां प्रायश्चित्तं प्रकल्पयेत् ।
तथा[1] शक्त्यनुरूपं च दण्डं तेषां प्रकल्पयेत्'* ॥

इति । एतेषां मध्ये यो यो वधस्य प्रत्यासन्नस्तस्य तस्याधिकं प्रायश्चित्तम् । विप्रकृष्टस्य तदपेक्षया न्यूनं प्रायश्चित्तं प्रकल्पनीयम् । साक्षात्कर्तुरपि वयोविशेषे प्रायश्चित्तस्य ह्रासो भवति । तदाह यमः[2]—

'अशीतिर्यस्य वर्षाणि बालो वा ऽप्यूनषोडशः ।
प्रायश्चित्तार्धमर्हन्ति व्याधितश्च तथा स्त्रियः[3]' ॥
(य. स्मृ. ६. ४१)

इति । क्वचित् कर्तुः प्रतिनिधिमाह स एव—

'अपूर्णैकादशाब्दस्य[4] चतुर्वर्षाधिकस्य च ।
प्रायश्चित्तं चरेद्[5] भ्राता पिताऽन्यो वाऽथ बान्धवः' ॥
(य. स्मृ. ६. ३)

---

* दण्डस्तु राज्ञा कर्तव्यः । ननु प्रायश्चित्तकल्पनानन्तरं दण्डकल्पनं न युक्तम् । प्रायश्चित्तेनैव पापापनोदे दण्डस्य वैयर्थ्यं स्यात् । यदि पापनिवृत्तिर्न भवेत् तर्हि प्रायश्चित्तस्य वैयर्थ्यं स्यात् तस्मात्प्रायश्चित्तानन्तरं न युक्तो राजदण्ड—इति चेत्—न । प्रायश्चित्तेन पारलौकिकदोषनिवृत्तिर्भवति । ऐहिकदोषनिवृत्त्यर्थं राजदण्डस्यैव विहितत्वात् इति दिक् ।

---

१ All, except A. and J read यथा- for तथा २ A. substitutes मनु. for यम ३. B and D. read व्याधितस्य यथाश्रयम्; while A. स्त्रियो रोगिण एव च for व्याधितश्च तथा स्त्रिय. ४. B and D. read अपूर्णो द्वादशाब्दस्य for अपूर्णैकादशाब्दस्य. ५. B. D. and G read माता-ऽपिता वान्येऽस्य बान्धवाः; C. and F भ्राता पिता वाऽन्योन्यबान्धव and J. भ्राता-पिता वाऽन्येऽथ बान्धवाः all for भ्राता पितान्यो वा ऽथ बान्धवः.

इति[1]। यत्तु तेनैवोक्तम्—

'[*]अतो बालतरास्यास्य नापराधो न पातकम्।
राजदण्डो न तस्यास्ति प्रायश्चित्तं च नेष्यते'[2] ॥
(य. स्मृ. ६. ४)

इति तत् प्रायश्चित्ताल्पत्वाभिप्रायम्[3]। न पुनः सर्वात्मना तदभावप्रतिपादनपरम्।

'पादो बालेषु[4] दातव्यः सर्वपापेष्वयं विधिः'।
(वि. स्मृ. १. ४६)

इति विष्णुना बालस्य[5] पादाभिधानेन बालतरस्य ततोऽप्यल्पत्वावगमात्[6]। यद्वा माभूद्बालतरस्य[7] पापम्। वचनेन साक्षान्निवारणात्[8]। नह्यस्ति वचनस्यातिभारः। यत्तु[9] पुनर्मध्यमाङ्गिरोवचनम्—

'गवां सहस्रं विधिवत् पात्रेभ्यः प्रतिपादयेत्।
ब्रह्महा विप्रमुच्येत[10] सर्वपापेभ्य एव सः' ॥
(अं. स्मृ. २. ३६)

---

* अतो बालतरस्य चतुर्वर्षन्यूनस्य।

१. C. and F. add the following portion after इति तच्च —
'द्विगुण सवनस्थे तु ब्राह्मणे व्रतमादिशेत्', इत्येतद्वाक्याविहिताद्विगुणपरम्।
२ B. and D. read प्रायश्चित्तं न विद्यते, while G. reads प्रायश्चित्त न विद्यते for प्रायश्चित्त च नेष्यते C and F. read न वेष्यते for च नेष्यते. ३ I. reads -प्रायेण for -प्रायम् ४ B. and D read बालस्य for बालेषु, while E. and I. substitute सर्ववर्णेषु for सर्वपापेषु ५ H reads बालवर्णे for बालस्य. ६. B. D. G and H. substitute अल्पत्वमवगन्तव्यम् for अल्पत्वावगमात. ७ C and F. read बालस्य न पापम्. for मा भूद्बालतरस्य पापम् ८. B. and D. read विचारणात for निवारणात्. ९ B D. E. and I omit तु. १०. I. reads ब्रह्महाऽपि प्रमुच्येत for ब्रह्महा विप्रमुच्येत and substitutes च for स.

इति—तच्च—

'द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत्' ।

( या. स्मृ. ३. २५२ )

इत्येतद्वाक्यविहितद्विगुणव्रताचरणाशक्तस्य वेदितव्यम् । प्रायश्चित्तस्यातिगुरुत्वात् । यदपि शङ्खवचनम्—

'प्रमाप्य द्वादश संवत्सरान् षट् त्रीन्[१] सार्धं संवत्सरं च व्रतान्यादिशेत् । तेषामन्ते गोसहस्रं[२] तस्यार्धमर्धं च दद्यात् । सर्वेषां वर्णानामानुपूर्व्येण[३]' ।

इति तदाचार्यादिहननविषयम् । तथा च दक्षः—

'सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
आचार्ये शतसाहस्रं सोदर्ये दत्तमक्षयम् ।। ( २६ )
सम-द्विगुण-साहस्रमानन्त्यं च यथाक्रमम्[४] ।
दाने फलविशेषःस्यात् हिंसायां तद्वदेव हि' ।।(२५)

( द. स्मृ. ३. २५–२६ )

इति । यत्पुनरापस्तम्बेनोक्तम्[५]—

'विप्रहारण्ये[६] कुटीं कृत्वा वाग्यतः शवशिरोध्वजः शाणीपक्ष आत्मन्युपरि जान्वाऽऽच्छादयेत्' ।

( आ. ध. सू. १. ९. २४. ११ )

---

१. C. and F omit त्रीन् and I quite mistaken here. २ B and D. read दशसहस्र तदर्धं तस्यार्धमर्द्धं च, C. F. शतसहस्र तस्यार्धमर्द्धं च, G अयुतसहस्र तस्यार्द्धमर्द्धं च and G. शतसहस्र तदर्द्धं तस्यार्धमर्द्धं च all for गोसहस्र तस्यार्द्धमर्धं च. ३. J. adds च after आनुपूर्व्येण. ४. I. reads क्रमात्. ५. From यत्पुनरापस्तम्बेनोक्तम् to तस्मादस्मदुक्तैव व्यवस्था ज्यायसी इति; the including portion between these two sentences is not found in all other manuscripts except A. and H. We doubt not whether the portion belongs to the author. F. also includes this portion, but there is a note in the margin अयं ग्रन्थ पूर्वाङ्कपृष्ठान्त्यपंक्तिस्थो बोद्धव्य. and the folio 140, page 2. ६. The text reads this Sûtra अरण्ये कुटिं कृत्वा वाग्यत· शवशिरध्वजोर्धशाणीपक्षमधोनाभ्युपरि जान्वाच्छाद्य·

इत्युपक्रम्य

हत्वा श्रोत्रियं वा एतदेव व्रत-
मोत्तमादुच्छ्वासाच्चरेत्[1] । ( २४ ) नो-[2]
स्मिँल्लोके प्रत्यापत्तिर्विद्यते' । (२५)
( आ. ध. सू. १. ९. २४-२५ )

इति तन्माता पित्राचार्यादिविषयम् । तथा च भविष्य-त्पुराणे—

'मातरं पितरं हत्वा सोदर्यं भ्रातरं तथा ।
गुरुं हत्वा श्रोत्रियं च . . . . . . . .' ॥

इत्युपक्रम्य अस्यैव प्रायश्चित्तस्य विधानात् । शाणीपक्षः शाणसूत्रमयवस्त्रैकदेशः । आ उत्तमादुच्छ्वासात् आ मरणात् । प्रत्यापत्तिः व्यवहारः । अत्राशक्तस्य शङ्ख आह—

'प्रमाप्य द्वादशसंवत्सरान् षट् त्रीन् सार्धं
संवत्सरं च व्रतान्यादिशेत् । तेषामन्ते
गोसहस्रं तदर्धं तस्यार्धमर्धं च दद्यात् ।
सर्वेषां वर्णानामानुपूर्व्येण' ।

इति ।

'एतदेव व्रतमोत्तमादुच्छ्वासाच्चरेत्' ।

इति अत्रासमर्थो द्वादशवार्षिकव्रतचर्यानन्तरं गोसहस्रदानं कुर्यात् । तत्राप्यशक्तस्य षड्वार्षिकव्रतचर्यानन्तरं अर्धं गवां[3] सहस्रम् । तत्राप्यशक्तस्य त्रिवार्षिकव्रतचर्यानन्तरं[4] सार्धश-

१. The text reads this . . कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत. २. The text adds अस्य after न. ३. E. reads तदर्धं गोसहस्रार्द्धदानं for अर्धं गवां सहस्रम् and H. reads अर्धं गवां for अर्धं गवां सहस्रम्. ४ E reads त्र्यब्दव्रतानन्तर तस्यार्धं पञ्चशतार्द्धं दानं for त्रिवार्षिकव्रतचर्यानन्तरं सार्धशतद्वय गवाम् ।.

तद्वयं गवाम्। तत्राप्यशक्तस्य सार्धसंवत्सरव्रतचर्या। अनन्तरं पञ्चविंशत्युत्तरशतमिति सर्ववर्णानां शक्त्यनुसारेण आनुपूर्व्येण क्रमेण द्वादशवार्षिकादिगोसहस्रादीनां समुच्चयो भवति। एतच्च पूर्वोक्तविषय एव कल्पनीयम्। प्रायश्चित्तस्यातिगुरुत्वात्।

ननु—द्वादशवार्षिकादिव्रतचतुष्टयं गोसहस्रादिदानचतुष्टयसहितमभिधाय—

'सर्वेषां वर्णानामानुपूर्व्येण'।

इत्यभिधानात् ब्राह्मणादिवर्णचतुष्टयस्य क्रमेण व्रतचतुष्टयविधानं किमिति न स्यात्? । मैवम्।

'पर्षद् या ब्राह्मणानां तु सा राज्ञां द्विगुणा भवेत्।
वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम्'॥
(अं. स्मृ. ३. १६)

इति। तथा—

'शूद्रो वा ब्राह्मणं हत्वा प्रायश्चित्तचतुष्टयम्'।

इति यथाक्रमं अङ्गिरो-भविष्यत्पुराणवचनाभ्यां ब्राह्मणापेक्षया इतरवर्णानामधिकप्रायश्चित्तविधानात्। तस्मादस्मदुक्तैव व्यवस्था ज्यायसी इति।

ननु—एवं वचनान्तरं साक्षित्वेनोदाहृत्य यत्र विशेषव्यवस्थोच्यते तत्र साऽस्तु। यत्र त्वन्तरेणैव वचनान्तरं व्यवस्थोच्यते तत्र स्वकपोलकल्पिता कथं श्रद्धेया?— इति चेत्। मैवम्। स्मृतिकारैरेव कल्पनीयत्वाभिधानात्। तथा च देवलः—

१ E. adds अर्धं गवां after व्रतचर्यानंतरम्  २. I. omits एव, while except A. B. D. and G all others read स्मृतिकारेणैव for स्मृतिकारैरेव.

'जाति-शक्ति-गुणापेक्षं सकृद्बुद्धिकृतं[1] तथा ।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत्' ॥

इति । यदिदं द्वादशवार्षिकं ब्रह्महत्याव्रतं तद् द्वादशे वर्षे[2] सम्पूर्णे वा समापनीयं अर्वाग्वा ब्राह्मणत्राणादिनिमित्तलाभे । तथा च शङ्खः—

'द्वादशे वर्षे शुद्धिमाप्नोति । अन्तरा वा ब्राह्मणं
मोचयित्वा । गवां द्वादशानां परित्राणात् ।
सद्य एवाश्वमेधावभृथस्नानाद्वा पूतो[3] भवति' ।

इति । एवं च सति यद् याज्ञवल्क्येनोक्तम्—

'ब्राह्मणस्य परित्राणाद् गवां द्वादशकस्य वा[4] ।
तथाऽश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात्[5] ॥
दीर्घ-तीव्रामयग्रस्तं ब्राह्मणं गामथापि वा ।
दृष्ट्वा[6] पथि निरातङ्कं कृत्वा वा[7] ब्रह्महा शुचिः ॥
आनीय विप्रसर्वस्वं हृतं, घातित एव वा ।
तन्निमित्तं क्षतः शस्त्रैर्जीवन्नपि न दुष्यति[8]'* ॥
(या. स्मृ. ३. २४४–२४६)

---

* यश्चौर-व्याघ्रादिभिर्व्यापाद्यमानं कमपि ब्राह्मणं आत्मप्राणान् अन्तरे कृत्वा त्रायति द्वादश गावो वा प्राणसङ्कटान्मोचयति सोऽसम्पूर्णेऽपि द्वादशवार्षिकप्रायश्चित्ते शुद्धो भवति । एवमेव परकीयस्याश्वमेधे अवभृ-

---

१. B and D. read वधकृत for बुद्धिकृतं २. G. and I. read द्वादशवर्षै for द्वादशे वर्षे, while B. and D. द्वादशवर्षै त्वदसपूर्णे वा for द्वादशे वर्षे सपूर्णे वा ३ Except A. all others read स द्यावा अश्व for सद्य एवाश्व-. ४. The text substitutes च for वा. ५. Except B D. and the text others read स्नानात शुद्धिमवाप्नुयात् for स्नानाद्वा शुद्धिमाप्नुयात्. ६ C and F. substitute दत्त्वा for दृष्ट्वा. ७. The text reads तु for वा. ८. The text reads विशुद्ध्यति for न दुष्यति.

इति न तद्व्रतान्तराभिप्रायम् । किंतु समाप्तिकथनाभिप्रायम् । व्रतान्तराणि तु[१] मनुराह—

'लक्ष्यं[२] शस्त्रभृतां वा स्याद्विदुषामिच्छयाऽऽत्मनः ।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥
यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा ।
अभिजिद्विश्वजिद्भ्यां वा त्रिवृताऽग्निष्टुताऽपि वा* ॥
जपन् वाऽन्यतमं वेदं[३] योजनानां† शतं व्रजेत्[४] ।
ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः[५] ॥
सर्वस्वं वा[६] वेदविदे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ॥

---

थाख्यकर्माङ्गभूतस्नानसमये स्वकल्मषं विख्याप्य स्नात्वा शुद्धो भवति । तथा बहुकालव्यापिना दुःसहेन कुष्ठादिरोगेण पीडितं ब्राह्मण गां वा पथि दृष्ट्वा निरुजं कुर्याच्चेत् ब्रह्महा शुद्धो भवति । अपहृतसर्वस्वतयावसीदतो विप्रस्य गो-भू-हिरण्यादिद्रव्यं सर्वं प्रत्यानीय यस्तस्य विप्रस्य रक्षणं करोति स विशुद्धो भवति । विप्रसर्वस्वप्रत्यानयनप्रयत्ने मृतः शस्त्रैः क्षतो जीवन्नपि वा शुद्ध्यत्येव ।

* त्रिवृता त्रिवृत्स्तोमेन । अग्निष्टुता अग्निष्टोमेन ।

† यं कमपि वेदं जपन् शतयोजनं गच्छेत् । योजनं षोडशसहस्रहस्तात्मकम् । यथोक्तम्—

'द्वादशाङ्गुलिकश्शङ्कुस्तद्द्वयं तु शयः स्मृतः ।
तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुःसहस्रिकः ॥
चतुष्कं योजनं तत्स्यादिति मानं व्यवस्थितम्' ।

१. Except A. all others omit तु २. J reads लक्ष्य for लक्ष्य. ३. G. reads देव for वेद. ४. G substitutes व्रजन् for व्रजेत्. ५ B and D. read मितभुक्जितेन्द्रियः for मितभुङ् नियतेंद्रियः. ६. A. reads वेदविदि and the text omits वा and reads वेदविदुषे.

हविष्यभुग्वाऽनुचरेत्[1] प्रतिस्रोतः[2] सरस्वतीम् ।
जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम्'* ॥
( म. स्मृ. ११. ७३–७७ )

इति । एते सर्वे पक्षाः कामकारा-ऽकामकारविद्वदविद्वद्विषयत्वेन व्यवस्थापनीयाः । कामकृतात्यन्ताभ्यासे तु याज्ञवल्क्य आह—

' लोमभ्यः स्वाहेत्येवं हि लोमप्रभृति वै तनुम् ।
मज्जान्तं[3] जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् ' ॥
( या. स्मृ. ३. २४७ )

---

इति । द्वात्रिंशत्सहस्रहस्तैरपि योजनं भवति । यथोक्तं लीलावत्याम् ।

'यवोदरैरंगुलमष्टसंख्यै-
र्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः ।
हस्तैश्चतुर्भिर्भवतीह दण्डः
क्रोशः सहस्रद्वितयेन तेषाम् ॥
स्याद्योजनं क्रोशचतुष्टयेन
तथा कराणां दशकेन वेशः' ॥

इति । देशभेदेनानयोर्व्यवस्था ज्ञेया ।

* यद्यपीमानि सर्वाण्यपि प्रायश्चित्तानि न वर्णविशेषाभिधानपुरस्सरमभिहितानि तथापि अन्यत्रोक्ता व्यवस्था अत्रानुसन्धेया । तद्यथा—शस्त्रभृतां लक्ष्यत्वं अग्निपतनं सर्वस्वदानं जीवनपर्याप्तधनदानं गृहदानं सरस्वत्यनुगमनं च सर्ववर्णसाधारणम् । अश्वमेधो राज्ञ एव । गोसवो ब्राह्मणस्यैव । अन्ये त्रैवर्णिकानाम् । तत्र गोसवाश्वमेधौ कलौ वर्ज्यौ वर्णभेदेन प्रायश्चित्तस्य द्विगुण-त्रिगुणादिको भेदस्त्वग्रे आचार्येणैवोक्तो ऽत्रानुसन्धेयः ।

---

१. The text reads ऽनुसरेत् for ऽनुचरेत्. २ B., D. and J. read प्रतिस्रोतां for प्रतिस्रोत. ३ The text reads मज्जान्तां for मज्जान्तं.

इति। तत्राष्टौ[1] मन्त्रानाह वसिष्ठः—

'लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वासये।[2]

इति प्रथमाम्।

त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वासये।

इति द्वितीयाम्।

लोहितं मृत्योर्जुहोमि लोहितेन मृत्युं वासये।

इति तृतीयाम्।

मांसं मृत्योर्जुहोमि मांसेन मृत्युं वासये।

इति चतुर्थीम्।

मेदो[3] मृत्योर्जुहोमि मेदसा मृत्युं वासये।

इति पञ्चमीम्।

स्नायुं[4] मृत्योर्जुहोमि स्नाय्वा मृत्युं वासये।

इति षष्ठीम्।

---

१ All others except A. and I. read तथा for तत्र, while C. and F. omit the following —

. . . . . . लोमप्रभृति वै तनुम्।
मज्जान्तं जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम्॥
इति। तत्राष्टौ मन्त्रानाह वसिष्ठ—
'लोमानि मृत्योर्जुहोमि . . . . ।

२. These Mantras are found in all manuscripts and the text, but they appear different from one another. I substitutes नाशय for वासये in all the Mantras and except A. G and the text all others read प्रथमम् for प्रथमाम् and so on in masculine instead of feminine, while G omits the following —

प्रथमाम्। त्वच मृत्योर्जुहोमि त्वचा मृत्यु वासये। इति द्वितीयाम्।
लोहित मृत्योर्जुहोमि लोहितेन मृत्यु वासये। इति

and substitutes आश्रयति for वासये इति in the first and the fourth Mantra. ३ The text interchanges this Mantra for the sixth. ४ The texts, two Bombay editions and one Benares edition with commentary reads स्नावाभि- and स्नावभि स्नायु for and स्नाय्वा.

अस्थीनि मृत्योर्जुहोमि अस्थिभिर्मृत्युं वासये ।
इति सप्तमीम् ।
मज्जानं[1] मृत्योर्जुहोमि मज्जाभिर्मृत्युं वासये ।
इति अष्टमीम्' ।
( व. स्मृ. २०. २६ )

इति । मरणान्तिकस्येदृशस्य[2] सर्वस्य व्रतस्य कामकार-विषयत्वं मध्यमाङ्गिरा आह—

'प्राणान्तिकं च यत् प्रोक्तं प्रायश्चित्तं मनीषिभिः।
तत्कामकारविषयं विज्ञेयं नात्र संशयः ॥
यः कामतो[3] महापापं नरः[4] कुर्यात् कथंचन ।
न तस्य शुद्धिर्निर्दिष्टा भृग्वग्निपतनादृते' ॥

इति । यत्तु सुमन्तुनोक्तम्—

'ब्रह्महा संवत्सरं कृच्छ्रं चरेत् । अधःशायी त्रिषवणस्नायी[5] कर्मावेदको भैक्ष्याहारो[6] दिव्यनदी-पुलिन-सङ्गमाऽऽश्रम-गोष्ठ-पर्वत[7]-प्रस्रवण-तपो-वनविहारी स्यात् स्थान-वीरासनी । संवत्सरे पूर्णे हिरण्यमणि-गो-धान्य-तिल-भूमि-सर्पींषि ब्राह्म-णेभ्यो ददन्[8] पूतो भवति' ।

---

१. I reads मज्जां for मज्जानं and मज्जया for मज्जाभि°; while all other except A and the text substitute मज्जा for मज्जाभि २ G and I. do not insert ईदृशस्य ३ G and J. read कामेन for कामत. ४. A. reads कुर्यात् विप्र for नर कुर्यात् ५ Except A. and I. all others read त्रिषवणी for त्रिषवणस्नायी, while B D and I. कर्मवेदक for .कर्मावेदक ६. B and D. read भिक्षाहारी for भैक्ष्याहारो ७ H. reads -सगमाश्रयो गोष्ठयपर्वत- for -सगमाश्रमगोष्ठ-पर्वत- ८. G. reads ब्राह्मणो दद्यात्, while I. substitutes दद्यात् for ददन्.

इति तदपहन्तुर्मूर्खस्य धनवतो जातिमात्रव्यापादने द्रष्टव्यम्। यत् पुनर्वसिष्ठवचनम्–

'द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत्'।

(व. स्मृ. २३. ३८)

इति तन्मनोवासितब्रह्महत्यस्य तदैवोपरतजिघांसस्य वेदितव्यम्। यत् पुनः षट्त्रिंशन्मतवचनम्–

'षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत्।
चान्द्रायणं प्रकुर्वीत पराकद्वयमेव च'॥

इति तदप्रत्यानेयपुंस्त्वस्य* सप्रत्ययवधे† द्रष्टव्यम्। अप्रत्ययवधे तु बृहस्पतिराह–

'अरुगायाः सरस्वत्याः सङ्गमे लोकविश्रुते।
शुद्ध्येत् त्रिषवणस्नायी त्रिरात्रोपोषितो द्विजः'॥

* अप्रत्यानेयं पुनरानयितुमशक्यं पुंस्त्वं यस्य। षण्ढस्तावच्चतुर्दशविधः पूर्वमाचारकाण्डे विवाहप्रकरणे उक्तः। तत्र केषाचित् कालान्तरे औषधादिना पुंस्त्वं प्रत्यानेतुं शक्यं भवतीति प्रसिद्धमेवायुर्वेदविदाम्।

† अत्र—

'प्रत्ययोऽधीन-शपथ-ज्ञान-विश्वासहेतुषु'।

(नामलिंगानुशासने ३. ३. १४७)

इति कोशात् प्रत्ययो ज्ञानम्। तच्च—

'जाग्रत्संस्कारसम्भूतः प्रत्ययो विषयान्वितः'।

(ग. पु १. १३६. १३)

इति गारुडात् संस्कारजन्यम्।

१. B and D omit the following.—
'यत्पुनर्वासिष्ठवचनम्'—
'द्वादशरात्रमब्भक्षो द्वादशरात्रमुपवसेत्'।
इति। तन्मनोवसितब्रह्महत्यस्य तदैवोपरतजिघांसस्य वेदितव्यम्'।,
while H substitutes वसिष्ठेनोक्तम् for the same. २ G. reads अम्बुभक्षो for अब्भक्षो ३. G. reads ब्रह्महत्याया for ब्रह्महत्यस्य ४ B. D and G. read षट्त्रिंशन्मते वचनम् for षट्त्रिंशन्मतवचनम् ५. I. reads प्रत्ययवधे for सप्रत्ययवधे

इति । एतानि द्वादशवार्षिकादिधनदानपर्यन्तानि ब्राह्मणस्यैव । क्षत्रियादेस्तु द्विगुणादिकम् । यदाहाङ्गिराः—

'पर्षद् या ब्राह्मणानां तु सा राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतम्' ॥

इति । प्रजापतिरपि—

'द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि च ।
क्षत्र-विट्-शूद्रजातीनां ब्राह्मणस्य वधे व्रतम्' ॥

इति । यत्तु[1] चतुर्विंशतिमतवचनम्[2]—

'प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः ।
पादोनं क्षत्रियः कुर्यादर्धं वैश्यः समाचरेत् ॥
शूद्रः समाचरेत् पादमशेषेष्वपि पाप्मसु' ।

इति तत् प्रातिलोम्यानुष्ठितचतुर्विधसाहसव्यतिरिक्तविषयम् । मूर्धावसिक्तादीनामपि दण्डवत् प्रायश्चित्तं समूहनीयम् । दण्डतारतम्यमाह याज्ञवल्क्यः—

' दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः' ।
(या. स्मृ. २. २०६)

इति । एवं च सति मूर्धावसिक्तस्य ब्राह्मणवधे ब्राह्मणादतिरिक्तं[3]* क्षत्रियादूनमध्यर्धद्वादशवार्षिकं[4] भवति । अन-

---

* अतिरिक्तं अधिकम् । ब्राह्मणस्य द्वादशवार्षिकं विहितं, क्षत्रियस्य तद् द्विगुणं चतुर्विंशतिवार्षिकं भवति । तत्र क्षत्रियादूनं ब्राह्मणादधिकं अष्टादशवार्षिक मूर्धावसिक्तस्य देयमित्यर्थ. ।

---

१. J omits यत्तु, while G and H. omit तु २. G and H. read चतुर्विंशतिमते वचनम for चतुर्विंशतिमतवचनम् ३. Except A and H all others do not insert ब्राह्मणादतिरिक्त ४. C. and F. read मध्यस्थे दशवार्षिकं, E अध्यर्धदशवार्षिकं, G अध्यर्धं द्वादशवार्षिकम् and J. अर्धं द्वादशवार्षिकम all for अध्यर्धद्वादशवार्षिकम.

थैव दिशा[1] प्रातिलोम्योत्पन्नानामपि प्रायश्चित्तमूहनीयम्। तथो-त्तमाश्रमिणामपि[2]* प्रायश्चित्ततारतम्यमङ्गिरसा दर्शितम्—

'गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि।
शौचवच्छोधनं कुर्युरर्वाक् ब्रह्मनिदर्शनात्[3]'।

इति। प्रक्रान्त[4]प्रायश्चित्तस्य मध्ये विपत्तावपि पापक्षयो भवति। तथा च हारीतः—

'प्रायश्चित्तेऽध्यवसिते[5] कर्त्ता यदि विपद्यते।
पूतस्तदहरेव स्यादिह लोके परत्र च'॥
(हा. स्मृ. ११. ९)

इति। व्यासोऽपि—

'धर्मार्थं† यतमानस्तु न[6] चेत् शक्नोति मानवः।
प्राप्तो भवति तत् पुण्यमत्र मे नास्ति संशयः'॥
(व्या. स्मृ. ३. ४१)

इति। वधोद्यमेऽपि वधप्रायश्चित्तं कर्तव्यम्। तदाह याज्ञवल्क्यः—

'चरेद्व्रतमहत्वाऽपि घातार्थं चेत् समागतः'‡॥
(या. स्मृ. ३. २५२)

* उत्तमाश्रमिणः आजन्मब्रह्मचारिणः वानप्रस्था यतयश्चेत्यर्थः।

† धर्मार्थं यतमानः पापक्षालनार्थं प्रायश्चित्तं कर्तुं प्रवृत्तः।

‡ अत्र घातार्थं चेत् समागतः इत्यनेन हननसाधनमुद्यम्य केवलमा-गमनमेव न विवक्षितम्। किंतु ब्राह्मणादिहनने कृतनिश्चयस्तद्व्यापाद-

१ I substitutes दृशा for दिशा. २ C. and F. read तथा श्रमिणाम् and I तथोक्ताश्रमिणाम् for तथोत्तमाश्रमिणाम् ३. B. and D. read -गतो ब्रह्म-निघातनात्, C. and F. अर्वाक् ब्रह्मणि दर्शनात् both for अर्वाग्ब्रह्मनिदर्शनात्. ४. G. and A. read प्रक्रान्तस्य प्रायश्चित्तस्य ५. I. reads व्यवसिते for ऽध्यवसिते ६ I reads मृतश्चेत् कोऽपि मानव for न चेच्छक्नोति मानवः.

इति । यथावर्णमित्यनुवर्तते । अत एव स्मृत्यन्तरम्—

'अहत्वाऽपि यथावर्णं ब्रह्महत्याव्रतं चरेत्'* ॥

(शा. स्मृ. १. २६)

इति ॥ ७२-७३ ॥

सवनस्थस्त्रीवधस्य महापातकत्वमभिप्रेत्य प्रायश्चित्तमाह—

सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत् ॥ ७४ ॥

इति । आहिताग्नेर्जाया पतिव्रता सवनस्था । अत एवा-ङ्गिराः—

'आहिताग्नेर्द्विजाग्र्यस्य[२] हत्वा पत्नीमनिन्दिताम् ।

ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च' ॥

(अं. स्मृ. ३. १९)

इति ॥ ७४ ॥

---

नार्थं सम्यगागत्य घातसाधनप्रहारे कृते कथंचित् प्रतिघातादिप्रबन्ध-वशादसौ न मृतस्तदा अहत्वा यथावर्णं ब्रह्महत्यादि व्रतं चरेत् इत्यर्थः ।

* ननु—ब्राह्मणादिहनने यत् प्रायश्चित्तमुक्तं तदेव तदभावेऽपि कथमुच्यते ? । उद्यमस्य क्रियानिवृतेश्च समानो दण्ड इत्येतदयोग्यमिति चेत् । न । हननाभावे पादोनमेव प्रायश्चित्तमिति ब्रूमः । अत एव—'औपदेशिकेभ्यो न्यूनत्वात् अतिदेशिकानां पादोनान्येव ब्रह्महत्यादिव्रतानि द्वादशवार्षिकादीनि भवन्ति'—इति विज्ञानेश्वरः ।

---

१ B. and D omit the following —

सवनस्थस्त्रीवधस्य महापातकत्वमभिप्रेत्य प्रायश्चित्तमाह—

सवनस्था स्त्रिय हत्वा ब्रह्महत्याव्रत चरेत् ॥ ७४ ॥

इति ।

२ I reads द्विजातस्य for द्विजाग्र्यस्य and B. C. D and F. substitute तथा for हत्वा, while B and D. exhibit आहिताग्नेर्जाया पतिव्रता अत एव अ-ङ्गिरा after the quoted verse and then read ब्रह्महत्याया. प्रायश्चित्त &c., and then again सवनस्थवधस्य &c.

[*विन्ध्यादुत्तरतो यस्य निवासः परिकीर्तितः
पराशरमतं तस्य सेतुबन्धस्य दर्शनम् ॥

अवध्यनिरूपणेऽतिपातः शास्त्रार्थः स्यादित्यत आह विन्ध्यादुत्तरत इति।

'यद्युत्तरे वसेत् पार्श्वे विन्ध्यस्य पुरुषोत्तम।
दक्षिणे वसतश्चेदं न भवेदिति तच्छृणु' ॥

इति भविष्यपुराणात् दक्षिणदेशस्थितस्य काशीयात्रेति ज्ञेयम्। अकामकृते इदं प्रायश्चित्तम। तत्रैव द्वादशाब्दिकस्योक्तत्वात्। प्रतियोजनं प्राजापत्यसम्भवेनास्य तत्समत्वाच्च। कामकृते तु मरणान्तिकमेव ॥ ७६ ॥]

ब्रह्महत्यायाः प्रायश्चित्तमभिधाय मद्यपानस्य प्रायश्चित्तमाह—

मद्यपश्च द्विजः कुर्यान्नदीं गत्वा समुद्रगाम्।
चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् ॥ ७५ ॥
अनडुत्सहितां गां च दद्याद्विप्रेषु दक्षिणाम्।

इति। पनसादिजन्यं मदकारणं द्रवद्रव्यं मद्यम्। तदाह पुलस्त्यः—

'पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्।
मधूत्थं सैरिमारिष्टं मैरेयं नारिकेलजम् ॥

---

* दृश्यतेऽय श्लोको एकस्मिन् ( L. ) पुस्तके नान्यत्र। माधवाचार्येन व्याख्यातः। अत एव प्रक्षिप्तोऽयमिति प्रतिभाति। तथापि पूर्वापरसम्बधमवलोक्यात्रावश्यकत्वप्रतीतिरस्माभिः धरणीधरव्याख्यासहितः संगृहीतः।

---

१. L. reads तप· for तत २. B. and D. read विप्राय for विप्रेषु.
३. Except B D. G. and I all others read क्षौद्र माधूक for द्राक्ष-माधूक.
४. I. reads सौरमाविष्ट, B. and D. सेरमादिष्ट, A. सौरमारिष्ट and H. सैरिमारिष्टं all for सैरमारिष्टं.

समानानि विजानीयान्मद्यान्येकादशैव तु'* ।
(पु. स्मृ. १. १२–१३)

इति । एकादशानामन्यतमस्य मद्यस्य पाने महानदी-तीरे चान्द्रायणं चरित्वा ब्राह्मणभोजनं कृत्वा दक्षिणां दद्यात् । तदेतत् कामकारविषयम् । अकामकारे तु बृहस्पतिराह—

'पीत्वा प्रमादतो मद्यमतिकृच्छ्रं चरेद् द्विजः ।
कारयेत्तस्य संस्कारं शक्त्या विप्रांस्तु भोजयेत्' ॥
(बृ. स्मृ. ४. २३)

इति । तदेतन्मद्यपानप्रायश्चित्तं ब्राह्मणस्यैव । न क्षत्रिय-वैश्ययोः । मद्यपानस्य ब्राह्मणम्प्रत्येव निषेधात् ।

'यक्ष-रक्षः-पिशाचान्नं मद्य-मांस-सुरासवम् ।
तद् ब्राह्मणेन नात्तव्यं देवानामश्नता हविः' ॥

इति स्मरणात् ।

---

* माधूकं 'मोहवा-मोहडा' इति भाषायां प्रसिद्धस्य वृक्षस्य पुष्पेभ्यो निर्मितम् । सैरो वनस्पतिविशेषः (?) । अरिष्टो निम्बः तद्भवम् । मिरायां देशविशेषे ओषधिविशेषे वा भवं मैरेयम् । एवमेकादश मद्यानि । केचित्तु—

'माध्वीकं टाङ्कमाध्वीकं मैरेयं नारिकेलजम्' ।

इति पठन्ति । तद् एकादशसंख्यापूर्त्यभावात चिन्त्यम् ।

---

१. C. and F. omit the following —

तदेतत् कामकारविषयम् । अकामकारे तु बृहस्पतिराह—

'पीत्वा प्रमादतो मद्यमतिकृच्छ्र चरेद् द्विज ।
कारयेत्तस्य संस्कारं शक्त्या विप्रांस्तु भोजयेत्' ॥

इति ।.

२ B and D. substitute च for तु. ३. Except A. and I. all others read ब्राह्मणेन न पातव्यं for तद् ब्राह्मणेन नात्तव्य

बृहद्विष्णुरपि—

'माधूकमैक्षवं सैरं तालं खार्जूर-पानसम् ।
मधूत्थं चैव माध्वीकं मैरेयं नारिकेलजम्' ॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु' ।

इति । राजन्य-वैश्ययोस्तु मद्यपानमनुजानाति बृहद्याज्ञवल्क्यः—

'कामादपि च राजन्यो वैश्यो वापि कथंचन ।
मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते' ॥

इति । व्यासोऽपि—

'उभौ मध्वासवक्षीबौ उभौ चन्दनचर्चितौ ।
एकपर्यङ्कशायितौ दृष्टौ मे केशवार्जुनौ'* ॥

(म. भा. उ. ५८. ५)

* धृतराष्ट्रसन्देशं पाण्डवेभ्यो निवेद्य प्रत्यागतस्य सञ्जयस्य धृतराष्ट्रम्प्रत्युक्तिरियम् । शिष्टाचारप्रदर्शनार्थमिदं वाक्यम् । विज्ञानेश्वरस्तु—'एक-पर्यङ्क-रथिनौ'—इति पठित्वा क्षत्रिय-वैश्ययोर्माध्वीपानानुज्ञानपरमिदमिति मन्यते ।

---

१ B and D omit अपि २ Except A G. and H. all others substitute सैर for सौर, while I. ताल खार्जूर for ताल खार्जूर- ३. I reads धूस्तुर for मधूत्थ, but it seems to be a mistake ४ I. substitutes निद्यानि for मद्यानि ५. C. and F read क्रमादपि for कामादपि. ६ G reads मद्यमेदसुरां C. and F मद्यमेव सुरा for मद्यमेव सुरा ७ B and D omit व्यासोऽपि ८. This verse appears in Mahâbhârata, except the text of the same and A and G. all others read मध्वासव पीत्वा for मध्वासवक्षीबौ, while the text reads चन्दनरूषितौ for चन्दनचर्चितौ and reads the second line as —

स्रग्विणौ वरवस्त्रौ तौ दिव्याभरणभूषितौ' ॥.

इति । *उपनयनात् पूर्वं मद्यपाने तत्प्रायश्चित्तं पित्रादिभिः कर्तव्यम् । तदाह जातूकर्ण्यः—

'अनुपेतस्तु यो बालो मद्यं मोहात् पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कुर्यात् माता भ्राता तथा पिता' ॥

इति ॥ ७५ ॥

मद्यपानस्य प्रायश्चित्तमुक्त्वा सुरापानस्य प्रायश्चित्तमाह—

सुरापानं सकृत् कृत्वा अग्निवर्णां सुरां पिबेत् ॥ ७६ ॥
स पावयेदथात्मानमिहलोके परत्र च ।

इति । पिष्टादिजन्यो द्रवद्रव्यविशेषः सुरा । तथा च मनुः—

'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः' ॥

( म. स्मृ. ११. ९४ )

इति । तत्र पैष्ट्यां सुराशब्दो मुख्यः । गौडी-माध्व्योर्गौणः । पुलस्त्येनैकादशसु मद्येषु गौडी-माध्व्यावनुक्रम्य—

* ब्राह्मणस्यैवेदम् । नान्येषां वर्णानाम्

---

१ C. F. E H and I do not insert तत् २ These two lines are omitted by M ३ I. reads पातयेत् for पावयेत्, while K and L. read तथा- for अथा-. ४ B. and D read this line as follows :—

'तथैवैका न पातव्या सुरा सर्वा द्विजोत्तमै' ॥

and I. reads —

'यथैवैका न पातव्या तथा सर्वा द्विजोत्तमै' ॥

and except A and the text all others read—

यथैवैका तथैवान्या for यथैवैका तथा सर्वा

५ I. reads एकादशममद्येषु for एकादशसु मद्येषु.

'सुरायाः सकृत्पाने गौडी-माध्व्योरमुख्यसुरयोरस-
कृत्पाने चाग्निसमानवर्णोत्पत्तिपर्यन्तं सन्तप्ताम-
त्युष्णां सुरां पीत्वा ब्राह्मणो म्रियेत'।
(पु. स्मृ. १. १४)

इत्यभिधानात्। तथा च बृहस्पतिः—

'सुरापाने कामकृते ज्वलन्ती चैव तां मुखे।
क्षिपेत्तया विनिर्दग्धो मृतः शुद्धिमवाप्नुवात्'॥
(बृ. स्मृ. ४. २९)

इति। गौडी-माध्व्योरभ्यासेन मत्या अमत्या वा पाने तया मरणं व्याघ्र आह—

'मत्या मद्यममत्या वा पुनः पीत्वा* द्विजोत्तमः।
ततोऽग्निवर्णां तां पीत्वा मृतः शुद्ध्येत् स किल्विषात्'॥

इति। कामकृते सकृत् पैष्टीपाने मूलवचनोक्तं मरणं द्रष्टव्यम्। अकामकृते तु याज्ञवल्क्य आह—

'बालवासा जटी वाऽपि ब्रह्महत्याव्रतं चरेत्।
पिण्याकं वा कणान् वाऽपि भक्षयेत्त्रिसमा निशि'॥
( या. स्मृ. ३. २५४. )

इति। एतच्च वर्षत्रयपिण्याकादिभक्षणं छर्दनाविषयम्।

---

* पुनः पीत्वा अभ्यासेन प्राशनं कृत्वेत्यर्थः। द्विजेषु ब्राह्मण-क्षत्रिय-वैश्येषु उत्तमः श्रेष्ठः ब्राह्मण इत्यर्थः।

---

१ I and J omit -सुरयो- २. Except A. and I all do not insert इत्यभिधानात्. ३ B. D. E. and I read अभ्यासे तया मरणं and C. F. G. and J अभ्यासेन तया मरणं both for अभ्यासेन मत्या अमत्या वा पाने तया मरणं ४. B and D read भक्षयेत्त्वन्वहं निशि, C and F भक्षयेत्तु समा निशि and E. G. H J. भक्षयेत्तु सकृन्निशि all for भक्षयेत्त्रिसमा निशि.

इति । तथा च वर्षत्रयव्रतं प्रकृत्य व्यास आह—

'एतदेव व्रतं कुर्यात् मद्यपः [1]छर्दने कृते ।
पञ्चगव्यं च तस्योक्तं प्रत्यहं कायशोधनम्' ॥
(व्या. स्मृ. २. ६१)

इति । यत्तु मनुनोक्तम्—

'कणान् वा भक्षयेदब्द पिण्याकं वा सकृन्निशि ।
[2]सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी* ' ॥
(म. स्मृ. ११.९२)

इति तन्नालुमात्रसंयोगे द्रष्टव्यम् । यदपि देवलेनोक्तम्-

[3]' सुरापाने ब्राह्मणो रूप्य-ताम्र-सीसानामन्यतम-
मग्निकल्पं पीत्वा शरीरपरित्यागान् पूतो भवति' ।

इति [4]यदपि मनुनोक्तम्—

* कणान् तण्डुलकणान् । पिण्याकं तिलकल्कम् । वालवासा गोलोमाजालोमादिकृतं वासः । केचित् 'चीरवासा' इत्यपि पठन्ति । तत्र चीर वस्त्रखण्डम् । ध्वजी सुराभाण्डध्वजं पुरस्कृत्य गच्छेत् तिष्ठेत वा इत्यर्थः । मेधातिथिस्त्विदं वचनं-' प्राणात्यये औषधार्थं ' सेवने शुद्धिकथनार्थमित्याह । सर्वज्ञनारायणः—'एतच्च कामत उपलभ्यमानमधु-सुरासंसृष्टजलपाने' इत्याह । कुल्लूकभट्ट·—'इदमबुद्धिपूर्वकममुख्यसुरापाने '—इति । राघवानन्दः—' अकामतः पैष्टीपाने कामतश्च गौडी-माध्व्योः पाने'—इति । नंदनस्तु—'अकामतः पाने' इदं प्रायश्चित्तमित्याह ।

१ G reads मद्यपस्य छर्दने for मद्यप छर्दने २. We follow here A. and L, while all others and the text read सुरापानाद्यनुत्त्यर्थं for सुरापानापनुत्त्यर्थं. ३. B. and D omit the following :—

'सुरापाने ब्राह्मणो रूप्य-ताम्र-सीसानामन्यतमम-
मिकल्पं पीत्वा शरीरपरित्यागात् पूतो भवति' ।

इति । यदपि मनुनोक्तम्—

४. G. reads यद्यपि for यदपि.

'गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा।
पयो* घृतं वाऽऽमरणात् गोशकृद्रसमेव च'* ॥
(म. स्मृ. ११.९१)

इति तदुभयं मूलवचनेन समानविषयम्। वेदविदग्रगत्य-ङ्गिरा आह—

'बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः।
समत्वं† ब्राह्मणैर्गच्छेदित्येषा वैदिकी श्रुतिः'॥

इति। सकृद्गौणसुरापाने अङ्गिरा आह—

'भूमिप्रदानं यः कुर्यात् सुरां पीत्वा द्विजोत्तमः।
पुनर्न च पिबेज्जातु संस्कृतः स विशुद्ध्यति'॥

इति। यत्तु सुमन्तुनोक्तम्—

'ब्राह्मणस्य सुरापस्य षण्मासाननुद्धृतसमुद्रोदक-स्नानम्। सावित्र्यष्टसहस्रं जुहुयात् प्रत्यहम्‡।
त्रिरात्रमुपवासः। तप्तकृच्छ्रेण पूतो भवति।
अश्वमेधावभृथस्नानेन च'।

* अत्र आमरणात् इत्युक्तेः अग्निवर्णमिति विशेषणं गोमूत्र-उदक-पयो-घृत-गोशकृद्रसानां पञ्चानां प्रत्येकं सम्बध्यते।

† बृहस्पतिसवो नाम यज्ञः। स च ब्राह्मणैरेव कर्तृत्वेन विहितः। 'ब्राह्मणैस्समत्वं गच्छेत्'—इत्यनेन जातिमात्रब्राह्मणो भवेदित्युक्तम्। न श्रोत्रियाद्युत्तमत्व उपलभेदीत्यर्थः।

‡ नात्र हवनीयद्रव्यमुक्तं तथापि—'द्रव्यानुक्तौ घृतम्'—इति नियमात् घृतेनाष्टसहस्रं जुहुयादित्यर्थः। तप्तकृच्छ्रः पूर्वमुक्तः।

१. G and the text read वा for च २. C F. E H. and I. read स्मृति. for श्रुति. ३. B. and D. read गौडसुरापाने for गौणसुरापाने. ४. I substitutes वा for य ५. B. D. and H. substitute वा for च, but G. and J. insert neither च nor वा.

इति तत्[1] पूर्वोक्तबृहस्पतिसवविषय एव द्रष्टव्यम्[2] ।सम्पत्त्यभावे वा[3] द्रष्टव्यम् । यत् पुनर्बृहस्पतिनोक्तम्—

'गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्रःसमाचरेत् ।
तप्तकृच्छ्रं पराकं च चान्द्रायणमनुक्रमात्'* ॥
(बृ. स्मृ. ४.-६१)

इति तदनन्यौषधसाध्यव्याध्युपशमार्थपाने वेदितव्यम् । प्रायश्चित्तस्याल्पत्वात् । अत एव हेतोः सङ्कल्पमात्रविषयत्वे वा योजनीयम् ॥ ७६ ॥

अथ सुवर्णस्तेयप्रायश्चित्तमाह—

अपहृत्य सुवर्णं तु ब्राह्मणस्य ततः स्वयम् ॥ ७७ ॥
गच्छेन्मुसलमादाय राजाभ्याशं वधाय तु[4] ।
हतः[5] शुद्धिमवाप्नोति राज्ञाऽसौ मुक्त एव च ॥ ७८ ॥
कामतस्तु कृतं[6] यत् स्यान्नान्यथा वधमर्हति ।

इति । अत्र सुवर्णशब्दः परिमाणविशेषोपेतहेमवचनः। स च परिमाणविशेषो याज्ञवल्क्येन दर्शितः—

---

* गौडीपाने तप्तकृच्छ्रं माध्वीपाने पराकं पैष्टीपाने चान्द्रायणमिति क्रमः ।

१. G. omits तत् while B and D. तदुक्त बृहस्पतिसवनेन द्रष्टव्यसपत्त्यभावे for तत्पूर्वोक्तबृहस्पतिसवविषय एव द्रष्टव्यम् । सपत्त्यभावे वा २. G. and J. omit द्रष्टव्य and read द्रव्यसपत्त्यभावे द्रष्टव्यम् ३ Except A H. and I, all others omit वा ४ B C D E F. G. J K. and L. read राजानं स्ववधाय, H and I राजानं स वधाय for राजाभ्याशं वधाय ५ Except A. K and L. all others read ततः for हतः. ६. M. reads कामकारकृतं for कामतस्तु कृतं.

'जालसूर्यमरीचिस्थं त्रसरेणुरजः[1] स्मृतम् ।
तेऽष्टौ लिक्षा[2] तु, तास्तिस्रो राजसर्षप उच्यते ॥
गौरस्तु ते त्रयः, षट् ते यवो मध्यस्तु, ते त्रयः।
कृष्णलः, पञ्च ते माषः, ते सुवर्णस्तु[3] षोडश' ॥
(या. स्मृ. १. ३६२–३६३)

इति । उक्तपरिमाणविशिष्टं ब्राह्मणसुवर्णं योऽपहरति[4] स स्वविशुद्धये स्वयमेव राजकर्तृकं मरणं सम्पादयितुं प्रहार-साधनं मुसलमादाय राजसमीपं गच्छेत् । गत्वा चेदृशं मां प्रहरेति निवेदयेत् । ततो राजकर्तृकात् मुसलसाधनाद्वधादयं विशुद्ध्यतीति । अथ मुसलप्रहारेण न[5] मृतस्तदा राज्ञा मुक्तः शुद्धिं प्राप्नोत्येव । तथा[6] च संवर्तः—

' ततो मुसलमादाय सकृद्[7]हन्यात्तु तं स्वयम् ॥
यदि जीवति स स्तेनस्ततस्तेयाद्विमुच्यते' ।
(सं. स्मृ. १२०–१२१)

इति । अथवा 'ऽमुक्त एव[8] च'—इति पक्षान्तरमेवं व्याख्येयम् । यत्र[9] स्तेनेन ये पोष्यास्तदीयपुत्र-मित्र-कलत्रादयो बहवः सन्ति तत्र स्तेने मृते बहवो[10] विनश्यन्तीति मत्वा कृपालुना राज्ञा

---

१ E I and the text read त्रसरेणूरज for त्रसरेणुरज . २. C. and F read लिख्या for लिक्षा and J. तुलास्तिस्रो for तु तास्तिस्रो, while H. substitutes लिक्षा for लिक्षा. ३. B. and D. read सुवर्ण, and G. H. सुवर्णाः both for सुवर्ण ४ Except A and I. all others read हरति for ऽपहरति, while J. reads स्वविशुद्धि स्वयमेव राजकर्तृकेण प्रहारेण सम्पादयितु, G reads the same, but differs in विशुद्धये for विशुद्धि , while I omits विशुद्धिम् ५ G. omits न , while J. substitutes मुक्त for मृत . ६ G substitutes अथ for तथा ७ The text substitutes स्तेनं for सकृत् ८ G and I. read एव for ऽव ९. B. D. G and J. substitute अत्र for यत्र , while B. and D substitute स्तेयेन for स्तेनेन. १० G. adds अपि after बहव and except. A. G. and I. others read विनङ्क्ष्यन्ति; while G. नश्यन्ति for विनश्यन्ति.

धनदण्डादिपुरःसरं स्तेनोऽप्रहतो मुच्येत तदापि विशुद्धयत्येवेति । ननु–एवं सति–

'अघ्नन्नेनस्वी राजा'

(गौ. स्मृ. १२. ४५)

इति गौतमवचनात् राजा प्रत्यवायी स्यात् । न । तस्य पोष्यवर्गादिकृपानिमित्तत्वेन स्तेनव्यतिरिक्तविषयेऽप्युपपत्तेः । ननु–ब्राह्मणवधस्यातिगर्हितत्वात् 'मुक्त एव'–इत्ययं पक्षस्तद्विषयत्वेन कुतो न व्याख्यायते? मनुवचनविरोधादिति ब्रूमः । तथा च मनुः–

'सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु ।
स्वकर्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति ॥
गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् ।
वधेन शुद्ध्यति स्तेनो ब्राह्मणस्तपसैव वा' ॥

(म. स्मृ. ११. ९९–१००)

इति । अत्र वधपक्षो नामधारकमात्रविप्रविषयः । तपःपक्षस्तु सवनस्थत्वादिगुणोपेतब्राह्मणविषयः । न च–तादृशस्य स्तेयमसम्भावितं–इति शङ्कनीयम् । कदाचित् क्वचिच्चित्तगततामसवृत्त्या लोभातिशयोदये सति तत्सम्भवात् । एवं च सति 'मुक्त एव'–इति पक्ष एतद्विषयत्वेनाऽपि योजयितुं शक्यते । यच्चौर्यं कामकृतं स्यात्तत्रायमुक्तो वधो द्रष्टव्यः । अन्यथा

१ B and D read धनदण्डापहतो for धनदण्डादिपुरस्सरं स्तेनोऽप्रहतो २ We follow here only A, while all others read कृपानिमित्तस्तेनव्यतिरिक्त–for कृपानिमित्तत्वेन स्तेनव्यतिरिक्त–. ३. I. substitutes कुर्यात् हतं for सकृद्धन्यात्तु तं ४. B. D. E. G H and J. substitute च and the text तु for वा. ५. G. omits -मात्र- and B. C. D. and F. -विप्र-.

प्रामादादिकचौर्ये वधं नार्हति । न च—लोभैकमूलस्य[1] चौर्यस्य प्रामादिकत्वमसम्भावितं—इति शङ्कनीयम् । यदा वस्त्रप्रान्तग्रथितं सुवर्णं सुवर्णत्वेनाज्ञात्वा ऽपहरति अपहृत्य चान्यस्मै ददाति नाशयति वा न पुनः स्वामिने प्रत्यर्पयति तदा सम्भवत्येवाकामतो ऽप्यपहारः । तादृशे ऽपहारे सवनस्थब्राह्मणवत्तपसा शुद्धिर्द्रष्टव्या । तपसो विशेषस्तु[2] मनुना दर्शितः—

'तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम् ।
वालवासा[3] द्विजो ऽरण्ये चरेद्ब्रह्महणो व्रतम्'* ॥
(म. स्मृ. ११. १०१)

इति । सुवर्णात् न्यूनपरिमाणेषु हेमसु व्रतभेदाः षट्त्रिंशन्मते दर्शिताः[4]—

'बालाग्रमात्रेऽपहृते प्राणायामं समाचरेत् ।
लिक्षामात्रेऽपि च तथा प्राणायामत्रयं बुधः ॥
राजसर्षपमात्रे च प्राणायामचतुष्टयम् ।
गायत्र्यष्टसहस्रं च जपेत् पापविशुद्धये ॥
गौरसर्षपमात्रे तु सावित्रीं वै दिनं जपेत् ।
यवमात्रसुवर्णस्य प्रायश्चित्तं दिनद्वयम्[5] ॥
सुवर्णकृष्णलं ह्येकमपहृत्य द्विजोत्तमः ।
कुर्यात् सान्तपनं कृच्छ्रं तत्पापस्यापनुत्तये ॥

---

* ब्रह्महणः यद्विहितं द्वादशवार्षिकं प्रायश्चित्तं तदित्यर्थः ।

---

१. B. and D read लौभकवचनस्य for लोभैकमूलस्य. २. B. and D read विशेष for तपसो विशेष. ३. The text reads चीरवासा for वालवासा; while I. reads ब्रह्मवधव्रतम् for ब्रह्महणो व्रतम्. ४ G. and H. read द्रष्टव्या. for दर्शिता.. ५. G. reads दिनत्रयम् for दिनद्वयम्.

अपहृत्य सुवर्णस्य माषमात्रं द्विजाधमः[1] ।
गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुद्ध्यति ॥
सुवर्णस्यापहरणे वत्सरं यावकं पिबेत्[2] ।
ऊर्ध्वं प्राणान्तिकं ज्ञेयमथ वा ब्रह्महव्रतम्' ॥

इति । वत्सरं यावकाशनं किंचिन्न्यूनसुवर्णापहारविषयम् । सुवर्णापहारे द्वादशवार्षिकविधानात् । यत्तु[3] चतुर्विंशतिमतेऽभिहितम्—

'आत्मतुल्यं सुवर्णं वा दद्यादिष्ट्वाथ वा क्रतुम् ।
षडब्दं वा चरेत् कृच्छ्रं जपयज्ञपरायणः ॥
तीर्थानि[4] भ्रमते विद्वान् ततस्तेयात्[5] प्रमुच्यते' ।

इति तत्रात्मतुल्यसुवर्णदानमत्यन्तधनिकविषयम् । क्रतु-धनिकश्रोत्रियविषयः । षड्वार्षिकं तु तीर्थयात्रासहितं निर्धनश्रोत्रियविषयम् । स्तेयप्रायश्चित्तं[6] सर्वत्र अपहृतं धनं स्वामिने दत्त्वैव कार्यम्

'स्तेये[7] ब्रह्मस्वभूतस्य सुवर्णादेः कृते पुनः ।
स्वामिनेऽपहृतं देयं हर्त्रा[8] त्वेकादशाधिकम्' ॥

इति स्मरणात् । यदा स्वशक्त्या राजा हन्तुमप्रवृत्तः तदा वसिष्ठोक्तं द्रष्टव्यम्—

---

१. I. reads द्विजोत्तम for द्विजाधम २ C F E G I. and J. read यावकी भवेत्, while H यावकी भवेत for यावकं पिबेत् ३ H does not insert तु. ४. E H. and I. read तीर्थाभिगमने for तीर्थानि भ्रमते ५. I. reads तस्मात् for तत ६ G. adds तत्सुवर्ण- before स्तेय- and तु after प्रायश्चित्ते. ७ E. and H. read स्तेयब्रह्मस्व-for स्तेये ब्रह्मस्व- ८. Except A. B D. and G all others read हर्त्रा for हर्ता; while G. reads दत्वा B. and D. हृत्वा for the same.

'स्तेनः प्रकीर्णकेशो राजानमभियाचेत।
ततस्तस्मै राजा औदुम्बरं शस्त्रं दद्यात्।
तेनात्मानं प्रमापयेत्। मरणात्पूतो भवति'।
(व. स्मृ. २०. ३१)

इति। औदुम्बरं ताम्रमयम्। यदा सुवर्णमपहृत्य तद् भुक्त्वा तदानीमेवानुतापेन प्रत्यर्पयेत् तदाऽऽपस्तम्बोक्तं द्रष्टव्यम्—

'चतुर्थकालमिताशनेन त्रिवर्षमवस्थानम्'।
(आ. ध. सू. १. ९. २५. १३. आं. पु.)

इति। मानसापहारे तु सुमन्तुराह—

'सुवर्णस्तेयी द्वादशरात्रं वायुभक्षः पूतो भवति'।
(व. स्मृ. २०. ४१)

इति। गुरु-श्रोत्रिय-यागस्थत्वादिबहुगुणोपेतब्राह्मणद्रव्यस्य भूयसोऽसकृदपहारे वसिष्ठोक्तं द्रष्टव्यम्—

'निष्कालको घृताभ्यक्तो गोमयाग्निना पादप्रभृति आत्मानं प्रमापयेत्। मरणात् पूतो भवतीति विज्ञायते'।
(व. स्मृ. २०. ४२)

---

१ The text reads ब्राह्मणसुवर्णहरणं प्रकार्य केशान् राजानमभिधावेत् स्तेनोऽस्मि भो शास्तु मां भवानिति। तस्मै राजा . इति विज्ञायते।. २ B. and D do not insert गुरु-श्रोत्रिय- ३ I reads भूयशो for भूयसो, while B. and D read सकृत् for ऽसकृत् ४ The text adds वा after निष्कालको and reads घृताक्तो गोमयाग्निना पादप्रभृति आत्मानमभिदाहयेत् for घृताभ्यक्तो गोमयाग्निना पादप्रभृति आत्मानं प्रमापयेत्, while I. does not insert मरणात्

इति । इत्थं सुवर्णस्तेयप्रायश्चित्तमभिहितम् । गुरुतल्पगप्रायश्चित्तं दशमाध्याये—

'मातरं यदि गच्छेत्तु भगिनीं'

(प. स्मृ. १०. ८)

इत्यत्र प्रपञ्चितम् ॥

अथ पतितसंसर्गप्रायश्चित्तम् ।

यस्तु पतितैर्ब्रह्महादिभिः सह संवत्सरं संसर्गं कृत्वा स्वयमपि पतितस्तस्य प्रायश्चित्तं मनुराह—

'यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्यात् संसर्गस्य विशुद्धये'[१] ॥

(म. स्मृ. ११. १८१)

इति । आचार्यस्तु कलियुगे संसर्गदोषाभावमभिप्रेत्य संसर्गप्रायश्चित्तं नाभ्यधात् । अत एव स्मृत्यन्तरे[२] कलौ वर्ज्यानामनुक्रमणे—

संसर्गदोषः पापेषु' ।

(स. स्मृ. १. ५३)

इत्युक्तम् ॥ ७७ ॥ ७८ ॥

संसर्गदोषस्य पातित्यापादकत्वाभावेऽपि पापमात्रापादकत्वमस्तीत्याह—

**आसनात् शयनाद्यानात् सम्भाषात् सहभोजनात् ॥ ७९ ॥**
**सङ्क्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसि ।**

---

१. The text reads तत्ससर्गविशुद्धये for ससर्गस्य विशुद्धये. २ We are unable to find out the proper name C E. F. H. and I. read स्मृत्यर्थसारं G. स्मृतिसागरं, both for स्मृत्यन्तरे.

इति । *यथा तैलबिन्दुरम्भसि प्रक्षिप्तः सर्वत्र व्याप्नोति तथा पतितसंसर्गकृतं पापं संसर्गिणं पुरुषं व्याप्नोति ॥७९॥

संसर्गदोषव्याजेन पूर्वमनुक्तप्रायश्चित्तानां सर्वेषां साधारणानि प्रायश्चित्तान्याह—

चान्द्रायणं यावकं[१] च तुलापुरुष एव च ॥ ८० ॥
गवां चैवानुगमनं सर्वपापप्रणाशनम् ।

इति । तुलापुरुषः कृच्छ्रविशेषः । तत्स्वरूपमुपरिष्टाद्वक्ष्यामः । यत्र यत्र च[२] प्रतिपदोक्तं प्रायश्चित्तं नोपलभ्यते तत्र सर्वत्र पापगौरव-लाघवानुसारेण चान्द्रायणादीन्यावृत्तान्यना[३]वृत्तानि वा ऽनुष्ठेयानि[४] । ततः सर्वाणि[५] पापानि नश्यन्तीति सिद्धम् ॥ ८० ॥

इत्थं प्रायश्चित्तकाण्डे नवभिरध्यायैः प्रकीर्णकादीनां महापातकान्तानां पापानां यानि प्रायश्चित्तान्याचार्येणाभिहितानि तानि व्याचक्षाणैरस्माभिस्तत्प्रसङ्गापतितानि[६] स्मृत्यन्तराण्युदाहृत्य व्यवस्थापितानि ।

अनुदाहृतस्मृतिवचनव्यवस्था ।

---

*सहशब्दः प्रत्येकमभिसम्बध्यते । सम्भाषशब्दस्त्वत्राजन्तः ।

---

१. K. and L. read यावकश्च *for* यावकं च. २. G. and I omit च, while C. and F do not repeat यत्र. ३. I does not insert अनावृत्तानि and G and I. substitute च for वा; while B and D. omit आवृत्तानि ४ J. substitutes अनुयोज्यानि for अनुष्ठेयानि. ५ G. and J. substitute पूर्वाणि for सर्वाणि; while B. and D. न सन्ति for नश्यन्ति. ६ G reads तत्प्रसगात्पतितानि, I. तत्प्रसगात्पठितानि *for* तत्प्रसङ्गापतितानि, while I. only adds अपि after स्मृत्यन्तराणि.

अथ यानि पूर्वमनुदाहृतानि तान्युदाहृत्य व्यवस्थापयामः।

तत्रातिपातकस्वरूपम्।

तत्र विष्णुप्रोक्तां पापानुक्रमणिकामाश्रित्य तदानुपूर्व्यात् प्रायश्चित्तवचनान्युदाह्रियन्ते। तत्र विष्णुरादावतिपातकमनुक्रम्य तत्स्वरूपमेवं निर्दिदेश—

'मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि'।

(वि. स्मृ. ३४. १)

इति। तेषां त्रयाणां दशमाध्याये' —

'मातरं यदि गच्छेत्तु'

(प. स्मृ. १०. ८)

इत्यस्मिन् प्रकरणे प्रायश्चित्तानि निर्णीतानि।

महापातकस्वरूपम्।

अतिपातकानन्तरं महापातकमनुक्रम्य तत्स्वरूपनिर्देश एवं कृतः—

'ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदारगमनमिति महापातकानि। (१) तत्संयोगश्च'।

(वि. स्मृ. ३५. १–२)

इति। तत्र गुरुदारगमनव्यतिरिक्तानां चतुर्णां द्वादशाध्याये-

'चतुर्विधे'

(प. स्मृ. १२. ६४)

---

१. C and F. omit the following —
उदाहृत्य व्यवस्थापयाम। तत्र विष्णुप्रोक्तां पापानुक्रमणिकामाश्रित्य तदानुपूर्व्यात् प्रायश्चित्तवचनान्युदाह्रियन्ते।
तत्र विष्णुरादावतिपातकमनुक्रम्य तत्स्वरूपमेव निर्दिदेश।.

२ G. reads विनिर्दिशति and I. विनिर्दिदेश both for निर्दिदेश. ३ J does not insert दुहितृगमन. ४ Except A. and I. all others omit -गमन- after गुरुदार-.

इत्यादिना—

'सर्वपापप्रणाशनम्'

(प. स्मृ. १२. ८१)

इत्यन्तेन ग्रन्थेन प्रायश्चित्तान्युक्तानि। गुरुदारगमनस्य तु दशमाध्याये—

'पितृदारान् समारुह्य'

(प. स्मृ. १०. ११)

इत्यत्र प्रायश्चित्तमभिहितम्।

**अनुपातकस्वरूपम्।**

महापातकानन्तरमनुपातकमनुक्रम्य तत्स्वरूपमेवं निर्दिष्टम्—

'यागस्थस्य क्षत्रियस्य वधः[1] वैश्यस्य रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्राया[2] अविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानीति। (१) कूटसाक्ष्यं[3] सुहृद्वध इत्येतौ सुरापानसमौ। (२) ब्राह्मणभूम्यपहरणं[4] सुवर्णस्तेयसमम् (३) पितृव्य-मातामह-मातुल-श्वशुर-नृपपत्न्यभिगमनं गुरुदाराभिगमनसदृशम्। (४) पितृ-मातृ-स्वसृगमनं च[5] (५) श्रोत्रियर्त्विगुपाध्याय-मित्रपत्न्यभिगमनं च। (६)

---

१. The text does not insert वध २ I reads आत्रेयगोत्रायाः for अत्रिगोत्राया. ३ The text reads कौटसाक्ष्य for कूटसाक्ष्यं. ४ The text adds निक्षेपापहरणं after भूम्यपहरणं. ५. Except A. H. do not insert च and separate the सूत्र

स्वसुः सख्याः सगोत्राया उत्तमवर्णायाः
कुमार्य्यां रजस्वलायाः शरणागतायाः
प्रव्रजिताया निक्षिप्तायाश्च' । (७)
(वि. स्मृ. ३६. १–७)

इति ।

अथ अनुपातकप्रायश्चित्तम् ।

तत्र प्रायश्चित्तं विष्णुरेवाह–

'अनुपातकिनस्त्वेते महापातकिनो यथा ।
अश्वमेधेन शुद्ध्यन्ति तीर्थानुसरणेन वा' ॥
(वि. स्मृ. ३६. ८)

इति । तत्राश्वमेधः सार्वभौमराजविषयः ।

'राजा सार्वभौमोऽश्वमेधेन यजेत' ।

इति श्रुतेः । तीर्थस्नानमितरविषयम् । तच्च साधारणप्रायश्चित्तम् । यत्र प्रतिपदोक्तं प्रायश्चित्तं नास्ति नोपलक्ष्यते वा तत्रेदं साधारणं द्रष्टव्यम् । यागस्थक्षत्रवधस्य तादृशवैश्यवधस्य च षष्ठाध्याये—

'वैश्यं वा क्षत्रियं वाऽपि'
(प. स्मृ. ६. १७)

इत्येतस्य व्याख्यानप्रसङ्गे प्रायश्चित्तं दर्शितम् । तथा चा-

१. Except A. I. and the text all others read सख्यु for सख्याः
२. The text adds अन्त्यजाया after कुमार्याः. ३. C and F. are quite mistaken here. They omit from प्रव्रजितायाः to ऋणानप (P 94, L. 3, to 422 L. 6) ४ Except A. C. F. and I others substitute च for वा.
५. B. D. G. and J. substitute तत्र for तच्च

न्तर्वत्न्या अत्रिगोत्रायाश्च वधे तत्रैव प्रायश्चित्तमभिहितम्। अविज्ञातगर्भवधे प्रायश्चित्तं चतुर्थाध्याये—

'गर्भपातं च या कुर्यात्'

(प. स्मृ. ४. १७)

इत्यस्मिन् प्रसङ्गे वर्णितम्। शरणागतावधः परिशिष्यते। मनुस्त्वन्यान्यपि ब्रह्महत्यासमान्याह—

'अनृतं च समुत्कर्षे* राजगामि च पैशुनम्।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया'॥

(म. स्मृ. ११. ५५)

इति। याज्ञवल्क्यश्चापरोण्याह—

'गुरूणामभ्यधिक्षेपो वेदनिन्दा सुहृद्वधः।
ब्रह्मत्यासमं ज्ञेयमधीतस्य च नाशनम्'॥

(या. स्मृ. ३. २२८)

---

* समुत्कर्ष इति निमित्तसप्तमी। सम्यक् ज्ञातिषु समाजेषु राजसभादिषु वा उत्कर्षं प्राप्स्यामीति हेतुपूर्वकं यदनृतमभिधीयते तद्ब्रह्महत्यासममिति भावः। 'राजगामि पैशुनं' राजकुलात्तेन सह विवादो निर्बन्धो अनृतादिशंसनं वा। यदाह गौतमः—

'गुरावनृताभिशंसनम्'

इति। यद्यपि अत्र 'गुरौ' इत्युक्तं तथापि अनृताभिशंसनस्य गुरौ राजकुले वा तुल्यत्वेनैव ब्रह्महत्यासमत्वमिति सुधीभिरूह्यम्।

---

१ Except A. and I. all others read विज्ञात- for अविज्ञात-, but it seems to be incorrect　२ B and D. read अधिकनिर्बन्ध समानं for अलीकनिर्बन्धः समानि.　३ I adds अपि before आह

इति । अत्र शरणागतवधादिषु पादन्यूनं ब्रह्महत्याव्रतमव-
गन्तव्यम् । समशब्दस्य–

'राजसमो मन्त्री'

इत्यादावीषन्न्यूने प्रयोगदर्शनात् । मनुस्त्वधीतत्यागादी-
नां सुरापानसमत्वमाह—

'ब्रह्मोज्झं* वेदनिन्दा च कूटसाक्ष्यं सुहृद्वधः ।
गर्हिता-ऽनाद्ययोर्[2]जग्धिः सुरापानसमानि षट्' ॥[1]
(म. स्मृ. ११. ५६)

इति । तत्र ब्रह्मोज्झस्य प्रायश्चित्तं वसिष्ठ आह–

'ब्रह्मोज्झः कृच्छ्रं द्वादशरात्रं चरित्वा
पुनरुपयुञ्जीत† वेदमाचार्यात्' ।
(व. स्मृ. २०. १२)

इति । इदं च प्रायश्चित्तं प्रामादिकाध्ययनत्यागविषयम्[3] ।
नास्तिकतया तत्त्यागे पादन्यूनं सुरापानव्रतमिति मनोर्मतम् ।
यद्यपि वसिष्ठेनोक्तम्–

---

* ब्रह्मोज्झं अधीतवेदस्यानभ्यासेन विस्मरणमिति मेधातिथि कुल्लूकौ । अधीतस्य वेदस्य असच्छास्त्राश्रयेणोपेक्षणमिति गोविन्दराजः । वेदस्या-त्यन्तत्यागोऽनध्यनं वेति सर्वज्ञनारायणः । इदमेव युक्तं भाति ।

† द्वादशरात्रकृच्छ्राचरणानन्तरं पुनरप्याचार्यात् वेदमुपयुञ्जीत अ-धीयीतेत्यर्थः ।

---

१. The text reads this line :—

'ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्य सुहृद्वध· ।.

२ B. D. E H. and J. read गर्हितान्नाद्ययो for -ऽगर्हिता -ऽनाद्ययो ३ I. reads प्रमादत्याध्यायादिविषयम् for प्रामादिकाध्ययनत्यागविषयम्

'गुरोरलीकनिर्बन्धे कृच्छ्रं द्वादशरात्रं चरित्वा
सचैलं स्नात्वा गुरुप्रसादात् पूतो भवति'¹ ।
( व. स्मृ. २१. २८ )

इति । तदेतदमतिपूर्वे सकृदनुष्ठाने वेदितव्यम् । विष्णुना ऽनुक्रान्तस्य कौटसाक्ष्यस्य द्वादशवार्षिकं प्रायश्चित्तम् । तथा च तद्व्रतानुवृत्तौ शङ्ख आह–

'कौटसाक्ष्यं तथा कृत्वा निक्षेपमपहृत्य च ।
एतदेव व्रतं कुर्यात् त्यक्त्वा² च शरणागतम्'॥
( शं. स्मृ. १७. ९ )

इति । यत्र साक्ष्यनृतवदनेन वर्णिनो³ वधप्राप्तिः तद्विषयमिदम् । अपरमपि ब्रह्महत्यासमं विष्णुर्दर्शयति–

'आक्रुष्टस्ताडितो वाऽपि धनैर्वा विप्रयोजितः ।
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्'* ॥
( वि. स्मृ. ३. ४६ )

* पूर्वं 'चण्डालादुदकात् सर्पात्'– ( माधवाचार्यटीका अ. ११. श्लो. १६-१८) इत्यादिनोक्तादात्मघातिनोऽन्योयं ब्रह्मघाती । तत्र तु न कस्याप्युद्देशः । केवलमसह्यदुःखादिना देहत्यागे प्रवृत्तिः । किंच आक्रोशनादिनिमित्तं विना देहत्यागे स आत्मघाती भवति न तु ब्रह्मघाती ।

१ The text reads this Sûtra as follows :—
गुरोश्चालीकनिर्बन्ध सचैल स्नातो गुरु प्रसादयेत्
प्रसादात्पूतो भवतीति विज्ञायते ।.

२. E H. and I read तथा for त्यक्त्वा, while the text reads this verse:—
'कूटसाक्ष तथैवोक्त्वा निक्षेप च प्रहृत्य च ।
एतदेव व्रत कुर्याच्छक्त्या च शरणागतम्' ॥,
but it seems to be incorrect. ३ B. and D. read अधमर्णिनो for वर्णिनो.

इति । आक्रोशनादिनिमित्ताभावे मृतस्यैव हत्यादोषः । न तूद्देश्यस्य[1] । तथा च स्मृत्यन्तरम्—

'अकारणं* तु यः कश्चित् द्विजःप्राणान् परित्यजेत् ।
तस्यैव तत्र दोषः स्यान्न तु यं[2] परिकीर्तयेत्' ॥

इति । याज्ञवल्क्योऽपि सुरापानसमान्युदाजहार—

'निषिद्धभक्षणं जैह्म्यमुत्कर्षे च[3] वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि तु' ॥
(या. स्मृ. ३. २२९)

इति । एवमादिषु सर्वत्र येन साम्यमुच्यते तदीयं प्रायश्चित्तं किंचिन्न्यूनमनुष्ठेयम् । सा च न्यूनता निमित्तगौरवलाघवानुसारिणी कल्पनीया । सुवर्णस्तेयसमे तु ब्राह्मणभूम्यपहरणे[4] मरणान्तिकप्रायश्चित्तेषु न्यूनत्वकल्पनाऽसम्भवात् द्वादशवार्षिकादिव्रतानि यथायोगं कल्पनीयानि । याज्ञवल्क्योऽन्यानि सुवर्णस्तेयसमान्याह—

'अश्व-रत्न-मनुष्य-स्त्री-भू-धेनुहरणं[5] तथा ।
निक्षेपस्य च सर्वं हि सुवर्णस्तेयसम्मितम्' ॥
(या. स्मृ. ३. २३०)

---

* अकारणमिति आक्रोशनादावपि देहत्यागस्य न किमपि कारणम् । किन्तु प्रत्याक्रोशनादयोऽन्ये वा उपाया अनुष्ठेयाः । तानकृत्वा यो देहत्यागं करोति स अकारणप्राणत्यागी एव भवतीति तात्पर्यम् ।

---

१. H reads उद्देशश्च; while G. omits the following portion नतूद्देश्यस्य । तथा च स्मृत्यन्तरम्—

'अकारण तु य कश्चित् द्विज प्राणान्परित्यजेत् ।
तस्यैव तत्र दोष . . . . . . . . . . . . . . . . . ' ॥.

२ B. and D. read य for यं. ३. E. reads उत्कर्षेण for उत्कर्षे च. ४. Except A. all others read -भूमिहरणे. ५. J. reads –मरण for -हरणं.

इति। मनुरपि—

'निक्षेपस्यापहरणं नरा-ऽश्व-रजतस्य च।
भूमि-वज्र-मणीनां च[1] रुक्मस्तेयसमं स्मृतम्' ॥
(म. स्मृ. ११. ५७)

इति। पितृव्यपत्न्यादिगमनानां गुरुतल्पसमानानां दशमाध्याये—

'मातृष्वसृगमे चैवम्'
(प. स्मृ. १०. ९)

इत्यस्मिन् प्रकरणे प्रपञ्चितम्।

उपपातकस्वरूपम्।

अनुपातकानन्तरं विष्णुरुपपातकमनुक्रम्य तत्स्वरूपमेवं निर्दिदेश—

'अनृतवचनमुत्कर्षे। (१) राजगामि च पैशुन्यम्।(२) गुरोश्चालीकनिर्बन्धः। (३) वेदनिन्दा। (४) अधीतस्य च त्यागः। (५) अग्नि-मातृ-पितृ-सुत-दाराणां च। (६) अभोज्यान्नाभक्ष्य[2]भक्षणम्। (७) परस्वहरणम्। (८) परदाराभिगमनम्[3]। (९) अयाज्ययाजनम्। (१०) विकर्मणा जीवनम्। (११) असत्प्रतिग्रहः। (१२) क्षत्रिय-विट्-शूद्र-गो[4]वधः। (१३) अविक्रेयविक्रयः।

१ G. I and the text do not insert च. २. B D. E. and H read अभोज्याभक्ष्यभक्षणम्, I अभोज्यान्नभक्षणम्, J. अभोज्यभक्षणम्; and G. अभोज्यभोक्ष्यभक्षण all for अभोज्यान्नाभक्ष्यभक्षणम् ३. We follow here A. and the text, while all others read गुरुदाराभिगमनम् for परदाराभिगमनम् The Vijnáneśvara also reads परदारा- (*Vide* ३.२३४-२४२ Commentary). ४. G. omits -गो-, but it seems very proper.

(१४) परिवित्तिताऽनुजेन[1] ज्येष्ठस्य । (१५) परिवेदनं च । (१६) तस्य च[2] कन्यादानम् । (१७) याजनं च । (१८) व्रात्यता ।(१९) भृतकाध्यापनम् ।(२०) भृतकाध्ययनादानम् । (२१) सर्वाकरेष्वधीकारः[4] । (२२) महायन्त्रप्रवर्तनम्[5] ।(२३) द्रुम-गुल्म-लतौषधीनां हिंसा[6] । (२४) स्त्रिया जीवनम् । (२५) अभिचारः[7] । ( २६ ) मूलकर्मसु च प्रवृत्तिः । ( २७ ) आत्मार्थं च[8] क्रियारम्भः । (२८) अनाहिताग्निता । (२९) स्तेयम्[9] । (३०) देवर्षि-पितॄणामृणस्यानपक्रिया[10] । (३१) असच्छास्त्राभिगमनम्[11] । (३२) नास्तिकता । (३३) कुशीलता[12] ।

* अत्र विज्ञानेश्वरोऽपीदं सूत्रमेवमेव पपाठ । तथा च सति देवादीना त्रयाणां ऋणानपक्रियायाः परिगणितत्वात् 'ऋणानपक्रियादीन्युदाजहार' इत्येतन्न सङ्गच्छेत । अतोऽत्र व्यावहारिकस्य ऋणस्य ग्रहण माधवाचार्यस्य नाभिप्रेतमिति अवगन्तव्यम् ।

१ All, except A. I and the text read परिवित्तिताऽनुजे for परिवित्तिताऽनुजेन २ I. does not insert these two Sútras, namely —

तस्य च कन्यादानम् । ( १७ ) याजनं च । ( १८ )

and also B. D. E. F. G. H. and J. omit याजनं च ३ B. and D. read भृतकाचाध्ययनादानम् and E. G. H J भृतकाध्ययनादानम्, while I omits च. ४ G and J read सर्वाकारेषु for सर्वाकरेषु; while B. D. and G. read अधिकार for अधीकार ५ G. reads -वर्तनम् for -प्रवर्तनम्. ६ Except A. I. and the text all others read द्रुम-गुल्म-लतौषधिमहाहिंसा, while the text adds -वल्लि- after -गुल्म- and also the Vijnánesvara follows it. ७. I. and the text do not separate these two Sûtrâs. I. reads अभिचारमूलकर्मसु and the text अभिचारबलकर्मसु for अभिचार and मूलकर्मसु ८. The text reads आत्मार्थं and omits च ९. All, except A. read स्तेय, while the text omits it. १०. B D. and J. read योषित्पितॄणामसत्क्रिया, G. योषित्प्रियाणां समक्रिया, E. and H. योषित्प्रियाणामसत्क्रिया, but E. has a marginal reading -पितॄ- for -प्रिया- for देवर्षि-पितॄणामृणस्यानपक्रिया ११. B D. G. J. and the text read -भिगमनम् for धिगमनम्. १२. B and D read कुशलता and the text कशीलवता both for कुशीलता.

(३४) मद्यपस्त्रीनिषेवणम्* । (३५) इत्युपपातकानि[१] ।
( वि. स्मृ. ३७. १–३६ )

इति । याज्ञवल्क्यस्तु विष्णुनाऽनुक्तान्यपि कानिचिदुपपातकानि ऋणानपक्रियादीन्युदाजहार—

'गोवधो व्रात्यता स्तैन्य[२]मृणानां चानपक्रिया† ।
अनाहिताग्निताऽपण्य[३]विक्रयः परिवेदनम् ॥
भृतादध्ययनादानं भृतकाध्यापनं तथा ।
पारदार्यं पारिवित्त्यं वार्धुष्यं लवणक्रिया‡ ॥
§स्त्री-शूद्र-विट्-क्षत्रवधो निन्दितार्थो[४]पजीवनम् ।

* सर्वाणीमानि व्याख्यातानि पूर्वमेव तत्रतत्रेति नात्र पुनर्व्याख्यानम् ।

† अत्र 'गोवध'शब्देन गोपिण्डव्यापादनं 'स्तैन्य' शब्देन ब्राह्मणसुवर्ण-तत्समव्यतिरिक्तपरद्रव्यापहरणं, 'ऋणानामनपक्रिया' इत्यनेन उत्तमर्णाद् गृहीतस्य ऋणस्याप्रदानं इति यथायथमूहनीयम्। यत्तु–'गृहीतस्य सुवर्णादेरप्रदानं ऋणानामनपाकरणम्'–इत्युक्त्वा 'तथा देवर्षि-पितृणां मन्वन्ध्यर्णस्यानपाकरणं च'–इति विज्ञानेश्वरेणोक्तं तन्न । माधवाचार्यस्याभिमतमिति प्रतिभाति । विष्णुना अनुक्ताना केषाचिदुपपातकानां प्रदर्शनायैव-

'गोवधो व्रात्यता स्तैन्यमृणानां चानपक्रिया'।

इत्यादियाज्ञवल्कीयवचनानामत्रोदाहृतत्वादिति सुधियो विदां कुर्वन्तु ।

‡'लवणक्रिया' लवणस्योत्पादनमित्यर्थः ।

§ स्त्रिया वधः आत्रेयीव्यतिरेकेण ब्राह्मण्या अपि । आत्रेय्यास्तु–

'गर्भहा च यथावर्णं तथात्रेयीनिषूदकः' ।
( या. स्मृ. ३. २५१ )

इत्यनेन ब्रह्महत्यादिसमत्वकथनेन ब्रह्महत्यादिव्रतोक्तेः । शूद्रवधवदीक्षितक्षत्रिय वैश्यवधः ।

१ Except A. and the text all others do not insert इति २. B and D. read गो-ब्राह्मणवध स्तेयम् for गोवधो व्रात्यता स्तैन्यम्, while the text and G substitute स्तेयम् for स्तैन्यम् ३. C. F. read ऽपत्य- for ऽपण्य. ४. J. reads निन्दितार्थे ऽपि.

नास्तिक्यं व्रतलोपं* च सुतानां चैव विक्रयः ॥
†धान्य-कुप्य[1]-पशुस्तेयमयाज्यानां च याजनम् ।
पितृ-मातृ-सुतत्यागस्तडाकारामविक्रयः ॥
कन्यासन्दूषणं[2] ‡ चैव परिवेदकयाजनम् ।
कन्याप्रदानं तस्यैव कौटिल्यं § व्रतलोपनम्[3] ॥

* व्रतलोपः ब्रह्मचारिणः स्त्रीप्रसङ्गः

† धान्यं व्रीह्यादि, कुप्यमसारद्रव्यं त्रपु-सीसादि, पशवो गवादयः तेषामपहरणम् । 'गोवधो व्रात्यता स्तेयम्' इत्यनेन स्तेयग्रहणेनैव सिद्धे पुनर्धान्य-कुप्यादिस्तेयग्रहणं नित्यार्थम् । अतो धान्यादिव्यतिरिक्तद्रव्य-स्तेये नावश्यमेतदेव प्रायश्चित्तम् । अपि तु ततो न्यूनमपि भवत्येव । तथा चैतेन बान्धवत्यागग्रहणेनैव सिद्धे पुन· पित्रादित्यागग्रहणं व्याख्यातम्—इति विज्ञानेश्वरः ।

‡ कन्याया दूषणं अंगुल्यादिना योनिविदारणम् । न तु सम्भोगः । तस्य—

'सखिभार्या-कुमारीषु'

(या. स्मृ. ३. २३१)

इत्यत्र गुरुतल्पसमत्वस्योक्तत्वात् ।

§ कौटिल्यं गुरोरन्यत्र । गुरुविषयस्य तु कौटिल्यस्य—

'निषिद्धभक्षणं जैह्म्यम्'

(या. स्मृ. ३. २२९)

इत्यत्र सुरापानसमत्वमुक्तम् । तथा च पूर्वं 'नास्तिक्यं व्रतलोपं च' ।

---

१ Except A. C. F and I. all others read -रूप्य- for -कुप्य-. २. I. reads कन्यासु दूषण for कन्यासन्दूषण, while the text परिवि-न्दक- for परिवेदक-. ३ J. reads च तुलायन for व्रतलोपनम्, but it does not give any good sense.

आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ।
स्वाध्यायाग्नि-सुतत्यागो बान्धवत्याग एव च ॥
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधजीवनम् ।
हिंस्रयन्त्रविधानं[1] च व्यसनान्यात्मविक्रयः ॥
शूद्रप्रेष्यं[2] हीनसख्यं हीनयोनिनिषेवणम् ।
तथैवानाश्रमे[3] वासः परान्नपरिपुष्टता ॥
असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।
भार्याया विक्रयश्चैषामेकैकमुपपातकम् ' ॥

( या. स्मृ. ३.२३४–२४२ )

इति । यद्यपि–

'अनृतं च समुत्कर्षे'।

(म. स्मृ. ११. ५५ )

इत्येतन्मनुना ब्रह्महत्यासमेषु पठितं याज्ञवल्क्येन सुरापानसमेषु विष्णुना उपपातकेषु तथापि विषयभेदेन त्रैविध्यं वक्तुं शक्यत्वान्न किञ्चिदपि साङ्कर्यम्[4] । विषयभेदस्तूच्यते । द्वेष्यं पुरुषं राजभृत्यादिभिर्मारयितुं तस्मिन्नविद्यमानमपि महान्त-

---

इत्युक्त्वा पुनः ' व्रतलोपनम् ' इत्युक्तेः । अशिष्टाप्रतिषिद्धेष्वपि ' श्रीहरिचरणकमलप्रेक्षणात् प्राक् ताम्बूलादिकं न भक्षयामि ' इत्येवंरूपेषु नियमेषु प्राप्त्यर्थम् । न तु स्नातकव्रतप्राप्त्यर्थम् । तत्र–

' स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ' ।

इति मनुना लघुप्रायश्चित्तस्य प्रतिपादितत्वात् ।

१. J reads हिंसायन्त्र- for हिंस्रयन्त्र-. २ I. reads शूद्राप्रेष्य for शूद्रप्रेष्यं ३. I. reads अन्याश्रमे for अनाश्रमे ४. I. reads किंचिदसांकर्यम् for किंचिदपि सांकर्यम्

मपराधमारोप्यानृतं चेद्ब्रूयात् तद् ब्रह्महत्यासमम् । वधपर्यवसायित्वात् । यस्तु लाभ-पूजा-ख्यातिकामो राजसभादौ स्वस्मिन् अविद्यमानमपि चतुर्वेदाभिज्ञत्वं प्रकटयितुमनृतं ब्रूते तत्सुरापानसमम् । अतिगर्हितत्वात् । यस्तु सुखगोष्ठ्यादौ[1] परोपकारमन्तरेण वृथाऽनृतं ब्रूते तस्यैतदुपपातकम् । तत्राद्ययोः प्रायश्चित्तं पूर्वमेवोक्तम् । तृतीये तु कामकृते याज्ञवल्क्य आह—

> ' मयि[2] तेज इति च्छायां स्वां दृष्ट्वाऽम्बुगतां जपेत् ।
> सावित्रीमशुचौ दृष्टे चापल्ये चानृतेऽपि च ' ॥
> ( या. स्मृ. ३. २७९ )

इति । अकामकृते तु मनुनोक्तं द्रष्टव्यम्—

> ' सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतानि च ।
> पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्[3] प्रयतोऽपि सन् ' ॥
> ( म. स्मृ. ५. १४५ )

इति । राज्ञोऽग्रे साक्षात् परम्परया वा परदोषकथनं राजगामि पैशुन्यम् । गुरावलीकनिर्बन्धो[4] द्विविधः । तत्र राजगृहादौ[5] स्वयं समर्थः सन् असमर्थस्य गुरोर्द्रव्यलाभाद्युपरोधकारणं निर्बन्धं करोति चेत् सोऽयमलीकनिर्बन्धो ब्रह्महत्यासमत्वेन मनुनोक्तः । यत्र वाक्पारुष्यादिमात्रेण गुरोरप्रियमुपजायते

---

१ I. reads मुख्यगोष्ठ्यादौ for सुखगोष्ठ्यादौ. २ I reads अपि for मयि. ३. B. and D read आचरेत् for आचामेत्; while G. आचमेत् for the same. ४. All others except A. and I. read गुरोरलीक- for गुरावलीक-; while G. omits the following portion —

निर्बन्धो द्विविध । तत्र राजगृहादौ स्वय समर्थ सन्नसमर्थस्य गुरोर्द्रव्यलाभाद्युपरोधकारण.

५. H. reads राजगृहाङ्गणे for राजगृहादौ.

सोऽयमलीकनिर्बन्ध उपपातकम्। वेदनिन्दा त्रिविधा। बुद्धार्हतादिशास्त्राण्यभ्यस्य वेदानामप्रामाण्यप्रतिपादने निर्बन्ध एका निन्दा। सेयं[1] याज्ञवल्क्येन ब्रह्महत्यासमेषूपवर्णिता। सत्यामपि वेदप्रामाण्यबुद्धौ जल्प-वितण्डादिहेतुशास्त्रव्यसनितया श्रुति-स्मृत्युक्तस्यानुष्ठानस्यावज्ञा द्वितीया निन्दा। एतदेवाभिप्रेत्य मनुराह—

'यो ऽवमन्येत ते तूभे[2] हेतुशास्त्राश्रयात्[3] द्विजः।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः'॥
(म. स्मृ. २. ११)

इति। सेयं निन्दा सुरापानसमेषु मनुनोदाहृता। यस्तु वैदिकं कर्मानुतिष्ठन्नपि नात्यन्तं तत्फले[4] श्रद्धत्ते 'किमनेन भविष्यति जनापवादभयादेव केवलमनुतिष्ठामि'— इत्येवं निन्दति सेयं निन्दोपपातकेषु पठ्यते।

एवमध्ययनत्यागादेरेकैकस्य बहुविधस्यानुक्रान्तस्य गौरव-लाघवे पर्यालोच्यावान्तरभेदः कल्पनीयः।

'अग्नि-मातृ-पितृ[5]-सुत-दाराणाम्'
(वि. स्मृ. ३७. ६)

इत्यत्रापि त्याग इति पदमन्वेति। अनुक्रान्तानामुपपातकानां पूर्वोक्तेभ्योऽतिपातक[6]-महापातका-ऽनुपातकेभ्योऽल्पत्वादुपपातकत्वम्। तदुक्तं स्मृत्यन्तरे—

---

१. B. and D read ब्रह्महत्यासमोपपादिता याज्ञवल्क्येन and omit सेय.
२ A and the text read मूले for तूभे ३. All, except the text and A read -श्रयो for -श्रयात् ४ I. reads तत्त्वत for तत्फले ५ B, D. and I. omit -पितृ- ६ I. reads प्रोक्तेभ्यो for पूर्वोक्तेभ्यो-, while except A and I all others do not insert -ऽतिपातक-

'महापातकतुल्यानि पापान्युक्तानि यानि तु ।
तानि पातकसंज्ञानि तन्न्यूनमुपपातकम्' ॥

इति ।

**अथ उपपातकस्य साधारणं प्रायश्चित्तम् ।**

तस्य चोपपातकजातस्य साधारणं प्रायश्चित्तं विष्णुराह—

'उपपातकिनस्त्वेते कुर्युश्चान्द्रायणं नराः ।
पराकमथ वा कुर्युर्यजेयुर्गोसवेन च' ॥

( वि. स्मृ. ३७–३५ )

इति । तत्रैतेषामावृत्तानां सङ्घाते गोसवो द्रष्टव्यः* । एकैकस्य च शक्तम्प्रति पराकः अशक्तम्प्रति चान्द्रायणम् । याज्ञवल्क्योऽपि साधारणं प्रायश्चित्तमाह—

'उपपातकशुद्धि स्यादेवं चान्द्रायणेन वा ।
पयसा वाऽपि मासेन पराकेणाऽथ वा पुनः' ॥

( या. स्मृ. ३. २६५ )

इति । एवमित्यनेन पदेन प्रकृतं गोवधव्रतमतिदिश्यते । अतिदेशस्योपदेशान्न्यूनविषयत्वात् । गोव्रताङ्गानि गोचर्मादीनि कानिचिद्विषयान्तरेषु निवर्तन्ते । एतच्च व्रतचतुष्टयमकामकारे शक्त्यपेक्षया विकल्पितं द्रष्टव्यम् । कामकारे तु—

* नरा इत्युक्तेः सर्वेषामेव वर्णानामिदं प्रायश्चित्तम् । तत्र क्षत्रियादीनामनधिकारात् गोसवो ब्राह्मणस्यैव, चान्द्रायण-पराके द्विजातिसाधारणे, शूद्रस्य दानादिकमिति व्यवस्था द्रष्टव्या ।

१. The text reads पराक च तथा for पराकमथ वा and substitutes गोमखेन for गोसवेन २. I. omits च and reads अशक्तम्प्रति पराक and शक्तम्प्रति चान्द्रायणम ३. B. D. G. and I. substitute निशि for पुन ४. G. adds पुन before पदेन

'एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः।
अवकीर्णिवर्ज्यं शुद्ध्यर्थं चान्द्रायणमथापि वा[१]' ॥
(म. स्मृ. ११. ११७)

इति मनुनोक्तं त्रैमासिकं द्रष्टव्यम्। एतच्च साधारणप्रायश्चित्तं प्रतिपदोक्तप्रायश्चित्ताभावे तदनुपलम्भे वा द्रष्टव्यम्।

प्रतिपदोक्तप्रायश्चित्तानि।

प्रतिपदोक्तानि प्रायश्चित्तानि यथासम्भवमुदाहरामः। तत्र गुरोरलीकनिर्बन्धोपपातकस्य प्रायश्चित्तं विष्णुराह—

'समुत्कर्षे[३]ऽनृते गुरोर[४]लीकनिर्बन्धे
तदाक्षेपणे[५] च मा[६]सं पयसा वर्तेत'।
(वि. स्मृ. ५४. ५४)

इति। अग्नित्यागे स[७] एवाह—

'वेदाग्न्युत्सा[८]दी त्रिषवणस्नाय्यधःशायी
संवत्सरं सकृद्भैक्षेण वर्तेत'।
(वि. स्मृ. ५४-१३)

इति। वसिष्ठोऽपि—

'योऽग्नीनपविद्ध्येत् स[९] कृच्छ्रं द्वादशरात्रं
चरित्वा पु[१०]नराधानं कारयेत्'।
(व. स्मृ. २१. २७)

---

१. I. reads अवकीर्णी तु शुद्ध्यर्थं चरेच्चांद्रायण व्रतम्. २ G. substitutes च for वा ३. I. reads समुत्कर्षेऽनृते. ४ The text adds च after गुरो. ५. We follow here only A. and the text; while all others read तदाक्षारणे for तदाक्षेपणे. ६. J. reads चमसं for च मास ७ Except A. and I. all others read विष्णु for स. ८ I. reads वेदाग्न्युत्सादित for वेदाग्न्युत्सादी. ९. The text omits स १०. C. F E. H. an read पुनराधेय for पुनराधानं.

इति । मनुरपि–

'अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः ।
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत्' ॥
अग्निहोत्र्यपविध्याऽग्नीन् मासादूर्ध्वं तु कामतः ।
कृच्छ्रं चान्द्रायणं चैव कुर्यादेवाविचारयन् ॥
(म. स्मृ. ११. १२९–१३० आन्ध्र पुस्तके) ।

इति । हारीतः—

'संवत्सरोत्सन्नेऽग्निहोत्रे चान्द्रायणं कृत्वा पुनरादध्यात् । द्विवर्षोत्सन्ने सान्तपनं चान्द्रायणं च कुर्यात् । त्रिवर्षोत्सन्ने संवत्सरं कृच्छ्रमभ्यस्य पुनरादध्यात्' ।
(हा. स्मृ. ३. १९-२१)

इति । शङ्खोऽपि–

'अभ्युत्सादी सांवत्सरं प्राजापत्यं चरेत् गां च दद्यात्' ।
(शं. स्मृ. ११. २३)

इति । भरद्वाजः ।

'द्वादशाहातिक्रमे त्र्यहमुपवासः । मासातिक्रमे द्वादशाहमुपवासः । संवत्सरातिक्रमे मासोपवासः । पयोभक्षणं च' ।

---

१. I. reads स न्त्सरोत्सन्नोऽग्निहोत्री for सवत्सरोत्सन्नेऽग्निहोत्रे. २. B. and D. read सोमपान for सान्तपन and omit चान्द्रायण च C and F. read the same, but do not omit चान्द्रायण E G. H. and J read सोमायनं for सान्तपनं; while J -त्सर्जने for -त्सन्ने. ३. G reads भारद्वाज for भरद्वाज.. ४ B. and D. read द्वादशातिक्रमे त्र्यहमुपवास सवत्सरातिक्रमे द्वादशाहमुपवासः पयोभक्षण च ।.

इति। एतत्सर्वमालस्यादाग्नित्यागविषयतया यथायोगमूहनीयम्। यत्तु भरद्वाजगृह्ये[1]ऽभिहितम्—

'प्राणायामशतमा दशरात्रं[2] कुर्यात्। उपवासः स्यादा विंशतिरात्रम्[3]। अत ऊर्ध्वमा षष्टिरात्रं तिस्रो रात्रीरुपवसेत्। अत ऊर्ध्वमा संवत्सरात् प्राजापत्यं व्रतं[4] चरेत्। अत ऊर्ध्वं कालबहुत्वे दोषबहुत्वम्'।

इति तत् प्रमादादग्नित्यागविषयम्। नास्तिक्यात् त्यागे तु व्याघ्र आह—

'योऽग्निं त्यजति नास्तिक्यात् प्राजापत्यं चरेद् द्विजः।
अन्यत्र पुनराधानं दानमेव तथैव च'॥

इति। प्राजापत्यस्योपलक्षणत्वात् त्यागकालस्य गौरवलाघवानुसारेण व्रतान्तराण्यूहनीयानि। व्रतानन्तरभावि[5] कर्तव्यमाह जातूकर्ण्यः—

'अतीतकालं जुहुयादग्नौ विप्रो यवानयम्[6]।
नष्टेऽग्नौ[7] विधिवद्द्यात् कृत्वाऽऽधानं पुनर्द्विजः'॥

इति। एतच्चौपासनाग्निविषयम्। दारत्यागे शातातप आह—

---

१ G. reads भारद्वाजगृह्ये २. C E. F add कुर्यात् after -मा दशरात्र, but of no use here ३. E reads उपवास स्याद्विंशतिरात्र कुर्यात्, I. उपवासमा विंशतिरात्रं कुर्यात् both for उपवास. स्यादा विंशतिरात्र ४ Except I. all others do not insert व्रत ५ I omits -भावि-. B and D. read व्रतान्तर कर्तव्यमाह and except E H व्रतान्तरभावि कर्तव्यमाह both for व्रतानन्तरभाविकर्तव्यमाह ६ We are unable to find out a correct reading B. and D. read विप्राय चाव्ययम्, C. and F विप्राय वायवम्, G. H विप्रोऽथवा स्वयम्, E. and J. विप्राय वायव्यम् all for विप्रो यवानयम्, whil H अतीते काले for अतीतकाल. ७. G. and H read नाशेऽग्नौ for नष्टेऽग्नौ and C. and F. गलेऽग्नौ for the same.

'कौमारदारत्यागी* मासं पयोभक्षः शुद्ध्यति' ।

( शा. स्मृ. १. २७ )

इति । अभोज्याभक्ष्यभक्षणप्रायश्चित्तं त्वेकादशाध्याये प्रपञ्चितम् ।

**अथ परस्वहरणप्रायश्चित्तम् ।**

तत्र परस्वहरणे[2] मनुराह—

'धान्या-ऽन्न-धन-चौर्याणि कृत्वा कामाद् द्विजोत्तमः ।
स्वजातीयगृहादेव[3] कृच्छ्राब्देन विशुद्ध्यति ॥
मनुष्याणां तु हरणे स्त्रीणां क्षेत्र-गृहस्य च ।
कूप-वापी-जलानां च शुद्धिश्चान्द्रायणं स्मृतम् ॥
द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः[4] ।
चरेत् सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये[5] ॥
भक्ष्य-भोज्यापहरणे यान-शय्यासनस्य च ।
पुष्प-मूल-फलानां च पञ्चगव्यं विशोधनम् ॥
तृण-काष्ठ-द्रुमाणां च शुष्कान्नस्य[6] गुडस्य च ।

---

* 'कौमारदार'—इत्यनेन ब्राह्मेण विधिना कौमारे वयस्यूढा स्त्री उपलक्षिता भवति । तस्या एव त्यागे दोषः । न तु गान्धर्वाद्यूढाया इति तात्पर्यम् ।

---

१. H. omits following —

अभोज्याभक्ष्यभक्षणप्रायश्चित्तं तु एकादशाध्याये प्रपञ्चितम् ।
तत्र परस्वहरणे मनुराह—
'धान्याऽन्न-धनचौर्याणि कृत्वा कामाद् द्विजोत्तम
सजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति ॥;

while G. reads अभोज्यभक्षणे for अभोज्याभक्ष्यभक्षणे. २. J reads परस्वग्रहणे for परस्वहरणे. ३. I. reads सजातीय- for स्वजातीय-. ४. The text reads -वेश्मत for -वेश्मनः. ५ B. and D read तन्निर्यात्यविशुद्धये for तन्निर्यात्यात्मशुद्धये. ६. I. reads शुकान्नस्य for शुष्कान्नस्य

चैलं[1]-चर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥
मणि-मुक्ता-प्रवालानां ताम्रस्य रजतस्य च ।
अयः कांस्योपलानां च द्वादशाहं कणान्नता ॥
कार्पास-कीटजोर्णानां द्विशफैकशफस्य[2] च ।
पक्षि-गन्धौषधीनां च रज्ज्वाश्चैव त्र्यहं पयः'
(म. स्मृ. ११. १६२–१६८)

इति। एतेषां विषयाणां मध्ये धान्यस्य परिमाणविशेषेण व्रतविशेषः स्मृत्यन्तरेऽभिहितः—

'धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिके[3] वधः'।

इति। यत्तु जाबालिनोक्तम्—

'तिल-धान्या-ऽन्न-वस्त्राणां शय्यानामा[4]मिषस्य च ।
संवत्सरार्धं कुर्वीत व्रतमेतत्समाहितः' ॥

इति तदेतदकाम[5]कृतविषयम्। अल्पत्वात्। भक्ष्यस्य तु सकृद्भोजनपर्याप्तिक[6]स्यापहारे पैठीनसिराह—

'भक्ष्य-भोज्यान्नस्योदरपूरणमात्रहरणे
त्रिरात्रं पञ्चगव्याहारः'।

इति। यानि तु मनूक्तेषु विषयेषु व्रतान्तराण्यन्यैर्मुनिभि-

---

१ J. reads तैल-; while B. D I. and the text चेल for चैल. २. B C. D. E. G. H. and J. read द्विखुरैकखुरस्य for द्विशफैक-शफस्य. ३. B. and D. read ऽभ्यधिको and I ऽभ्यधिक for ऽभ्यधिके, while H. हृतेऽभ्याधिके वध for हरतोऽभ्यधिके वध.. ४ B. and D read शय्याया for शय्यानाम्. ५ H reads कामकृताविषयम्। अल्पभक्ष्यस्य तु for अकामकृतविषयम्। अल्पत्वात्। भक्ष्यस्य तु। ६ We follow here A. and I., while all others read सकृद्भोजनपर्याप्तादधिकस्यापहारे, but it is quite contrary to the quoted Sûtra.

'कौमारदारत्यागी* मासं पयोभक्षः शुद्ध्यति' ।

( शा. स्मृ. १. २७ )

इति । अभोज्याभक्ष्यभक्षणप्रायश्चित्तं त्वेकादशाध्याये प्रपञ्चितम् ।

**अथ परस्वहरणप्रायश्चित्तम् ।**

तत्र परस्वहरणे मनुराह—

'धान्या-ऽन्न-धन-चौर्याणि कृत्वा कामाद् द्विजोत्तमः ।
स्वजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति ॥
मनुष्याणां तु हरणे स्त्रीणां क्षेत्र-गृहस्य च ।
कूप-वापी-जलानां च शुद्धिश्चान्द्रायणं स्मृतम् ॥
द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः ।
चरेत् सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥
भक्ष्य-भोज्यापहरणे यान-शय्यासनस्य च ।
पुष्प-मूल-फलानां च पञ्चगव्यं विशोधनम् ॥
तृण-काष्ठ-द्रुमाणां च शुष्कान्नस्य गुडस्य च ।

* 'कौमारदार'—इत्यनेन ब्राह्मेण विधिना कौमारे वयस्यूढा स्त्री उपलक्षिता भवति। तस्या एव त्यागे दोषः । नतु गान्धर्वाद्यूढाया इति तात्पर्यम्।

१. H. omits following :—

अभोज्याभक्ष्यभक्षणप्रायश्चित्तं तु एकादशाध्याये प्रपञ्चितम् ।
तत्र परस्वहरणे मनुराह—
'धान्याऽन्न-धनचौर्याणि कृत्वा कामाद् द्विजोत्तम ।
सजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति ॥;

while G. reads अभोज्यभक्षणे for अभोज्याभक्ष्यभक्षणे. २. J reads परस्वग्रहणे for परस्वहरणे. ३ I. reads सजातीय- for स्वजातीय-. ४. The text reads -वेश्मत for -वेश्मनः. ५. B. and D read तन्निर्यात्यविशुद्धये for तन्निर्यात्यात्मशुद्धये. ६. I. reads शुकान्नस्य for शुष्कान्नस्य.

चैले-चर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥
मणि-मुक्ता-प्रवालानां ताम्रस्य रजतस्य च ।
अयः कांस्योपलानां च द्वादशाहं कणान्नता ॥
कार्पास-कीटजोर्णानां द्विशफैकशफस्य च ।
पक्षि-गन्धौषधीनां च रज्ज्वाश्चैव त्र्यहं पयः' ॥[1]
(म. स्मृ. ११. १६२–१६८)

इति। एतेषां विषयाणां मध्ये धान्यस्य परिमाणविशेषेण व्रतविशेषः स्मृत्यन्तरे ऽभिहितः—

'धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिके वधः'।

इति। यत्तु जाबालिनोक्तम्—

'तिल-धान्या-ऽन्न-वस्त्राणा शय्यानामामिषस्य च ।
संवत्सरार्धं कुर्वीत व्रतमेतत्समाहितः' ॥

इति तदेतदकामकृतविषयम्। अल्पत्वात्। भक्ष्यस्य तु सकृद्भोजनपर्याप्तिकस्यापहारे पैठीनसिराह—

'भक्ष्य-भोज्यान्नस्योदरपूरणमात्रहरणे
त्रिरात्रं पञ्चगव्याहारः'।

इति। यानि तु मनूक्तेषु विषयेषु व्रतान्तराण्यन्यैर्मुनिभि-

---

१ J. reads तैल-; while B. D. I and the text चेल for चैल. २. B C. D. E. G. H and J read द्विखुरैकखुरस्य for द्विशफैकशफस्य. ३. B. and D. read ऽभ्यधिको and I. ऽभ्यधिक for ऽभ्यधिके, while H. हृतेऽभ्याधिके वध for हरतोऽभ्यधिके वध. ४ B and D read शय्याया for शय्यानाम्. ५. H reads कामकृतविषयम्। अल्पभक्ष्यस्य तु for अकामकृतविषयम्। अल्पत्वात्। भक्ष्यस्य तु। ६ We follow here A and I., while all others read सकृद्भोजनपर्याप्तादधिकस्यापहारे, but it is quite contrary to the quoted Sûtra.

दर्शितानि तेषु व्रतेषु यानि समानि न तत्र विवादः । न्यूनानामकामकारविषयत्वं अधिकाना तु कामकृताभ्यासविषयत्वमिति विवेकः । तत्र वचनानि—

'द्रव्याणामल्पसाराणां सान्तपनम् । (७) भक्ष्य-भोज्य-यान[1]-शय्यासन-मूल-पुष्प-फलानां हरणे पञ्चगव्यपानम् । (८) तृण-काष्ठ द्रुम-शुष्कान्न-गुड-वस्त्र-चर्मामिषाणां त्रिरात्रमुपवसेत् । (९) मणि-मुक्ता-प्रवालानां ताम्र-रजता-ऽयः-[2]कांस्यानां द्वादशाहं कणानश्नीयात् । (१०) कार्पास-कीटजोर्णाद्यपहरणे त्रिरात्रं पयसा वर्तेत । (११) द्विशफैकशफहरणे[3] त्रिरात्रमुपवसेत् (१२) पक्षि[4]-गन्धौषधि-रज्जु-वैदलानामपहरणे दिनमुपवसेत् । (१३)

द[5]त्वैवापहृतं द्रव्यं धनिकस्याभ्युपाय[6]तः ।
प्रायश्चित्तं ततः कुर्यात् कल्मषस्यापनुत्तये' ॥ (१४)
(वि. स्मृ. ५२. ७–१४)

इति । जाबालिः—

'अश्व-गो-भूमि-कन्याश्च हृत्वा चान्द्रायणं चरेत् ।
अपहृत्य पशून् क्षुद्रान् प्राजापत्यं समाचरेत् ॥
गुड-कार्पास-धान्यानि सर्पिर्लवणमेव च ।
पक्वान्नमौषधं तैल शय्यां वास उपानहौ ॥

१ The text and G. read -पान for -यान- and the text omits -हरणे. २. G. reads -ताम्र-रजताद्यय -. ३ The text reads अपहरणे for -हरणे. ४. G. and H omit this Sûtra ५ B and D read यत्रैवोपहृत for दत्त्वैवापहृत. ६. The text reads ऽभ्युपायत..

कांस्या-ऽयस्ताम्र-सीसं वा कृच्छ्रं[१] कृच्छ्रार्धमेव च ।
उदके फल-मूलेषु पुष्प-पर्णं[२]-सुगन्धिषु ॥
मृद्भाण्ड[३]-मधु-मांसेषु कृच्छ्रपादो विधीयते ।
*व्यापादनापहारेषु सन्तोष्य स्वामिनं ततः ॥
पापं निवेद्य विप्रेभ्यः प्रायश्चित्तेन युज्यते ।
अपहृत्य तु वर्णानां धनं विप्रः प्रमादतः ॥
प्रायश्चित्तं च यत्प्रोक्तं ब्राह्मणानुमते[४] चरेत् ।
राजस्वस्यापहरणे[५] रमणीनां† जनस्य च ॥
धनापहरणे चैव कुर्यात्संवत्सरव्रतम्' ।

इति । परदारगमनस्य तु प्रायश्चित्तं दशमाध्यायेऽभिहितम् ।

अयाज्ययाजनप्रायश्चित्तम् ।

अयाज्ययाजने मनुराह–

*व्यापादनं तत्तद्द्रव्यनाशः । अपहारो ऽपहरणम् । तत्र प्रथमं तद्द्रव्यस्वामिनं प्रसाद्य अनन्तरं विप्रेभ्यः पापं निवेद्य प्रायश्चित्तमाचरेत् ।

†अत्र 'रमणी'शब्देन सामान्यवनिता, वेश्योपलक्षितेति प्रतिभाति। राजद्रव्यवत् वेश्याद्रव्यमपि प्रतिग्रहानर्हमिति मन्वादिभिरुक्तम् । अथवा 'जनस्य रमणीनां' परस्त्रीणां परकीयधनस्य चापहरणे इत्येव व्याख्यातुमुचितं भवेत् ।

१. B. and D. substitute सकृत् for कृच्छ्र and वा for च. २. H. omits फल-मूलेषु, *but it seems a mistake, while* E and I पुष्पवर्ण- *for* पुष्प-पर्ण-. ३. B and D. read मृद्भाण्डसमस्तेषु for मृद्भाण्ड-मधु-मांसेषु and the next line.—

व्यापादनीयहारेषु सन्तोष्य स्वां तनु तत ।
for
व्यापादनापहारेषु सतोष्य स्वामिनं ततः ।.

४. B. D and G. read ब्राह्मणानुमतं for ब्राह्मणानुमते ५. C. F G. and H. read राजन्यस्यापहरणे and J राजसस्यापहरणे both for राजस्वस्यापहरणे, while A reads मणीना च जनस्य वा for रमणीनां जनस्य च.

'व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति' ॥
( म. स्मृ. ११. १९७ )

इति । यत्तु प्रचेतसा शूद्रयाजकादीननुक्रम्योक्तम्–

'एते* पञ्चतपो-ऽभ्रावकाश-जलशयनाद्यनुष्ठेयुः क्रमेण ग्रीष्म-वर्षा-हेमन्तेषु । मासं गोमूत्र-यावकमश्नीयुः' ।

इति तत् कामकृताभ्यासविषयम् । यत्तु यमेनोक्तम्–

'पुरोधाः शूद्रवर्णस्य ब्राह्मणो यः प्रवर्तते ।
स्नेहादर्थप्रसङ्गाद्वा तस्य कृच्छ्रं विशोधनम्' ॥
( य. स्मृ. ६. ९ )

इति तदशक्तविषयम् । यत्तु गौतमेनोक्तम्–

'निषिद्धमन्त्रप्रयोगे सहस्रानुवाकं जपेत्' ।
( गौ. स्मृ. २२. ३३ )

---

* अत्र मूलपुस्तकोपलब्ध्यभावात्-'ऽभ्रावकाश'-इत्यस्य शुद्धः पाठो न निश्चेतुं शक्यते । सर्वेष्वप्यादर्शपुस्तकेषु न्यूनाधिक्येनाशुद्धा एव पाठा दृश्यन्ते । वाक्यार्थस्तु–ग्रीष्मे पञ्चतपाः वर्षासु वृष्टिसहः हेमन्ते जलशायी भवेदिति । चतुर्षु दिक्षु चतुरोऽग्नीन् संस्थाप्य तन्मध्ये स्थित्वा पञ्चमं सूर्यतापं सहेत् इति पंचतपाः । जलशयनं च उदके आकण्ठमग्नस्तिष्ठेत् इति संक्षेपः ।

---

१ C F G. and H read अन्तकर्म, while J. येषामन्तकस्य च for परेषामन्त्यकर्म च २ B D and H. read अहीना for अहीन. ३. C. and F. तयोस्तावकाश- and G. -तपोऽभ्रावकीश- for -तपोऽभ्रावकाश-, while I. -तपोभुमौ जलशयनाद्यनुष्ठेयम् for -तपोऽभ्रावकाशजलयनाद्यनुष्ठेयु ४. G. and J substitute -च for वा ५. text प्रतिषिद्धमन्त्रयोगे सहस्रनुवाकश्चेत् and, except A., add सति to प्रयोगे.

इति तत् कामतोऽभ्यासविषयम्। यत्तु पैठीनसिनोक्तम्–

'शूद्रयाजकः सर्वद्रव्यपरित्यागात् पूतो भवति।
प्राणायामसहस्रेषु दशकृत्वोऽभ्यस्तेषु'।

इति तदकामतोऽभ्यासविषयम्। असत्प्रतिग्रहे याज्ञवल्क्य आह–

'गोष्ठे वसन्[2]ब्रह्मचारी मासमेकं पयोव्रतम्।
गायत्रीजाप्यनिरतः शुद्ध्यतेऽसत्प्रतिग्रहात्'॥
(या. स्मृ. ३. २९०)

इति। अत्र जपसङ्ख्या मनुना दर्शिता–

'जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात्'॥
(म. स्मृ. ११. १९४)

इति। एतच्च दातृ-द्रव्ययोरुभयोः[3]सत्त्वे वेदितव्यम्। अन्यतरस्यासत्त्वे तु षट्त्रिंशन्मते दर्शितम्–

'पवित्रेष्ट्या विशुद्ध्यन्ति सर्वे घोराः प्रतिग्रहाः।
ऐन्[4]दवेन मृगारेष्ट्या कयाचिन्मित्रविन्दया॥
देव्या लक्षजपेनैव शुद्ध्यन्ते[5]ऽसत्प्रतिग्रहात्'।

इति। यत्तु वृद्ध[6]हारीतवचनम्–

१. C. F. G. and H read शूद्रस्य याजकः for शूद्रयाजकः. २. I. reads वसेत् for वसन्, while except A. and the text all others पयोव्रत for पयोव्रतं and except A. H. and the text जप्यनिरत for जाप्यनिरतः. ३. B. C. D. and F. omit उभयोः ४ I. reads विन्दवेन, but it seems incorrect. ५. I. substitutes शुद्ध्यते, J. शुद्ध्यतो for शुद्ध्यन्ते and B. and D दुष्परिग्रहात् for ऽसत्प्रतिग्रहात्. ६. G. reads बृहद्धारीत- for वृद्धहारीत-.

'राज्ञः प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत् ।
षष्ठे काले पयोभक्षः पूर्णे मासे प्रमुच्यते ॥
तर्पयित्वा द्विजान् कामैः सततं नियतव्रतः ।
(वृ. हा. स्मृ. ११.७१–७२)

इति तदापदि कुरुक्षेत्रोपरागादौ कृष्णाजिनादिप्रतिग्रह-विषयम् । अल्पद्रव्यपरिग्रहे हारीतः–

'मणि-वासो-गवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत्'।
(हा. स्मृ. २१. ३)

इति । षट्त्रिंशन्मतेऽपि[1]—

'भिक्षामात्रे गृहीते तु पुण्यं मन्त्रमुदीरयेत्' ।

इति । चतुर्विंशतिमतेऽपि—

'प्रतिषिद्धेषु सर्वेषु षष्ठांशं परिकल्पयेत्[2]' ।

इति । दानार्थमिति[3] शेषः । विकर्मणा जीवने तु चान्द्रायणम् । तथा च नटादीन् विकर्मणा जीविनो[4]ऽनुक्रम्य यम आह—

'एतेषामेव[5] सर्वेषां प्रत्यापत्तिस्तु मृग्यताम् ।
भक्ष्यान्न[6]मुपयुञ्जानो द्विजश्चान्द्रायणं चरेत्' ॥
(य. स्मृ. ६. १३)

इति । नारदोऽपि–

---

१. B. C. F. D. G. and H. do not insert ऽपि. २. G reads परिवर्जयेत् for परिकल्पयेत् ३. E adds तत् before दानार्थम्. ४. I. reads जीविनान् for जीविनः. ५. H. reads एतेषां नैव सर्वेषां for एतेषामेव सर्वेषां and गृह्यतां for मृग्यताम्, while I. reads प्रत्यापर्त्ति for प्रत्यापत्ति. ६. C. F. G. and H. substitute भक्ष्यान्नं for भैक्ष्यान्न and I. उपभुञ्जान for उपयुञ्जान.

'कर्मणा गर्हितेनैव यद्वित्तं समुपार्जितम्।
तस्य त्यागेन शुद्ध्यन्ति धर्मस्यान्वेषणेन वा[1] ॥
अप्सु प्रास्येत[2] तद् द्रव्यमन्यायेन यदागतम्।
उपयुक्तानुशिष्टं च[3] देयं वा ब्रह्मवादिने' ॥
( ना. स्मृ. १४. ७-८ )

इति। क्षत्रियादिवधस्य[4] प्रायश्चित्तं षष्ठाध्याये वर्णितम। गोवधस्य त्वष्टम-नवमाध्याययोस्[5]तत् प्रपञ्चितम्।

अविक्रेयविक्रयप्रायश्चित्तम्।

अविक्रेयविक्रयस्य चतुर्विंशतिमते दर्शितम्—
सुराया विक्रयं कृत्वा चरेत् सौम्[6]यचतुष्टयम्*।
लाक्षा-लवण-मांसानां चरेच्चान्द्रायणत्रयम् ॥
मध्वाज्य-तैल-सोमानां चरेच्चान्द्राणद्वयम्।
पयः पायसापूपानां चरेच्चान्द्रायणव्रतम् ॥
[7]दध्याज्येक्षुरसानां च गुड-खण्डादिविक्रये।
सर्वेषां स्नेहपक्वानां पराकं तु समाचरेत् ॥

*सोमसम्बन्धित्वादस्य कृच्छ्रस्य सौम्य इत्यभिधानम्। स च चान्द्रायणकृच्छ्रशब्देनान्यत्राभिहितः।

१. H substitutes च for वा. २ H reads प्रास्येच्च for प्रास्येत ३ G. omits च, while B. and D. read ब्राह्मणाय च for ब्रह्मवादिने. ४ B. and D. omit -वधस्य; while I reads क्षत्रियावधस्य for क्षत्रियादिवधस्य. ५ All, except A. and I., read अष्टम-नवमाध्याये for अष्टम-नवमाध्याययों, while G. has mistaken and omits तु. ६. G reads सोम्य- for सौम्य- ७. G. substitutes मध्वाज्येक्षुरसं and E. दध्याज्येक्षुरसं both for मध्वाज्येक्षुरसानां.

सिद्धान्नविक्रये[1] विप्रः प्राजापत्यं समाचरेत् ।
उपवासं तु तक्रस्य नक्तं काञ्जिकविक्रये ॥
पूगीफलानि मञ्जिष्ठा द्राक्षा खर्जूरमेव च ।
एतेषां विक्रये कृच्छ्रं पनसस्य दिनत्रयम् ।
कदली नारिकेलं च नागरं बीजपूरकम् ।
एतेषां पादकृच्छ्रः स्याज्जम्बीरादेस्तथैव च ॥
कस्तूरिकादिगन्धानां विक्रये कृच्छ्रमाचरेत् ।
कर्पूरादे[2]स्तदर्धं स्याद्दिनं हिंग्वादिविक्रये ॥
तिलानां विक्रयं कृत्वा प्राजापत्यं समाचरेत् ।
यज्ञार्थं कृषिजातांश्च दानलब्धांश्च विक्रयेत्[3] ॥
रक्त[4]-पीतानि वस्त्राणि[5] कृष्णाजिनमथापि[6] वा ।
एतेषां विक्रये कृच्छ्रं गर्गस्य वचनं यथा ॥
गोविक्रयं द्विजः कुर्याल्लाभार्थं धनमोहितः ।
प्राजापत्यं प्रकुर्वीत गजानामैन्दवं स्मृतम् ॥
खरा-ऽश्वा-ऽजाविकानां च करभाणां[7] च विक्रये ।

---

१. B. and D. read शिष्टान्न- for सिद्धान्न-. २ B. and D. read कर्पूरादिः for कर्पूरादेः. ३. H. and I. read विक्रये for विक्रयेत्. ४. H. omits the following lines:—

रक्त-पीतानि वस्त्राणि कृष्णाजिनमथापि वा ।
एतेषां विक्रये कृच्छ्रं गर्गस्य वचनं यथा ॥
गोविक्रयं द्विज कुर्यात् लाभार्थं धनमोहित ।
प्राजापत्यं प्रकुर्वीत गजानामैन्दवं स्मृतम् ॥
खरा-ऽश्वा-ऽजाविकानां च करभाणां च विक्रये ।.

५. C. and F. substitute शास्त्राणि for वस्त्राणि, but it does not give any good sense here. ६. Except A. H. and I. all others read -मथैव च for -मथापि वा ७ I. reads शरभाणां for करभाणां.

पराकं तत्र कुर्वीत नृणां[१] द्विगुणमाचरेत्[*]॥
नारीणां विक्रयं[†] कृत्वा चरेच्चान्द्रायणं व्रतम्।
द्विगुणं पुरुषाणां च व्रतमाहुर्मनीषिणः॥
चान्द्रायणं प्रकुर्वीत एकाहं वेदविक्रये।
अङ्गानां तु पराकं स्यात् स्मृतीनां कृच्छ्रमाचरेत्॥
इतिहासपुराणानां चरेत् सान्तपनं द्विजः।
रहस्य-पञ्चरात्राणां कृच्छ्रं तत्र समाचरेत्॥
गाथानां नीतिशास्त्राणां प्राकृतानां तथैव च।
सर्वासामेव विद्यानां पादकृच्छ्रं समाचरेत्[‡][२]॥

इति। हारीतो ऽपि—

'गुड-तिल-पुष्प-मूल-फल-पक्वान्नविक्रये सौम्यायनम्[३]। लाक्षा-लवण-मधु-मांस-तैल-क्षीर[४]-दधि-तक्र-घृत-गन्ध-चर्म-वाससामन्यतमविक्रये

---

[*] नृणां तत्तज्जातीयपुम्पशूनां विक्रये द्विगुणं पराकद्वयम्।

[†] मनुष्यजातीयस्त्रीणां विक्रये चान्द्रायणम्। तज्जातीयपुरुषाणां विक्रये पूर्ववदेव चान्द्रायणद्वयम्।

[‡] अत्र अङ्गादीना विक्रयो ऽध्यापनरूपेणैवेति भाति। नतु पुस्तकरूपेण। तथा सति सर्वसामान्यमेव प्रायश्चित्त वदेत्। किञ्च 'सर्वासामेव विद्यानाम्' इति उपसंहारात् विद्याविक्रय एवात्र विवक्षितः। न पुस्तकविक्रय इति सुधियो विदा कुर्वन्तु।

---

१ All, except A and I. others, read शुना for नृणा, while G. substitutes द्विगुणमेव च for द्विगुणमाचरेत् २ G adds, इति after आचरेत् ३ B. D and G read सोमपानम्, C. and F. सोमयानम्, E. H. and J. सोमायनम् all for सौम्यायनम् ४ I. omits क्षीर-, while B. and D. read -क्षीर-घृत-गन्ध- क्षौद्र-दधि-तक्र- for दधि-तक्र- घृत- गन्ध-.

चान्द्रायणम् । तथोर्णा-केश-केसर-भू-धेनु-वे-
३श्म-शस्त्र-विक्रये च । मत्स्य-मांस-स्नाय्वस्थि-
-शृङ्ग-नख-शङ्ख-शुक्तिविक्रये तप्तकृच्छ्रम् ।
हिङ्गु-गुग्गुलु-हरिताल-मनःशिला-ऽञ्जन-गैरिक-
क्षार-लवण-मणि-मुक्ता-प्रवाल-वैणव-मृन्मयेषु
च । आराम-तटाकोदपान-पुष्करिणी-सुकृतवि-
क्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारो
दशसहस्रं जपेद्गायत्रीं संवत्सरेण पूतो भवति ।
हीनमानोन्मापनसङ्कीर्णविक्रये च' ।

(हा. स्मृ. ४. ४-१०)

इति । ईदृशेष्वेकविषयबहुव्रतेषु असकृत्पूर्वमुक्तया नीत्या यथायोगं व्यवस्था कल्पनीया ।

परिवित्त्यादीनां चतुर्णां प्रायश्चित्तं चतुर्थाध्याये वर्णितम् ।

अथ व्रात्यप्रायश्चित्तम् ।

व्रात्यो नाम सावित्रीपतितः । तस्य प्रायश्चित्तं मनुराह—

'येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्' ॥

(म. स्मृ. ११. १९१)

१. Except A. and G. others read तथोर्णकेश-केसरि-, while I. तथोर्ण-केशरि- both for तथोर्णा-केश-केसर-. २ B. D H. and J. add -अश्म- after -वेश्म-. ३. C. F. H. G. J. and I. omit -शस्त्र-, while B. and D. substitute -नख- for the same. ४. B. and D. read -हिंगुलु- for -हिंगुगुग्गुलु- and G. हिंगुग्गुल- for the same B. and D. मन-शैलाञ्जन- for मनशिला-ऽञ्जन- and add-शण- after -लवण-. ५. G. omits च. ६. B. D. and G. read हीनमनोन्मानोन्मापनसकरक्कीर्णविक्रये च I. हीनमानोन्मानसंकीर्ण- for हीनमानोन्मापनसकीर्णविक्रये च. ७. I reads असकृत्पूर्वमुक्तानि यानि तषु for असकृत्पूर्वमुक्तया नीत्या, while except A. and I. all others omit यथायोगं and substitute ऊहनीया for कल्पनीया.

इति। वसिष्ठोऽपि—

'पतितसावित्रीक उद्दालकव्रतं चरेत्। (७६) द्वौ मासौ यावकेन वर्तयेत् मासं पयसाऽर्धमासमामिक्षया अष्टरात्रं घृतेन षड्रात्रमयाचितं हविष्यं भुञ्जीत त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेत्। (७७) अश्वमेधावभृतं वा गच्छेत्। (७८) व्रात्यस्तोमेन वा यजेत'। (७९)

( व. स्मृ. ११. ७६–७९ )

इति। तत्र मानवमापद्विषयम्। उद्दालकव्रतं त्वनापद्विषयम्। यत्तु यमेनोक्तम्—

'सावित्री पतिता यस्य दशवर्षाणि पञ्च च।
सशिखं वपनं कृत्वा व्रतं कुर्यात् समाहितः॥
एकविंशतिरात्रं च पिबेत्प्रसृतियावकम्।
हविषा भोजयेच्चैव ब्राह्मणान् सप्तपञ्च* च॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्'।

( य. स्मृ. ६. २७–२९ )

इति तत् मनुसमानविषयम्। यस्य पित्रादयोऽप्यनुपनीताः तस्यापस्तम्बोक्तं द्रष्टव्यम्[१]—

'अथ[२] यस्य पिता पितामह इत्यनुपेतौ[३] स्यातां ते ब्रह्महसंस्तुताः। (३२) तेषामभ्यागमनं भोजनं

* यदि चकारो विकल्पार्थो भवेत्तर्हि सप्त पञ्च वेति स्यात्। अन्यथा सप्तसहितपञ्चाशद्ब्राह्मणान् भोजयेदिति स्यात्।

१ All, except A and I, omit द्रष्टव्यम्　२ Except A. and the text all others omit अथ　३ B. C. D. E F G. H. and J. read -पितामह-श्चानुपनीतौ, while I. पितामह इत्यनुपनीतौ for पिता पितामह इत्यनुपेतौ.

विवाहमिति[2] च वर्जयेत् । (३३) तेषामिच्छतां प्रायश्चित्तम् । (३४) यथा प्रथमेऽतिक्रमे ऋतुरेवं संवत्सरः[3] । (३५) अथोपनयनम्[4] । (३६) ततः संवत्सरमुदकोपस्पर्शनम् । (३७) प्रतिपूरुषं सङ्ख्याय संवत्सरान् यावन्तोऽनुपेताः स्युः । (१) सप्तभिः पावमानीभिः 'यदन्ति यच्च दूरक' इत्येताभिर्यजुःपवित्रेण सामपवित्रेणाङ्गिरसेनेति । (२) अथ वा[4] व्याहृतिभिरेव । (३) अथाऽध्याप्यः । (४) अथ[5] यस्य प्रपितामहादेर्नानुस्मर्यत[6] उपनयनं ते श्मशानसंस्तुताः । (५) तेषामभ्यागमनं भोजनं विवाहमिति च[7] वर्जयेत् । (६) तेषामिच्छतां प्रायश्चित्तम् । (७) द्वादश-

१. Except A. I. and the text all others omit the following —
ब्रह्मघ्नसंस्तुता । तेषामभ्यागमनं भोजन विवाहमिति च वर्जयेत् । (३३) तेषामिच्छतां प्रायश्चित्तम् (३४।।) यथा प्रथमेऽतिक्रमे ऋतुरेवं सवत्सर । (३५) अथोपनयनम् । (३६) तत. संवत्सरमुदकोपस्पर्शनम् । (३७) प्रतिपूरुष सख्याय सवत्सरान्यावन्ताऽनुपेता. स्यु ।। (१) ।। सप्तभि पावमानीभिः 'यदन्ति यच्च दूरक' इत्येताभिर्यजु पवित्रेण सामपवित्रेणाङ्गिरसेनेति । (२) अथवा व्याहृतिभिरेव । (३) अथाध्याप्य । (४) अथ यस्य प्रपितामहादेर्नानुस्मर्यत उपनयन ते श्मशानसंस्तुता । (५) तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् । (६) तेषामिच्छतां प्रायश्चित्तम् ।(७) द्वादशवर्षाणि त्रैविद्यक ब्रह्मचर्यं चरेदथोपनयन तत उदकोपस्पर्शन । पावमान्यादिभि.' । (८),
and read for the above Sûtras —

तस्य वत्सर त्रैविद्यकं ब्रह्मचर्यं यस्य
प्रपितामहादेर्नानुस्मर्यत उपनयन तस्य
द्वादशवर्षाणि त्रैविद्यक ब्रह्मचर्यम्

while I. reads ब्रह्मघ्नसंस्तुत'. २ I does not insert च. ३. The text does not separate this Sûtra and omits सवत्सर. ४ The text substitutes अपि वा for अथ वा. ५. I. omits अथ. ६. The text reads -प्रपितामहादि for -प्रपितामहादे.. ७. I. does not insert च.

वर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनम्। पावमान्यादिभिः[1]।

( आ. ध. सू. १. १. १. ३२-३७. २. १-८ )

इति।

**भृतकाऽध्ययनाध्यापनप्रायश्चित्तम्।**

भृतकाध्ययनाध्यापनयोर्हारीत आह—

'भृतकाध्यापनं कुर्वन्[2] भृतकाध्यापितश्च यः।
अनुयोगप्रदानेन त्रीन् पक्षांस्तु पयः पिबेत्[3]' ॥

इति। द्रुमादिहिंसायां मनुराह—

'फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम्।
गुल्म-वल्ली-लतानां च पुष्पितानां च वीरुधाम्॥
कृष्टजानामौषधीनां जातानां च स्वयं वने।
वृथाऽलम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतम्[4]' ॥

( म. स्मृ. ११. १४२-१४४ )

इति। एतच्च यज्ञार्थवृक्षच्छेदनादिव्यतिरिक्तविषयम्। अत एव याज्ञवल्क्योऽपि[5] वृथेति विशिनष्टि—

'वृक्ष-गुल्म-लता-वीरुच्छेदने जप्यमृक्शतम्।
स्यादोषधिवृथाच्छेदी[6] क्षीराशी गोऽनुगो दिनम्[7]' ॥

( या. स्मृ. ३. २७६ )

---

१ I. omits पावमान्यादिभि and separates one Sûtra into three. २ Except A and J. all others read कृत्वा for कुर्वन्. ३ G. reads पिबन् for पिबेत्. ४ E and the text read पयोव्रत ५. G. reads याज्ञवल्क्येनोक्तम्; while all others except I. वृथाच्छेदीति for वृथेति. ६ The text reads -छेदने for -छेदी. ७ C. F. read हितम् for दिनम्.

इति । यत्तु हारीतेनोक्तम्—

'स्थावर-सरीसृपादीनां वधे यस्येदं प्राणमित्ये-
तयाऽऽज्यं हुत्वा[1] तिलपात्रं ब्राह्मणाय दद्यात्' ।
( हा. स्मृ. २१. ४६ )

इति तदश्वत्थादिपुण्यस्थावरविषयम् । महाफलप्रदस्य पनस-नारीकेलादिवृक्षजातस्य च्छेदनावृत्तौ शङ्ख आह—

'संवत्सरव्रतं कुर्याच्छित्त्वा वृक्षं फलप्रदम्'[2] ।
( शं स्मृ. १७. ४१ )

इति । दृष्टार्थत्वे न दोषः* ।

'फल-पुष्पोपगान् पादपान्न[3] हिंस्यात् ।
कर्षणकार्यार्थमुपहन्यात्' ।

इति स्मरणात्[4] ।

**अथ नास्तिक्यप्रायश्चित्तम्**

नास्तिक्यं तु वाचिकं[5] चेत्तदुपपातकम् । यथाऽऽहुः पौराणिकाः—

'नास्तिकाः त्रिविधाः प्रोक्ता धर्मज्ञैस्तत्त्वदर्शिभिः ।
क्रियादुष्टो मनोदुष्टो वाग्दुष्टश्च तथैव च ॥

*अपवादोऽयम् । यद्यपि फलदवृक्षच्छेदने दोषः पूर्वमुक्तः तथापि छेदने यदि दृष्टार्थत्वं दृष्टप्रयोजनत्वं स्यात् तदा न दोषः, तत्र प्रमाणमाह । फल-पुष्पोपगानिति ।

१. G. reads जुहुयात् for हुत्वा २ The text reads पिप्पलपादपम् for वृक्षं फलप्रदम् ३ H. reads पादपान्कर्षणकार्यार्थमुपहन्यात् for पादपान्न हिंस्यात् कर्षणकार्यार्थमुपहन्यात्' । ४ All others, except I., omit स्मरणात्. ५. I. reads वाचनिक for वाचिकं.

उपपातकस्तु[1] क्रियादुष्टो वाग्दुष्टः पातकः स्मृतः ।
अभ्यासात्तु क्रियादुष्टो महापातक इष्यते' ॥

इति । तत्रोपपातकनास्तिक्ये वसिष्ठ आह—

'नास्तिकः कृच्छ्रं द्वादशरात्रं चरित्वा
विरमेन्नास्तिक्यात्' ।

( व. स्मृ. २१. २९ )

इति । यत्तु शङ्खेनोक्तम्—

'नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्य-
वहारी मिथ्याभिशंसीत्येते पञ्च, संवत्सरं
ब्राह्मणगृहे भैक्षं चरेयुः' ।

इति तदेतत्[2] महापातकनास्तिक्यविषयम् ।

व्रतलोपप्रायश्चित्तम् ।

व्रतलोपिनोऽवकीर्णिव्रतं[3] याज्ञवल्क्य आह—

'अवकीर्णी भवेद्गत्वा[4] ब्रह्मचारी तु योषितम् ।
गर्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति' ॥

( या. स्मृ. ३. २८० )

इति । मनुरपि—

'अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।
स्थालीपाकविधानेन[5] यजेत निर्ऋतिं निशि ॥ (११८)

---

१ I. reads उपपातकी तु वाग्दुष्टो मनोदुष्टोऽनुपातकी for उपपातकस्तु क्रियादुष्टो वाग्दुष्ट पातक स्मृत and G. reads उपपातमनोदुष्टो वाग्दुष्ट पातक स्मृत for the same २ B. and D. read तदेतत्पातक नास्तिक्यविषयम् and C E. F. G. H. and J. तदेतत्पातकनास्तिक्यविषयम्, the latter seems to be incorrect and the first does not give proper sense ३. B. and D. read ऽवकीर्णिनो व्रत, C. F. J. ऽवकीर्ण व्रत and G. and H. ऽवकीर्णव्रत all for ऽवकीर्णिव्रत ४. H. reads हुत्वा for गत्वा ५. The text reads पाकयज्ञविधानेन for स्थालीपाकविधानेन.

हुत्वाग्निं विधिवद्धोमं[1] अन्ततश्च सम्मेत्यृचा[2]* ।
वातेन्द्र[3]-गुरु-वह्नीनां जुहुयात् सर्पिषाऽऽहुतीः ॥ (११९)
एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ।
सप्तागारान्[4] चरेद्भैक्ष्यं स्वकर्म परिकीर्तयन् ॥ (१२२)
तेभ्यो लब्धेन भैक्षेण वर्तयन्नेककालिकम् ।
उपस्पृशंस्त्रिषवणम्[5] अब्देन स विशुद्ध्यति ' ॥
(म. स्मृ. ११. ११८-१२३)

इति । वसिष्ठोऽपि—

'ब्रह्मचारी चेत् स्त्रियमुपेयादरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्दभं पशुमालभेत[6] । (१) नैर्ऋतं वा चरुं निर्वपेत् । (२)

---

*'काणः' इत्ययं विशेषोऽत्र द्रष्टव्यः । नैर्ऋतदैवतैर्मन्त्रैः प्रधान-देवतायै वपादिहोमान् हुत्वा तदन्ते—

'सम्मा सिञ्चन्तु मरुतः समिन्द्रः सम्बृहस्पतिः ।
सम्मायमग्निः सिञ्चतु प्रजया च धनेन च' ॥

इत्येतेन मन्त्रेण मारुतेन्द्र-बृहस्पत्यग्नीनां घृतेनाहुतीर्जुहुयात् । केषुचित्पुस्तकेषु समासिंचतीति पाठः । केषुचिच्च शमित्यृचेति पाठः । तत्र शमग्निरग्निरिति ऋक् ग्राह्या स्यात् । वस्तुतस्तु इदमप्रामाणिकमिति प्रतिभाति । विज्ञानेश्वरस्तु—

'समायमद्भिः सिञ्चन्तां यशसा ब्रह्मवर्चसेन'
इति पठति तदपि चिन्त्यम् ।

---

१ All others, except A I and the text, read होमान् for होम. २. B. C D. E. F. and I. read समि-त्यृचा, E. G. H. and J शमित्यृचा both for सम्मेत्यृचा ३. C D E F. G. and J read वायु- for वात. ४ G. reads सप्तागारे for सप्तागारान्. ५ The text adds तु after त्रिषवण. ६. The text reads आलभेत् for आलभेत.

तस्य जुहुयात्—कामाय स्वाहा, कामकामाय स्वाहा, निर्ऋतये स्वाहा । रक्षो देवताभ्यः स्वाहा'। (३)

(व. स्मृ. २३. १–३)

इति । तत्र श्रोत्रियस्य पशुरश्रोत्रियस्य चरुरिति द्रष्टव्यम् । शङ्खस्तु* वर्णभेदेन व्रतविशेषमाह—

'गुप्तायां वैश्यायामवकीर्णः संवत्सरं त्रिषवणमनुतिष्ठेत् क्षत्रियायां द्वे वर्षे । ब्राह्मण्यां त्रीणि वर्षाणि*'।

इति । यदप्यङ्गिरसोक्तम्—

'अवकीर्णिनिमित्तं तु ब्रह्महत्याव्रतं चरेत् ।
चीरवासास्तु षण्मासान् तथा मुच्येत किल्बिषात्' ॥

इति तदीषद्व्यभिचारिणीविषयम् । अत्यन्तव्यभिचारिणीषु पुनः शङ्ख आह—

---

*या स्त्री वैवाहिके पत्यौ मृते जीवति वा तमुत्सृज्य वञ्चयित्वा वान्यमेकमेवाश्रयेत् । न तु कुलटा भवेत् सा गुप्तेत्यभिधीयते । तादृशवैश्यजातीयस्त्रियामवकीर्णः क्षत्रियाब्राह्मण्योश्चावकीर्णः उक्तं प्रायश्चित्तमाचरेदित्यन्वयः ।

---

१ All, except I and the text, add तत्र before तस्य २. B. D. G. and J omit कामकामाय स्वाहा, while except A. B. D. and the text omit निर्ऋतये स्वाहा and B D. and the text read नैर्ऋत्यै for निर्ऋतये. ३. B. C. and D. F. omit पशु अश्रोत्रियस्य. The Vijñâneśwara quotes following Sûtras under the name of Sankha-Likhitan and it may be possible. ४ I reads अवकीर्णी for अवकीर्ण. ५. Except A. C. F. G. I. all others read षण्मासात्. ६. B. D. and G read तदेतत् for तदीषत् ७. B. and D. read अत्यन्तव्यभिचारितायां and C. F. G. H. and J. अत्यन्तव्यभिचारितासु all for अत्यन्तव्यभिचारिणीषु.

'स्वैरिण्यां ब्राह्मण्यामवकीर्णः षड्रात्रमुपोषितो गां दद्यात् । क्षत्रियायामुपोषितस्त्रिरात्रं घृतपात्रं दद्यात् । वैश्यायां चतुर्थकालाहारो ब्राह्मणान् भोजयित्वा यवसभारं च गोभ्यो दद्यात् । वृषल्यामवकीर्णः सचैलस्नात उदकुम्भं ब्राह्मणाय दद्यात् । गोष्ववकीर्णः प्राजापत्यं चरेत् । रण्डायामवकीर्णः पलालभारं ससिमाषं च दद्यात्' ।

इति । अत्र च

'ब्राह्मणस्यार्धं क्षत्रियैः'

इति न्यायो नास्ति किन्तु समानमेव त्रयाणां वर्णानाम् । तदाह शाण्डिल्यः—

'अवकीर्णी द्विजो राजा वैश्यश्चापि खरेण तु ।
इष्ट्वा भैक्षाशिनो नित्यं शुद्ध्यन्त्यब्दात् समाहिताः' ॥

इति । अभ्यासे कण्व आह—

'प्रथमे दिवसे रात्राववकीर्णी गर्दभेन तु ।
यजेदेवं यथाभ्यासमब्देनैकेन शुद्ध्यति' ॥

१. Except A. and I. all others omit घृतपात्र दद्यात्. २ B and D. omit च. ३ We follow here A. and I., while all others read षण्डायां for रण्डायां and G. सपलालभार for पलालभारं Vijñáneśwara also reads षण्डायां ४. I. reads क्षत्रियस्य for क्षत्रिये ५. G. substitutes तथा for तत्. ६ G. reads अवकीर्णा for अवकीर्णी ७. We are unable to find out the proper reading of this quotation. B C D E. F. G. H. and J read प्रथमे दिवसे रात्राववकीर्णी गर्दभेन तु यजेतु । एव यथाऽभ्यासमब्देनैकेन शुद्ध्यति ॥, while G omits तु and I. reads अप्रथमे दिवसे रात्राववकीर्णी गर्दभेन यजेत् । यो यथाकुरुतेऽभ्यासमब्देनैकेन शुद्ध्यति ॥.

इति। तत्र विशेषमाह गौतमः—

'तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रैः[1]
सप्त गृहान् भैक्षं चरेत् कर्माचक्षाणः'।
(गौ. स्मृ. २४. १६)

इति। अवकीर्णिलक्षणमाह जातूकर्ण्यः—

'स्कन्दितं[2] व्रतिना रेतो येन स्याद्ब्रह्मचारिणा।
कामतोऽकामतः प्राहुरवकीर्णीति तं बुधाः'॥

इति। यति-[3]वनस्थयोस्त्वधिकं व्रतमाह शाण्डिल्यः—

'वानप्रस्थो यतिश्चैव स्कन्दने[4] सति कामतः।
पराकत्रयसंयुक्तमवकीर्णिव्रतं चरेत्'॥

इति। यतेः पुनर्गार्हस्थ्यस्वीकारे संवर्त आह—

'संन्यस्य[5] दुर्मतिः कश्चित् प्रत्यापत्तिं[6] व्रजेद्यदि।
स कुर्यात् कृच्छ्रमश्रान्तः षण्मासान् प्रत्यनन्तरम्'॥
(सं. स्मृ. १.९९)

---

१ G I and J read लोहितपात्र for लोहितपात्र. २ C D F G and H substitute खण्डित for स्कन्दित, while I खण्डितव्रतिना for स्कन्दित व्रतिना ३. C and F omit यति- ४ Except A. and J, all others substitute खण्डणे for स्कन्दने ५ B and D omit the following.—

'संन्यस्य दुर्मति कश्चित्प्रत्यापत्ति व्रजेद्यदि।
स कुर्यात्कृच्छ्रमश्रान्त षण्मासान् प्रत्यनन्तरम्'॥

इति। वृद्धपराशरोऽपि—

'य प्रत्यवसितो विप्र प्रव्रज्यातो विनिर्गत।
अनाशकनिवृत्तश्च गार्हस्थ्य च चिकीर्षति॥
चरेत षाण्मासिक कृच्छ्र नियतात्मा समाहित।
चरेत् त्रीणि च कृच्छ्राणि त्रीणि चान्द्रायणानि च॥

६. H. reads प्रत्यायत्यं for प्रत्यापत्ति and the text reads.—

- - - - - - - अपत्यार्थं स्त्रिय व्रजेत्।
स कुर्यात् कृच्छ्रमश्रान्त षण्मासान्तदनन्तरम्'॥,

while I reads प्रत्यह व्रतम् for प्रत्यनन्तरम्.

इति । वृद्धपराशरोऽपि—

'यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः ।
अनाशकनिवृत्तश्च गार्हस्थ्यं च चिकीर्षति ॥
चरेत् षाण्मासिकं कृच्छ्रं नियतात्मा समाहितः ।
चरेत्त्रीणि च कृच्छ्राणि त्रीणि चान्द्रायणानि च ॥
जातकर्मादिभिः सर्वैः संस्कृतः शुद्धि

इति । तत्र चा-

वेऽयस्य कृच्छ्रत्रयमिति व्यवस्था । अत्र षा-

सका व्यव-

स्थापनीयमित्यन्ये ।

त मनुः

'अकृत्वा भैक्षचरणमसमिद्ध्य च पावकम् ।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्' ॥

( म. स्मृ. २. १८७ )

विज्ञानेश्वरस्तु—'ब्राह्मणस्यैव शक्ति-सकृदभ्यासाद्यपेक्षया व्यवस्थितं प्रायश्चित्तं द्रष्टव्यम्'— इत्याह ।

---

१. C and F read तत्पाराशरोऽपि. The Vijñâneśvara quotes this following line under the name of Parâśara (*vide* 3 280 Com ) not Vridh Parâśara, but these lines do not occur in the text of Parâśara २ Vijñâneśvara substitutes चेत् for च Except I., all others omit this line —

चरेत्षाण्मासिक कृच्छ्र नियतात्मा समाहितः ।,

but the author Vijñâneśvara explains this line ३ A reads स चेत् त्रीणि. कृच्छ्राणि for चरेत्त्रीणि च कृच्छ्राणि ४ All others, except A. and I., read व्यवस्थापनीयम and omit इत्यन्ये

इति। यत्तु याज्ञवल्क्य आह—

'भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः।
कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयम्॥
उपस्थानं ततः कुर्यात् सम्मासिञ्चत्वनेन तु'।
( या. स्मृ. ३. २८१–२८२ )

इति। होममन्त्रौ तु—

'कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा। कामावपन्नोऽस्म्यवपन्नोऽस्मि कामकामाय स्वाहेति'।
( गौ. स्मृ. २९. ९–१० )

इति। एतच्च गुरुशुश्रूषादिकार्यव्यग्रतयाऽकरणे द्रष्टव्यम्

सुतादिविक्रयप्रायश्चित्तम्।

सुतादिविक्रये उपपातकसाधारणोक्तं प्रायश्चित्तं योज्यम्। यत्तु शङ्खेनोक्तम्—

'देव-गृह-प्रतिश्रयोद्याना-ऽऽराम-सभा-प्रपा-तटाक-पुण्य-सेतु-सुतविक्रयं कृत्वा तप्तकृच्छ्रं चरेत्'।

*'अनातुरः' व्याधिरहितो ब्रह्मचारी। 'सम्मासिञ्चतु' इति मन्त्रः।

१. B. D. G and J. read समासिंच त्वनेन तु for सम्मासिञ्चत्वनेन तु; while I. is quite mistaken here २ G reads कामकीर्णोऽस्मि कामकामाय स्वाहा for कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा. ३ I and the text read कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि, but neither our manuscripts nor Vijñāneśvara follow this reading

इति यच्च वृद्धपराशरेणोक्तम्—

'विक्रीय कन्यकां गां च कृच्छ्रं सान्तपनं चरेत्'।

इति तदापद्यकामतो द्रष्टव्यम्। यत्तु चतुर्विंशतिमतेऽभिहितम्—

'नारीणां विक्रयं कृत्वा चरेच्चान्द्रायणव्रतम्।
द्विगुणं पुरुषस्यैव व्रतमाहुर्मनीषिणः'॥

इति तत्तत्रैव कामतो द्रष्टव्यम्। यत्तु पैठीनसिराह—

'आराम-तटाकोदपान-पुष्करिणी-सुकृत-सुत-विक्रये त्रिषवणस्नाय्यधःशायी ब्रह्मचारी चतुर्थकालाहारः संवत्सरेण पूतो भवति'।

इति तदभ्यासविषयम्॥

कन्यादूषणप्रायश्चित्तम्।

कन्यादूषणे उपपातकसाधारणप्रायश्चित्तं विज्ञेयम्। यत्तु शङ्ख आह—

'कन्यादूषी सोमविक्रयी च कृच्छ्राब्दं चरेयाताम्'।

---

१ B. and D. omit the following —

------ कृच्छ्र सान्तपन चरेत्'।
इति तदापद्यकामतो द्रष्टव्यम्। यत्तु चतुर्विंशतिमतेऽभिहितम्—
'नारीणा विक्रय कृत्वा चरेच्चान्द्रायणव्रतम्।
द्विगुण पुरुषस्यैव ---------'॥

and H. omits the following —

यत्तु चतुर्विंशतिमतेऽभिहितम्—
'नारीणां विक्रय कृत्वा चरेच्चान्द्रायणव्रतम्।
द्विगुण पुरुषस्यैव व्रतमाहुर्मनीषिण'॥
इति तत्तत्रैव कामतो द्रष्टव्यम्।

२ G. C. F and J omit तत before तत्रैव. ३. C. F do not insert सुत. ४ B. D and G. read कृच्छ्रार्धं for कृच्छ्राब्दम्.

इति यच्च हारीतः—

'कन्यादूषी[1] सोमविक्रयी वृषलीपतिः कौमारदारत्यागी सुरा-मद्यपः शूद्रयाजको गुरोः प्रतिहन्ता नास्तिको[2] नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्रह्मघ्नो मित्रघ्नो मिथ्याऽभिशंसी पतितसंव्यवहारी मित्रध्रुक् शरणागतघाती प्रतिरूपकवृत्तिरित्येते[3][4] पञ्चतपोऽभ्रावकाशजलशयनाद्यनुतिष्ठेयुर्ग्रीष्म-वर्षा-हेमन्तेषु[5]। मासं गोमूत्रयावकमश्नीयुः'।

(हा. स्मृ. २. ४-५)

इति तत् प्रातिलोम्येन कन्यादूषणे द्रष्टव्यम्॥

अथ द्यूतादिव्यसनप्रायश्चित्तम्।

द्यूतादिव्यसनेष्वप्युपपातकसाधारणोक्तं प्रायश्चित्तं योज्यम्। यत्तु बौधायनः संवत्सरव्रतमाह—

'अथाशुचिकराणि। (१९) द्यूतमभिचारोऽनाहिताग्नेरुञ्छवृत्तिता समावृत्तस्य भैक्षचर्या तस्य[6] चैव गुरुकुले वास ऊर्ध्वं चतुर्भ्यो

१ B D. and H. read कन्याविदूषी and G. reads कन्याविक्रयी for कन्यादूषी २. J. does not insert नास्तिको. ३. Except I., all others read ब्राह्मण-मित्रघ्नो for ब्रह्मघ्नो मित्रघ्नो, C. and F. add प्रायश्चित्तं विज्ञेयम्। यत्तु शङ्ख आह कन्यादूषी सोमगतघाती प्रतिरूपकवृत्तिः &c., after शरणा-. ४ All others, except A E H. and I., read प्रतिरूपकावृत्ति for प्रतिरूपकवृत्ति. ५. I. reads पञ्चतपोभू-जल-शयनाद्यनुतिष्ठेयु for पञ्चतपोऽभ्रावकाशजलशयनाद्यनुतिष्ठेयु ६. B. and D. read वश्य, C F. आनश्य च, G. वश्य च, H. E. and I. आनाश च and J. वस्स्य च all for तस्य चैव.

मासेभ्यो यश्च[1] तमध्यापयति । नक्षत्रनिर्देशनं[2] चेति । तेषां तु निर्वेशः[3] (१६) द्वादश मासान् द्वादशार्धमासान् द्वादश[4] द्वादशाहान् द्वादश-षडहान् द्वादश त्र्यहान्[5] द्वादशाहं[6] षडहं त्र्यह-मेकाहमिति अशुचिकरनिर्वेशः[7] । (१७)

( बौ. स्मृ. २. १. २. १६–१७ )

इति तदभ्यासविषयम् । यदप्याह[8] प्रचेताः—

अनृतवाक् तस्करो राजभृत्यो वृक्षारोपकवृत्ति-गरदोऽग्निदश्च[9] रथ-गजारोहणवृत्तिः रङ्गोपजीवी कूटपणिकः शूद्रोपाध्यायो वृषलीपतिर्भाण्डिको नक्षत्रोपजीवी श्ववृत्तिर्ब्रह्मजीवी[10] चिकित्सको देवलकः पुरोहितः कितवो मद्यपः कूटकारको-ऽपत्यविक्रयी मनुष्य-पशुविक्रेता चेति[11] । तानु-द्धरेत् समेत्य न्यायतो ब्राह्मणो व्यवस्थया सर्व-द्रव्यत्यागे[12] चतुर्थकालाहाराः संवत्सरं त्रिषवण-

---

१. I. reads -यश्चिरमभ्यापन and the text तस्य चाध्यापन for यश्च तमध्याप यति; while G. adds अभि for अध्यापयति २. The text reads नक्षत्रनिर्देश. for नक्षत्रनिर्देशन ३ We follow here A and the text, while all others omit तेषां तु निर्वेश. ४. G omits द्वादशार्धमासान् द्वादश. ५ G reads षड्-द्वादश-त्र्यहान् for द्वादश षडहान् द्वादश त्र्यहान् ६ Except A and the text, all others omit द्वादशाह षडह ७ The text reads यथाकर्माभ्यास for अशुचिकरनिर्वेश. ८. G omits अपि. ९ B D. and G omit गरदोऽग्निदश्च रथ-गजारोहणवृत्ति while, except A, all others read श्वगणिकः. १० B. D. and H. omit श्ववृत्तिर्ब्रह्मजीवी. ११ G. substitutes वा for च. १२ C. F. and G. read सर्वत्यागे for सर्वद्रव्यत्यागे.

मुपस्पृशेयुः। तस्यान्ते देवपितृतर्पणं गवाह्निकं[1] चेत्येवं व्यवहार्याः'*।

इति तदभ्यासविषयम्॥

### अनाश्रमवासे प्रायश्चित्तम्।

अनाश्रमवासे हारीतेन प्रायश्चित्तमुक्तम्—

'अनाश्रमी संवत्सरं प्राजापत्यं कृच्छ्रं चरित्वाऽऽश्रममुपेयात्। द्वितीयेऽतिकृच्छ्रं तृतीये कृच्छ्रातिकृच्छ्रम्[2] अत ऊर्ध्वं चान्द्रायणम्'॥

इति।

### शूद्रसेवाप्रायश्चित्तम्।

शूद्रसेवायां बौधायन आह—

'[1]समुद्रसंयानम्(२) ब्राह्मणन्यासापहरणम्[4] (३) सर्वापण्यैर्व्यवहरणम्। (५)भूम्यनृतम्। (४) शूद्रसेवनं[6] च। (६) शूद्राभिजननम्। (७) तदपत्यत्वं च। (८) तेषां च[7] निर्वेशः। (९)

* सर्वा अपीमावृत्तयो गर्ह्या ब्राह्मणादित्रैवर्णिकानामेव। अत एव प्रायश्चित्तमपि तेषामेव। न तु येषां पारम्पर्यक्रमेणागता वृक्षारोपणाद्या वृत्तयः। तत्र अनृतवाक् तस्करः गरदोऽग्निदश्च सर्ववर्णसाधारणाः। ब्रह्मजीव्यादयो द्विजा एव।

१ G reads चाह्निकं for गवाह्निकं २ H reads अतिकृच्छ्रातिकृच्छ्रं for कृच्छ्रातिकृच्छ्रं ३ B. and D. read समुद्रयानम्, C and F. अशूद्रयानम् and E G H and J read समुद्रयानम् all for समुद्रसंयानम्, while I reads समुद्रयानं। ब्राह्मणन्यासापहरणे। सर्वापण्यैर्व्यवहरणे। भूम्यनृते।· ४. Th text reads ब्राह्मणस्वन्यासापहरणम् ५ The text interchanges these two Sûtras ६ Except A and I, all others read शूद्रसेवायां च। शूद्रायामभिजायते तदपत्यं च भवति for शूद्रसेवनम्। शूद्राभिजननम्। तदपत्यत्वं च।, while G omits च after सेवायां ७ The text reads एषामन्यतमत्मत्कृत्वा for तेषाञ्च निर्वेशः

चतुर्थकाले मितभोजिनः स्युरपोऽभ्युपेयुः स-
वनानुकल्पम् । स्थानासनाभ्यां विहरन्त
एते त्रिभिर्वर्षैस्तदपहन्ति पापम्' । (१०)
(बौ. स्मृ. २. १. २. २–१०)

इति तद् बहुकालाभ्यासविषयम् ॥

**जातिभ्रंशकरपापप्रायश्चित्तम् ।**

उपपातकानन्तरं जातिभ्रंशकराणि विष्णुनाऽनुक्रान्तानि ।
'ब्राह्मणस्य रुजःकरणम् । (१) अघ्रेयमद्ययो-
र्घ्रातिः । (२) ज्यैह्म्यं पशुषु मैथुनाचरणं पुंसि
च । (३) इति जातिभ्रंशकराणि' ।

इति । तेषु साधारणं प्रायश्चित्तं मनु-विष्णू आहतुः—
'जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया ।
चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया' ॥
(म. स्मृ. ११. १२४; वि. स्मृ. ३८. ७)

इति । तत्र ब्राह्मणस्य रुजःकरणे प्रायश्चित्तमेकादशाध्या-

---

१ I. reads चतुर्थकाल मितभोजनाः and the text चतुर्थकालामितभोजिनः both for चतुर्थकाले मितभोजिनः. २. E. reads सवनानुकल्पे, B and D. सवनानुकूल्यम् for सवनानुकल्पम्. ३ B C D. E F. G. H. and J read तदपहरन्ति and the text तदपघ्नन्ति for तदपहन्ति ४. C. E F G. H. and J. read अपेय- for अघ्रेय-, while G. omits the following portion —
-र्घ्राति जैह्म्यं पशुषु मैथुनाचरण पुंसि च । इति जातिभ्रंशकराणि' ।
इति । तेषु साधारणं प्रायश्चित्त मनु-विष्णू आहतु —
'जातिभ्रंशकर कर्म कृत्वान्यतममिच्छया ।
चरेत्सान्तपन कृच्छ्रं प्राजापत्यमनिच्छया' ॥
इति । तत्र ब्राह्मणस्य रुज करणे.

५ I. reads ज्यैक्ष्य for जैह्म्यं, but it seems quite wrong ६ Except the text, all others omit पुंसि. ७ The Vishnû reads कुर्यात् for चरेत्. ८. I reads अत्र for तत्र.

ये ( ५२–५३ श्लोकाभ्याम् ) ऽभिहितम् । पशु-
मैथुने तु दशमाध्याये (१३ श्लोके ) ऽभिहितम् ॥

सङ्करीकरणपापप्रायश्चित्तम् ।

जातिभ्रंशकरानन्तरं सङ्करीकरणान्यनुक्रान्तवान् विष्णुः–
'ग्राम्यारण्यानां पशूनां हिंसा सङ्करीकरणम्' ।
( वि. स्मृ. ३९. १ )

इति । तत्र साधारणं प्रायश्चित्तं स एवाह–
'सङ्करीकरणं कृत्वा मासमश्नीत यावकम् ।
कृच्छ्रातिकृच्छ्रमथ वा प्रायश्चित्तं तु कारयेत्' ॥
( वि. स्मृ. ३९. २ )

इति । प्रतिपदं तु षष्ठाध्याये (२–१५श्लोकैः)ऽभिहितम् ।

अपात्रीकरणपापप्रायश्चित्तम् ।

'सङ्करीकरणानन्तरमपात्रीकरणमनुक्रान्तवान् विष्णुः–
'निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनमं-
सत्यभाषणं शूद्रसेवनमित्यपात्रीकरणम्' ।
( वि. स्मृ. ४०. १ )

इति । तस्य च साधारणं प्रायश्चित्तं मनुराह–
'अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति ।
शीतकृच्छ्रेण वा शुद्धिर्महासान्तपनेन वा' ॥
( वि. स्मृ. ४०. २ )

१. I omits तु २ All others, except A . G I. and the text, read सकीर्णकरणम् for संकरीकरणम् ३ Here also, except A. G. I. and the text, all read सकीर्णकरणम् for सकरीकरणम्. ४. I. reads कृषिजीवनं for कुसीदजीवनम्. ५. The following quoted verse does not appear in the Manû, but appears in the Vishnû. ६. The Vishnû reads भूयो for शुद्धिः.

इति ॥

**मलिनीकरणपापप्रायश्चित्तम् ।**

अपात्रीकरणानन्तरं मलिनीकरणमनुक्रान्तवान् विष्णुः—

'पक्षिणां जलचराणां जलजानां च घातनम् ।(१)
कृमि-कीटानां च । (२) मद्यानुगतभोजनम् ।(३)
इति मलावहानि' । (४)

( वि॰ स्मृ॰ ४१. १–४ )

इति । तत्र साधारणं प्रायश्चित्तं स एवाह—

'मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम् ।
कृच्छ्रातिकृच्छ्रमथ वा प्रायश्चित्तं विशोधनम्' ॥

( वि॰ स्मृ॰ ४१. ५ )

इति ॥

**प्रायश्चित्तविशेषः**

अथ प्रकीर्णकप्रायश्चित्तविशेषोऽभिधीयते । तत्र शरणागतत्यागे मनुराह—

'शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः ।
संवत्सरं यवाहारस्तत्पापमपसेधति' ॥

( म॰ स्मृ॰ ११. १९८ )

इति । पतितादिसन्निधावध्ययने वसिष्ठ आह—

'पतित-चण्डालारावश्रवणे त्रिरात्रं वाग्य-

---

१. Except A.' and the text, all omit पक्षिणां जलचराणां जलजानां च घातनं and read कृमि-कीटघातन for कृमि-कीटानां च २ B. D. and G read अवसेधति for अपसेधति, while E. has तप्तकृच्छ्रं विशोधनम् before शरणागत परित्यज्य. ३. B. C D. F. and G. read चण्डालशवश्रवणे, but it may be चण्डालारावश्रवणे, while E. I and J. read -चण्डालादिश्रवणे and H. -श्रावणे for -चण्डालारावश्रवणे.

ता अनश्नन्त आसीरन्। (३४) सहस्रपरमां
वाचमभ्यस्य ततः पूता भवन्तीति विज्ञायते'।
(व. स्मृ. २३. ३४-३५)

इति। एतद्बुद्धिपूर्वकविषयम्। अबुद्धिपूर्वके तु[२] षट्त्रिंशन्मतेऽभिहितम्—

'चण्डालश्रोत्रावकाशे[३] श्रुति-स्मृतिपाठे
एकरात्रमभोजनम्'।

इति। सर्पाद्यन्तरागमने[४] तु यम आह—

'सर्पस्य नकुलस्याथ अज-मार्जारयोस्तथा।
मूषिकस्य तथोष्ट्रस्य मण्डूकस्य च योषितः॥
पुरुषस्यैडकस्यापि शुनोऽश्वस्य खरस्य च।
अन्तरागमने सद्यः प्रायश्चित्तमिदं शृणु॥
त्रिरात्रमुपवासश्च त्रिरह्नश्चाभिषेचनम्।
ग्रामान्तरं वा गन्तव्यं जानुभ्यां नात्र संशयः'॥
(य. स्मृ. ६. ४८-५०)

इति। खरोष्ट्रयानारोहणादौ प्रायश्चित्तमाह याज्ञवल्क्यः—

---

१ I. reads वाग्यतोऽनश्नन्नासीनः सहस्रपरमां वाच मभ्यस्य तत पूतो भवतीति. G. and the text omit वाच and the text substitutes -परमं for -परमां, while J. reads सहस्रवरमा वा तदभ्यस्यान्तत पूतो भवतीति G. substitutes अन्तः for ततः; while the text reads वा तदभ्यसन्त २. I omits तु. ३. I. adds कृते after -श्रोत्रावकाशे. ४. J. reads सर्वाद्यन्तरागमने, but it does not give any proper meaning

'प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः ।
नग्नः स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम्'॥
(या. स्मृ. ३. २९१)

इति । इदं चाकामकारविषयम् । कामकारे तु यम आह—
'खरोष्ट्रविषमा नारी समारुह्याथ वा पुमान् ।
यजने याजने कृच्छ्रमग्निश्चैव विनश्यति ॥
'उष्ट्रयानं समारुह्य खरयानं च कामतः ।
सवासा जलमाप्लुत्य प्राणायामेन शुद्ध्यति' ॥
( म. स्मृ. ११. २०१ )

इति ॥

मूत्र-पुरीषप्रायश्चित्तम् ।

अप्सु मूत्र-पुरीषादिकरणे मनुराह—
'विनाऽद्भिरप्सु वाऽप्यार्तः शारीरं सन्निवेश्य तु ।
सचैलो बहिराऽऽप्लुत्य गामालभ्य विशुद्ध्यति' ॥
( म. स्मृ. ११. २०३ )

इति । इदमकामकारविषयम् । कामकारे तु यम आह—

---

१. B. C. D and F. read प्राणायामं, H. प्राणायामो and I प्राणायामं all for प्राणायामी. २. A. I. and J. substitute मनु for यम the following quoted two verses are not found in the text of Manû. The second verse occurs in Manû, but differs in reading in the second half as follows.—

स्नात्वा तु विप्रो दिग्वासा — — — — —॥.

३. This verse is omitted by all others except A. and G. ४. Manû reads तु for च. ५ B. and D. read स्नात, H reads अनार्त and G. आप्याय्य all for आर्त. ६ All others, except A. I. and the text, read सनिषेव्य for सन्निवेश्य, while the text substitutes च for तु ७. I. reads बहुधा for बहिः.

'आपद्गतो विना तोयं शारीरं यो निषेवते।
एकाहं क्षपणं कृत्वा सचैलं स्नानमाचरेत्' ॥
(य. स्मृ. ९. २६)

इति। यच्चाह[1] सुमन्तुः—

'अप्स्वग्नौ वा मेहतस्तप्तकृच्छ्रं कायविशोधनम्[2]' ।

इति तदनार्तपरतया योज्यम्।

**कर्मलोपप्रायश्चित्तम्।**

श्रौत-स्मार्तकर्मादिलोपे मनुराह—

'वेदोदितानां नित्यानां कर्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्' ॥
(म. स्मृ. ११. २०३)

इति। अत्रोपवासस्य प्रतिपदोक्तेष्ट्यादिना समुच्चयः। पञ्चमहायज्ञाद्यकरणे बृहस्पतिराह[3]—

'अनिर्वर्त्य महायज्ञान् यो भुङ्क्ते प्रत्यहं गृही।
अनातुरः सति धने कृच्छ्रार्धेन विशुद्ध्यति ॥
आहिताग्निरुपस्थानं न कुर्याद्यज्ञकर्मणि[4]।
ऋतौ न गच्छेद्भार्यां वा सोऽपि कृच्छ्रार्धमाचरेत्' ॥
(बृ. स्मृ. २. १३-१४)

इति।

**वैषम्यदानप्रायश्चित्तम्॥**

एकपङ्क्त्युपविष्टानां वैषम्येण दानादौ यमः—

---

१ B. C. D E. F. H. and J. read अत्र यदाह and G. for यच्चाह. २. The word कायविशोधनम् occurs only in I. ३ All others, except A. and I., omit आह. ४. B. and D substitute यज्ञकर्मणा for यज्ञकर्मणि.

'न पङ्क्त्यां विषमं दद्यान्न याचेन्न च दापयेत् ।
प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्ततः' ॥

इति । पतितादिसम्भाषणे तु गौतमः—

'न म्लेच्छाशुच्यधार्मिकैः सह सम्भाषेत । (१९)
सम्भाष्य पुण्यकृतो मनसा ध्यायेत् । (२०)
ब्राह्मणेन वा सह सम्भाषेत' । (२१)
(गौ. स्मृ. ९. १९–२१)

इति । अशुचेर्भोजने शातातप आह—

'मूत्रोच्चारं द्विजः कृत्वा अकृत्वा शौचमात्मनः ।
मोहाद्भुक्त्वा त्रिरात्रं स्याद्बुद्ध्वा सान्तपनं चरेत्' ॥
(शा. स्मृ. २. ६४)

इति । वृद्धशातातपोऽपि—

'मूत्रयित्वा व्रजन्मार्गं स्मृतिभ्रंशाज्जलं पिबेत् ॥
अहोरात्रोषितः स्नात्वा जुहुयात्सर्पिषाऽऽहुतीः' ।
(वृ. शा. स्मृ. १३–१४)

---

१. G. omits —
'– – विषम दद्यान्न याचेन्न च दापयेत् ।
प्राजापत्येन कृच्छ्रेण मुच्यते कर्मणस्तत' ॥

२ B. and D read न म्लेच्छैरधार्मिकै omitting -ऽशुचि- C E. F. and G. म्लेच्छाशुद्ध्यधार्मिकै., but the word अशुद्धि seems to be incorrect, both for न म्लेच्छाशुच्यधार्मिकै . ३ G. H and I do not insert सह and J. also does the same. ४. B D. G. and J. read अशुचौ for अशुचे and I. अशुचिभोजने for अशुचेर्भोजने ५. C and F. substitute नत्रोच्चारं for मूत्रोच्चार, but it is meaningless. ६. G. reads भुक्त्वा सतपनं for बुद्ध्वा सान्तपनं. ७. I reads मार्गे for मार्गं.

इति। व्याघ्रोऽपि—

'अस्पृश्यस्पर्शनं कृत्वा यदा भुङ्क्ते गृहाश्रमी।
अकामतस्त्रिरात्रं स्यात् षड्रात्रं कामतश्चरेत्॥
यतिश्चैव वनस्थश्च कुर्यातां तौ तदेवं तु'।

इति। उशना अपि—

'चण्डाल-श्वपचैः स्पृष्टो विण्मूत्रोच्छिष्ट एव च।
त्रिरात्रेण विशुद्धः स्याद्भुक्तोच्छिष्टः षडाचरेत्'॥

इति। बृहस्पतिरपि—

'अस्नात्वा तु यदा भुङ्क्ते पिण्डं दत्त्वा पितुर्व्रती।
स्पृष्ट्वा शवमुदक्यां वा चण्डालं सूतिकां तथा॥
अकामतस्त्रिरात्रं स्याद्बुद्ध्या सान्तपनं चरेत्'।

इति। ब्रह्मसूत्रं विना मूत्र-पुरीषादिकरणे स्मृत्यन्तरे प्रायश्चित्तमुक्तम्—

'विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद् द्विजः।
प्रायश्चित्तमहोरात्रं गायत्र्यष्टशतं तु वा'॥

इति। इदं च कामकारविषयम्। अकामतस्तु—

'पिबतो मेहतश्चैव भुञ्जतो ऽनुपवीतिनः।
प्राणायामत्रयं षट्कं नक्तं च त्रितयं क्रमात्'॥

---

१ J. reads तदैव for तदेव २ Except A, all others read विशुद्धिः for विशुद्धः. ३. I reads दत्वाऽपि तद्व्रती for दत्त्वा पितुर्व्रती. ४ C. F. and G. substitute च for वा ५. G. reads बुध्वा for बुद्ध्या ६ B. and D. omit the following:—

ब्रह्मसूत्रं विना मूत्र-पुरीषादिकरणे स्मृत्यन्तरे प्रायश्चित्तमुक्तम्—
'विना यज्ञोपवीतेन यद्युच्छिष्टो भवेद् द्विजः।

७. I. reads जपेत् for तु वा and G भवेत् for the same; while some substitute च for वा. ८. Except A., all others omit च.

इति । भोजनान्तरमाचमनमकृत्वासनादुत्थाने प्राय-श्चित्तमाश्वमेधिकेऽभिहितम्[१]—

'*यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः ।
सद्यःस्नानं प्रकुर्वीत सोऽन्यथोऽप्रयतो भवेत्' ॥[२]

(भा. आ. प. १०६.२०)

इति । अपाङ्क्तेयपङ्क्तौ भोजने मार्कण्डेय आह—

'अपाङ्क्तेयस्य[३] यः कश्चित् पङ्क्तौ भुङ्क्ते द्विजोत्तमः ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति' ॥

इति । नीलीरक्तवस्त्रधारणे[४] त्वापस्तम्ब आह—

'नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥ (४)
रोमकूपैर्यदाऽऽगच्छेद्रसो नील्यास्तु कस्यचित्[५] ।

* वचनमिदं 'त्रिवेन्द्रम्' नगरीस्थराजकीयपुस्तकसङ्ग्रहस्थभारतान्तर्गते आश्वमेधिके पर्वणि द्रष्टव्यम् । देवनागराक्षरमुद्रितपुस्तकेषु नोपलभ्येत इति शोधकैर्वेदितव्यम् ।

१ B and D. read प्रायश्चित्तमुक्तम् for ऽभिहितम् २ text reads यश्च तिष्ठत्यनाचान्तो भुक्तवान्नासने ततः. and E. and D. read नान्यथा ऽप्रयतो for सोऽन्यथा प्रयतो. ३. B and D. read अपाङ्क्तेयश्च for अपाङ्क्तेयस्य ४. B. C. D. F. G and J. omit the following —

नीलीरक्तवस्त्रधारणे त्वापस्तम्ब आह—
'नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥.

५. The text reads कर्हिचित् for कस्यचित्.

त्रिवर्णेषु च सामान्यं तप्तकृच्छ्रं विशोधनम् ॥ (१)
पालनं विक्रयश्चैव तद्वृत्त्या तूपजीवनम् ।
पतितस्तु भवेद्विप्रः त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥ (२)
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ।
वृथा तस्य महायज्ञा नीलीसूत्रस्य धारणात् ॥ (३)
नीलीमध्ये तु गच्छेद्वा प्रमादाद्ब्राह्मणः क्वचित् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥ (४)
नीलीदारु यदा भिन्द्याद्ब्राह्मणस्य शरीरकम् ।
शोणितं दृश्यते तत्र द्विजश्चान्द्रायणं चरेत् ॥ (५)
स्त्रीणां क्रीडार्थ-संभोगे शयनीये न दुष्यति ॥ (१)
नीलीरक्तेन वस्त्रेण यदन्नमुपनीयते ।
दातारं नोपतिष्ठेत भोक्ता भुञ्जीत किल्बिषम्' ॥ (८)
( आ. स्मृ. ६. १–८ )

---

१ The text does not give the following two lines —

त्रिवर्णेषु च सामान्यं तप्तकृच्छ्रं विशोधनम् ॥
पालन विक्रयश्चैव तद्वृत्त्या तूपजीवनम् ।.

२ B and D. read पावन for पालन ३. We follow here A. and the text, while B. and D read पावनं तु, G. and J. पालनं तु, C. and F quite mistaken, H पातनं तु and I पातक तु all for पतितस्तु, while I. reads विप्रे for विप्र ४ Except A and the text all read व्यपोहति for विशुद्ध्यति ५ H I. and J. read -यज्ञो for -यज्ञा, while the text omits the following —

स्नानं दानं जपो होम स्वाध्याय. पितृतर्पणम् ।
वृथा तस्य महायज्ञा नीलीसूत्रस्य धारणात् ॥.

६ The text reads this verse after the next verse. ७. The text reads यदा गच्छेत् for तु गच्छेद्वा ८ We follow here only A and the text, while I. reads पदा भिन्नात् for यदा भिन्द्यात् and B. C D E F. G. H. and I. read शरीरत and J विशेषतः both for शरीरकम् ९. All others, except A and the text, substitute यत्र for तत्र १०. The text does not insert this line ११. J reads यद्रक्तम् for यदन्नम् १२ The text reads: —

अभोज्य तद् द्विजातीना भुक्त्वा चान्द्रायण चरेत् ।.

इति । भृगुरपि—

'स्त्रीधृता शयने नीली ब्राह्मणस्य न दुष्यति ।
नृपस्य वृद्धवैश्यस्य[1] पर्ववर्ज्यं हि धारणम् ॥
कम्बले पट्टसूत्रे[2] च नीलीरागो न दुष्यति' ।

इति । ब्रह्मतरुनिर्मितखट्वाद्यारोहणे शङ्खः—

'अध्यास्य[3] शयनं यानमासनं पादुके तथा ।
द्विजः पलाशवृक्षस्य त्रिरात्रं तु[4] व्रती भवेत् ॥
क्षत्रियस्तु रणेऽदत्त्वा[5] पृष्ठं प्राणपरायणः ।
संवत्सरं व्रतं कुर्याच्छित्वा पिप्पलपादपम्[6] ॥ (४९)
द्वौ विप्रौ[7] ब्राह्मणा-ऽग्नी वा दम्पती गो-द्विजोत्तमौ ।
अन्तरेण यदा गच्छेत् कृच्छ्रं सान्तपनं चरेत् ॥
होमकाले[8] तथा दोहे स्वाध्याये दारसङ्ग्रहे ।
अन्तरेण यदा गच्छेत् द्विजश्चान्द्रायणं चरेत्' ॥

( शा. स्मृ. १७. ४८–५१ )

---

१ C. F read वृद्धौ वैश्यस्य for वृद्धवैश्यस्य and B. C. D E. F. G. and H. read पर्ववर्ज्यं विधारणम्, while I. स्पर्शो वर्ज्यं तु धारणम् both for पर्ववर्ज्यं हि धारणम् २. B. reads कम्बली पट्टशुभ्र च नीलरागो D reads the same, but substitutes पट्ट for पट्ट ३ B and D. read यद्यस्य for अध्यास्य, but it seems to be a mistake; while G. reads अध्यस्य for the same and the text omits this and following one line ४ I reads त्रिरात्रस्तु for त्रिरात्रं तु ५ We follow here A. and the text, while all others read पृष्ठं दत्वा for ऽदत्त्वा पृष्ठं and the text substitutes दत्त्वा for दत्वा and प्राणपरायणम् for प्राणपरायणः. ६. Except A. and the text all others read वृक्षफलप्रदम् for पिप्पलपादपम्, but the reading is quite useless here. ७. This and the following three lines are not found in the printed copy of the text Bombay edition, but these occur in the manuscript copy. ८. B. and D. omit this and the following one line.

इति। दुःस्वप्नारिष्टदर्शनादौ स एवाह–

'दुःस्वप्नारिष्टदर्शनादौ[१][२] घृतं हिरण्यं च दद्यात्'।

इति। तीर्थयात्रामन्तरेण देशान्तरगमने देवलः प्रायश्चित्तमाह–

'सिन्धु-सौराष्ट्र-सौवीरान्[३] तथा प्रत्यन्तवासिनः।
अङ्ग-वङ्ग-कलिङ्गांश्च[४] गत्वा संस्कारमर्हति'॥
(दे. स्मृ. ६१)

इति। सूर्योदयादिकालशयने[५] प्रायश्चित्तमाह यमः–

'सूर्योदये तु यः शेते सूर्याभ्युदित उच्यते।
अस्तं गते तु यः शेते सूर्यनिर्मुक्त उच्यते॥
ब्रह्मस्तेनावुभौ सम्यगहोरात्रोषितौ[४] शुची।
गायत्र्या दशसाहस्रं कुर्यादेकाह्निकं[६] पृथक्'॥

इति। मनुरपि–

'तं चेदभ्युदियात्[७] सूर्यः शयानं कामकारतः[८]।
निम्लोचेद्वाऽप्यविज्ञानात्[९] जपन्नुपवसेद्दिनम्'॥
(म. स्मृ. २. २२०)

१ All others, except A. and I, omit -ऽरिष्ट-. २. B and D. read स्वारिष्टदर्शने, E and H दुःस्वप्नारिष्टदर्शनात् both for दुःस्वप्नारिष्टदर्शनादौ. ३. J. reads सावीरा for -सौवीरान्. ४ I reads कलिङ्गाद्यान् for कलिङ्गान्त्वा and G पुनः for गत्वा. ५ C. and F. omit सूर्योदयादिकालशयने प्रायश्चित्तमाह यमः, while B and D. omit only यमः ४ Except A and J. all others read अहोरात्रोषितः शुचिः ६ B. and D read कुर्याद्दैवाह्निकं, G. कुर्याद्देवाह्निके both for कुर्यादेकाह्निकं, while I. substitutes बुधः for पृथक्. ७ B. D and G. read अभ्युदित for अभ्युदियात्. ८ The text reads कामचारतः for कामकारतः ९ B and D read निम्लोचेत्वा for निम्लोचेद्वा

इति । गौतमस्तु ब्रह्मचारिणो विशेषमाह–

'सूर्याभ्युदितो ब्रह्मचारी तिष्ठेदहरभुञ्जानो
ऽभ्यस्तमितश्च रात्रिं जपेत् सावित्रीम्' ।

( गौ. स्मृ. २३. २१ )

इति । यति-वनस्थयोर्विशेषमाह वसिष्ठः–

'वनस्थश्च यतिश्चैव सूर्येणाभ्युदितौ यदि ।
ब्रह्मकूर्चाशिनौ भूत्वा जपेतां प्रणवं त्वहः' ॥

( व. स्मृ. २८. ४१ आन्ध्रपुस्तके )

इति । दण्ड-कमण्डल्वादिनाशे प्रायश्चित्तमाह पैठीनसिः–

' नष्टे दण्डकाष्ठे भैक्षं दत्त्वा ब्राह्मणाय तदह-
रुपवसेत् । अन्यं प्रयच्छेद्गुरुः । कमण्डलाव-
प्येवमेव । नष्टायां मेखलायां त्रिवृतमाचरेत्' ।

इति । सन्ध्या-ऽग्निकार्यलोपे संवर्तः–

'सन्ध्यामापदि नोपास्ते अग्निकार्यं यथाविधि ।
सावित्र्यष्टसहस्रं तु जपेत् स्नात्वा समाहितः' ॥

( सं. स्मृ. २. २७ )

इति । स्वशकृन्निरीक्षणे प्रायश्चित्तमाह यमः–

---

१. All others, except A. I. and J, read त्रिरात्र or रात्रिं २. B. C. D. E. F. G. H. I. and J read सूर्येणाभ्युदितौ for सूर्येणाभ्युदितौ. ३ We follow here A. and J, while B. C. D. F. G. and H read गत्वा दत्वा, E. omits दत्वा and I गत्वा तद्दत्वा all for दत्वा ४ G. reads सन्ध्यामपरिभोज्यास्ते for सन्ध्यामापदि नोपास्ते. ५. Except A. and I. all others do not insert यम, but the quoted verse elsewhere is quoted under the same name (Vol. I, Part I, p 226, l. 4).

'प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्।
दृष्ट्वा सूर्यं निरीक्षेत गामग्निं ब्राह्मणं तथा' ॥
(य. स्मृ. ९.१३)

इति। भोजनकालेऽशुचित्वे वृद्धशातातपः—
'यदा भोजनकाले तु अशुचिर्भवति द्विजः।
भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुद्ध्यति ॥
भक्षयित्वा तु[१] तं ग्रासमहोरात्रेण शुद्ध्यति।
अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुद्ध्यति' ॥
(वृ. शा. स्मृ. १६-१७)

इति। श्राद्धे निमन्त्रितस्य कालातिक्रमे यम आह—
'केतनं कारयित्वा तु योऽतिपातयते द्विजः।
ब्रह्महत्यामवाप्नोति[२] शूद्रयोनौ प्रजायते ॥
एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतव्रतः।
यतिचान्द्रायणं चीर्त्वा[३] ततश्चान्द्रायणं चरेत्' ॥
(य. स्मृ. ९. १४-१५)

इति। क्षत्रियाद्युपसंग्रहणे हारीत आह[४]—
'क्षत्रियाभिवादनेऽहोरात्रमुपवसेत्। वै-
श्यस्यापि[६]। शूद्रस्याभिवादने त्रिरा-
त्रमुपवासः[५]। तथा शय्याऽऽरूढपादुको-[७]

---

१. G. substitutes च for तु २ B. C D. G. and H. read समाप्नोति for अवाप्नोति. ३. A. reads तीर्त्वा for चीर्त्वा ४ J. omits क्षत्रियाद्युप-संग्रहणे हारीत आह—, while B. and D. read हारीत· omitting आह. ५ H. and I. read उपवास·; while I inserts स्यात् after उपवासः. ६. C. F. and J. omit अपि। शूद्रस्या- and read वैश्यस्याभिवादने, while B and D omit अपि ७. B. and D. omit शय्यारूढपादुकोपानदारोपितपादोच्छिष्टां-धकारस्थ-श्राद्धकृज्जपदेवतापूजाभिरताऽभिवादने.

पानदारोपित[1]पादोच्छिष्टा-ऽन्धकारस्थ-श्राद्ध-
कृज्जपदेवतापूजाभिरताऽभिवादने त्रिरात्र-
मुपवासः स्यात् । अन्यत्र निमन्त्रिते[2]ना-
न्यत्र भोजनेऽपि त्रिरात्रमुपवा[3]सः' ।

( हा. स्मृ. २१. ७-१२ )

इति ॥

अभिशंसनप्रायश्चित्तम् ।

मिथ्याभिशंसने* प्रायश्चित्तमाह याज्ञवल्क्यः—

'महापापोपपापाभ्यां योऽभिशंसेन्मृषा प[4]रम् ।
अ[5]ब्भक्षो मासमासीत स जापी नियतेन्द्रियः' ॥

( या. स्मृ. ३. २८९ )

इति । जपश्च शुद्धवतीनां† कार्यः । तथा च वसिष्ठः—

' ब्राह्मणमनृतेनाभिशंस्य[6] पतनीयेनोप-
पतनीयेन वा[7] मासमब्भक्षः शुद्धवती-
रावर्तयेत् । अश्वमेधावभृथं वा गच्छेत्' ।

( व. स्मृ. २३. ३९ )

---

* मिथ्याभिशंसनं निर्दुष्टमपि दोषवानयमिति प्रख्यापनम् ।

† 'एतोन्विन्द्रंस्तवामीशानं'—इत्यादिका ऋचः शुद्धवतीसंज्ञकाः । ता आवर्तयेत् जपेदित्यर्थः ।

---

१. C. and F. read -पादुकोपलहासेऽपि for -पादुकोपानदारोपित-, while H. and J. -पादुकोपानहारोपित- for the same and -अन्धकारस्य for -अन्धकारस्थ- २ All others, except A I, read निमन्त्रितेऽन्यत्र for निमन्त्रितेनान्यत्र. ३ B D and H insert स्यात् after उपवास. ४. G. and I. read नरम् for परम् ५. G. and J read अभक्षो for अब्भक्षो. ६. Except A. G. and the text all others read अभिशस्य for अभिशस्य ७ Except A I. and the text all read स मासम् for मासम्

इति। हारीतोऽपि—

'अनृताभिशंसनाक्रोशे[1] गुरूणां पैशुनेषु[2] च।
एकविंशतिरात्रं तु पिबेद्ब्राह्मीं सुवर्चलाम्'॥
(हा. स्मृ. २१. ३)

इति। शङ्ख-लिखितौ—

'नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नो मिथ्याभिशंसन इत्येते पञ्चसंवत्सरान् ब्राह्मणगृहे भैक्ष्यं चरेयुः। संवत्सरं धौतं[3] भैक्ष्यमश्नीयुः। षण्मासान् वा[4] गा अनुगच्छेयुः'।

इति। एतेषां वचनानां यथायोगं व्यवस्था द्रष्टव्या॥

### अभिशस्तप्रायश्चित्तम्।

अभिशस्तप्रायश्चित्तमाह याज्ञवल्क्यः—

'अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा।
निर्वपेत्तु पुरोडाशं वायव्यं पशुमेव[5] वा'* ॥
(या. स्मृ. ३. २८७)

---

* आग्नेयमग्निदेवताकं चरुं निर्वपेत्। अथ वा वायुदेवताकं चरुमित्यन्वयः। अपरार्कादिसर्वसम्मतोऽयमेव पाठः। क्वचित् 'चरुम्' इति पाठो दृश्यते। तत्र अग्निदेवताकं चरुं वायुदेवताकं पशुमित्यन्वयः। तथापि नायं पाठो युक्तः। चरुनिर्वापस्य पश्वालभनस्य च लघुत्व-गुरुत्वात् तयोः समविकल्पो न सम्भवति।

---

१ G. reads अनृताभिशंसनक्रोधे for अनृताभिशंसनाक्रोशे २ E. and I. read पैशून्ये च for पैशुनेषु च ३. J omits धौतं ४ G and I omit वा. ५ Only A. and the text substitute चरुम् for पशुम् and G. reads च for वा.

इति । यत्तु वसिष्ठवचनम्–

'एतेनैवाभिशस्तो व्याख्यातः' ।

( व. स्मृ. २३. ३७ )

इति तत्तदेवाकृतप्रायश्चित्तस्ये द्रष्टव्यम् । यत्तु पैठीनसिनोक्तम्–

'अनृतेनाभिशस्तः कृच्छ्रं चरेत् । मासं पातकेषु । महापातकेषु द्विमासम्'* ।

इति तदपि वसिष्ठेन समानविषयम् ।

तदेवं विष्णुनाऽनुक्रान्तानामतिपातकादीनां प्रकीर्णकान्तानां दशविधानां पापानां सामान्यतो विशेषतश्च प्रायश्चित्तानि प्रतिपादितानि ॥

## अथ रहस्यप्रायश्चित्तान्यभिधीयन्ते ।

यत् पापं कर्तृव्यतिरिक्तेनान्येन केनचिदपि न ज्ञातं तद्रहस्यम् । तस्य प्रायश्चित्तमपि रहस्येव कर्तव्यम् । तथा च हारीतः—

---

*पातकलक्षणं पूर्वमुक्तम् । तेन पातकेनाभिशस्तो मासं महापातकेनाभिशस्तो मासद्वयं कृच्छ्रमाचरेत् ।

१. B. C. D. and F read अकृतप्रायश्चित्ते for अकृतप्रायश्चित्तस्य and G omits यत्तु before पैठीनसिनोक्तम्. २ G. and H read विष्णुनाक्रान्तानां for विष्णुनानुक्रान्तानां ३. B. C and D. omit प्रकीर्णकान्तानां दशविधानां, while G omits दशविधानां.

'अथ ब्राह्मणस्य श्रुतधर्मशास्त्रस्य *रहस्यमनुक्रमिष्यामः। रहस्ये रहस्यं प्रकाशे प्रकाशम्'।
(हा. स्मृ. ३०. १-२)

इति। यमः—

'रहस्ये रहस्यं प्रकाशे प्रकाशम्। रहस्यकृते रहस्यमेव कर्तव्यम्। प्रकाशकृते प्रकाशमेव कर्तव्यम्'।

इति। रहस्यत्वादेव नास्ति परिषदनुमत्यपेक्षा। तदाहतुर्बृहस्पति-याज्ञवल्क्यौ—

'विख्यातदोषः कुर्वीत पर्षदोनुमतं व्रतम्।
अनभिख्यातदोषस्तु रहस्यव्रतमाचरेत्'† ॥
(या. स्मृ. ३. ३०१)

---

*श्रुतधर्मशास्त्रस्येति विशेषणात् धर्मशास्त्रज्ञ एव रहस्यप्रायश्चित्तं कर्तुमर्हति। न पुनः शास्त्रानभिज्ञ इति सिद्धं भवति।

† अत्र विज्ञानेश्वरव्याख्यानमतीव समीचीनं विशदं चेति मत्वा तदेव सङ्गृह्यते—

'कर्तृव्यतिरिक्तैरनभिख्यातो दोषो यस्याऽसौ। रहस्यं अप्रकाशं प्रायश्चित्तमनुतिष्ठेत्। अतः स्त्रीसम्भोगादौ तस्या अपि कारकत्वात् तदितरैरविज्ञातदोषस्य रहस्यव्रतमिति मन्तव्यम्। * * * अत एव स्त्री-शूद्रयोरप्यमुनैव मार्गेण रहस्यव्रतज्ञानसिद्धेरधिकारसिद्धिः। नच वाच्यं—रहस्यव्रतानां जपादिप्रधानत्वादविद्ययोश्च स्त्री-शूद्रयोस्तदनुपपत्तेरनधिकार—इति। यतो नैकान्ततो रहस्यव्रताना जपादिप्रधानत्वम्। दानादेरप्युपदेशात् गौतमोक्तप्राणायामादेरपि सम्भवाच्च'—

इत्यलं विस्तरेण।

---

१. H. reads श्रुति- for श्रुत-, but it seems incorrect. २. Except A. G. and H all others omit रहस्ये रहस्यं प्रकाशे प्रकाशम्' । इति यम.. I also omits this and also omits रहस्ये रहस्यं प्रकाशे प्रकाशम्. ३. I. reads पर्षदा for पर्षदो. ४. The text reads हरस्य व्रतम् for रहस्यव्रतम्.

इति। न च—विनापरिषदं व्रतज्ञानाभाव-इति शङ्कनीयम्। शास्त्रज्ञस्य तद्विज्ञानसम्भवात्। इतरेणापि बुद्धिमता[1] विद्वद्गोष्ठ्यां केनचिद्व्याजेनावगन्तुं शक्यत्वात्*। यदि[2] तदभिज्ञानाय परिषदोऽग्रे पापं प्रकटीकुर्यात्तदा प्रायश्चित्तं बहुलं भवति। द्विविधा ह्यशुद्धिः पापेन जन्यते। ऐहिक्यामुष्मिकी च। तयोरैहिकी शिष्टैः सह व्यवहारं वारयति। आमुष्मिकी तु नरकं प्रापयति। तत्र प्रकटपापेषु द्विविधाऽशुद्धिसद्भावात्तन्निवृत्तये प्रायश्चित्तबाहुल्यमपेक्षितम्। रहस्ये त्वैहिकाऽशुद्ध्यभावादामुष्मिकमात्राऽशुद्धिः[3] स्वल्पेनापि जप-होमादिना निवर्तते। अत एव मनुः प्राजापत्यादिव्रतानां जपादीनां च व्यवस्थामाह—

'एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः।
अनाविष्कृतपापांस्तु[4] मन्त्रैर्होमैश्च शोधयेत्'॥
(म. स्मृ. ११. २२६)

इति। तत्र रहस्यानां साधारणं प्रायश्चित्तं स एवाह-

'वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा।
नाशयन्त्याशु पापानि महापातकजान्यपि॥ (२४५)

---

*रहस्यप्रायश्चित्ताधिकारिणश्चतुर्विंशतिमते दर्शिताः—
'आहिताग्नेर्विनीतस्य वृद्धस्य विदुषः प्रायश्चित्तं
रहस्योक्तं पूर्वोक्तमितरस्याऽपि'।
इति।

---

१. G. reads शुद्धिमता for बुद्धिमता. २ B. and D. omit यदि. ३. J. omits ऽशुद्धि and except A. and I all होम-. ४ E. I. and J. read -पापास्तु; while B. and D.-पापाना.

यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात्।[1]
तथाऽऽज्ञानकृतं पापं कृत्स्नं दहति वेदवित्॥[2] (२४६)

सव्याहृति-प्रणवकाः[3] प्राणायामास्तु षोडश।
अपि भ्रूणहणं मासात् पुनन्त्यहरहःकृताः'[4]॥ (२४८)
(म. स्मृ. ११. २४५–२४८)

इति। वसिष्ठः—

'यद्यकार्यशतं साग्रं कृतं वेदश्च धार्यते।[5]
सर्वं तत्तस्य वेदाग्निर्दहत्यग्निरिवेन्धनम्'[6]॥
(व. स्मृ. २७. १)

इति। चतुर्विंशतिमते—

'कृतैश्च क्रियमाणैश्च करिष्यद्भिर्न संशयः।
ब्रह्म प्रतिष्ठेत्येतावत् अनुवाकौ जपेद् द्विजः'[7]॥

---

१. B. and D. read this line as follows —
यथैषां तेजसां वह्नि प्राप्तान्निर्दहति क्षणात्।,
C. and F. यथैषां तेजसा वह्निः प्राप्तौ निर्दहति क्षणात्।,
G. reads यथैधांस्तेजसा वह्नि. प्राप्तान्निर्दहति स्वयम्।,
E. H. and J. यथैधांस्तेजसा वह्नि प्राप्तान्निर्दहति क्षणात्।,
but J. differs in प्राप्तो for प्राप्तान् all for—
यथैधस्तेजसा वह्नि प्राप्तं निर्दहति क्षणात्।.

२. The text reads this line as —
तथा ज्ञानाग्निना पापं सर्वं दहति वेदवित्॥.

३. B. C D. F H. and J. read सव्याहृतिका प्रणवा, E. सव्याहृतीका प्रणवा, G. सव्याहृतिका सप्रणवा all for सव्याहृति-प्रणवका. ४. G. omits -हण मासात् पुनन्त्यह- ५ B. D and H read यद्यकार्यं कृत ग्रास शत and C E. F. and J यद्यकार्यं कृतं साग्र शतं for यद्यकार्यशतं साग्रं कृतं, while G. substitutes वेग for वेद ६ G. reads सर्वतर तस्य and C. and F. सर्वत्र तस्य for सर्वं तत्तस्य ७. B and D read पावनो यजुषि, C F. and H पावनो यजुषु, G पावनो यजुष, E, पावनो यजुषो and I. पवनाय जपेत् All for अनुवाकौ जपेद्.

इति । यमः—

'सहस्रपरमां देवीं शतमध्यां दशावराम्[१] ।
गायत्रीं स जपेन्नित्यं महापातकनाशिनीम् ॥
विराजं[२] द्विगुणं जप्त्वा तदह्नैव विशुद्धयति[३] ।
[४]वामदेव्यं त्रिरावर्त्य तदह्नैव विशुद्धयति ॥
पौरुषं सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात् ।
वृषभं [५]शतशो जप्त्वा तदह्नैव विशुद्धयति ॥
वेदं[६]मेकगुणं कृत्वा तदह्नैव विशुद्धयति ।
रुद्रैकादशकं जप्त्वा तदह्नैव विशुद्धयति' ॥

इति । विष्णुः—

'अथातः सर्ववेदपवित्राणि भवन्ति (१) येषां[७]
जपैश्च होमैश्च द्विजातयः पापेभ्यः[८] पूयन्ते । (२)

---

१. H. reads दशावरम् for दशावराम् २. B. D. and G. read विरजा-, C. F. E. and H read विरजा both for विराजं, while G reads दत्वा for जप्त्वा. ३. G inserts इति after विशुद्धयति. ४ B. and D. omit the following :—

वामदेव्य त्रिरावर्त्य तदह्नैव विशुद्धयति ।
पौरुष सूक्तमावर्त्य मुच्यते सर्वकिल्बिषात् ॥
वृषभ शतधा जप्त्वा तदह्नैव विशुद्धयति ।
वेदमेकगुण कृत्वा तदह्नैव विशुद्धयति ॥.

५ I. reads शतधा for शतशो ६. E. I. omit this line ७. Except A. I. and the text all others read एषां for येषां. ८. Except A. I. and the text all others read पापै for पापेभ्य ; while C. and F. substitute प्रपूयन्ते for पूयन्ते and J प्रमुच्यन्ते for पूयन्ते.

अघमर्षणम् । ( ३ ) देवकृतम् । ( ४ ) शुद्धवत्यः ( ५ ) । तरत्समन्दीयम् । ( ६ ) कूष्माण्ड्यः । ( ७ ) पावमान्यः । ( ८ ) दुर्गाः सावित्री । ( ९ ) अभीषङ्गाः । ( १० ) पदस्तोभाः। (११) सामानि । १२ ) व्याहृतयो भारुण्डानि । ( १३ ) चन्द्रसाम । ( १४ ) पुरुषव्रते सामनी । (१५) अब्लिगम् । ( १६ ) बार्हस्पत्यम् । (१७) गोसूक्तम् । ( १८ ) वाक्सूक्तम् । ( १९ ) अश्वसूक्तम् । (२०) मध्वर्चं सामनी चेन्द्रशुद्धे । (२०) शतरुद्रीयम् । ( २१ ) अथर्वशिरः । ( २२ ) त्रिसुपर्णम् । ( २३ ) महाव्रतम् । ( २४ ) नारायणीयम् । ( २५ ) पुरुषसूक्तं च । ( २६ )

त्रीण्याज्यदोहानि रथन्तरं च
अग्नेर्व्रतं वामदेव्यं बृहच्च ।

---

१ Here also we follow A. and I., while all others read तत्समन्दीयं धावति and E. reads तरत्समन्दीधावति for तरत्समन्दीयम् २ I. and the text read दुर्गासावित्री for दुर्गा सावित्री. ३. The text substitutes अतीषङ्गा and B. C. D. F. G. H. and J. read अभिषङ्गा for अभीषङ्गाः. ४ G. reads महाव्याहृतय. for सामानि । व्याहृतयो. ५. B and D. पुरुषो व्रतं देवतं भासमर्लिगा, C and F. पुरुषव्रते देवत भासमालिङ्गा, E. and G. पुरुषव्रतं देवत भासमर्लिगा, H. पुरुषव्रतं देवते भासमालिंगा and J. पुरुषव्रत दैवतं भासमब्लिङ्गम्. All for पुरुषव्रते सामनी । अब्लिङ्गम्. ६ The text and I. do not insert वाक्सूक्तम् ७ The text and I read अश्वसूक्तम्, while C. and F. substitute असूक्तम् । गोसूक्तम् । अश्वसूक्तम् ८ The text and I do not insert मध्वर्चं, while E. reads मद्वृध and H. also reads the same in the marginal correction. ९ The text and I. read सामनी चन्द्रसूक्ते च for सामनी चेन्द्रशुद्धे १०. I. and the text read त्रिसुपर्ण for त्रिसुपर्णम्. ११. Except A I. and the text all others omit च. १२. J. reads आग्नेयं व्रत, C. F. and the text अग्निव्रतं for अग्नेर्व्रत.

एतानि जप्तानि[1] पुनन्ति जन्तून्
जातिस्मरत्वं लभते यदीच्छेत्[2]'*॥

( वि. स्मृ. ५६. १-२७ )

---

* अघमर्षणं-'ऋतं चे'ति ऋक्संहितायां प्रसिद्धम् । देवकृतं । 'देवकृतस्यैनसोऽवयजनमसी'त्यादयो यजुर्मन्त्राः । शुद्धवत्यः पूर्वं विस्तरेणोक्ताः । तरत्समन्दीयं-'तरत्समन्दीधावतीति' ऋक्सूक्तम् । कूष्माड्यः-यद्देवा देवहेलनमित्याद्या ऋचः । पावमान्यः-स्वादिष्ठयेति सूक्तम् । 'जातवेदसे' इति सूक्तं दुर्गाः । देवस्य त्वेति ऋचः सावित्री । अभीषङ्गाः-एतदाख्या मन्त्राः । ते च ऋक्संहितायां द्रष्टव्याः । पदस्तोभाः-'उत्सो-देवा हिरण्यया' इत्यादयः । सामानि प्रसिद्धानि । व्याहृतयः-'भूरग्नये चेत्यादयः । भारूण्डानि-भारदण्डानीत्यपि क्वचित् पाठ. । 'ओम्न आयाहीत्यादि गायत्रं साम । चन्द्रसाम-'गोरमन्वतेत्यस्यामृचि गीयमानं साम । पुरुषव्रते सामनी-'सहस्रशीर्षा पुरुषः, त्रिपादूर्ध्व उदैत्' इत्येतयोर्ऋचोर्गीयमाने सामनी । 'पुरुषव्रतं साम' इत्येकवचनपाठे तु-वैश्वानरमित्येतत्सामेति बोद्धव्यम् । अब्लिङ्गं-'आपो हिष्ठेति त्र्यृचि गीयमानं साम । बार्हस्पत्यं-सूक्तम् । तच्च-'बृहस्पते प्रथमं वाचो' इत्यादि । गोसूक्तं-'आ गावो आयन्'इत्यादि । वाक्सूक्तं प्रसिद्धम् । अश्वसूक्तं-'अयं ते अस्तु हर्यत' इत्यादि । नन्दपण्डितस्तु-यदिन्द्राहं यथा त्वमस्यामित्यस्यामृचि गीयमानं साम-गोसूक्तमश्वसूक्तं चेत्याह । मध्वर्चौ-'मधुवाता ऋतायते'इत्यादयो मन्त्राः । 'इन्द्राय साम गायत' इत्यादि इन्द्रशुद्धसंज्ञकम् । शतरुद्रीयं अथर्वशिरश्च प्रसिद्धे । त्रिसुपर्णमपि तथैव । महाव्रतं-'सोमं राजानमित्यस्यामृचि गीयमानं सामेति नन्दपण्डितः । नारायणीय-पौरुषसूक्ते प्रसिद्धे एव । चतुर्दशाधिकाष्टसहस्राणि सामानि सन्ति । तेषु त्रीणि आज्यदोहानि रथन्तरं अग्नेर्व्रतं वामदेव्यं बृहदिति च सप्त सामानि ईश्वरस्तावकत्वात् पाप्मानं पुनन्तीत्यर्थः ।

---

१. C E F H. and G. read जप्त्वा and I. and the text गीतानि for जप्तानि. २. Except A. I. and the text all read य इच्छेत् for यदीच्छेत्.

इति । चतुर्विंशतिमते—

पावमानीस्तथा कौत्सं पौरुषं सूक्तमेव च ।
जप्त्वा पापैः प्रमुच्येत पवित्रं[1] मधुच्छन्दसम् ॥
मण्डलब्राह्मणं[2] रुद्रं शुक्रियो[3] मोक्षकस्तथा ।
वामदेव्यं बृहत्साम जप्त्वा पापैः प्रमुच्यते ॥
यज्ञायज्ञीयमादित्यं[4] ज्येष्ठसाम च राजनम्[5] ।
पौरुच्छेपं[6] च सामानि जप्त्वा मुच्येत किल्बषात् ॥
अथर्वशिरसं चैव पौरुषं सूक्तमेव च ।
नीलरुद्रं[7] तथैवैन्द्रं जप्त्वा पापैः प्रमुच्यते ॥
आथर्वणाश्च ये केचित् मन्त्राः कामविवर्जिताः ।
ते सर्वे पापहन्तारो याज्ञवल्क्यवचो यथा ॥
सिंहे मे[8] मन्युरित्येतदनुवाकं जपेद् द्विजः ।
जप्त्वा पापै प्रमुच्येत बौधायनवचो *यथा ॥
ऋग्वेदमभ्यसेद्यस्तु यजुःशाखामथापि वा ।
सामानि सरहस्यानि[9] अथर्वाङ्गिरसस्तथा ॥
ब्राह्मणानि च कल्पांश्च षडङ्गानि तथैव च ।

---

* यथा च बौधायनधर्मशास्त्रे—
'सिंहे मे इत्यपां पूर्णपात्रेऽवेक्ष्य चतुष्पथे ।
मुच्यते सर्वपापेभ्यो महतः पातकादपि'॥
(बौ. स्मृ. ४. ७. ७)

१ We follow here only G, while all others read सपुत्रं for पवित्रं. २. G. reads मण्डलं, while B C. D. E. F H and J read बिडालब्राह्मणं for मण्डलब्राह्मण ३. G reads शुक्रियो and J. शुक्रिया both for शुक्रियो. ४. B. and D read जप्त्वा for यज्ञा-, while J substitutes यज्ञ- for यज्ञा- ५ B. C. D G and F read राजतम् ६. B. and D. read पौरुच्छेप च, E. मारुच्छेप च and G. पारुच्छेपश्च all for पारुच्छेपं च. ७. Except A and I all read नीलरुद्रा for नीलरुद्र. ८. B. and D read हिंसे मे and I. संहोमे for सिंहे मे. ९ G. reads चरवस्यानि for सरहस्यानि.

आख्यानानि तथाऽन्यानि जप्त्वा पापैः प्रमुच्यते* ॥
इतिहास-पुराणानि देवतास्तवनानि च ।
जप्त्वा पापैः प्रमुच्येत धर्मस्थानैस्तथा परैः' ॥

इति । बौधायनः–

'विधिना शास्त्रदृष्टेन प्राणायामान् षडाचरेत् ।
यदुपस्थकृतं पापं पद्भ्यां वा यत् कृतं भवेत् ॥
बाहुभ्यां मनसा वाचा श्रोत्र-त्वक्-घ्राण-चक्षुषा' ।
सायंसन्ध्यामुपस्थाय तेन तस्मात् प्रमुच्यते'† ॥
( बौ. स्मृ. २. ४. ७. १८ )

इति । मनुः–

'महापातकिनश्चैव शेषाश्चाकार्यकारिणः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥ (२३९)
यत्किञ्चिदेनः कुर्वन्ति मनो-वाक्कर्मभिर्जनाः ।
तत्सर्वं निर्णुदन्त्याशु तपसैव तपोधनाः'‡ ॥ (२४१)
( म. स्मृ. ११. २३९–२४१ )

---

* कौत्सं कुत्सर्षिणा दृष्टं–'अपनः शोशूचदघम्'–इत्येतत् सूक्तम् । माधुच्छन्दसं–'अग्निमीळे' इत्यादि । अन्यत् पूर्वमुक्तम् ।

† नित्यसन्ध्यातिरिक्तेयं प्रायश्चित्तरूपा सन्ध्या पृथगेवोपास्या ।

‡ तपोरूपमिदं प्रायश्चित्तं तदेव स्तूयते । मेधातिथ्यादयस्तु पूर्वोक्त-व्रताचरणमेव तपः तस्यैवेयं स्तुतिरिति मन्यन्ते । मम तु 'तप सन्तापे' इत्यस्माद्धातोर्निष्पन्नेन तपश्शब्देन पञ्चाग्निसाधनादिकं तप एव ग्राह्यं न व्रतादिकमिति प्रतिभाति ।

---

१ B and D. substitute यथा– for तथा–. २ G. omits this verse ३. This line does not appear in the text. ४. E reads समाचरेत् for षडाचरेत्. ५ The text reads वापि वाचा वा यत्कृत भवेत् for वाचा श्रोत्र–त्वक्–घ्राण–चक्षुषा. ६. This line does not appear in any of the manuscript except A. and the text. ७. B C. D. F. and G. substitute किल्बिषान्विता for किल्बिषात्तत. ८. The text reads मनो-वाङ्मूर्तिभिर्जनाः for मनो-वाक्कर्मभिर्जना. ९. The text reads निर्दहन्ति for निर्णुदन्ति, while B. C. and F. read त[illegible]r तपोधना.

इति । कूर्मपुराणेऽपि–

'जपस्तपस्तीर्थसेवा देव-ब्राह्मणपूजनम् ।
ग्रहणादिषु कालेषु महापातकशोधनम् ॥ (१०८)
पुण्यक्षेत्राभिगमनं सर्वपापप्रणाशनम्[1] ।
देवताभ्यर्चनं नृणामशेषाघविनाशनम् ॥ (९७)
अमावास्यां तिथिं प्राप्य यः समाराधयेद्भवम् ।
ब्राह्मणान् भोजयित्वा[2] च सर्वपापैः प्रमुच्यते ॥ (९८)
कृष्णाष्टम्यां महादेवीं[3] तथा कृष्णचतुर्दशीम् ।
सम्पूज्य ब्राह्मणमुखे सर्वपापैः प्रमुच्यते ॥ (९९)
त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् ।
ईष्ट्वेशं[4] प्रथमे यामे मुच्यते सर्वपातकैः ॥ (१००)
एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ।
द्वादश्यां शुक्लपक्षस्य सर्वपापैः[5] प्रमुच्यते ॥ (१०७)
उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥ (१०१)
वैवस्वताय कालाय सर्वभूतक्षयाय च[6] ।
प्रत्येकं तिलसंयुक्तान् दद्यात्सप्तोदकाञ्जलीन् ॥ (१०२)

---

१ The text reads -त्रिनाशनम् for -प्रणाशनम्. २ The text reads पूजयित्वा for भोजयित्वा. ३. We follow here only A. and the text, while all others read महादेव for महादेवी. ४ B. D E. I. G J. read दृष्ट्वेशं for इष्ट्वेशं; while C. F and H. दृष्ट्वेश प्रयतो for इष्ट्वेश प्रथमे. ५. The text reads महापापै. for सर्वपापै ६ After this line I inserts the following two lines —

औदुम्बराय दध्नाय नीलाय परमेष्ठिने।
वृकोदराय चित्राय चित्रगुप्ताय ते नमः ॥,

These lines are neither found in our manuscripts nor in the text and the seven names of Yama are complete in this śloka, therefore these lines are quite useless here

स्नात्वा नैद्यां तु पूर्वाह्णे मुच्यते सर्वपातकैः'॥(१०२)

(कू. पु. १. २. ३३.९७–१०८)

इति । पैठीनसिः—

'सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् ।
पुनस्तपस्वी भवति पङ्क्तिपावनपावनः ' ॥

इति । चतुर्विंशतिमते—

'मृगारेष्टिः पवित्रेष्टिस्त्रिहविः पावमान्यपि ।
इष्टयः पापनाशिन्यो वैश्वानर्या समन्विताः' ॥

इति । कूर्मपुराणे—

'अस्मिन् कलियुगे घोरे लोकाः पापानुवर्त्तिनः ।
भविष्यन्ति महाबाहो वर्णाश्रमविवर्जिताः ॥
नान्यत् पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् ।
सर्वपापप्रशमनं प्रायश्चित्तं कलौ युगे' ॥

(कू. पु. १. १. २८. ९–१०)

इति । इति साधारणप्रायश्चित्तानि ॥

## अथ प्रतिपदोक्तानि प्रायश्चित्तानि ।

तत्र याज्ञवल्क्यः—

१. The text substitutes दद्याच्च for नद्यां तु, but it appears meaningless here. २. These quoted four lines are found in the printed copy of the said Purāṇa, but they do not exist in the manuscript copy, which is written in Telegu.

'त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम्।
अन्तर्जले विशुद्ध्येत गां दत्त्वा च पयस्विनीम्' ॥
( या. स्मृ. ३. ३०१ )

इति। शङ्ख-लिखितावपि—
'ब्रह्महा त्रिरात्रोपोषितोऽन्तर्जले[1]ऽघमर्षणं
त्रिरावर्तयेत्'[2]।

इति। एतच्च कामकारविषयम्। अकामकारविषये तु यमः—
'एवं ब्रह्महत्या-सुरापान-सुवर्णस्तेय-गुरुत-
ल्पेषु प्राणायामैः श्रान्तोऽघमर्षणं जपेत्'।

इति। बौधायनः—
'ग्रामात्[3] प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य
स्नातः शुचिरुदकान्ते स्थण्डिलमुपलिप्य स-
कृत् क्लिन्नवासाः सकृत् पूतेन पाणिना आदि-
त्याभिमुखोऽघमर्षणस्वाध्यायमधीयीत। (२)
प्रातःशतं माध्याह्ने शतं अपराह्णे[4] शतमपरि-
मितं वा। (३) उदितेषु नक्षत्रेषु प्रसृतियावकं
प्राश्नीयात्[5]। (४) ज्ञानकृतेभ्योऽज्ञानकृतेभ्य-
श्चोपपातकेभ्यः[6] सप्तरात्रात् प्रमुच्यते। (५)

---

१. C. and F omit the following portion :—
अन्तर्जले विशुद्ध्येत गां दत्त्वा च पयस्विनीम्' ॥
इति। शङ्ख-लिखितावपि—
'ब्रह्महा त्रिरात्रोपोषितोऽन्तर्जले ऽघमर्षण.

२ B. and D त्रिवार त्रि . ३ The text reads तीर्थं गत्वा स्नात· शुचिवासा उदकान्ते स्थण्डिलमुद्धृत्य for ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य स्नात शुचिरुदकान्ते स्थण्डिलमुपलिप्य ४. We follow here only A. and the text; while all others read सायाह्ने शत परिमित च for अपराह्णे शतमपरिमित वा ५. Except A. and the text all others read अश्नीयात् for प्राश्नीयात् ६ Except A and the text all others omit अज्ञानकृतेभ्य and insert च after उपपातकेभ्य and read द्वादशरात्रान्महापातकेभ्यः। एवं ब्रह्महत्या सुवर्णस्तेय सुरापानं च for द्वादशरात्राद्भ्रूणहननं गुरुतल्पगमन सुवर्णस्तैन्यं सुरापान-मिति च.

द्वादशरात्राद्भ्रूणहननं गुरुतल्पगमनं सुव-
र्णस्तैन्यं सुरापानमिति च वर्जयित्वा। (६)
एकविंशतिरात्रात् तान्यप्यतितरति'। (७)
(बौ. स्मृ. ३. ९. २-७)

इति। मनुरपि—

'अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम्।
मुच्यते पातकैः सर्वैः पराकैः शोधितस्त्रिभिः'॥
(म. स्मृ. ११. २५८)

इति। बृहद्विष्णुरपि—

'ब्रह्महत्यां कृत्वा प्राचीमुदीचीं वा दिशमुप-
प्रभूतेनेन्धनेनाग्निं प्रज्वाल्याघमर्षणेनाष्टसहस्र-
माज्याहुतीर्जुहुयात्तदेतस्मात्पूतो भवति'।

इति। एतानि कामाकामकारादिभेदेन व्यवस्थापनीयानि।
सुरापाने यम आह—

---

१. I reads अभितरति and the text अपि तरति for अप्यतितरति and adds तान्यपि जयति, २. J. reads शोधितैः for शोधित. ३. B D E. and H. read आहुती for आज्याहुती. ४. B. C. D. F. and G. omit the following portion :—

एतानि कामाकामकारादिभेदेन व्यवस्थापनीयानि। सुरापाने यम आह—

'सुराप. कण्ठमात्रमुदकमवतीर्य सुतसोमात् प्रसृतिमादायोङ्का-
रेणाभिमन्त्र्य पिबेत्। ततोऽप्सु निमग्नो मानस्तोकीयं जपेत्'।

इति। याज्ञवल्क्य —

'त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्घृत शुचि'।

इति। मनु.—

'कौत्स जप्त्वापि—&c. ...... &c., up to page 168, line 12.

'सुरापः कण्ठमात्रमुदकमवतीर्य सुतसोमात्[1]
प्रसृतिमादायोङ्कारेणाभिमन्त्र्य पिबेत् । ततो
ऽप्सु निमग्नो मानस्तोकीयं जपेत्' ।

इति । याज्ञवल्क्यः—

'त्रिरात्रोपोषितो हुत्वा कूष्माण्डीभिर्घृतं शुचिः'।
( या. स्मृ. ३. ३०४ )

इति । मनुः—

'कौत्सं जप्त्वाप[2] इत्येतद्वासिष्ठं च प्रतीत्यृचम्[3] ।
माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुद्ध्यति ॥ (२४९)
मन्त्रैः शाकलहोमीयैरब्दं[4] हुत्वा घृतं द्विजः ।
सुगुर्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम्[5] ॥ (२५६)
महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः[6] ।
अभ्यस्याब्दं पावमानीर्भैक्षाहारो विशुद्ध्यति*॥(२५७)
( म. स्मृ. ११. २४९–२५७ )

* कौत्सं—'अपनः शोशुचदघमित्येतत् । वासिष्ठं—'प्रतिस्तोमेभिरुषसं वसिष्ठा' इत्येतत् । माहित्रं—'महित्रीणामवोऽस्त्विति । शुद्धवत्यः—पूर्वमुक्ताः। 'देवकृतस्यैनसो' इत्यादयोऽष्टौ मंत्राः शाकलहोमीयाः। नम इत्यृचं—'नम

१ J. reads सुतसोमात वस्त्रमिमादाय for सुतसोमात् प्रसृतिमादाय २ E. H and J. read जपित्वा for जप्त्वा, while I. reads this line as follows .—

'कौत्स जपित्वाऽपैत्यंनो वासिष्ठ चेत्यृचम्प्रति ।

३. E and H read वासिष्ठ चेति ऋचम्प्रति, but E. substitutes त्यृचे for त्यृचम् and J वासिष्ठत्र च ऋच प्रति both for वासिष्ठ च प्रतीत्यृचम् ४ J. reads सकलहोमीयैरिष्ट for शाकलहोमीयैरब्द ५ A reads मन इत्यृचम the Commentator Medhatithi follows this reading , while I reads नमत for नम , but it seems to be incorrect ६ J reads समाहिता for समाहित

इति । वसिष्ठः[1]—

'सुरां पीत्वाऽप्सु निमज्ज्य त्रिः पठेदघमर्षणम् ।
यथाऽश्वमेधावभृथस्तादृशं मनुरब्रवीत्' ॥
(व. स्मृ. २६. ८)

इति । अत्र ज्ञानाज्ञानाभ्यासानभ्यासैर्व्यवस्था द्रष्टव्या । सुवर्णस्तेये शातातपः—

'मद्यं पीत्वा गुरुदारांश्च गत्वा
स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ।
भस्मच्छन्नो भस्मशय्यां शयानो
रुद्राध्यायी मुच्यते सर्वपापैः' ॥
(शा. स्मृ. १. ७१)

इति । यमः[4]—

'ब्राह्मणः सुवर्णस्तेयं कृत्वा हिरण्यं शालायां[5] प्रक्षिप्याऽप्सु स्नातो[6] ग्रीवामात्रमुदकं हिरण्यवर्णाभिश्चतसृभिरात्मानमभ्युक्ष्य त्रीन् प्राणायामान् कृत्वा तदेतस्मात् पापात् पूतो भवति' ।

---

आविवेश-' इत्यृचमिति सर्वज्ञनारायणः । 'उग्रं नम आविवास' इति रामचन्द्रः । पावमान्यः ऋक्संहिताया नवमं मण्डलं स्वादिष्टयेत्यारभ्य 'यत्ते-राजम्' इत्यन्तम् ।

---

१. E and H. omit वसिष्ठ· २. The text reads आरे वाऽप्सु निमज्जन त्रिर्जपेत् for सुरां पीत्वाऽप्सु निर्मज्य त्रि पठेत्. ३. I reads -शय्याशयनो and J. reads -शय्याशयानो both for -शय्यां शयानो ४. E. and H. omit यम . ५. J reads हिरण्यशालायां for हिरण्य शालाया. ६. E. H and J. read निष्णात for स्नात·

इति। बृहस्पतिः—

'सकृज्जप्त्वाऽस्यवामीयं शिवसङ्कल्पमेव वा।
अपहृत्य सुवर्णं वा क्षणाद्भवति निर्मलः'॥

इति। याज्ञवल्क्यः—

'ब्राह्मणः[1] स्वर्णहारी तु रुद्रजापी जले स्थितः'।
(या. स्मृ. ३. ३०४)

इति। जपश्चैकादशकृत्वा कार्यः। तदाह अत्रिः—

'एकादश गुणान् वाऽपि रुद्रानावर्त्य धर्मवित्॥
महापापैरपि स्पृष्टो मुच्यते नात्र संशयः'॥
(वृ. अ. स्मृ. ४. ६)

इति। गुरुतल्पे याज्ञवल्क्यः—

'सहस्रशीर्षाजापी[3] च मुच्यते गुरुतल्पगः।
गौर्देया कर्मणोऽस्यान्ते पृथगेभिः पयस्विनी'॥
(या. स्मृ. ३. ३०५)

इति। यमोऽपि—

'अथ गुरुतल्पगमनं कृत्वाऽघमर्षणमन्तर्जले
त्रिरावर्त्य तदेतस्मात् पापात् पूतो भवति'।

---

१. E I. and J. read ब्राह्मणस्वर्णहारी for ब्राह्मण· स्वर्णहारी २. The verse occurs in Vrid-dhatri Samhitá, but not Atri or Âtreya It reads शुद्ध्यति for धर्मवित् and for the second line it reads महापातकोपपातकेभ्यो मलिनीकरणेभ्यो मुच्येत for महापापैरपि स्पृष्टो मुच्यते नात्र संशयः. ३. E. I. and J. read सहस्रशीर्षजापी for सहस्रशीर्षाजापी.

इति । मनुरपि—

'हविष्पान्तीयमभ्यस्य न तमंह इतीति च ।
जप्त्वा च पौरुषं सूक्तं मुच्यते गुरुतल्पगः' ॥
( म. स्मृ. ११. २५१ )

इति । संसर्गी येन सह संसर्गं करोति स तदीयमेव प्रायश्चित्तं कुर्यात् ।

'स तस्यैव व्रतं कुर्यात्'

इति पूर्वमेवोक्तत्वात् ॥

अथोपपातकरहस्यप्रायश्चित्तानि ।

तत्र यमः—

'दशप्रणवसंयुक्तैः प्राणायामैश्चतुःशतैः ।
मुच्यते ब्रह्महत्यायाः किं पुनः शेषपातकैः' ॥

इति । याज्ञवल्क्योऽपि—

'प्राणायामशतं कार्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि' ॥
( या. स्मृ. ३. ३०६ )

---

१. We follow here A and G; while B and D. read हविष्याशी समभ्यस्य and others read हविष्यन्तीयमभ्यस्य for हविष्पान्तीयमभ्यस्य. in the text (Bombay, Mandlik's edition) Some places have हविष्यन्तीयम् and some हविष्यन्तम्, but the quoted Mantra is हविष्पान्तमजर, &c. Therefore all these readings seem incorrect. २. The text read जपित्वा for जप्त्वा च; while H substitutes तु for च. ३ I. reads संसर्गं for संसर्गी. ४. G. substitutes यथा for अथ ५ B and D. omit तत्र यम, while E. H. G. I. and J. substitute अत्र for तत्र. ६. B. and D. read सर्वपापप्रणुत्तये for सर्वपापापनुत्तये.

इति । मनुरपि–

'एतेषां स्थूल-सूक्ष्माणां चिकीर्षन्नपनोदनम् ।
अवेत्यृचं जपेदब्दं यत्किञ्चेदमितीति च' ॥
( म. स्मृ. ११. २५२ )

इति । अत्र सकृदभ्यासादिभेदेन व्यवस्था द्रष्टव्या ॥

अथ व्रतलक्षणानि ।

तत्र सर्वव्रतस्य साधारणान्यङ्गानि याज्ञवल्क्य आह–

'ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ।
अहिंसाऽस्तेय-माधुर्ये दमश्चेति यमाः स्मृताः ॥
स्नान-मौनोपवासेज्या-स्वाध्यायोपस्थनिग्रहाः ।
नियमा गुरुशुश्रूषा-शौचा-ऽक्रोधा-ऽप्रमादिताः ॥
( या. स्मृ. ३. ३१३–३१४ )

इति । अत्र ब्रह्मचर्यं सर्वेन्द्रियनिग्रहः । उपस्थनिग्रहो लिङ्गनिरोधः । तयोर्गो-बलीवर्दन्यायेन पुनरुक्तिः । अकल्कत्वमकुटिलत्वम् ।

---

१. The text reads वा for च २ Except A all omit तत्र and I. reads सर्वव्रतसाधारणाङ्गानि for सर्वव्रतस्य साधारणान्यङ्गानि. ३. B. D G. and J read अकल्पता for अकल्कता ४ Except E. G I. and the text read -ऽस्तेयमाधुर्यदमाश्चेति and H -ऽस्तेयमाधुर्यं दमश्चेति both for ऽस्तेय-माधुर्ये दमश्चेति ५. G and the text read स्नान for स्नान , while I. and some others substitute -निग्रह for -निग्रहाः. ६ B. D. and the text read -ऽप्रमादता for -ऽप्रमादिताः ७ B. and D. read अथ for अत्र, while H. व्रतचय, C. and F व्रतचर्यं for ब्रह्मचर्यं. ८. C F. and G. substitute तथा for तयो , while except G. and J. read अपुनरुक्ति for पुनरुक्ति ९ J reads अकल्पत्वम् for अकल्कत्वम्.

इति । मनुरपि[१]—

'अहिंसा सत्यमक्रोधमार्जवं च समाचरेत् । (२२२)
त्रिरह्नि[२] त्रिर्निशायां च सवासा जलमाविशेत् ।
स्त्री-शूद्र-पतितांश्चैव नाभिभाषेत कर्हिचित् ॥ (२२३)
स्थानासनाभ्यां विहरेदशक्तो[३]ऽधः शयीत वा ।
ब्रह्मचारी व्रती च स्याद् गुरु-देव-द्विजार्चकः ॥(२२४)
सावित्रीं च जपेन्नित्यं पवित्राणि च[४] शक्तितः ।
सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादृतः[५]' ॥ (२२५)
( म. स्मृ. ११. २२२-२२५ )

इति । तत्र[६] प्राजापत्यव्रतलक्षणमाह हारीतः—

'त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् ।
परं त्र्यहं वायुभक्ष एष कृच्छ्रः प्रजापतेः[७]' ॥

इति । मनुरपि[८]—

'त्र्यहं* प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं तु[९] नाऽश्नीयात् प्राजापत्यं चरन्[१०] द्विजः' ॥
( म. स्मृ. ११. २११ )

---

* अत्र द्वौ पक्षौ । तत्र प्रथमः स्वस्थानविवृद्धिपक्षोऽयं मनुना दर्शितः— 'त्र्यहं प्रातर्भोजनं त्र्यहं सायमेवं भोजन । त्र्यहमयाचितभोजनमिति एक एव नियमः दिनत्रयं धार्य इत्युक्तमतस्तस्य वृद्धिःस्वस्थान एव भवति ।

---

१ The following quoted verses are not found in the MS of the text of Manu २. B C. D E. F. and G. read त्रिरह्न for त्रिरह्नि, while G. reads आविशेत् for आविशेत्. ३ I reads अक्रोधो for अशक्तो ४ G. reads स्वशक्तित· for च शक्तित ५. B and D read आहृत., I. and J आदृता· for आदृत ६. I reads अत्र for तत्र. ७. I. reads प्रजापाति for प्रजापते. ८. B, D, and J do not insert मनुरपि ; while B. substitutes अस्यैनुरपि. This may be the writer's mistake. ९. The text reads च for तु. १०. G. reads चरेत् for चरन्.

इति। अस्यैवाधिकारिभेदेन प्रयोगान्तरमाह वसिष्ठः—

'अहः प्रातरहर्नक्तमहमेकमयाचितम्।
अहः पराकं तत्रैकमेवं चतुरहौ परौ॥
अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः।
बाल-वृद्धा-ऽऽतुराणां* च शिशुकृच्छ्रमुवाच ह'॥

(व. स्मृ. २३. ४२–४३)

इति। एतदुभयमपि प्राजापत्यकृच्छ्रं दर्शयति याज्ञवल्क्यः—

'एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्तितः॥
यथाकथंचित्त्रिगुणः प्राजापत्योऽयमुच्यते'॥

(या. स्मृ. ३. ३१९, ३२०)

---

द्वितीयः दण्डकलितवदावृत्तिपक्षोऽयं वसिष्ठेन दर्शितः— तत्र प्रथमेऽह्नि प्रातरेवैकवारं हविष्यान्नभोजनं कार्यम्। द्वितीयेऽह्नि सायमेकवारमेव न दिवा। तृतीयेऽह्नि एकवारमयाचितमश्नीयात्। अत्र सर्वत्र भोजनं परिमितमेव कार्यम्। न यथेष्टम्। प्रायश्चित्तार्थत्वात्। चतुर्थेऽह्नि पराकम्। तल्लक्षणं पूर्वमेवोक्तम्। एवं प्रथमं चतुरहमतीत्य द्वितीयं तृतीयमपि चतुरहमेवमेव निर्वर्तयेदेवं द्वादशदिनसाध्योऽयं कृच्छ्र.'।

* यथाह मनुः—

'चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम्'॥

इत्याद्यनुसन्धेयम्।

---

१. The text reads बाल-वृद्धा-ऽऽतुरेष्वेव for बाल-वृद्धा-ऽऽतुराणां च २. E. reads वैकेन and the text चैवाय both for चैकेन.

इति । एकभुक्तेन दिवैव सकृद्भोजनेन । नक्तेन[1] रात्रौ सकृद्भोजनेन । अयाचितेन न विद्यते याचितं यस्मिन् भोजने तदयाचितम् । तेन । अत्र कालविशेषाप्रतीतेर्दिवा रात्रौ वा सकृद्भोजनेन । उपवासेन चैकेन एकस्मिन् दिनेऽनशनेन च पादकृच्छ्रो भवति । अयमेव पादकृच्छ्रः स्वस्थानविवृद्ध्या वा दण्डकलितवदावृत्त्या[2] वा यथा कथंचित्त्रिगुणः त्रिरभ्यस्तः प्राजापत्य इत्युच्यते इत्यर्थः । एकभक्तादिषु ग्राससङ्ख्या आपस्तम्बेन दर्शिता—

'सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिःस्मृताः[3] ।
चतुर्विंशतिरयाच्याः[4] परं निरशनं स्मृतम्' ॥
(आ. स्मृ. १. २९ ).

इति । तत्परिमाणमपि तेनैवोक्तम्—

'कुक्कुटाण्डप्रमाणं तु यथा वाऽऽस्यं विशेत्सुखम्' ।
(आ. स्मृ. १. ९० )

इति । चतुर्विंशतिमते तु[5] प्रकारान्तरेण सङ्ख्या श्रूयते—

'प्रातस्तु द्वादश ग्रासाः सायं पञ्चदशैव तु ।
अयाचिते च द्वावष्टौ[6] परं वै मारुताशनः' ॥

इति । अत्र शक्त्यपेक्षया व्यवस्था द्रष्टव्या । आपस्तम्बस्तु चतुरः पादकृच्छ्रान् कृत्वा तेषां वर्णभेदेन व्यवस्थामाह—

---

१. B. and D omit नक्तेन रात्रौ सकृद्भोजनेन २ Except A and I read दण्डकारितवत् for दण्डकालितवत् ३ B C D E. F. G and H substitute मता for स्मृता. ४. G reads चतुर्विंशतिरात्रौ च for चतुर्विंशतिरयाच्या.. ५. G and I. omit तु ६ G substitutes वा for च and reads ऽयहं च, C. and F. read ऽयहं वा and J. ऽयहे वा all for परं वै, while B. and D. अह वै for the same.

'त्र्यहं निरशनं पादः पादश्चायाचितं त्र्यहम् ।
सायं त्र्यहं तथा पादः पादः प्रातस्तथा त्र्यहम् ॥ (१३)
प्रातःपादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् ।
अयाचितं तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतम्' ॥ (१५)
( आ. स्मृ. १. १३–१५ )

इति । अर्धकृच्छ्र-पादोनकृच्छ्रयोरपि स्वरूपं स एवाह–
'सायं-प्रातर्दिनार्धं स्यात् पादोनं नक्तवर्जितम्' ।
( आ. स्मृ. १. १४ )

इति । अयमर्थः । अयाचितोपवास-त्र्यह-द्वयानुष्ठानेनार्ध-कृच्छ्रो भवति । नक्तत्र्यहव्यतिरिक्तत्र्यहत्रयानुष्ठानेन पादोनकृच्छ्रो भवति । अर्धकृच्छ्रप्रकारोऽपि तेनैवोक्तः–
'सायं प्रातस्तथैवोक्तं दिनद्वयमयाचितम् ॥
दिनद्वयं तु नाऽश्नीयात् कृच्छ्रार्धं तद्विधीयते' ।
( आ. स्मृ. १. ४१–४२ )

---

१. The text reads पादात् for पाद: २ G. reads तत for पाद: ३. B. and D. read अयाचिते त्र्यहम्., C. and F. अयाचितं त्र्यहे both for अयाचितं त्र्यहम्, while H. reads अयाचनं त्र्यहम् for the same. ४. The text reads this line thus —

पादः सायं त्र्यहं पादः प्रातर्भोज्य तथा त्र्यहम् ।.

५. E and J. read पादः for साय ६. The text reads ब्राह्मणस्य च for ब्राह्मणे स्मृतम् ७ The text reads this line thus :—

प्रातः साय दिनार्धं च पादोन सायवर्जितम ।.

८. Except A. and I read अयाचितोपवासयोस्त्र्यह द्वया- for अयाचितोपवास-त्र्यह–. ९. The text reads this verse as follows —

'साय प्रातस्त्वहोरात्र पादं कृच्छ्रस्य तं विदु ॥
साय प्रातस्तथैवैक दिनद्वयमयाचितम्' ।.

इति। अत्रापि शक्त्यपेक्षया व्यवस्था द्रष्टव्या। यत्तु जप-होमादिबह्वङ्गसहितं प्राजापत्यकृच्छ्रं गौतमेनाभिहितम्—

'हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयात्। (२) अथापरं त्र्यहं नक्तं भुञ्जीत। (३) अथापरं त्र्यहं न कञ्चन याचेत। (४) अथापरं त्र्यहमुपवसेत्। (५) तिष्ठेदहनि, रात्रावासीत। (६) क्षिप्रकामः। (७) सत्यं वदेत्। (८) अनार्यैर्न सम्भाषेत। (९) रौरव-यौधाजपे *नित्यं प्रयुञ्जीत। (१०) अनुसवनमुदकोपस्पर्शनमापोहिष्ठेति तिसृभिः पवित्रवतीभिर्मार्जयीत। (११) हिरण्यवर्णाः शुचयः पावका इत्यष्टाभिः। (१२) अथोदकतर्पणम्। (१३) ॐ नमो हमाय मोहमाय संहमाय धुन्वते तापसाय पुनर्वसवे। (१४) नमो नमो

---

* रौरवयौधाजपे सामनी 'पुनानः सोमधारया' इत्यस्यामृचि गीते। ते च नित्यं प्रयुञ्जीत गायेतेत्यर्थः। केचनात्र 'नित्यं पुनः प्रयुञ्जीत' इत्यपि पठन्ति। विज्ञानेश्वरस्तु—'रौरवयौधां जपेत्' इत्यमेव पठति।

---

१ B. and D. read प्रातराशात् भुक्त्वा and H substitutes मुक्त्वा for भुक्त्वा. २ B. D. G. and J subsatute तथापर for अथापर ३ I. reads -अनार्य for अनार्यै. ४ Except A. and the text all others read यौधाजये; while B and D read- यौवाजये for the same. ५. The text reads मार्जयेत् and I. मार्जयित्वा for मार्जयीत. ६. We consult here the five manuscripts of the text. Except A and these manuscripts all others read नमो हमाय मोहमाय and I नमो हमाय सहमाय both for नमो हमायमोहमाय सहमाय, while G. omits मोहमाय and reads गृहमाय for सहमाय. ७. G reads पुनर्वासाय for पुनर्वसवे.

मौञ्जायोर्म्याय वसुविन्दाय सर्वविन्दाय नमो नमः पाराय सुपाराय महापाराय पारदाय पारयिष्णवे। (१५) नमो नमो रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचरायाधिपतये हराय शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने। (१६) नमो नमः सूर्यायादित्याय। (१७) नमो नमो नीलग्रीवाय शितिकण्ठाय। (१८) नमो नमः कृष्णाय पिङ्गलाय। (१९) नमो नमो ज्येष्ठाय श्रेष्ठाय वृद्धायेन्द्राय हरिकेशायोर्ध्वरेतसे। (२०) नमो नमः सत्याय पावकाय पावकवर्णाय कामाय कामरूपाय। (२१) नमो नमो दीप्ताय दीप्तरूपिणे। (२२) नमो नमस्तीक्ष्णाय तीक्ष्णरूपिणे। (२३) नमो नमः सौम्याय सुपुरुषाय महापुरुषाय मध्यमपुरुषाय उत्तमपुरुषाय ब्रह्मचारिणे। (२४)

---

१. Except A and the text others do not repeat नम.. २ I. reads उम्याय for ऊर्म्याय, but it seems wrong ३ G. and I. omit सर्वविन्दाय ४ G and I omit नमो and I. reads नम पराय महापराय परदाय omitting सुपाराय The text omits पारदाय. G. omits महापाराय and substitutes वरदाय for पारदाय ५ Except A. and the text all others do not repeat नम ६ Except A I. and the text all others read हरये for हराय, while B and D omit शर्वाय E and H. read साम्बाय and I ईश्वराय all for शर्वाय ७. Except A. and the text all others omit नम· throughout. ८. D and I read नीलकण्ठाय शितिकेशाय for नीलग्रीवाय शितिकण्ठाय, while B E. G H J read नीलकण्ठाय for नीलग्रीवाय ९ I reads पावकसर्गाय for पावकवर्णाय १०. Except J. and the text all others do not insert महापुरुषाय

नमो नमश्चन्द्रललाटाय कृत्तिवाससे पिनाक-
हस्ताय नमो नम इति[1]। (२५) एतदेवा-
दित्योपस्थानम्। (२६) एता एव[2]ाज्याहुतयः।
(२७) द्वादशरात्रस्यान्ते चरुं श्रपयित्वैताभ्यो
देवताभ्यो[3] जुहुयात्। अग्नये स्वाहा सोमाय
स्वाहा अग्नीषोमाभ्यामिन्द्राग्निभ्यामि[4]न्द्राय वि-
श्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतये अग्नये
स्विष्टकृते इति। (२८) अन्ते ब्राह्मणभो-
जनम्[5]। (२९)

(गौ. स्मृ. २७. २-२९)

इति। हविष्यानित्याद्युपवसेदित्यन्तेन प्राजापत्यस्य स्व-
रूपमुक्तम्। तिष्ठेदित्यादिना तस्यैवेतिकर्तव्यतोच्यते। अह-
नि तिष्ठेदित्य[6]नेन भोजनाद्यविरुद्धकालेषु अहरुत्थित एव
स्यात्। रात्रावासीतेत्यनेन निद्राया आवश्यकत्वात्[7] तामासीन
एव सेवेतेत्युक्तं भवति। क्षिप्रकामोऽपि भवेत्। शीघ्रं शुद्धः
स्यामिति[8] सञ्जातकामोऽपि भवेदित्यर्थः। अथवा शीघ्रं शुद्धि-
कामोऽहनि तिष्ठेद्रात्रावासीतेत्यर्थः।

---

१ Except the text all others omit पिनाकहस्ताय नमो नम इति। २. I omits एव ३. B. and D omit देवताभ्यो. ४. I omits इन्द्राग्निभ्याम् ५. The text reads ब्राह्मणतर्पणम् for ब्राह्मणभोजनम् ६ Except A and I. all others omit इत्यनेन. ७. G. reads अनावश्यकत्वात् for आवश्यक-त्वात्. ८. B. D and H read स्यादिति for स्यामिति.

एव सत्यं वदेदित्याद्यङ्गकलापे क्षिप्रकाम* इति अधिकारिविशेषणमनुषञ्जनीयम् । अनेन यः शनैः शनैः शुद्धो भवामीति मन्यते तस्य नायं नियम इति अवगम्यते । गैरवयौधाजये सामनी । नमोहमायेत्यादयस्त्रयोदश मन्त्रास्तर्पणसूर्योपस्थाना-ऽऽज्यहोमेषु द्रष्टव्याः । अथवा सम्प्रदानविभक्त्यन्ताः षट्पञ्चाशन्मन्त्राः । तर्पणमनुसवनं कर्तव्यम् । स्नानाङ्गत्वात्तर्पणस्य । तथा च भृगुः—

'नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते
तर्पणं त्रिविधस्याङ्गमेष एव विधिः सदा' ॥

इति । आदित्योपस्थाना-ऽऽज्यहोमौ तु प्रतिदिनं सकृत् सकृत् कार्यौ । 'अथोदकतर्पणमादित्योपस्थानमाज्यहोमश्च'—इति वक्तव्ये

'एतदेवादित्योपस्थानम् । एता एवाज्याहुतयः' ।

इति पृथग्योगकरणात् । शिष्टं स्पष्टम् । एतद्दर्शिनाद्युक्त-

* वसिष्ठोऽप्येवमेवाह-
'हविष्यान् प्रातराशास्त्रीन् सायमाशास्तथैव च' ।
इत्याद्युक्त्वा—
'रात्रौ जलाशये व्युष्टः प्राजापत्येन तत्समम्' ॥ (१,७)
( व. स्मृ. १७–१७ )
इत्यादिना ।

१ B C D E F G. do not repeat शनैः  २ B. and D omit मन्त्रा  ३ G substitutes मनु for भृगु  ४ B D and H do not repeat सकृत while I substitutes कर्तव्यो for कार्यौ  ५ G. and I. omit एव.

जप-होमाद्यङ्गरहितप्राजापत्यद्वयस्थाने वेदितव्यम्। बहुप्रयास-साध्यत्वेनातिगुरुत्वात्। अथवा येषां शूद्रादीनां मन्त्राधिकारो नास्ति तेषां जप-होमादिरहितं प्राजापत्यं वेदितव्यम्। अत एवोक्तमङ्गिरसा—

'तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम्।
प्रायश्चित्तं प्रदातव्यं जप-होमविवर्जितम्' ॥

इति। येषां ब्राह्मणादीनां जप-होमादिष्वधिकारस्तेषां गौतमोक्तं वेदितव्यम्॥

अथातिकृच्छ्रः।

तस्य लक्षणमुक्तं चतुर्विंशतिमते—

'एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत्।
त्र्यहं चोपवसेन्नित्यमतिकृच्छ्रं चरन् द्विजः' ॥

इति। एकभक्त-नक्ता-ऽयाचितदिवसेषु नवस्वेकैकं ग्रासमश्नीयात् त्र्यहं चोपवसेत्। एवं चातिकृच्छ्रो भवतीत्यर्थः। यत्तु याज्ञवल्क्येनोक्तम्—

'अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः'।

(या. स्मृ. ३. ३२०)

---

१. B C D F G and H read -द्वयेन व्यवस्थाने for -द्वयस्थाने, while H and J -द्वयव्यवस्थाने for the same, but H gives marginal reading -द्वयस्थाने २ B D G and J read चाधिकारो, C. and F. वाधिकारो both for मन्त्राधिकारो, while G omits शूद्रादीनां ३. B C. D. F. and G read जप-होमादिकं for जप-होमादिरहित ४ B and D. read स्थित for स्थितम. ५ G omits तस्य. ६ C F and I. read अह for त्र्यह : while H reads चरेदिति, G and I. चरेद् द्विज. for चरन् द्विज. ७ H and I read -भोजने for -भोजन

इति—अयमेव प्राजापत्यकृच्छ्रः एकभक्त-नक्तायाचितदिवसेषु नवसु पाणिपूरान्नभोजनयुक्तोऽतिकृच्छ्रो भवतीत्यर्थः । तदेतदशक्तविषयम् । पाणिपूरान्नस्य ग्रासपरिमितादन्नादधिकपरिमाणत्वात् ॥

अथ कृच्छ्रातिकृच्छ्रः ।

तस्य लक्षणं याज्ञवल्क्येनोक्तम्—

'कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्' ।

( या. स्मृ. ३. ३२१ )

इति । विष्णुरपि—

'कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिक्षपणम्' ।

( वि. स्मृ. ४६. १३ )

इति । यत्तु गौतमः—

' अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः' ।

( गौ. स्मृ. २७. ३२ )

इति एकभक्त-नक्तायाचितदिवसेषु यो भोजनकालः तस्मिन्नेव काले केवलमुदकेन वर्तनं कृच्छ्रातिकृच्छ्रो भवतीति तदेतच्छक्तविषयम् । अतिकृच्छ्र-कृच्छ्रातिकृच्छ्रयोरपि प्राजापत्यकृच्छ्रोक्तेतिकर्तव्यता द्रष्टव्या ।

१ G and I read this —

कृच्छ्रातिकृच्छ्र पयसा दिवसानेकविंशतिम् ।,

but I adds इति and reads क्षपयेदिति शेषं for-क्षपणम् २. We follow here A. and the text; while all others omit स.

'एतेनैव* कृच्छ्रातिकृच्छ्रौ व्याख्यातौ'[1] ।

( गौ. स्मृ. २७. ३१ )

इति गौतमस्मरणात्[2] । पराकलक्षणमाह यमः—

'द्वादशाहं निराहारो यतात्मा[3] संशितव्रतः ।

कृच्छ्रः पराकनामैष सर्वपापप्रणाशनः' ॥

इति । पर्णकृच्छ्रलक्षणमाह याज्ञवल्क्यः—

'पर्णोदुम्बर राजीव-बिल्वपत्र-कुशोदकैः ।

प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः' ॥

( या. स्मृ. ३. ३१७ )

---

* इदं सर्वथा मूलविरुद्धमिवेति प्रतिभाति । मूले तु, एकोनत्रिंशद्भिः सूत्रैः पूर्वं कृच्छ्रमभिधाय अनन्तरम्—

'एतेनैवातिकृच्छ्रो व्याख्यातः' ।

इत्यनेन द्वितीयमतिकृच्छ्रमभिधाय—

'अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः' ।

इत्यनेन तृतीयः कृच्छ्र उक्तः । तत्कथमयं पाठः सङ्गच्छत इति चिन्तनीयं विद्वद्भिः ।

---

१ The text reads अतिकृच्छ्रो व्याख्यात for कृच्छ्रातिकृच्छ्रौ व्याख्यातौ

२ E G and I substitute -वचनात् for -स्मरणात् C and F omit यम ; while G omits the following portion —

'द्वादशाह निराहारो यतात्मा सशितव्रत ।

कृच्छ्र पराकनामैष सर्वपापप्रणाशन ' ॥

इति । पर्णकृच्छ्रलक्षणमाह याज्ञवल्क्य -

'पर्णोदुम्बर-राजीव-बिल्वपत्र कुशोदकै ।

प्रत्येक प्रत्यह पीते पर्णकृच्छ्र उदाहृत ' ॥

इति । पलाशोदुम्बरारविन्द-बिल्वपर्णानामेकैकेन क्वथितमुदकं प्रत्यहं पिबेत । कुशोदकं चैकस्मिन्नहनीति । पर्णकृच्छ्रस्य लक्षणान्तरमाह यम —

३ B C. D, F and H. read जितात्मा for यतात्मा , while some read शंसित- for सशित-

इति । पलाशोदुम्बरारविन्द-बिल्वपर्णानामेकैकेन क्वथित-मुदकं प्रत्यहं पिबेत् । कुशोदकं चैकस्मिन्नहनीति । पर्णकृच्छ्रस्य लक्षणान्तरमाह यमः—

'एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः ।
क्काथयित्वा पिबेदद्भिः पर्णकृच्छ्रो विधीयते' ॥

इति । यदा पलाशादिपत्राण्येकीकृत्याम्भसा क्काथयित्वा त्रिरात्रोपवासान्ते क्कथितं तत्पिबेत् तदा पर्णकृच्छ्रो भवतीत्यर्थः । फलकृच्छ्रादीनां स्वरूपमाह मार्कण्डेयः—

'फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः ।
श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्माक्षैरपरस्तथा ॥
मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम् ।
पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते ॥
मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु' ।

इति । यदा बिल्वादिफलान्यम्भसा क्काथयित्वा मासमेकं तदम्भः पिबति तदा फलकृच्छ्रो भवति । यदा बिल्व-पद्माक्ष-मूलानामन्यतमस्य क्काथं मासं पिबेत्तदा पत्र-पुष्प-मूल-कृच्छ्राणि भवन्ति ।

१ Except A, all others do not insert कुशोदकं चैकस्मिन्नहनीति In connection with this omission the editor of the Calcutta edition of this work published in B. Indica Series, is quite misled, he writes in foot-note, page 465 "इत्थमेव पाठ सर्वत्र बिल्व-पर्ण-कुशानामेकैकेन—इति तु भवितु युक्तम्"। २. Except A. and I others read लक्षणमाह for लक्षणान्तरमाह ३. G. does not insert the commentary of this Sloka. ४ G. reads यदि for यदा. ५ H reads यदि for यदा.

वारुण-स्त्रीकृच्छ्रयोर्लक्षणमाह यमः—

‘ ब्रह्मचारी जितक्रोधो मासेऽप्युदकसक्तुकान्
पिबेच्च नियताहारः कृच्छ्रं वारुणमुच्यते ॥
त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं वै यावकेनैव स्त्रीकृच्छ्रं ह्येतदुच्यते ’ ॥
( य. स्मृ. ९. ३१ )

इति । सौम्यकृच्छ्रस्वरूपमाह याज्ञवल्क्यः—

‘ पिण्याका-ऽऽचाम-तक्रा-ऽम्बु-सक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ’ ॥
( या. स्मृ. ३. ३२२ )

इति । आचाम ओदननिःस्रावः । पिण्याकादीनां पञ्चानामेकैकं प्रतिदिनमुपभुज्य षष्ठेऽहन्युपवसेत् । एष सौम्यकृच्छ्रः । यत्तु जाबालेन चतुरहव्यापी सौम्यकृच्छ्र इत्युक्तम्—

१ Only I reads वारुणीश्रीकृच्छ for वारुण-स्त्रीकृच्छ- २ C and F. read मासेषु for मासेऽपि, while I जितक्रोध आमिक्षोदकसक्तुकान् for जितक्रोधो मासेऽप्युदकसक्तुकान् ३ B omits —
– – – – – – – – – – – मुच्यते ।
त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं वै यावकेनैव स्त्रीकृच्छ्रं ह्येतदुच्यते ॥.
४. I reads श्रीकृच्छ्, while H तु तदुच्यते for ह्येतदुच्यते. ५ B D G. and H. omit -स्वरूपम् ६ J omits the following —
‘पिण्याका-ऽऽचाम-तक्राम्बु-सक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते’ ॥
इति। आचाम ओदननिःस्राव
७. C and F omit the following —
पिण्याकादीनां पञ्चानामेकैकं प्रतिदिनमुपभुज्य षष्ठेऽहन्युपवसेत। एष सौम्यकृच्छ्र । यत्तु जाबालेन चतुरहव्यापी सौम्यकृच्छ्र इत्युक्तम्
८ G reads उपयुज्य for उपभुज्य

'पिण्याकं सक्तवस्तक्रं चतुर्थेऽहन्यभोजनम्।
वासो वै दक्षिणां दद्यात् सौम्योऽयं कृच्छ्र उच्यते' ॥

इति तदेतदशक्तविषयम्[1] ॥

अथ तुलापुरुषः।

तत्र जाबालिः—

'पिण्याकं च तथाऽऽचामं तक्रं चोदकसक्तवः।
त्रिरात्रमुपवासश्च तुलापुरुष उच्यते' ॥

इति। सोयमष्टदिवससाध्यः। याज्ञवल्क्यस्तु पञ्चदश[2]-दिवससाध्यमाह—

'[3]एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्।
तुलापुरुष इत्येव[4] ज्ञेयः पञ्चदशाह्निकः' ॥

(या. स्मृ. ३. ३२३)

इति। एषां प्रकृतानां पि[5]ण्याकादीनां पञ्चद्रव्याणाम्। यमस्त्वेकविंशतिदिवससाध्यमाह—

'आचाममथ पिण्याकं तक्रं चोदक-स[6]क्तुकान्।

१ B and D omit एतत्. २ B D G and J. omit -दश- and read पञ्चदिवससाध्यम् ३ B. and D omit the following —

'एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम्।
तुलापुरुष इत्येव ज्ञेयः पञ्चदशाह्निक' ॥

इति। एषां प्रकृतानां पिण्याकादीनां पञ्चद्रव्याणाम्। यमस्त्वेकविंशतिदिवससाध्यमाह ४ The text reads इत्येष, for इत्येव ५ G omits पिण्याकादीनां पञ्चद्रव्याणाम्। यमस्त्वेकविंशतिदिवससाध्यमाह—

आचाममथ - - - - - - - - -।

६ B and D read -सक्तुमत्, G -सक्तवान् J.-सक्तुवान् all for -सक्तुकान्.

त्र्यहं त्र्यहं प्रभुञ्जानो वायुभक्षस्त्र्यहद्वयम् ॥
एकविंशतिरात्रस्तु तुलापुरुष उच्यते' ।

इति तदेतत्त्रयं पापतारतम्यविषयतया व्यवस्थापनीयम् । अत्रेतिकर्तव्यतामाह हारीतः—

'अथातस्त्रिणयनोक्तस्य तुलापुरुषस्य कल्पं
व्याख्यास्यामः । (६९)
अयाज्ययाजनं कृत्वा प्राश्य मूत्र-पुरीषयोः ।
अप्रतिग्राह्यमादाय याजयित्वा विनिन्दितान् ॥ (७०)
विनायकोपसृष्टस्य महाव्याधिहतस्य च ।
एतत् कृच्छ्रं तुलापूर्षं[२]* महापातकनाशनम् ॥ (७१)
स्वर्गद्वारमिदं पुण्यं महादेवेन निर्मितम् † ।
आचाममथ पिण्याकं तक्रं चोदकसक्तुकान् ॥ (७२)
त्र्यहं त्र्यहं प्रयुञ्जानो वायुभक्षस्त्र्यहद्वयम् ।
वाचा कायेन मनसा कृतानि विविधानि च ॥ (७३)

* तुलापुरुषमिति वक्तव्ये तुलापूर्षमित्यार्षम् । छन्दोऽनुरोधाद्वोक्तमिति यथाकथञ्चिद्योजनीयमिति प्रतिभाति ।

† तत्र तावत् तुलापुरुषः केन कार्यः? तदाह । अयाज्ययाजनमित्यादि महाव्याधिहतस्य चेत्यन्तेन । एतत् कृच्छ्रमित्यनेन तस्य पापापनोदकत्वमाह । स्वर्गद्वारमित्यनेन परत्रोत्तमलोकप्राप्तिकरत्वमुक्तम् । अत एवायं तुलापुरुषः न केवलं प्रायश्चित्तार्थमेव कर्तव्य इत्युक्तं भवति ।

१ B. and D read -द्वयहम् for -द्वयम् २ We follow here A B and D, while all others read -पुरुष for पूर्ष and G. reads सहपातक for महापातक. No doubt the form पूर्ष seems incorrect, but in the Vaidik rule it is correct ३ B C. D E F. G and H read परं त्र्यहम् for त्र्यहद्वयम्, while G reads उपयुञ्जान for प्रयुञ्जान' ४ B C. D. F and G read हतानि विधूतानि च for कृतानि विविधानि च.

आचामस्तानि निर्हन्ति नवश्राद्धं च सूतकम्।
तैक्ष्ण्यं[1] च दारुणं चैतत्केशकीटहतं च यत्॥ (७४)
आखोर्मूत्र-पुरीषं च ब्रह्महस्पृष्टमेव[2] च।
पिण्याकस्तानि निर्हन्ति अस्थि भित्त्वा तु यत् स्थितम्॥[3](७५)
आहारेषु च ये दोषाः स्नेहदोषाश्च ये क्वचित्।
खरोष्ट्रमुखसंस्पृष्टमुग्रसंस्पृष्टमेव[4] च॥ (७६)
तक्रेण तानि निर्हन्ति यच्चान्यत् श्वावलोकितम्।
कनका-ऽश्व[5]-तिला गावो भूमिराच्छादनं स्त्रियः॥ (७७)
सर्वं पुनाति धर्मात्मा गूढं चोदकसक्तुभिः*। (७८)
ब्रह्महत्यां भ्रूणहत्यां स्वर्णस्तेयं सुरापानं[6] गुरुदाराभिगमनं कन्यादूषणं[7] क्लीबाभिगमनमुदक्याभिगमनं वायुभक्षः पुनाति। (७९)

---

* आचाममथेत्यादि वायुभक्षः पुनातीत्यन्तेन तुलापुरुषकर्तुर्देहशुद्ध्यर्थमधिकारासिद्ध्यर्थं च पूर्वकर्तव्यं तत्फलं चोक्तम्। अनन्तरं गन्धोशीरमयौ इत्यनेन मूर्तिद्वयं कर्तव्यतयोक्तम्।

---

१ I reads भिक्षा च for तैक्ष्ण्य च, while B. and D तैक्ष्य for तैक्ष्ण्य. २. B. D E. G. H. read ब्रह्मससृष्टम्, C F. and J ब्रह्मसस्पृष्टम् both for ब्रह्महस्पृष्टम् ३ C and F read नवश्राद्धं च सूतकम् for अस्थि भित्त्वा तु यत् स्थितम्, while G omits the following:—

- - - - - - - - अस्थि भित्त्वा तु यत्स्थितम्।
आहारेषु च ये दोषा स्नेहदोषाश्च ये क्वचित्॥
खरोष्ट्रमुखसस्पृष्टमुग्रसस्पृष्टमेव च।
तक्रेण तानि निर्हन्ति - - - - - - - - ॥

४. B. and D उग्रससृष्ट एव च, C and F. अघसस्पृष्टमेव च and E and H. उपसस्पृष्टमेव च all for उग्रसस्पृष्टमेव च ५. B C. D. F G H. and J read कनकाश्व, E. कनकांश्च both for कनका-ऽश्व-. ६. E. H. I. and J omit सुरापान. ७. B. and D. omit कन्यादूषणं क्लीबाभिगमनमुदक्याभिगमनं

गन्धोशीरमयौ कार्यौ पुरुषौ पलसम्मितौ ।
नदीमृत्तिकया वापि पुरुषौ द्वौ च कारयेत् ॥ (८०)

महापशुर्येन शरेण विद्धो
यद्वा शस्त्रमुभयतो यच्च लक्ष्यम् ।
तेनायसीं सुकृतां कारयित्वा
प्रादेशमात्रामुभयतो जातशिक्याम् ॥ (८१)

सौवर्णी राजतीं वाऽपि तुलां देवीं तु कारयेत् ।
अपि चन्दनवृक्षस्य खदिरस्यापि कारयेत् ।
तस्याऽलाभे तुला कार्या यथा वाऽप्युपपद्यते * ॥ (८२)

यः पुरुषः पिङ्गलो बभ्रुर्हल-मुसल-चक्रपाणि-स्तमह पिङ्गलं चक्र-हल-मुसल-शूल-वज्रपाणि-मावाहयामि । (८३) स्वत एहि सूत एहि स्वयाम एहि नाग एहि कृष्णाजिन एहि । (८४)

---

* महापशुर्येन इत्यादि यथावाप्युपपद्यते इत्यन्तेन कस्य द्रव्यस्य कथं वा तुला कार्येत्युक्तम् । यः पुरुषः इत्यादि सत्यवादिनि इत्यन्तेन देवता-पूजनमुक्तम् । देशानां सम्पदमित्यादिना प्रार्थनोक्ता । अग्नये इत्यादि-ना होम उक्तः ।

---

१. We follow here A C. and F, while all others read तच्चन्दनोशीरमयौ पुरुषौ कारयेत्पटे, B and D substituting यत् for तद् and पटे for पटे. २ B and D. substitute बद्धो for विद्धो. ३ B and D. read उदग्रतां, G. उग्रतो, C. and F. उभयत., E and F. उपगत all for उभयतो ४. B. D. and G omit this line ५. Except A. C and F all others are mistaken here I. omits य. B. D. E G H. and I. omit पुरुष पिङ्गलो बभ्रुर्हल मुसल-चक्रपाणिस्तमह and substitute पुरुषं for पुरुष. ६. I. reads स्वसरेहि मातरेहि स्नुषाम for स्वत एहि सूत एहि स्वयाम; while C. and F. omit सूत एहि स्वयाम एहि.

स्वागतमनु स्वागतम् । (८५) भगवते तुलापुरुषाय[1] महादेवायेदमासनमिदं पाद्यमिदमाचमनीयमिदं गन्ध-माल्य-धूप-दीप-नैवेद्यं[2] प्रतिगृहाण प्रसीद देव तुभ्यं नमः । (८६) अक्रुद्धः सुमना भव । (८७) अथ तुलामभिमन्त्रयेत् । (८८) ऋषि-सत्यं ब्रह्मसत्यं देवसत्यं अन्तःसत्यं तेन सत्येन सत्यवादिनि । (८९)

देशानां[3] सम्पदं ब्रूहि कं देशं वर्धयिष्यसि ? ।
बीजानां सम्पदं ब्रूहि किं बीजं वर्धयिष्यसि ? ।
राज्ञां च सम्पदं ब्रूहि कं नृपं वर्धयिष्यसि ? ॥ (९०)
अस्माकं सम्पदं ब्रूहि किमस्माकं भविष्यति ? ।
यदा तु गुरुमात्मानमसकृत्तुलया धृतम् ।
परं चैव लघुं मन्येत् तदा कर्मसमारभेत् ॥ (९१)

अग्नये पृथिव्यधिपतये स्वाहा । (९२) वायवेऽन्त-रिक्षाधिपतये स्वाहा । (९३)

---

१. J omits तुलापुरुषाय. २. B D. and G. omit-दीपनैवेद्यं, C. and F.-नैवेद्य and E. H. and J. substitute-जप्य- for-दीप- and omit नैवेद्य ३. H reads सम्पदानां सम्पद ब्रूहि किं देशो वर्धयिष्यति B D. G E. and J. substitute वर्धयिष्यति for वर्धयिष्यसि. ४ Except A C and F. all others omit this line and the following बीजानां सम्पद ब्रूहि कि बीज वर्धयिष्यसि. ५ Here also the above manuscripts omit – – – – क नृपं वर्धयिष्यसि ॥ अस्माक सम्पद ब्रूहि – – –. ६. B. D. H. G. I. and J read यदात्मानमसत्कर्तु तुलासमधृत पदम् । यदा च लघु मन्येत – – – – ॥, while E and G read समुद्धृत परम्, H समपदं धृतम्, I समधृतं परम् and J. समधृत वरम् all for तुलया धृतम् ७ J. reads अन्तरिक्षाय for अन्तरिक्षाधिपतये and omits सूर्याय दिवोऽधिपतये स्वाहा

सूर्याय[1] दिवोऽधिपतये[2] स्वाहा। (९४) सोमाय नक्षत्राधिपतये स्वाहा। (९५) वासुकये[3] नागाधिपतये स्वाहा। (९६) कुबेराय यक्षाधिपतये स्वाहा। (९७) इन्द्राय देवाधिपतये स्वाहा। (९८) ब्रह्मणे त्रैलोक्याधिपतये स्वाहा। (९९) देव्यै भगाधिपतये स्वाहा। (१००) सालकटंकटाय[4] स्वाहा। (१०१) कूष्माण्डराजपुत्राय स्वाहा। (१०२) विनायकाय स्वाहा। (१०३) महाविनायकाय[5] स्वाहा। (१०४) महामहाविनायकाय[6] स्वाहा। (१०५) वक्रतुण्डाय गणानां[7] पतये स्वाहा। (१०६) धर्माय स्वाहा। (१०७) अधर्माय[8] स्वाहा (१०८) तुलायै स्वाहा।

---

१ B. C D F and G omit the following Sûtras —

सूर्याय दिवोऽधिपतये स्वाहा। सोमाय नक्षत्राधिपतये स्वाहा। वासुकये नागाधिपतये स्वाहा। कुबेराय यक्षाधिपतये स्वाहा। इन्द्राय देवाधिपतये स्वाहा। ब्रह्मणे त्रैलोक्याधिपतये स्वाहा। देव्यै भगाधिपतये स्वाहा.

२ I. reads दिनाधिपतये for दिवोऽधिपतये ३ E. H and J also omit the following Sûtras:—

वासुकये नागाधिपतये स्वाहा। कुबेराय यक्षाधिपतये स्वाहा। इन्द्राय देवाधिपतये स्वाहा।.

४ I. reads हलकण्टकाय, J. reads सालकंटपकाय both for सालकटकटाय; while B. D and G. omit this and the following one Sûtra —

सालकटकटाय स्वाहा। कूष्माण्डराजपुत्राय स्वाहा।.

५. B and D. omit the Sûtras as —

महाविनायकाय स्वाहा। महामहा विनायकाय स्वाहा। वक्रतुण्डाय गणानां पतये स्वाहा। धर्माय स्वाहा। अधर्माय स्वाहा। तुलायै स्वाहा। तुलापुरुषाय स्वाहा। देव्यै पुनरागमनाय स्वाहा।.

६ Except A and I. all others omit this Sûtra. ७. G. and H read गणपतये for गणानां पतये. ८ G omits अधर्माय स्वाहा.

(१०९) तुलापुरुषाय स्वाहा । (११०) देव्यै पुनरागमनाय स्वाहा । (१११)*सकृच्चरित्वा शुचिः पुण्यः कर्मण्यो[2] भवति । (११२) द्वितीयं चरित्वा गाणपत्यं प्राप्नोति । (११३) त्रिश्चरित्वा महादेवस्यावसथं प्राप्नोति । (११४) आषाढ्यां कार्तिक्यां वा फाल्गुन्यां वा पुण्ये नक्षत्रे एष विहितो धर्मः । (११५)

(हा. स्मृ. २८. ६९–११५)

इति ॥

अथ कृच्छ्राः ।

वारुणकृच्छ्रः ।

तत्र वारुणकृच्छ्रमाह यमः—

'ब्रह्मचारी जितक्रोधो मासेऽभ्युदकसक्तुकान्[6] ।
पिबेच्च नियताहारः कृच्छ्रं वारुणमुच्यते' ॥

इति ॥

अथाघमर्षणकृच्छ्रः ।

अघमर्षणकृच्छ्रमाह[7] विष्णुः—

'अथ कृच्छ्राणि भवन्ति । (१) त्र्यहं नाश्नीयात् ।

*सकृच्चरित्वेत्यादिना फलं कालश्चोक्तः । उत्तानार्थत्वात् प्रतिपदं न व्याख्यातम् ।

१ G omits तुलापुरुषाय स्वाहा. २ Except A and I all others read कर्मणो for कर्मण्यो ३ I. reads तृतीय for त्रि., while B and D. omit this Sûtra as —

त्रिश्चरित्वा महादेवस्यावसथ प्राप्नोति ।

४ C. and F. read अर्धासन and G अवसाय for आवसथ. ५. I. omits वा. ६ B and D read -सक्तुमान् for -सक्तुकान् ७. B. D. and H. read अघमर्षणम् for अघमर्षणकृच्छ्रम्.

(२) प्रत्यहं च[1] त्रिषवणं स्नानमाचरेत् । (३) मग्नस्त्रिरघमर्षणं जपेत् । (५) दिवा स्थितास्तिष्ठेत् । (६) रात्रावासीत[2] । (७) कर्मणोऽन्ते पयस्विनीं[3] दद्यात् । (८) इत्यघमर्षणम्' ।

( वि. स्मृ. ४६. १-९ )

इति । शङ्खस्तु प्रकारान्तरेणा[4]घमर्षणकृच्छ्रमाह—

'त्र्यहं त्रिषवणस्नायी मौनी[5] स्यादघमर्षणम् ।
मनसा त्रिः पठेदप्सु न भुञ्जीत दिनत्रयम् ॥
वीरासनं[6] सदा तिष्ठेत् गा च दद्यात् पयस्विनीम् ।
अघमर्षणमित्येतद् व्रतं[7] सर्वाघसूदनम्' ॥

( शं. स्मृ. १८. १-२ )

इति ॥

अथ यज्ञकृच्छ्रः ।

तत्राऽऽहाऽङ्गिराः—

'युक्तस्त्रिषवणस्नायी संयतो[8] मौनमास्थितः ।
प्रातःस्नानसमारम्भं[9] कुर्याज्जप्यं च नित्यशः ॥

---

१ B and D read त्र्यह for प्रत्यह च. २ The text reads रात्रावासीनः for रात्रावासीत ३ B. and D. add गा after पयस्विनी. ४. B. D and I. omit अघमर्षणकृच्छ्रम्. ५. Except A. I and J all others substitute मुनि. for मौनी, while J. शुचि for the same and the text adds more one line and reads these lines thus :—

'त्र्यह त्रिषवणस्नाने प्रकुर्यादघमर्षणम् ।
निमज्य नक्त सरिति न भुञ्जीत दिनत्रयम् ॥

६. Except A. and the text all others omit this line —
वीरासन सदा तिष्ठेद्गां च दद्यात्पयस्विनीम् ।.

७. The text reads कृतं सर्वाघनाशनम् for व्रतं सर्वाघसूदनम्. ८ J. interchanges these three lines, third for the first and reads सम्पन्नो for सयतो ९ B and D read-समाचार for-समारम्भ.

सावित्रीं व्याहृतीश्चैव जपेदष्टसहस्रकम्[१] ।
ॐकारमादितः कृत्वा रूपे रूपे तथाऽन्ततः ॥
भूमौ वीरासने युक्तः कुर्याज्जप्यं सुसंयतः ।
आसीनश्च स्थितो वाऽपि पिबेद्गव्यं पयः सकृत् ॥
[२]गव्यस्य पयसोऽलाभे गव्यमेव भवेद्दधि[३] ।
दध्नोऽभावे भवेत्तक्रं तक्राभावे तु यावकम् ॥
एषामन्यतमं यद्यदुपपद्येत[४] तत् पिबेत् ।
गोमूत्रेण समायुक्तं यावकं चोपयोजयेत् ॥
एकाहेन तु कृच्छ्रोऽयमुक्तस्त्वङ्गिरसा स्वयम् ।
सर्वपापहरो दिव्यो नाम्ना यज्ञ इति स्मृतः ॥
एतत् पातकयुक्तानां तथा चाप्युपपातकैः ।
महद्भिश्चापि युक्तानां प्रायश्चित्तमिदं शुभम्[५]' ॥

इति ॥

अथ देवकृच्छ्रः ।

देवकृतं[६] कृच्छ्रं दर्शयति यमः—

'यवागूं यावकं शाकं क्षीरं दधि घृतं तथा ।
त्र्यहं[७] त्र्यहं तु प्राश्नीयाद्[८]वायुभक्षः परं त्र्यहम् ॥

१. Except A I. and J. all others read व्याहृतिं for व्याहृतीः.
२ C. and F. omit the following —

गव्यस्य पयसो ऽलाभे गव्यमेव भवेद्दधि ।
दध्नोऽभावे भवेत्तक्रं तक्राभाव तु यावकम् ॥
एषामन्यतम यद्यदुपपद्येत तत्पिबेत् ।.

३ G. reads पयोदधि for भवेद्दधि. ४. I reads यद्वेत् for यद्यत्. ५. G. reads शुभ स्मृतम् for इद शुभम्. ६. B and D omit -कृत. ७ G. reads अहं त्र्यह for त्र्यह त्र्यह ८. The manuscript C ends here at the word प्राश्नीयात् and the following is colophon —

॥ राम ॥ राम२ ॥ श्री ॥ राम ॥ श्री ॥ रामाय नम ॥
श्रीगणेशाय नम ॥ राम . . . . . .

and consequently we have no assistance of this manuscript hereafter.

कृच्छ्रं देवकृतं नाम सर्वकल्मषनाशनम् ।
मरुद्भिर्वसुभी रुद्रैरादित्यैश्चरितं व्रतम् ॥
व्रतस्यास्य प्रभावेन विरजस्का हि तेऽभवन्' ।

इति ॥

**अथ यावककृच्छ्रः ।**

यावककृच्छ्रमाह शङ्खः—

'गोपुरीष[1]-यवाभ्यासो मासमेकं समाहितः ।
व्रतं तु यावकं[2] कुर्यात् सर्वपापापनुत्तये' ॥
(शं. स्मृ. १८. १०)

इति । देवलोऽपि—

'यवानामप्सु साधितानां सप्तरात्रं पक्षं मासं वा प्राशनं यावकः । एतेन यावक-पायसौदकानि व्याख्यातानि । यावक-पायसौदकानि प्राजापत्याविधानेन व्याख्यातानि भवन्ति[3]' ।

इति ॥

**अथ प्रसृतियावककृच्छ्रः ।**

अथ प्रसृति[4]यावकः । तत्र हारीतः—

'यं[5] आत्मकृतैः कर्मभिर्गुरुमात्मानं पश्येत् आत्मार्थं प्रसृति[6]यावकं श्रपयेत् । (३१) ततोऽग्नौ

१. I. reads गोपुरीष-यवाभ्यां च for गोपुरीष-यवाभ्यास , while the text reads गोपुरीषाशनो भूत्वा मास नित्य for गोपुरीष-यवाभ्यासो मासमेकं २ The text reads वार्द्धिक for यावक ३. Except A. and I all others omit भवन्ति ४. E G. F. H and J. read प्रसूत-for प्रसृति ५ B. D and F. read अथात्मकृतै , E. and H अयमात्मकृतै , G. अप्यात्मकृतै all for य आत्मकृतै ; while E. substitutes कर्मकृतैः for कर्मभि and B. D F. and G omit the same. ६. A. E F. G. and J. read प्रसृत-for प्रसृति.-

जुहुयात्। (३२) तदेव बलिकर्म। (३३) ¹शृतं चाभिमन्त्रयेत्। (३४)

यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः।
निर्णोदः सर्वपापानां पवित्रमृषिभिः²स्मृतम् ॥ (३५)
घृतं यवा मधु यवा आपोहिष्ठाऽमृतं यवाः।
सर्वं ³पुनन्तु मे पापं यन्मया दुष्कृतं कृतम् ॥ (३६)
वाचाकृतं कर्मकृतं मनसा दुर्विचिन्तितम्।
अलक्ष्मीं कालकर्णीं च सर्वं पुनत मे यवाः ॥ (३७)
माता-पित्रोरशुश्रूषां यौ⁴वने कारितां तथा।
श्व-सूकरावलीढं च उच्छिष्टोपहृतं च यत् ॥ (३८)
सुवर्णस्तेयं व्रात्य⁵त्वं बालत्वादात्मनस्तथा।
ब्राह्मणानां परीवादं सर्वं पुनत मे यवाः' ॥ (३९)

⁶श्रप्यमाणे रक्षां कुर्यात्। (४०) नमो रुद्राय भूताधिपतये द्यौः सावित्री मानस्तोकेति पात्रे ⁷त्रिर्निषिच्य 'ये देवा मनोजाता ⁸मनोयुजः सुदक्षा दक्ष⁹पितरस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः

---

१. G. and H. read श्रुतं for शृत and G. and J substitute वा for च. २. I. reads पवित्र ऋषिभि स्मृत for पवित्रमृषिभि स्मृतम्, but the Vaidik Brahmins read in the Srāddha ceremony this mantra पवित्रमृषिभि स्मृतम् ३ B D. E and G read पुनातु पुनन्तु, while G substitutes सर्वे for सर्वं. ४. B and D read यौवनात्, while E. F. G H and J. read वयसा both for यौवने ५ B D and E read बाधित्वा चात्मज; while G. प्राप्तव्यं for व्रात्यत्व and बाधित्वा चात्मान, J बाधित्वाचाऽन्त्यज all for बालत्वादात्मन. ६ B D and G read श्रप्यमाण-F अप्यमाणं, E वेक्ष्यमाण and H and I वक्ष्यमाणा all for श्रप्यमाणे. ७. All others except A and I. omit त्रि ८ B and D. read मनोयुजा and E F H मनोयुवाः for मनोयुज. ९. E. F and H. read दहपितरः (?) for दक्षपितर.

स्वाहा'-इत्यात्मनि जुहुयात्* । (४१) त्रिरात्रमेवा-र्थार्थी[1] । पापकृत्[2] षड्रात्रं पीत्वा पूतो भवति (४२) सप्तरात्रं महापातकी । (४३) द्वादशरात्रं पीत्वा सर्वं पुरुषकृतं पापं निर्दहति[3] । (४४) निःसृतानां यवाना-मेकविंशतिरात्रं पीत्वा गणान् पश्यति । (४५) गणा-धिपतिं पश्यति । (४६) विद्यां पश्यति । (४७) विद्याधिपतिं पश्यति । (४८) योऽश्नीयाद्यावकं पक्वं गोमूत्रे[4] सकृद्दधि-क्षीर-सर्पिः प्रमुच्यते सोऽंहसः क्षणा-दित्याह भगवान् मैत्रावरुणिः' । (४८)

(हा. स्मृ. २८. ३२-४८)

इति । इत्थं प्राजापत्यादिव्रतानि निरूपितानि ॥

अथ व्रतग्रहणप्रकारः ।

तत्र विष्णुः—

'सर्वपापेषु सर्वेषां व्रतानां विधिपूर्वकम् ।
ग्रहणं सम्प्रवक्ष्यामि प्रायश्चित्ते चिकीर्षिते[5] ॥

* यवोऽसीत्यादिना प्रार्थनोक्ता । नमो रुद्रायेत्यादयो हवनमन्त्राः । हवनं च स्वात्मन्येव । त्रिरात्रमेवेत्यादिना काम्यत्वनिर्देशपूर्वकं प्राय-श्चित्तार्थत्वेन फलमुक्तम् ।

१. G reads त्रिरात्रमेवार्थी for त्रिरात्रमेवार्थार्थी. २ Except A and I all others read पापकृत. for पापकृत्. ३. G reads निर्हरति for निर्दहति. ४. G reads गोमूत्र- for गोमूत्रे ५. The Manuscript F. ends here and following is colophon —

इति श्रीमहाराजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-श्रीवीरबुक्भूपाल साम्राज्यधुरंधरस्य माधवामात्यस्य कृतौ पाराशरस्मृतिव्याख्यायां माधवीयामे नाम द्वादशोऽध्याय. ॥ १२ ॥
श्रीशुभ भवतु ॥ :॥

दिनान्ते नख-रोमादीन् प्रवाप्य स्नानमाचरेत् ।
भस्म-गोमय-मृद्वारि-पञ्चगव्यादिकल्पितैः ॥
मलापकर्षणं कार्यं बाह्यशौचोपसिद्धये[1] ।
दन्तधावनपूर्वेण पञ्चगव्येन संयुतम् ॥
व्रतं निशामुखे[2] ग्राह्यं बहिस्तारकदर्शने ।
आचम्यातःपरं मौनी ध्यायन् दुष्कृतमात्मनः ॥
मनःसन्तापनं तीव्रमुद्वहेच्छोकमन्ततः'।
(वि. स्मृ. ३. २१–२५)

इति । बहिः ग्रामान्निष्क्रम्येत्यर्थः । पूर्वेद्युर्निशामुखे व्रतं परिषदुद्दिष्टप्रकारेण सङ्कल्प्य परेद्युस्त्रिषवणस्नान-प्रातर्होमाद्यङ्गसहितं व्रतमनुष्ठातुमारभेत् । प्रातर्होमाद्यङ्गानि च जाबालेन दर्शितानि–

'आरम्भे[3] सर्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव हि शालाग्नौ जुहुयादाहुतीः पृथक् ॥
श्राद्धं कुर्याद्व्रतान्ते च[4] गो-हिरण्यादिदक्षिणाम्' ।

इति । यमोऽपि–

'पश्चात्तापो निवृत्तिश्च[5] स्नानं चाङ्गतयोदितम् ।
नैमित्तिकानां सर्वेषां व्रतानां विधिपूर्वकम् ॥

१. B. and D. read ब्राह्मशौचोपसिद्धये for बाह्यशौचोपसिद्धये २ J. reads एतां निशामये for व्रत निशामुखे. ३ G reads आरम्भ. for आरम्भ. ४. B. and D. substitute वै for च and -दक्षिणा for -दक्षिणाम् ५ B and D. read पश्चात्तापौ निवृत्तश्च for पश्चात्तापो निवृत्तिश्च.

गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलमनुलेपनम् ।
व्रतस्थो वर्जयेत् सर्वं यच्चान्यद्बल-रागकृत्' ॥
(य. स्मृ. ६.१४)

इति । गृहीतस्य व्रतस्याऽसमापने प्रत्यवायमाह छागलेयः—

'पूर्वं व्रतं गृहीत्वा तु नाचरेत् कामतो हि यः ।
जीवन् भवति चाण्डालो मृतःश्वा चाभिजायते'॥

इति ॥

अथ प्रत्याम्नायाः ।

अथ पूर्वोक्तानां व्रतानां केनचिन्निमित्तेनानुष्ठानाशक्तौ यथायोगं प्रत्याम्नाया उच्यन्ते । तत्र प्राजापत्यस्य प्रत्याम्नायाश्चतुर्विंशतिमते दर्शिताः—

'कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम् ।
तिलहोमसहस्रं तु वेदपारायणं तथा ॥
विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च ।
अथवा पावमानेष्टिः समान्याहुर्मनीषिणः' ॥

इति । स्मृत्यन्तरेऽपि—

---

१. B. D. J and G read कामतोहित for कामतो हि य, while G. omits the following

जीवन भवति चाण्डालो मृत श्वा चाभिजायते ' ॥
इति । अथ पूर्वोक्ताना व्रताना केनचिन्निमित्तेनानुष्ठानाशक्तौ यथायोगं प्रत्याम्नाया उच्यन्ते । तत्र प्राजापत्यस्य प्रत्याम्नायाश्चतुर्विंशतिमते दर्शिता'

२. B and D. read कृच्छ्रे and G कृच्छ्र both for कृच्छ्र ३ E G. H. and J. substitute अन्या वा for अथ वा; while B. and D omit the following —

'अथवा पावमानेष्टि समान्याहुर्मनीषिण ' ।
इति । स्मृत्यन्तरेऽपि—
'कृच्छ्रोऽयुत तु गायत्र्या उदवासस्तथैव च ।.

४. Except A. and I all others omit स्मृत्यन्तरेऽपि.

'कृच्छ्रोऽयुतं तु गायत्र्या उदवासस्तथैव च।
धेनुप्रदानं विप्राय सममेतच्चतुष्टयम्' ॥

इति। स्मृत्यन्तरेऽपि—[2]

'प्राजापत्यक्रियाऽशक्तौ धेनुं दद्याद् द्विजोत्तमः।
धेनोरभावे दातव्यं मूल्यं तुल्यं न संशयः'[3]॥

इति। मूल्यं च यथाशक्ति देयम्। अत एव ब्रह्मपुराणे—
'गवामभावे निष्कं स्यात्तदर्धं पादमेव वा[4]'।

इति। यत्र यावत्सङ्ख्यया प्राजापत्यान्यावर्तनीयानि भवन्ति तत्र तावत्सङ्ख्यया गोदानान्यावर्तनीयानि। तदपि चतुर्विंशतिमते दर्शितम्—

'जन्मप्रभृति[5] पापानि बहूनि विविधानि च।
अर्वाक् तु भ्रूणहत्यायाः[6] षडब्दं कृच्छ्रमाचरेत् ॥
प्रत्याम्नाये[7] गवां देयं साशीति धनिना शतम्।
तथाष्टादशलक्षाणि गायत्र्या[9] वा जपेद्बुधः' ॥

इति। ननु—उक्तरीत्या[10] द्वादशवार्षिकस्य[11] प्राजापत्यस्य प्रत्या-

---

१. A. G and J read उपवास for उदवास. २ B. and D. omit ऽपि. ३ B and D. omit दातव्यं and read मूल्य तु तुल्य तेन for दातव्यं मूल्य तुल्यं. ४. B. D and G substitute च for वा. ५. G. reads जलप्रभृति for जन्मप्रभृति ६ I. reads ब्रह्महत्याया for भ्रूणहत्यायाः. ७ G reads प्रत्याम्नायो for प्रत्याम्नाये ८ G. reads साशीति for साशीति and J. reads this line प्रत्याम्नायो गवा देय साशीतिधननाशनम्. ९. G reads गायत्री for गायत्र्या १० E. H and J. read -नीत्या for -रीत्या. ११. G. and I. omit प्राजापत्यस्य and B and D. read दशवार्षिकप्राजापत्याम्नायत्वेन for द्वादश-वार्षिकस्य प्राजापत्यस्य प्रत्याम्नायत्वेन.

म्नायत्वेन षट्त्रिंशल्लक्षसङ्ख्याको गायत्रीजपः प्राप्नोति। कोटिसङ्ख्याकस्तु चतुर्विंशतिमत एव[1] स्मर्यते—

'गायत्र्यास्तु जपन्[2] कोटिं ब्रह्महत्यां व्यपोहति।
लक्षाशीतिं जपेद्यस्तु सुरापानाद्विमुच्यते॥
पुनाति हेमहर्तारं[3] गायत्रीलक्षसप्ततिः।
गायत्र्याः षष्टिभिर्लक्षैर्मुच्यते गुरुतल्पगः'॥

इति। तथा च[4] सति परस्परविरोधः स्यात्—इति चेत्। एवं तर्ह्यनयैवानुपपत्त्या कोटिजपोऽपि न प्रत्याम्नायः। किन्तु द्वादशवार्षिकव्रतसमानविषयतया विकल्प्यते इति कल्पनीयम्। चान्द्रायणादीनां प्रत्याम्नायास्तत्रैव दर्शिताः—

'चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च।
मित्रविन्दा पशुश्चैव कृच्छ्रं[5] मासत्रयं तथा॥
तिलहोमायुतं चैव पराकद्वयमेव च[6]।
गायत्र्या लक्षजप्यं च समान्याह बृहस्पतिः॥
नित्य-नैमित्तिकानां च काम्यानां चैव कर्मणाम्।
इष्टीनां[7] पशुबन्धानामभावे चरवः स्मृताः॥
पराक-तप्तकृच्छ्राणां स्थाने कृच्छ्रत्रयं चरेत्[8]।
व्रत-होमादिकं वाऽपि कल्पयेत् पूर्वकल्पवत्'॥

---

१. J. omits एव २ G reads जपेत् for जपन्. ३ B and D. read हेमहा चैव and G होमहर्तार for हेमहर्तार. ४. Except G all others omit च. ५ I reads कृच्छ्र for कृच्छ्र ६. E. and G. read वा for च. ७. J reads षष्टीना for इष्टीनां. ८ B. D. and G. read जपेत् for चरेत् and D. substitutes -त्रये for त्रय.

इति। यस्तु तपस्यसमर्थः धान्यसमृद्धश्च स[1] कृच्छ्रादिव्रतानि ब्राह्मणभोजनेन सम्पादयेत्। तदपि तत्रैवोक्तम्—

'कृच्छ्रे पञ्चाऽतिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये[2]
चत्वारिंशच्च तप्ते त्रिगुणनगुणिता[3] विंशतिःस्यात् पराके।
कृच्छ्रे सन्तापनाख्ये[4] भवति षडधिका विंशतिः सैव हीना
द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशबलो भोजयेद्विप्रमुख्यान्'॥

इति। अहरहरिति सर्वत्र सम्बद्ध्यते। तृतीयः कृच्छ्रातिकृच्छ्रः। यत्तु प्राजापत्यप्रत्याम्नायत्वेन—

'विप्रा[5] द्वादश वा भोज्याः।'

इति पूर्वमुदाहृतम्। तन्निर्धनविषयम्। धनिकस्य प्रतिदिनं पञ्च पञ्चेति द्वादशसु दिवसेषु षष्टिब्राह्मणभोजनविधानात्। अत एव स्मृत्यन्तरे[6]—

'प्राजापत्यं चरेद्विप्रो यद्यशक्तः कथञ्चन।
अहानि पञ्च विप्राग्र्यान् भोजयेत् सम्यगीप्सितान्'॥

इति। सान्तपनादीनां गोदानप्रत्याम्नायस्तत्रैव चतुर्विंशतिमते[7] दर्शितः—

१. J. omits स and G omits कृच्छ्रादि-; while H substitutes स्व- for स २ B. and D. substitute चरित्वा for तृतीये and H त्रिंशदेव for त्रिंशदेव ३ B. D and G read त्रिगुणिता and I त्रिगुणभगुणिता both for त्रिगुणनगुणिता ४ E B and D read सान्तापनाख्ये, G सान्तपने, H. and J. सान्तपनाख्ये all for सन्तापनाख्ये ५ B and D. read द्विजा for विप्रा; while G. reads विप्रान् for the same and भोजयेत् for भोज्या ६. E. reads स्मृतम् for स्मृत्यन्तरे and G. स्मृत्यन्तरम् for the same. ७. We follow here A. and D.; while all others omit चतुर्विंशतिमते

'प्राजापत्ये तु गामेकां दद्यात् सान्तपने द्वयम् ।
पराके तप्तकृच्छ्रे च तिस्रस्तिस्रस्तु गास्तथा ॥
अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदा ।
यथाविभवसारेण दानं दद्याद्विशुद्धये' ॥

इति । यत्तु स्मृत्यन्तरे चान्द्रायणस्य गोदानत्रयमभिहितम्—

'प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वयं स्मृतम् ।
चान्द्रायणे पराके च तिस्रस्ता दक्षिणास्तथा' ॥

इति तन्निर्धनविषयम् । यथोक्तगोदानादावशक्तो गोभ्यस्तृणं दद्यात् । तथाह कण्वः—

'एकमध्ययनं कुर्यात् प्राजापत्यमथापि वा ।
दद्याद्वा दशसाहस्रं गवां मुष्टिं विचक्षणः'

इति । अध्ययन-जपादीनां पुरुषविशेषेण व्यवस्था चतुर्विंशतिमते दर्शिता—

'धर्मनिष्ठास्तपोनिष्ठाः कदाचित् पापमागताः ।
जप-होमादिकं तेभ्यो विशेषेण विधीयते ॥

---

१. G. reads this line thus:—
प्राजापत्यद्वये तु गामेकां दद्यात्सान्तपने कृच्छ्रम् । ;
while B. and D. read प्राजापत्याय for प्राजापत्ये तु  २. I. reads पराकतप्तातिकृच्छ्रे for पराके तप्तकृच्छ्रे च.  ३ G. reads तदा for तथा H B and D. यथा for the same, while E. substitutes काण्व for कण्व. ४ G. and I. read दशसाहस्र for द्वादशसाहस्रं  ५ Except A I and G. all others read विशेषे for विशेषेण, while G. omits the following —
व्यवस्था चतुर्विंशतिमते दर्शिता—
'धर्मनिष्ठास्तपोनिष्ठा कदाचित् पापमागताः ।
जप-होमादिकं तेभ्यो विशेषेण - - - - - ॥.
६. B. D. and G read अभिधीयते for विधीयते.

नामधारकविप्रा ये मूर्खा धर्मविवर्जिताः ।
कृच्छ्र-चान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः ॥
धनिना दक्षिणा देया प्रयत्नविहिता तु या ।
एवं नरविशेषेण प्रायश्चित्तानि दापयेत्' ॥

इति । अनयैव दिशा स्मृत्यन्तरे प्रसिद्धास्तीर्थयात्रादिप्रत्याम्नाया यथायोगमुन्नेयाः । अत एव देवलः—

'अभिगम्य च तीर्थानि पुण्यान्यायतनानि च ।
नरः पापात् प्रमुच्येत ब्राह्मणानां तपस्विनाम् ॥
सर्वाः समुद्रगाः पुण्याः सर्वे पुण्या नगोत्तमाः ।
सर्वमायतनं पुण्यं सर्वे पुण्या वनाश्रयाः' ॥

(दे. स्मृ. ४९–५०)

'अथ[१] गङ्गा-सरस्वती-यमुना-नर्मदा-विपाशा-वितस्ता-कौशिकी-नन्दा-विरजा-चन्द्रभागा-सरयूः-उत्पथवेर्त्ती[२] सिन्धुः-कृष्णा-वेणी-शोणा[३]-तापी-पारावती-पाषाणकी[४]-गोमती-गण्डकी-बाहुदा-पम्पा[५]-देविका-कावेरी-ताम्रपर्णी[६]-चर्मण्वती-वेत्रवती-गोदावरी-तुङ्गभद्रा[७]-सुचक्षुररुणा

---

१ I. reads इति and shows that the quotation of Devala is completed here, but the following explanation is of the author, therefore, it is a mistake, and I omits अथ and reads तीर्थानि for अथ २ Our manuscripts do not give the correct reading Some read -वर्त्ती some -वन्ता &c ३ B and D substitute -शोणिता- for -शोणा-; while G omits it ४. J. reads -पाषाणगोमती- for -पाषाणकी गोमती- ५ B and D. read -चम्पा- and J -पेया- for -पम्पा-, while G adds -नदी- after -पम्पा- ६ G reads -ताम्रवर्णी- for -ताम्रपर्णी-. ७ J omits the following —

तुङ्गभद्रा सुचक्षुररुणाचेति महानद्य पुण्यतमाः ।
गङ्गाद्वारं कनखल शक्रावतार सौकर प्रयागो.

चेति महानद्यः पुण्यतमाः । गङ्गाद्वारं कनखलं शक्राव-
तारं सौकरं प्रयागो गङ्गासागरमिति एतानि[1] गङ्गायास्ती-
र्थानि । प्लाक्षं[2] प्रस्रवणं वृद्धकन्यकं सारस्वतमादित्यतीर्थं
बदरीपाञ्चालं[3] वैजयन्तं पृथूदकं नैमिषं विनशनं च[4]-
मसोद्भेदं प्रभास इति सारस्वततीर्थानि[5] । कावेरीसङ्गमं
सरस्वतीसङ्गमं[6] गन्धमादनमिति सामुद्राख्यतीर्थानि
पुण्यतमानीति । पुष्करं मूर्धकं[7] गयाशिरः कुरुक्षेत्रमिति
पुण्यक्षेत्राणि । वाराणसी महाभैरवं देवदारुवनं
प्राचीनबर्हिः[8] केदारं मध्यममहालयं[9] कुमारमहालयं
रुद्रावतारं वङ्गलं[10] विष्णुशिवं महाकालं[11] पुरुषोत्तमं जम्बु-
मार्गं[12] चेत्येतान्यायतनानि । हिमवानुदयो महेन्द्रो विदुरः
शतशृङ्गः श्रीपर्वतो[13] देवपर्वतो नीलपर्वतो[14] विन्ध्यपर्वतः
पारियात्रश्चेति पर्वताःपुण्यतमाः पापं नाशयन्ति । अन्यानि
क्षेत्रायतन-पर्वता-ऽऽश्रम-तीर्थानि पुण्यतमानि भवन्ति ।

---

१ G. omits एतानि. २ J reads लाक्ष्य for प्लाक्ष and I प्रश्रवणं वृद्धकन्याक for प्रस्रवण वृद्धकन्यक ३ B and D read आदित्यतीर्थं बदर पञ्चाल for आदित्यतीर्थं बदरपाञ्चाल and I. reads बदरी पाचाल for बदरपाञ्चालं ४. E. B. H and D. च सोद्भेद, J. वसोद्भेदं, G सौद्भेद and I. च्चापोद्भेद all for चमसोद्भेदं ५. B D. and G. read सरस्वतीतीर्थानि for सारस्वततीर्थानि ६ B and D omit सरस्वतीसगम and J reads गन्धमादान for गन्धमादन and H. and G. समुद्राक्ष- for समुद्राख्य - ७ H. reads मूध्वंक and I मूर्द्धज for मूर्धक. ८ I. reads प्राचीनवाह. and B. D E G. प्राचीनवह. for प्राचीनबर्हि ९ B D. and G. read महारुद्र महालयं for मध्यममहालयं कुमारमहालय and for the same I reads मध्यम-महारुद्र महाबल महालयं कुमारमहालयं E. and H. महारुद्रं महालय कुमारमहालय १० B D and G. read तु गुलण्ड, H. तुंगल and J. गलाण्डं all for वङ्गल. ११ B. and D omit महाकाल. १२ J. reads जम्बुग्राम for जम्बुमार्गं. १३ B. D. G. omit श्री and read पर्वतः for श्रीपर्वत. १४ Except A and J all others omit नीलपर्वत , while I. reads वेदपर्वत for देवपर्वत and J. E. omit देवपर्वत and B. and D. omit विन्ध्यपर्वत .

इति। विश्वामित्रः—

'कृच्छ्र[1]-चान्द्रायणादीनि शुद्ध्यभ्युदयकारणम्।
प्रकाशे[2] च रहस्ये चाप्यनुक्ते संशयेऽस्फुटे॥
प्राजापत्यं सान्तपनं शिशुकृच्छ्रः[3] पराककः'।

इति। जमदग्निः[4]—

'तीर्थे तु पादः कृच्छ्रं स्यान्नद्यामर्धफलं[5] लभेत्।
द्विगुणं तु महानद्यां सङ्गमे त्रिगुणं भवेत्'॥

इति। तथा[6] च नारदः—

'अतिकृच्छ्रः[7]पर्णकृच्छ्रःसौम्यःकृच्छ्रातिकृच्छ्रकः॥(२१)
महासान्तपनं शोद्ध्ये तप्तकृच्छ्रस्तु पावनः।
जपोपवासकृच्छ्रस्तु ब्रह्मकूर्चस्तु शोधनः॥ (२२)
एते व्यस्ताः समस्ता वा प्रत्येकं द्व्येकतोऽपि[8] वा।
पातकादिषु सर्वेषु उपपातकेषु[9] च यत्नतः॥ (२३)

---

१. B. D. and J. read कृच्छ्रचान्द्रायणादीनि शुद्धयन्त्युदयकारणम्. G follows this reading, but reads कृच्छ for कृच्छ्र-. H. also reads the same, but differs in reading शुद्धयति for शुद्ध्यभ्यु-. २. B and D. read नुत्तये for अनुक्ते and G reads प्रकारे for प्रकाशे ३. D. reads शिशुकृच्छ्रं- J पराककम् for शिशुकृच्छ्र and पराकक. respectively. ४. I. reads जमदग्नि and omits the following quotation including इति after त्रिशङ्कग षष्टिभाग &c. ५. E G. and H add तु after नद्याम्. B. and D. read नद्या तु त्रिगुण भवेत्, G नद्यां तु षड्भि फलं लभेत्, H नद्यां तु त्रिफलं लभेत् and J. नद्यां तु नि फल भवेत् all for नद्यामर्द्धफल लभेत् ६. I. omits इति तथा च नारद and shows that the following quotation belongs to the Nârada. ७ G omits the following —

'अतिकृच्छ्र पर्णकृच्छ सौम्य कृच्छ्रातिकृच्छ्रक।
महासान्तपन शोद्धचे तप्तकृच्छ्रस्तु पावन॥,

while H. substitutes शोद्धय for शोद्धचे ८. B. and D read ह्येकतो, G. and J. एकतो. H. स्वेकतो all for द्व्येकतो ९. G. reads उपपातेषु for उपपातकेषु.

कार्याश्चान्द्रायणयुता[1] केवला वा विशुद्धये ।
उपवासस्त्रिरात्रं वा मासः पक्षस्तदर्धकम् ॥ (२४)
षडहो द्वादशाहानि कार्या शुद्धिः[2] फलैर्विना ।
उपपातकयुक्तानामनादिष्टेषु[3] चैव हि ॥ (२५)
शक्ति-जाति-गुणान् दृष्ट्वा सकृद्बुद्धिकृतं[4] लघु ।
अनुबन्धादिकं दृष्ट्वा कल्प्यं सर्वं यथागमम्[5] ॥ (२६)
प्रकाश[6] उक्तं यत्किञ्चिद्विंशो भागो रहस्यके ।
त्रिंशद्भागःषष्टिभागः कल्प्यो जात्याद्यपेक्षया'[7] ॥(२७)
( ना. स्मृ. १३. २१–२७ )

इति ॥

इति कृच्छ्रप्रत्याम्नाया निरूपिताः ।

इति श्रीमहाराजाधिराज–परमेश्वर–वैदिकमार्गप्रवर्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां द्वादशाध्याये प्रायश्चित्तप्रकरणम् ॥

---

१ G reads चान्द्रायणयुता सर्वे for कार्याश्चान्द्रायणयुता. २ B. D G. H. and J substitute सिद्धि. for शुद्धि. ३. B and D. read मन्त्रादिष्टेषु for अनादिष्टेषु ४ B and D read शुद्धिकृत for बुद्धिकृत. ५. G. reads यथागमे for यथागमम् ६ E and J प्रकाशयुक्त and G. प्रकाशानुक्त both for प्रकाश उक्त. ७ Except A., others omit this.

## अथ कर्मविपाको निरूप्यते।

यद्यपि लोके कर्मशब्दः सुकृत-दुष्कृतयोः साधारणः तथाप्यत्र प्रायश्चित्तस्य प्रकृतत्वात्तन्निवर्त्यतया दुष्कृतस्यैव बुद्धिस्थत्वात्तत्रैव पर्यवस्यति। विशेषेण पचनं विपाकः फलदशा। कर्मणां विपाकः कर्मविपाकः। स च विपाकस्त्रिविधः जन्म चाऽयुर्भोगश्चेति। एतत्सर्वं पतञ्जलिर्योगशास्त्रे सूत्रयामास—

'सति मूले तद्विपाको जात्यायुर्भोगाः'।

(यो. सू. २. १३)

इति। अस्य सूत्रस्यायमर्थः—अविद्याऽस्मिता-राग-द्वेषाभिनिवेशात्मकाः पञ्च क्लेशाः कर्मणां मूलम्।

'क्लेशमूलः कर्माशयः'।

(यो. सू. २. १२)

इति सूत्रितत्वात्। सति तस्मिन् पञ्चक्लेशात्मके मूले तानि कर्माणि विपच्यन्ते। दग्धक्लेशबीजस्य तु जीवन्मुक्तस्य न सञ्चितानि कर्माणि फलमारभन्ते। ज्ञानाग्निना भस्मसात्कृतत्वात्। यथा वितुषो व्रीहिर्न प्ररोहति तद्वत्। तस्य तुषस्थानीयं क्लेशपञ्चकमुपजीव्यैव कर्माणि जन्मादित्रयरूपेण विपच्यन्ते। तत्र जन्म कृम्यादि।

---

१. I. reads धर्मशब्द through mistake २ B. and D. दुष्टत्वस्यैव, G. दुष्टस्यैव for दुष्कृतस्यैव ३ B. and D. omit फलदशा। कर्मणां विपाकः कर्मविपाक। स च विपाक ।; while E. G H. and J. omit फलदशा। कर्मणां विपाकः कर्मविपाकः ४ J. omits पञ्च क्लेशा ५. B. D. and G. read वृद्ध- for दग्ध-. ६ I. reads तस्मात् बीजस्थानीय for तस्य तुषस्थानीयं. ७. B. and D. जन्मक्रमादि and G. जन्माक्रियादि for जन्म कृम्यादि.

'पतितं याजयित्वा तु क्रिमियोनौ प्रजायते' ।

(ब्र. पु. २१७. ४०)

इत्यादिस्मरणात् । आयुः पञ्च-दशवर्षादिकम् ।

'तत्र जीवति वर्षाणि दश[१] वा पञ्च वा द्विजः' ।

(ब्र. पु २१७. ४०)

इत्यभिधानात् । भोगो यमयातनादिः ।

'यमलोके तु ते घोरां[२] लभन्ते परियातनाम्' ।

(ब्र. पु. १२१.१३७)

इत्यादिस्मरणान् ।

तमेतं जात्यायुर्भोगलक्षणं विपाकं सामान्य-विशेष-शास्त्रोदाहरणेन बहुधा प्रपञ्चयिष्यामः ।

नैनु[३]—नायं विपाको विधातुं प्रतिषेद्धुं वा शक्यते अननुष्ठेयत्वादवर्जनीयत्वाच्च[४] । अत एवैतस्मिन्विधि-प्रतिषेधपरे शास्त्रे[५] तन्निरूपणमयुक्तम् ।

नायं दोषः । प्रायश्चित्तार्थवादत्वेन तदुपयोगात् । अर्थवादस्तु विहिते प्रवर्त्तकत्वेन प्रतिषिद्धान्निवर्त्तकत्वेन[६] च विधि-प्रतिषेधैकवाक्यतां भजते—इति न्यायविदां मर्यादा ।

अत्र च[७] प्राजापत्याद्यनुष्ठानरूपस्य प्रायश्चित्तस्य क्लेशात्म-

---

१ I. reads दश पञ्च च वा द्विज . २ B and D. read घोर and G. घोरे for घोरां. ३. B and D. substitute मनु- for ननु ४ B and D. read अनुष्ठेयात् अवर्जनीयात् च for अननुष्ठेयत्वादवर्जनीयत्वाच्च ५ B. D E G. H. and I read अत एव तस्मिन् for अत एवैतस्मिन्, while I substitutes -परेण शास्त्रेण for -परे शास्त्रे ६ B. and D. विहितप्रतिषेधैक- for प्रतिषिद्धान्निवर्तकत्वेन च and G. read प्रतिषिद्धे निवर्तकेन च for the same; while I. प्रतिषेधैक्यतां for प्रतिषेधैकवाक्यता ७ B. and D. omit च.

कत्वात् रागतः प्रवृत्तिर्न सम्भवतीति तत्र[1] प्रवृत्तिसिद्धये प्ररोचना कर्तव्या।

ननु—विहितेष्वग्निष्टोमादिषु[2] स्वर्गादिविपाकोपवर्णनेन प्ररोचयितुं शक्यते। स्वर्गादीनामनुकूलफलत्वात्। क्षयरोगादीनां तु प्रतिकूलफलत्वेन तदुपवर्णनं न प्ररोचनायोपयुक्तम्।

विषम उपन्यासः। तत्र हि[3] स्वर्गादिसाधने प्ररोचनमुत्पादनीयम्। न त्वत्र क्षयरोगादिसाधने प्ररोचनमुत्पाद्यते। किं तर्हि क्षयरोगादिनिवर्त्तके प्रायश्चित्ते। तन्निवृत्तिश्चानुकूलं फलम्।

ननु—एवमपि क्षयरोगादिनिवृत्तिरूप एव प्रायश्चित्तात्मकस्य कर्मणो विपाकः प्ररोचकत्वेन वक्तव्यः। न तु ब्रह्महत्यादिविपाकः। तस्या[4]ऽप्ररोचकत्वात्।

मैवम्। द्विविधा हि ब्रह्महत्यादयः। सञ्चिता सञ्चेष्यमाणाश्च। तत्र सञ्चेष्यमाणेषु प्रतिषेधविषयेषु ब्रह्महत्यादिषु क्षयरोगाद्युपन्यासः ब्राह्मणावगोरणादौ शतयातनादिवत् तन्निवर्त्तकार्थवादत्वेनान्वेति। सञ्चितेषु प्रतिकूलं फलं[5] श्रुत्वा तत उद्विजमानस्तन्निवृत्त्युपायमाकाङ्क्षति। अत उद्वेगप्रयो[6]जकतया प्रायश्चित्तेऽपि प्रवर्त्तकत्वं भवतीति प्रवर्तक-निवर्तकद्विविधार्थवादत्वेन अयं कर्मविपाकोपन्यास उपयुज्यते[7]।

---

१. G. substitutes अत्र for तत्र २. B and D omit -षु स्वर्गादिविपाको. ३. G. substitutes अपि for हि ४ B and D substitute मनु for न तु and तत्र प्रयोजकत्वात् for तस्याऽप्ररोचकत्वात् ५ B. D. and H omit फल. ६ E H and J read -प्रनाडिकया for -प्रयोजकतया. ७. B. and D read उच्यते for उपयुज्यते.

तदेवं सञ्चित-सञ्चेष्यमाणयोरुपयोगः । आरब्धफलेषु प्रतिकूलफलस्य[1] प्रत्यक्षदर्शनादेवोद्वेगः सिद्ध्यति । प्रवर्त्तकं तु व्याध्यादिनिवृत्तिरूपस्य प्रायश्चित्तविपाकस्योपवर्णनम् । अतः क्षयरोगादिरूपस्तन्निवृत्तिरूपश्च विपाकोऽत्र[2] निरूप्यते ।

तत्र सामान्येन पापकर्मविपाकः शिवधर्मोत्तरेऽभिहितः—

'अथातः[3] पततां पुंसामधर्मः परिकीर्तितः ।
नरकार्णवे[4] महाघोरे पातनात् पापमुच्यते' ॥

इति । विष्णुधर्मोत्तरेऽपि[5]—

'अतिवाहिकसंज्ञस्तु[6] देहो भवति भार्गव[7] ।
केवलं तन्मनुष्याणां मृत्युकाल उपस्थिते ॥ (१)
याम्यैर्नरैर्मनुष्याणां तच्छरीरं भृगूत्तम ।
नीयते याम्यमार्गेण नान्येषां प्राणिनां द्विज ॥ (२)
मनुष्याः प्रतिपद्यन्ते[8] स्वर्गं नरकमेव वा ।
नैवान्ये प्राणिनः केचित् सर्वे ते फलभोजिनः[9] ॥ (४)
शुभानामशुभानां च[10] कर्मणां भृगुनन्दन ।
सञ्चयः क्रियते लोके मनुष्यैरेव केवलम् ॥ (५)

---

१. H omits -फलस्य. २. J omits ऽत्र ३. B D. and G. omit this one line. H. also omits it, but gives in the marginal correction. ४. I reads नरकादौ for नरकार्णवे and B D and I. read पतनात् for पातनात्. ५ B. and D. omit विष्णुधर्मोत्तरेऽपि, while G. omits अपि only and H substitutes च for अपि ६ The text reads अतिवाहिकगर्भस्य for अतिवाहिकसज्ञस्तु ७ B. D E. H read भार्गव for भार्गव, but it seems incorrect as the quoted verses are addressed to Bhârgava. ८. J reads प्रतिपद्यन्त for प्रतिपद्यन्ते ९ Except A. and the text all others read फलभोगिनः for फलभोजिन . १० The text reads वा for च.

तस्मान्मनुष्यस्तु मृतो यमलोकं प्रपद्यते।
नान्यः प्राणी महाभाग फलयोनौ व्यवस्थितः॥ (६)
याम्यलोकं प्रपन्नस्य पुरुषस्य तथा यमः।
योनीश्च नरकांश्चैव निरूपयति कर्मणा'॥ (७)
(वि. ध. २ १०२. २-७)

इति। ब्रह्मपुराणेऽपि—
'कर्मणा मनसा वाचा ये धर्मविमुखा नराः। (१३६)
यमलोके तु ते घोरां लभन्ते परियातनाम्।
इहाल्पमपि कृत्वा तु नरः कर्माऽशुभात्मकम्।
प्राप्नोति नरकं घोरं यमलोकेषु यातनाम्'॥
(ब्र. पु १२५. १३६-१४२)

इति। विष्णुपुराणेऽपि—
'पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः।
पापानामनुरूपाणि प्रायश्चित्तानि यद्यथा॥
तथा तथैव संस्मृत्य प्रोक्तानि परमर्षिभिः'।
(वि. पु. ४. ५. २१-२२)

इति। विष्णुधर्मोत्तरे—
'प्रायश्चित्तैः क्षयं याति पापं कृतमसंशयम्। (३)

१. Except A and the text all others read मनुष्यस्य or मनुष्यश्च for मनुष्यस्तु २ The text reads यच्चैकलोके for याम्यलोक ३. The text reads कर्मणाम् for कर्मणा ४. B D. G. E. H. and J. do not insert ऽपि ५ B and D. read ता for ते and J घोरे for घोरा ६. B and D read इहाऽकामोऽपि, G इह कामोऽपि and H इहान्यमपि all for इहाल्पमपि ७. B D G and J read नरलोकेषु for यमलोकेषु ८. Except A and I. all others omit ऽपि. ९ I. reads तद्यथा for यद्यथा. १०. G reads प्रायश्चित्ताच्छम याति for प्रायश्चित्तैः क्षयं याति, while I. reads कृतं पाप न सशय and B and D पाप कृत्यमसशयम् both for पापं कृतमसंशयम्.

प्रायश्चित्तविहीना ये राजभिश्चाप्यदण्डिताः[१] ।
नरकं प्रतिपद्यन्ते तिर्यग्योनिं तथैव च[२] ॥ (४)
मनुष्यमपि चासाद्य भवन्तीह[३] तथाङ्किताः ।
प्रायश्चित्तमतः कार्यं कल्मषस्यापनुत्तये'॥ (५)

(वि. ध. २. ७०. ३-५)

इति । भविष्योत्तरेऽपि—

'देव-तिर्यङ्-मनुष्याणामधर्मनिरतात्मनाम्[४] ।
धर्मराजः स्मृतः शास्ता सुघोरैर्विविधैर्वधैः[५] ॥
नियमाचारसक्तानां प्रमादात्[६] स्खलितात्मनाम् ।
प्रायश्चित्तैर्गुरुः शास्ता न तु[७] तैरिष्यते यमः ॥
पारदारिक-चौराणामन्यायव्यवहारिणाम् ।
नृपतिः शासकः प्रोक्तः प्रच्छन्नानां च धर्मराट् ॥
तस्मात् कृतस्य पापस्य प्रायश्चित्तं समाचरेत्' ।

इति । ब्रह्मपुराणे—

'ततश्च यातनादेहं क्लेशेन प्रतिपद्यते ।
तत्कर्मजं यातनार्थममातापितृसम्भवम् ॥

---

१. The text reads अवसिता for अदण्डिता २ B D E. G substitute वा for च ३. B and D. read भवन्ति हतपङ्क्तिला· for भवन्तीह तथाङ्किताः; while G. substitutes इति for इह. ४. B D G. E and H. read -नियतात्मनाम् for -निरतात्मनाम्. ५. I. reads विधैः and B वधे for वधैः. ६. B and D. read प्रमादास्खलितात्मनाम् for प्रमादात् स्खलितात्मनाम्. ७. G. reads ननु for न तु

तत्प्रमाणवयो-ऽवस्था-संस्थानैः प्राक्तनं यथा।
विहाय सुमहागुप्तं शरीरं पाञ्चभौतिकम् ॥ (२९)
अन्यत् शरीरमादत्ते यातनार्थं स्वकर्मजम्।
तन्मात्रैगुणसंयुक्तं नानात्मीयं स्वकर्मजम् ॥
दृढं शरीरमाप्नोति सुख-दुःखोपभुक्तये। (३१)
तेन भुक्त्वा स्वकर्माणि पापकर्ता नरो भृशम् ॥
सुखानि धार्मिकोऽदुष्ट इहानीतो यमक्षयात्' ॥ (३२)
(ब्र. पु २१४. २८-३२)

इति। मनुस्तु मानसादिकर्मविशेषेण विपाकविशेषमाह—

'चातुर्वर्ण्यस्य कृत्स्नोऽयमुक्तो धर्मस्त्वया ऽनघ।
कर्मणां फलनिर्वृत्तिं शंस नस्तत्त्वतः पराम् ॥ (१)
स तानुवाच धर्मात्मा महर्षीन् मानवो भृगुः
अस्य सर्वस्य शृणुत कर्मयोगस्य निर्णयम् ॥ (२)
शुभाशुभफलं कर्म मनो-वाग्देहसम्भवम्।
कर्मजा गतयो नृणामुत्तमा-ऽधम-मध्यमाः ॥ (३)

१ The following is not in the text —
ततश्च यातनादेह क्लेशेन प्रतिपद्यते।
तत्कर्मजं यातनार्थममातापितृसम्भवम् ॥
तत्प्रमाण-वयो-ऽवस्था-संस्थानैः प्राक्तनं यथा।

२ B. and D. read -स्थापनै for -संस्थानै, while E H तथा for यथा and G. प्राकृतै for प्राक्तन २ B and D. read अन्य for अन्यत् ३. B. and D omit this line and G. reads तन्मात्रा- for तन्मात्र- while H. तन्मात्र for the same ४ G. reads -पयुक्तये for -पभुक्तये ५ G. reads पापकर्मा for पापकर्ता. ६. I. reads धार्मिको भुङ्क्ते for धार्मिकोऽदुष्ट ७. J. reads कृत्स्नस्य. ८. J. B. and D. read त्वमत परम् for तत्त्वत पराम्, while G. substitutes फलम् for पराम्. ९ B. D E. G. and H read नूनम् for नृणाम्.

तस्येह त्रिविधस्याऽपि त्र्यधिष्ठानस्य[१] देहिनः ।
दशलक्षणयुक्तस्य मनो विद्यात् प्रवर्तकम् ॥ (४)
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्ममानसम् ॥ (५)
पारुष्यमनृतं चैव पैशुन्यं चापि[२] सर्वशः ।
असम्बद्धप्रलापश्च[३] वाङ्मयं स्याच्चतुर्विधम् ॥ (६)
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च शारीरं त्रिविधं[४] स्मृतम् ॥ (७)
मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् ।
वाचैव[५] वाकृतं कर्म कायेनैव तु[६] कायिकम् ॥ (८)
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः[७] पक्षिमृगतां मानसैरन्त्यजातिताम्' ॥ (९)
(म. स्मृ. १२. १-९)

इति । हारीतोऽपि—

'सर्वाभक्ष्यभक्षणमभोज्यभोजनमपेयपानमगम्या-[८]
गमनमयाज्ययाजनमसत्प्रतिग्रहणं परदाराभिग-
मनं द्रव्यापहरणं प्राणिहिंसा चेति शारीराणि ।
(१३) पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति[९] वा-

---

१ J. reads अधिष्ठानस्य and I. reads ह्यधिष्ठानस्य both for त्र्यधिष्ठानस्य
२ Except A and the text all others read चैव for चापि. ३. B. D E. H. I and J read अनिबद्ध- and G अतिबद्ध- for असम्बद्ध- ४. J. reads विविधं for त्रिविध ५ We follow here only A and I., while B D. E. G. H. and J वाचैव वाङ्मय and the text वाचा वाचा कृत for वाचैव वाक्-कृत. ६. The text substitutes च for तु. ७ B and D. read this line thus:—
मानसैर्मृगपक्षित्वं वाचिकैरन्त्यजातिताम्' ॥
८. I. omits अपेयपानम् ९ G. reads -क्रय for -विक्रय .

चिकानि । ( १४ ) परोपतापनं पराभिद्रोहः क्रोधो लोभो मोहोऽहङ्कारश्चेति मानसानि । ( १५ ) तदेतान्यष्टादश नैरयाणि कर्माणि यस्मिन् यस्मिन् वयसि करोति यः स तस्मिन् तस्मिन् वयसि शारीर-वाचिक-मानसानि प्राप्नोति ।(१६)एवं ह्याह—

यस्यां यस्यामवस्थायां यत् करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्तत्फलमवाप्नुयात् ॥ (१७)
शरीरेणैव शारीरं वाङ्मयेन तु वाचिकम् ।
मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्'॥ (१८)
(हा. स्मृ. ३२. १३–१८)

इति । आत्मन ईश्वररूपत्वं प्रतिपाद्याह याज्ञवल्क्यः—

'यद्येवं स कथं ब्रह्मन् पापयोनिषु जायते ।
ईश्वरः स कथं भावैरनिष्टैः सम्प्रयुज्यते ? ॥ (१२९)
करणैरन्वितस्यापि पूर्वज्ञानं कथंच न ।
वेत्ति सर्वगतां कस्मात् सर्वगोऽपि न वेदनाम्?॥(१३०)
अन्त्य-पक्षि-स्थावरतां मनो-वाक्काय-कर्मजैः ।
दोषैः प्रयाति जीवोऽयं भवयोनिशतेषु च ॥(१३१)

---

१ G omits लोभो. २. B and D. omit मानसानि ३. I omits वयसि and J substitutes काले for वयसि and G omits करोति य. स तस्मिन् तस्मिन् वयसि. ४ B and D read मानसान्याप्नोति, G E. H. and J मानसान् प्राप्नोति for मानसानि प्राप्नोति ५ G. omits हि ६. G. reads उपयुङ्क्ते for उपभुङ्क्ते. ७ The text reads करणेनान्वितस्यापि for करणैरन्वितस्यापि. ८. J. and the text reads पूर्वं ज्ञान for पूर्वज्ञान. ९ B. and D. reads न वेवताम्, J निर्वेदनाम् for न वेदनाम्. १०. G. reads अन्य- for अन्त्य-.

अनन्ताश्च यथा भावाः शरीरेषु शरीरिणाम् ।
रूपाण्यपि तथैवेह सर्वयोनिषु देहिनाम् ॥ (१३२)
विपाकः कर्मणां प्रेत्य केषांचिदिह[1] जायते ।
इह चा[2]मुत्र चैकेषां भावस्तत्र प्रयोजनम् ॥ (१३३)
परद्रव्याण्यभिध्यायंस्तथाऽनिष्टानि चिन्तयन् ।
वितथाभिनिवेशी च जायतेऽन्त्या[3]सु योनिषु ॥ (१३४)
पुरु[4]षोऽनृतवादी च पिशुनः परुषस्तथा ।
असम्बद्धप्रलापी च मृग-प[5]क्षिषु जायते ॥ (१३५)
अदत्तादाननिरतः परदारोपसेवकः ।
हिंसकश्चाविधानेन स्थावरेष्वभिजायते' ॥ (१३६)
(या. स्मृ ३. १३१–१३६)

इति । सत्त्वादिगुणविशेषेण विपाकविशेषं स एवाह—

'आत्मज्ञः शौच[7]वान् दान्तस्तपस्वी विजितेन्द्रियः ।
[8]धर्मकृद्वेदविद्याति सात्त्विको देवयोनिताम् ॥ (१३७)
असत्कार्यरतो धीर आरम्भी विषयी च य[9]ः ।
स राजसो मनुष्येषु मृतो जन्माधिगच्छति ॥ (१३८)

---

१ B. and D. read अभिजायते for इहजायते २ The text reads वा for both च in this line. ३ I. reads ऽन्त्यादि- for ऽत्यासु- ४ A. C E H. and I. read पुरुषा for पुरुषो . ५ J reads अनिबद्ध प्रलापी च for असम्बद्धप्रलापी च ६ E I. and J read मृतः पक्षिषु for मृग-पक्षिषु. ७. Before शौचवान् J. adds कृत- ८ J. reads कर्मकृत्- for धर्मकृत्. The text reads धर्मकृद्वेदविद्यावित् for धर्मकृद्वेदविद्याति, while G. omits the following —

धर्मकृद्वेदविद्याति सात्त्विको देवयोनिताम् ॥
असत्कार्यरतो धीर आरम्भी विषयी च य ।.

९. I. reads विषयात्मक. for विषयी च यः.

निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा।
प्रमादवान् भिन्नवृत्तो भवेत्तिर्यक्षु तामसः॥ (१३९)
रजसा तमसा चैवं समाविष्टो भ्रमन्निह।
भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते'॥ (१४०)
(या. स्मृ. ३. १३७-१४०)

इति। मनुरपि-

'सत्त्वं रजस्तमश्चेति त्रीन् विद्यादात्मनो गुणान्।
यैर्व्याप्येमान् स्थितो भावान् महान् सर्वानशेषतः॥(२४)
यो यदैषां गुणो देहे साकल्येनातिरिच्यते।
स तदा तद्गुणप्रायं तं करोति शरीरिणम्॥ (२५)
सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्।
एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः॥ (२६)
तत्र यत् प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत्।
प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत्॥ २७॥

---

१. J reads प्रमादवाक् for प्रमादवान्. २ Except A and the text all others read एव for एवं ३. The text substitutes एवं for इति. ४ J. reads this line thus —

यो व्याप्येह स्थितो भावो गृह्णन् सर्वाविशेषतः।,

E substitutes यो व्याप्येमां for यैर्व्याप्येमान्, G स्थितान् for स्थितो ५. B and D. read सत्त्वं तमश्च ज्ञानं च, while J सत्यं ज्ञानं तमोऽज्ञानं ६ G reads एते for एतद् and E omits this line and the following 29 lines, and the word अधमा from . . -मदेतेषां सर्वभूताश्रितं वपुः।. H. reads एतद्व्याप्तमिदं for एतद्व्याप्तिमदे-. ७ From this line to the end of 39 S'loka this portion does not appear in I.

यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः ।
तद्रजोऽप्रतिघं[१] विद्यात् सततं हारि देहिनाम् ॥ २८ ॥
यत्तु स्यान्मोहसंयुक्तमव्यक्तं[२] विषयात्मकम् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ २९ ॥
त्रयाणामपि चैतेषां गुणानां यः फलोदयः ।
अग्र्यो मध्यो जघन्यश्च तं प्रवक्ष्याम्यशेषतः ॥३० ॥
वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः ।
धर्मक्रियाऽऽत्मचिन्ता[३] च सात्त्विकं गुणलक्षणम् ॥३१॥
आरम्भरुचिता[४] धैर्यमसत्कार्यपरिग्रहः ।
विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ॥ ३२ ॥
लोभः[५] स्वप्नोऽधृतिः क्रौर्यं[६] नास्तिक्यं भिन्नवृत्तिता ।
याचिष्णुता प्रमादश्च[७] तामसं गुणलक्षणम् ॥ ३३ ॥
त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम् ।
इदं सामासिकं[८] ज्ञेयं क्रमशो गुणलक्षणम् ॥ ३४ ॥

---

१. J. B D. and G. read ऽप्रतिभ for ऽप्रतिघं and H ऽप्रतिस for the same. The different commentators of Manû read variously, Medhâtithî and Kulluka Bhatta read ऽप्रतिम, Râghavânanda, Nandana and Râmchandra ऽप्रतिघ and Govinda Raja follows the same. २ B. and D. read अव्यक्तविषयात्मकम् and H. अव्यक्तिविषयात्मकम् for अव्यक्त विषयात्मकम्. ३. B. and D read अद्वेषः सर्वभूतेषु for धर्मक्रियात्मचिन्ता च, while G. H. and J omit this and the following one line:—

धर्मक्रियाऽऽत्मचिन्ता च सात्त्विक गुणलक्षम् ॥
आरम्भरुचिता धैर्यमसत्कार्यपरिग्रह ।

४ B. omits this line. ५ G. and J. omit this and the following one line:—

लोभः स्वप्नोऽधृति क्रौर्यं नास्तिक्यं भिन्नवृत्तिता ।
याचिष्णुता प्रमादश्च तामस गुणलक्षणम् ॥.

६. B. D. H. and J. शौर्यं for क्रौर्यं. ७. B. and D. read प्रसादश्च for प्रमादश्च. ८. B. and D. read मानसिकं for सामासिकं

यत् कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जते[1] ।
तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम् ॥ ३५ ॥
येनास्मिन्कर्मणा लोके ख्यातिमिच्छति पुष्कलाम् ।
न च शोचत्यसम्पत्तौ तद्विज्ञेयं तु राजसम् ॥ ३६ ॥
यत् सर्वेणेच्छति[2] ज्ञातुं यन्न लज्जति चाचरन् ।
येन तुष्यति चात्मास्य तत् सत्त्वगुणलक्षणम् ॥३७॥
तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते ।
सत्त्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथाक्रमम्[3]॥ ३८ ॥
येन यांस्तु[4] गुणेनैषां संसारान्प्रतिपद्यते ।
तान् समासेन वक्ष्यामि सर्वस्यास्य यथाक्रमम् ॥३९॥
देवत्वं सात्त्विका यान्ति मनुष्यत्वं हि[5] राजसाः ।
तिर्यक्त्वं तामसा नित्यमित्येषा[6] त्रिविधा गतिः॥(४१)
त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः[7] ।
अधमा मध्यमाऽग्र्या च कर्मविद्याविशेषतः।( ४१ )
स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सरीसृपाः[8] ।
पशवश्च शृगालाश्च[9] जघन्या तामसी गतिः ॥ ( ४२ )

---

१ The text reads लज्जति; while B and D read लज्जसे for the same २ B and D read सर्वं नेच्छति for सर्वेणेच्छति. ३ The text reads यथात्तरम् for यथाक्रमम ४ The text reads येन यस्तु, but the commentator Medhâtithî reads यान् , Kulluka Bhatta and Râmchandra also follow the same and H एतषा तु both for येन यास्तु ५. B. D and the text substitute च and G H and J तु for हि ६ G reads इत्येषा च शिव मति for इत्येषा त्रिविधा गति and J reads इत्यषा for इत्येषा. ७ G reads मति for गति ८ The text reads सक्रच्छपा for सरीसृपा ९. The text substitutes मृगाश्चव for शृगालाश्च.

हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः[1] ।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥(४३)
चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः ।
रक्षांसि च पिशाचाश्च तामसेषूत्तमा[2] गतिः ॥ ( ४४ )
झल्ला[3] मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः[4] ।
द्यूतपानप्रसक्ताश्च जघन्या[5] राजसी गतिः ॥ ( ४५ )
राजानः क्षत्रियाश्चैव राज्ञां चैव पुरोहिताः ।
वाद[6]-युद्धप्रधानाश्च मध्यमा राजसी गतिः ॥ ( ४६ )
*गन्धर्वा[7] गुह्यका यक्षा विबुधानुचराश्च[8] ये ।
*तथैवाप्सरसः सर्वा राजसेषूत्तमा[9] गतिः ॥ ( ४७ )
तापसा यतयो विप्रा ये च वैमानिका गणाः ।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः॥ (४८)
यज्वान ऋषयो वेदा देवा ज्योतींषि वत्सराः ।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥ (४९)

---

१. I. reads विगर्हिता for गर्हिता २ The text reads तामसीषु for तामसेषु ३ E. G and H. read भल्ला, J भिल्ला both for झल्ला, while B and D omit this and the following one line –

झल्ला मल्ला नटाश्चैव पुरुषा शस्त्रवृत्तय ।
द्यूतपानप्रसक्ताश्च जघन्या राजसी गति ॥

४. G. reads तु कुकृतय, E. and H तु कुवृत्तय for शस्त्रवृत्तय ५ E. G. and J read प्रथमा for जघन्या, while H omits this and the following one line —

द्यूत-पानप्रसक्ताश्च जघन्या राजसी गति ॥
राजान क्षत्रियाश्चैव राज्ञा चैव पुरोहिता. ।

६ B. D E G H. and J. read दान- for वाद-. ७ G omits this and the following one line —

गश्चर्या गुह्यका यक्षा विबुधानुचराश्च ये ।
तथैवाप्सरस सर्वा राजसेषूत्तमा गति ॥.

८ E. I. and J read विविधानुचरा. for विबुधानुचरा. ९. The text reads राजसीषु for राजसेषु.

ब्रह्मा[1] विश्वसृजो धर्मो महानव्यक्तमेव च।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः॥ (५०)
एष सर्वः समुद्दिष्टस्त्रिप्रकारस्य कर्मणः।
त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्वभौतिकः॥ (५१)
(म. स्मृ. १२. २४–५१)

इति॥

अथ प्रेतत्वादिहेतुभ्यो नानाविधेभ्यः पाप[2]विशेषेभ्यो यो-निविशेषा अभिहिता विष्णुधर्मोत्तरे—

'असहिष्णुतयान्यस्य गुणानां कारणं[3] विना।
महत् पापं समुत्पन्नं तदस्य प्रेतकारणम्॥
ब्रह्मस्वहारिणश्चैते[4] पापाः प्रेतत्वमागताः।
परदाररताः केचित् स्वामिद्रोहरताः परे[5]॥
मित्रद्रोहरताः केचिद्देशेऽस्मिन्भृशदारुणे।
स्वकर्मभि[6]श्च्युताः सर्वे जायन्ते प्रेतयोनिषु'॥
(वि. ध. २. ७०. २३–२५)

इति[7]। पद्मपुराणे—

'अयाज्ययाजकश्चैव याज्यानां च विवर्जकः।

---

१. B D E and J read ब्रह्मविश्वसृजो, while H I. substitute महत् for महान् २. G reads पापेभ्य for पापविशेषेभ्य; while except A. and I. all others omit अभिहिता ३ B. and D read करण- for कारण- ४ B. D and H. read एव for एते ५ G reads परा for परे ६ B. D. E G H. and J. read स्वकर्मविच्युता for स्वकर्मभिश्च्युता.. ७ G. does not insert इति H reads यमपुराणे for पद्मपुराणे I searched for the Padma purâna which is available in this time. The following quoted verses are found in the same

विरतो[1] विष्णुविद्यासु स प्रेतो जायते नरः ॥ (५०)
सामान्यदक्षिणां[2] लब्ध्वा गृह्णात्येको विमोहितः[3] ।
नास्तिक्यभावनिरतः स प्रेतो जायते नरः' ॥ (५३)
(प पु. ४५. २७. ५०–५३)

इति[4] । स्कान्दे चमत्कारखण्डे–

'यो भवेन्मानवः क्षुद्रस्तथा पैशुन्यकारकः ॥
ब्राह्मणान्वयसम्भूतो वृथामांसाशनश्च[5] यः ।
प्राणिनां हिंसको नित्यं स प्रेतो जायते नरः ॥
अकृत्वा देवकार्यं यस्तथा च[6] पितृतर्पणम् ।
योऽश्नाति[7] भृत्यवर्गेभ्योऽदत्वा प्रेतः स जायते ॥
परदाररतश्चैव परवित्तापहारकः ।
परापवादसन्तुष्टः[8] स प्रेतो जायते नरः ॥
कन्यां यच्छति वृद्धाय नीचाय[9] धनलिप्सया ।
कुरूपाय कुशीलाय स प्रेतो जायते नरः ॥
देव-स्त्री-गुरुवित्तानि गृहीत्वा न[10] प्रयच्छति ।

---

१. The text reads —

रतो वै शूद्रसेवासु स प्रेतो जायते नर ॥
सामान्या दक्षिणा लब्ध्वा गृण्हीते एक एव तु ।
नास्तिक्यभावे निरत स वै प्रेतोऽभिजायते' ॥

I reads विरक्तो for विरतो २ J. reads सामात्यदक्षणां लब्धो, B. D लक्षणां for दक्षिणां. E लब्धा for लब्ध्वा ३ G reads एनोविमोहित for एको विमोहित· ४. G omits इति and reads स्कन्दोत्तरखण्डे for स्कान्दे चमत्कारखण्डे. ५ B D and G read -अशक for -अशन ६ J substitutes वा for च. ७ G reads योऽमात्य-भृत्य- for योऽश्नाति भृत्य- ८. B. and D read पापापवादसन्तुष्ट for परापवादसन्तुष्ट ९. E substitutes क्लीबाय for नीचाय. १०. B D G and J read यो न यच्छति for न प्रयच्छति ; while E and H. योऽनुगच्छति for the same.

विशेषाद्ब्राह्मणेन्द्राणां स प्रेतो जायते नरः ॥
दीयमानस्य वित्तस्य ब्राह्मणेभ्यस्तु पापकृत्।
विघ्नमाचरते यस्तु स प्रेतो जायते नरः॥
शूद्रान्नेनोदरस्थेन ब्राह्मणो म्रियते यदि।
त्रिकालज्ञो वेदवेदी धर्मज्ञोऽथ षडङ्गवित्।
चतुर्वेद्यपि यो विप्रः स प्रेतो जायते नरः॥
शास्त्रकर्ता ग्रन्थकर्ता यद्यपि स्यात् षडङ्गवित्।
कुल-देशोचितं कर्म यस्त्यक्त्वाऽन्यत् समाचरेत्[१] ॥
कामाद्वा यदि वा मोहात् स प्रेतो जायते नरः।
उच्छिष्टस्य विशेषेण अन्तरिक्षमृतस्य[२] च ॥
विषा-ग्नि-जलमृत्यूनां तथा चैवात्मघातिनाम्[३]।
प्रेतत्वं जायते नूनं सत्यमेतन्न संशयः' ॥

इति। अग्निपुराणे—

'मातरं पितरं वृद्धं ज्ञातिं साधुजनं तथा।
लोभात्त्यजति यस्त्वेतान् स प्रेतो जायते नरः॥
कुज्योतिः[४] कुत्सितो वैद्यः कुज्ञानी च कुदेशिकः[५]।
शूद्रानुग्रहकर्ता[६] च स प्रेतो जायते नरः॥
निन्दको द्विज-देवानां गीत-वाद्यरतः सदा।
वृद्धं बालं गुरुं विप्रान् योऽवमत्य भुनक्ति वै[७] ॥
कन्यां ददाति शुल्केन स प्रेतो जायते नरः।

१ G. reads समाचरन् for समाचरेत्. २ B. and D. अन्तरिक्षकृतस्य च. ३. G. reads तथान्यैवात्म- for तथा चैवात्मघा-. ४. G. omits this and the following four lines. ५ B. and D. read -देशकः for -देशिकः. ६ B. and D. read शूद्रानुग्रहकर्मा for शूद्रानुग्रहकर्ता. ७. J. substitutes वा for वै.

न्यासापहर्ता मित्रध्रुक् परपाकरतः सदा ॥
निर्दोषं सुहृदं भार्यां ऋतुकाले न याति यः[1] ।
न सहेत यशस्तेषां[2] स प्रेतो जायते नरः ॥
हस्त्यश्व-रथ-यानानि मृतशय्यासनानि च ।
कृष्णाजिनं[3] तु गृह्णाति अनापदि तु यो द्विजः ॥
तथोभयमुखीं दोलां[4] सशैलां मेदिनीं द्विजः ।
कुरुक्षेत्रे च यद्दानं चाण्डालात् पतितात्तथा ॥
मासिके च नवश्राद्धे भुञ्जन् प्रेतान्नमेव[5] च ।
भूमि-कन्यापहर्ता च स प्रेतो जायते नरः' ॥

(अ. पु. २०१. ४१–४८)

इति[6] । उमामहेश्वरसंवादे–

'अपहृत्य च सर्वस्वं देवस्वं च तथा परम् ।
दत्तापहारदानाच्च[7] पैशाच्यं याति वै नरः ॥
योनिकार्यं च यो देवि आहितेन[8] तु कारयेत् ।
सोऽपि याति पिशाचत्वं स्वामिद्रोहेण मानवः ॥

---

१. G. reads त्यजेत् काले न याति नः (य), B and D त्यज्य काले न याति य both for ऋतुकाले न याति य ; while A त्यजन काले न पाति य for the same. २ B D E and H read न वहेत यश for न सहेत यश, while J substitutes वहेत for सहेत. ३ E. H and J मृगाजिन for कृष्णाजिन ४. G. and J read डोली and I घोरा both for दोला ५ I. reads प्रेतार्थम् for प्रेतान्नम् ६ B. omits इति । उमामहेश्वरसंवादे —

'अपहृत्य च सर्वस्व देवस्व च तथा परम् ।
दत्तापहारदानाच्च पैशाच्य याति वै नर ॥;

while G. omits इति only ७ G. reads this line thus —

दत्तापहारी दानाद्धे पैशाच याति वा नर ॥.

८. B. D. E. G. and H. read अहितेन for आहितेन.

स्वामिद्रव्यं गृहीत्वा तु न यजेन्न[1] ददाति च।
आत्मनः पोषको मूढः पिशाचत्वं स[2] गच्छति॥
मठाधिपत्यं[3] यो देवि कुरुते मदमोहितः।
विनाशयेन्मठद्रव्यं निर्माल्यं यश्च भक्षति॥
परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य[4] च।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः॥
अधर्मं धर्ममित्याहुर्ये[5] तु मोहवशं गताः।
हर्त्तारः परदाराणां चौर्येण बलतोऽपि वा[6]॥
अरण्ये निर्जले देशे भवन्ति ब्रह्मराक्षसाः'॥
( नास्ति मुद्रितम. भा. शां. पुस्तके. )

इति[7]। मनुः—

'संयोगं[8] पतितैर्गत्वा परस्यैव च योषितम्।
अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः॥ (६०)
गुरुं त्वंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः॥

---

१ B. and D read यो यजेत्, E. न यजेत् both for न यजेन्न. २ Except A and I all others read च for स ३ We follow here A and H, while B D and I read मठापत्य च, E माठायत्य च, G महापत्य च and J माठापत्य च all for मठाधिपत्य All of these forms are incorrect and meaningless ४ I reads ब्राह्मणस्व प्रहृत्य च for ब्रह्मस्वमपहृत्य च ५. H reads इत्याह यस्तु मोहवश गता for इत्याहु ये तु मोहवश गता . ६ G. reads च for वा ७ E. omits the following .—

इति । मनु —

'सयोग पतितैर्गत्वा परस्यैव च योषितम ।
अपहृत्य च विप्रस्व भवति ब्रह्मराक्षस ॥

८ Only this and the following one line occurs in the text of Manu, the other four lines in this quotation are not found in the text.

ये ब्राह्मणान् प्रद्विषन्ति गर्हित्वा ते हि राक्षसाः ।
आचार्यमृत्विजश्चैव गुरुं चैव तपस्विनम् ।
मुनींश्चाप्यवमन्यन्ते ते भवन्तीह राक्षसाः' ॥

(म. स्मृ. १२. ६०)

इति । वामनपुराणे—

'चण्डालादन्त्यजाद्वापि प्रतिगृह्णाति दक्षिणाम् ।
याजको याज्यमानस्तु सोऽश्मान्तः स्थलकीटकः' ॥

(वा. पु. ६१. २७)

इति । स्कान्दे रेवाखण्डे—

'बुभुक्षितेषु भृत्येषु य एकोऽश्नाति मानवः ।
श्वयोनिं स समासाद्य चन्डालो जायते नरः ॥
वेदोक्तं यः परित्यज्य धर्ममन्यं समाचरेत् ।
दशवर्षसहस्राणि श्वयोनौ जायते ध्रुवम् ॥
वेदार्थनिन्दका ये च ये च ब्राह्मणनिन्दकाः ।
इह जन्मनि शूद्रास्ते मृताः श्वानो भवन्ति हि' ॥

(स्क. पु. रे. खं. ३०. ३७–३९)

इति । ब्रह्मपुराणे—

'यदि पुत्रसमं शिष्यं गुरुर्जह्यादकारणम् ।
आत्मनः कामकारेण सोऽपि हिंस्रः प्रजायते ॥ (४८)

---

१ I. does not insert this line, also is not occurred in the text of Manu. २ B. G. and J read गर्वित्वा and D गर्वित्वात् for गर्हित्वा ३ B. and D read चैवावमन्यन्त for चाप्यवमन्यन्त ४ I reads यजमानश्च स स्यात्तु, B D E. H and J याजमानस्तु स भवेत्तु for याज्यमानस्तु सोऽश्मान्तः, while H. substitutes स स्याद्बुच्छलर्कीटक for सोऽश्मान्त स्थलकीटक. ५. B E G H. and J do not insert स्कान्दे रेवाखण्डे ६ G. reads एको ऽश्नाति च मानव for य एकोऽश्नाति मानव ७ I. reads ह for हि. ८. B. and D. read तथैव च for प्रजायत

पितरं मातरं चैव यस्तु पुत्रोऽवमन्यते ।
सोऽपि विप्रो मृतो जन्तुः पूर्वं जायेत गर्दभः ॥ (४९)
गर्दभत्वं तु[1] सम्प्राप्य दश वर्षाणि जीवति ।
संवत्सरं तु कुम्भीरस्ततो जायेत मानवः ॥ (५०)
ज्येष्ठं पितृसमं चापि[2] भ्रातरं योऽवमन्यते ॥ (७५)
सोऽपि मृत्युमवाप्नोति क्रौञ्चयोनौ चै[3] जायते । (७६)
आशाऽपहर्ता तु नरः कृमियोनौ प्रजायते ॥
विश्वासहर्त्ता तु नरो मीनो जायेत दुर्मतिः । (५१)
उपस्थिते विवाहे तु[4] यज्ञे दाने महोत्सवे ॥
मोहात्[5] करोति यो विघ्नं स मृतो जायते कृमिः ।
कृतघ्नः[6] स मृतो विप्रो यमस्य विषयं गतः ॥ (८०)
यमस्य विनयैः[7] क्रूरैर्वधं प्राप्नोति दारुणम् । (८१)
यातनाः प्राप्य तत्रस्थस्ततो बह्वीः समा द्विजाः[8] ॥ (८३)
ततो दशः[9] कृतघ्नश्च संसारं प्रतिपद्यते ।
जलप्रवर्षणं[10] यस्तु भिन्द्यान्मत्स्यो भवेत्तु सः ।

---

१. G substitutes च for तु, while except A and the text omit —
. . . . . . . दश वर्षाणि जीवति ।
संवत्सरं तु कुम्भीर . . . . . . . . . ॥.

२ G. reads वापि for चापि. ३. G reads प्रजायते for च जायते ४ G reads च for तु. ५ B and D read महत् for मोहात्. ६ I reads कृतघ्नस्तु मृतो for कृतघ्न स मृतो ७. I reads विषये क्रूरैर्बन्ध and J विषयैं क्रूरैर्बाधा both for विनयै. क्रूरैर्वध, while G substitutes दारुणाम् for दारुणम्. ८. E G and H read यो द्विज बर्ह्वाश्च, B and D. बह्वीश्च स द्विज and I. बह्वीश्च भो द्विजा all for बर्ह्वी. समा द्विजा ९. Except A. all others read ततो गत for ततो दश १० B and I read जलप्रवहणं for जलप्रवर्षण and D जलस्य वहण for the same.

अयोनिगो वृकोे[1] हि स्यादुलूकः क्रयवञ्चनात् ।
प्रतिश्रुत्य द्विजेभ्यश्चा[2]ऽप्यदत्त्वा मधुको भवेत् ॥
लभेद्देवलको राजन् योनिं चण्डालसंज्ञिताम् ।
मृतस्यैकादशाहे तु भुञ्जन् श्वा[3] चाभिजायते' ॥

(ब्र. पु. २१८, ४८–८३

इति[4] । गरुडपुराणे—

'कौट[5]साक्ष्यप्रदाः पापा अमेध्यकृमयश्चिरम् ।
भूत्वा भवन्ति सर्पास्ते पिशाचास्तदनन्तरम् ॥
गुरु-मित्रद्रुहः पापा ये च स्वामिद्रुहो जनाः ।
द्विज[6]-शिष्यद्रुहश्चैव कृतघ्ना नास्तिकास्तथा ॥
त्यागिनो बान्धवानां च त्यागिनः शरणार्थि[7]नाम् ।
अमेध्यकृमयः पापा[8] मृगव्याधा भवन्ति च ॥
उरु[9]रोगगणोपेता जायन्ते शम्बुकां[10] जले ।
चन्द्रार्कग्रहणे भुक्त्वा जायते कुञ्जरो नरः' ॥

( ग. पु. २८१. ५–९ )

१. B. D. and G. read वृषो for वृको २. G. does not add अपि after द्विजेभ्यश्च, while J. reads द्विजेभ्यश्चादत्त्वा मधुकृको भवेत् for द्विजेभ्यश्चाप्यदत्त्वा मधुको भवेत् ३. Except I all read श्वानोऽभिजायते foi श्वा चाभिजायते. ४. B. D. G. and H. omit इति and B. and D substitute गारुडे for गरुडपुराणे. ५. B. D. E G H and J. read कूटसाक्ष्यप्रदा for कौटसाक्ष्यप्रदा ६. E. and H read द्विजाः for द्विज- ७ G. reads परमार्थिनाम् for शरणार्थिनाम्. ८ E. I. and G substitute सर्वे for पापा ; while H. substitutes मृता foi मृग–. ९ B D E H. and J. read पुरो रोगगणोपेता. J. पुरो रोगगुणोपेता and I. गुरुरोमगणोपेता all for गुरुरोगगणोपेताः १०. Except A. and I., all read काम्बुका , but the form is incorrect.

इति । शिवधर्मोत्तरे[1]—

'विप्रः पञ्चमहायज्ञानकृत्वा योऽन्नमश्नुते ।
विड्वराहो भवेन्नित्यं क्रव्याशी[2] व्याध एव च ॥
द्विजस्त्वेकशफानां च विक्रयाज्जायते मृगः ।
मत्सरी[3] विट्कृमिश्चैव अवज्ञाकार्यथ[4] कृमिः' ॥

इति । वायुसंहितायाम्—

'खरो वै बहुयाजित्वात्[5] काकोऽमन्त्रितभोजनात् ।
अपरीक्षितभोजी स्याद्वानरो विजने वने ॥
अविद्यां यः प्रयच्छेत बलीवर्दो भवेत्तु सः ।
अन्नं पर्युषितं विप्रे दत्त्वा वै कुब्जतां[6] व्रजेत्' ॥

इति । उमा-महेश्वरसंवादे—

'अग्निहोत्रं भवेद्यस्य न कुर्यात्तस्य रक्षणम्[7] ।
पर्वातिक्रमकारी तु मृगत्वं याति ब्राह्मणः[8] ॥

१ We are unable to find the text which the following quoted s'lokas really belong to. B E. H. and D. omit इति and do not insert शिवधर्मोत्तरे, while J. omits इति, but inserts विष्णुधर्मोत्तरे for शिवधर्मोत्तरे. २. J. reads कव्याशी for क्रव्याशी ३. G inserts इति after the end of the last line and reads वत्सरीविक्रयश्चैव for मत्सरी विट्कृमिश्चैव, while I substitutes मत्स्योऽपि for मत्सरी-, ४. B. D. G and I substitute अध for अथ ५ I. reads बहुयाचित्वात् for बहुयाजित्वात्, while J. reads ऽमन्त्रितभोजनात् and A ऽनिमन्त्रितभोजनात् for ऽमान्त्रितभोजनात् ६. E D. G. and I. read कुण्ठतां for कुब्जतां; while E H omit इति ७ J reads लक्षणाम् for रक्षणम् ८. B. reads याति च द्विजं and D. यान्तितद्विजः for याति ब्राह्मण, while G. adds इति after ब्राह्मणः.

वेदोपजीविका[1]: पापाः स्त्रीलोलाः सततं च ये ।
भवन्ति चेह काकाः स्युश्चिरं विड्भुज एव च ॥
पायसं कृसरं चैव हवींषि मधुराणि च ।
अदत्वा चाग्नि-विप्रेभ्यः प्राशनाद्भुजगो भवेत्' ॥

इति । नारदपुराणे—

'भर्तुः सौख्येन या नारी सौख्ययुक्ता न जायते ।
सा श्येनी[2] जायते राजन् त्रीणि वर्षाणि पञ्च च ॥
वाचा चाक्रोशिका या तु सन्निरुध्य पतिं ह्रिया[3] ।
अकार्यं कारयेत् पापा सा नारी वल्गुली भवेत् ॥
भर्तुरर्थे हि या वित्तं विद्यमानं न यच्छति ।
जीवितं वा वरारोहे विष्ठायां जायते कृमिः ॥
कृमियोनिविनिर्मुक्ता काष्ठकीटा भवेत्तु सा ।
न साधयन्ति कार्याणि प्रभूणां ये विचेतसः ॥
भूत्वा वेतनभोक्तारो जायन्ते भूलता[4] हि ते' ।

(ना. पु. ३१. ९–१४)

इति । वृद्धगौतमः—

'मौल्याद्वेदोपदेष्टा च व्याघ्रो भवति मानवः ।
जम्बुको जायते जन्तुरननुज्ञातपाठकः ॥
शूद्रात् पठति[5] चाण्डालो ब्रह्मद्रव्योपजीवकः[6]' ॥

---

१ G reads वेदोपजीविता for वेदोपजीविका २ J reads श्वानी for श्येनी ३ B D and G read हि या for ह्रिया ४ B and D read मलिना for भूलता ५. B reads पठित-, D पठिते, G. पठेत and I पतति all for पठति ६ G reads ब्रह्मद्रव्योपजीवक. for ब्रह्मद्रव्योपजीवक..

इति । याज्ञवल्क्योऽपि—

'परद्रव्याण्यभिध्यायंस्तथाऽनिष्टानि चिन्तयन् ।
वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु ॥
पुरुषोऽनृतवादी च पिशुनः पुरुषस्तथा ।
अनिबद्धप्रलापी च मृग-पक्षिषु जायते ॥
अदत्तादाननिरतः परदारोपसेवकः ।
हिंसकश्चाविधानेन स्थावरेषु प्रजायते' ॥

( नास्तीदं मुद्रितया. स्मृ. पुस्तके.)

इति ॥

अथ नानाविधनिषिद्धकर्मशेषफलानि ।

तत्र उमामहेश्वरसंवादे—

'श्वपाक-पुल्कसादीनां कुत्सितानामचेतसाम् ।
कुलेषु तेऽभिजायन्ते गुरु-वृद्धावमानिनः ॥
गुरुणा ह्यननुज्ञातो यो वेदाभ्यासमाचरेत् ।
स तु जातिविहीनेषु जायते भुवि मानवः ।
अधर्मं धर्ममित्याहुर्ये तु मोहवशंगताः ॥
ते च कालकृतोद्योगाः सम्भवन्तीह मानुषे ।
निर्होमा निर्वषट्कारास्ते भवन्ति नराधमाः' ॥

---

१. The quoted verses are not found in Yádyavalkya Smriti; they occur in Manû, but with different version (*vide* M 12, 5-6-7).
२ B and D read अनिबन्ध- for अनिबद्ध- and J असबद्ध- for the same.
३. G reads मृग for मृग- ४ G and I omit -शेष- and J. reads नानाविधकर्मविशेष- for नानाविधनिषिद्धकर्मशेष- ५. I. reads गुरूणां for गुरुणा.
६. B D E H. read वेदाभ्यसन चरेत् and G वेदाध्ययन चरेत् both for वेदाभ्यासमाचरेत् ७ E. I and J read प्रयाति विहीनेषु for तु जातिविहीनेषु.
८ B. and D. substitute तु for च, while I. reads कालहतो- for कालकृतो-,

इति । स्कान्दे नागरखण्डे[1]—

'प्राप्नुवन्ति कुदेशे च जन्म[2] ये हेतुवादकाः ।
स्वामिद्रोहरता ये च कुकुले[3] जन्म चाप्नुयुः ॥
अदत्त्वा ये तथाऽश्नन्ति पितृ-देव-द्विजातिषु ।
दुर्भिक्षे जनतापे च कुदेशे जन्म चाप्नुयुः ॥
ये च कुर्वन्ति दम्पत्योर्विवादं सानुरागयोः ।
विरूपा भ्रममाणाश्च सर्वलोकविवर्जिताः ॥
दरिद्रा जायया भ्रष्टा भवन्ति विगतायुषः ।
कन्यादाने च विघ्नं यो विक्रयं यः करोति वा ॥
स कन्याः केवलाः[4] सूते न पुत्रं केवलं क्वचित् ।
जायन्ते ताश्च बन्धक्यो[5] विधवा दुर्भगास्तथा[6] ॥

इति[7] । प्रभासखण्डेऽपि—

'यैर्न दत्तं नरैः किञ्चित्तेषां चिह्नं दरिद्रता ।
जायन्ते रोगिणो रौद्रा हिंस्राः कुब्जाश्च वामनाः[8] ॥
अपुत्रा कलहाक्रान्ताः परदारोपसेवकाः ।
महारजनकर्माणः[9]* कुचेलाः कुशारीरिणः ॥

---

* अत्र-'राजक'-तथा '-राजिक-' इत्यपरं पाठद्वयं दृश्यते । न तदिहापयुक्तमिति प्रतीमः । -राजक-राजिक- इत्येकार्थमेव । 'महाराजिक-

---

१. J. reads नागरखण्डम् २ B and D. substitute जनाः for जन्म. ३. I. reads कुक्कुटे for कुकुले ४ G. and I. read केवल for केवलाः ५ B. D. and G. read वर्धक्यो for बन्धक्यो and J. वार्धक्ये for the same. ६ We follow here A. G. and I., while B D. E. H. and J. substitute क्वचित् for तथा. ७ B. D. E and H. omit इति, while J इति । प्रभासखण्डे ऽपि ८. B. D. and H read मानवा. for वामना. ९ E. G. H. and I. read महाराजक- and B. D. and J. महाराजिक- for महारजन-.

कुदम्भाश्चपला लुब्धा मूर्खा निष्ठुरभाषिणः ।[1]
दानहीना भवन्त्येते देव-ब्रह्मस्वभक्षकाः'॥[2]

इति । स्कान्दे रेवाखण्डे—

'पिता माता गुरुर्भ्राता अन्यो वा विकलेन्द्रियः ।
भवन्ति नादृता यैस्तु ते भवन्ति नराधमाः ॥[3]
इह मानुषलोकेऽस्मिन् दीनान्धास्ते भवन्ति च[4] ।
ये त्यजन्ति स्वकां भार्यां मूढाः पण्डितमानिनः ॥
ते यान्ति नरकं घोरं तामिस्रं नात्र संशयः[5] ।
तत्र वर्षशतस्यान्ते इह मानुषतां गताः[6] ॥

---

साध्याश्च'(१. १. १०) इत्यमरसिंहो गणदेवतानामान्याह । तथा च—

'महाराजिकनामानो द्वे शते विंशतिस्तथा' ।

इत्याहुः पुराणकाराः। अतः महारजनकर्माणि इत्येव पाठः साधीयान् भाति । महारजनं कुसुम्भं तत्कर्म वस्त्ररंजनकर्मेत्यर्थः । 'रंजक-रजन-रजस्सूपसङ्ख्यानं कर्तव्यम्' इति काशिकोक्त्या न लोपः ।

---

१ G. omits this line,

कुदम्भाश्चपला लुब्धा मूर्खा निष्ठुरभाषिण ।;

while I. reads कुदण्डाश्चपला for कुदम्भाश्चपला. २. I. reads धनहीना for दानहीना; while B. D. and G. omit the following portion.—

'दानहीना भवन्त्यैते देव-ब्रह्मस्वभक्षकाः'॥

इति । स्कान्दे रेवाखण्डे—

'पिता मातागुरुर्भ्राता अन्यो वा विकलेन्द्रिय ।.

३. B. and D. read दानहीना ये for नादृता यैस्तु. ४. All, except A, substitute वै for च. ५. B and D. insert इति after नात्र संशयः ६. G. B. and D. read गत , for गता; while G. substitutes अनुष्ठानतां for मानुषतां.

दुश्चर्मा दुर्भगश्चैव[1] दरिद्रः सम्प्रजायते ।
जायते गृध्रसीयुक्तः[2] परभार्योपसेवकः ॥
गद्गदोऽनृतवादी[3] स्यात् मूकश्चैव गवामृते ।
अन्नं पर्युषितं विप्रे ददन्वै कुब्जतां व्रजेत् ॥
मात्सर्यादपि[4] जात्यन्धो द्वेषाच्च[5] बधिरो भवेत् ।
अदत्वा भक्ष्यमश्नाति अनपत्यो भवेच्च सः' ॥

इति । गरुडपुराणे—

'अवमत्य च ये यान्ति भगवत्कीर्तनं नराः ।
बाधिर्यमुपयान्त्याशु[6] ते वै जन्मनि जन्मनि ॥
पश्यन्तो भगवद्द्वारं तामसास्तत्परिच्छदम् ।
अकृत्वा तत्प्रणामादि ये यान्ति पुरुषाधमाः ॥
जात्यन्धास्तेऽभिजायन्तेऽप्यङ्गहीनापरिग्रहाः ।
पङ्गवः पादहीनाश्च कुष्ठिनो भुवि[7] ये नराः ॥
विष्णुच्छाया ध्रुवं तैस्तु लङ्घिता स्यान्न संशयः ।
तथा च भगवद्धाम्नश्छायामाक्रमते तु यः ॥

---

१. B. and D read दुर्भगा for दुर्भगः, but it seems incorrict; while I. substitutes दुष्कर्मा for दुश्चर्मा २ We follow here only A , while B. D E. and H. read गृध्रसयुक्त , J गृध्रसम्पृक्त , I. ग्रन्थिसयुक्त. and G, गृध्रवीयुक्त all for गृध्रसीयुक्त . ३. B. and D read this line.—

गद्गदोऽनृतवादी स्यान्मूषकश्चैव जायते ।.

४. B and D. read इह for अपि and G J. अति and इति-. ५ All, except A. and I, substitute तु for च. ६. B. and D. read बाधिर्यन्तु प्रयान्त्याशु ७. E. substitutes शुनि for भुवि.

अरण्ये जायते पङ्गुः स वै रोगादिपीडितः' ॥

(ग. पु. २८१. १३-१७)

इति । विष्णुधर्मोत्तरे ऽपि—

पिशुनः पूतिनासः स्यात् सूचकः पूतिवक्त्रकः ।

खल्वाटो मत्सरी रामे नास्तिको वेदनिन्दकः॥ (६)

भूय एव समाप्नोति तथा नास्तिकतां द्विजः । (८)

घूर्णिकस्तैलिकश्चैव अन्धो भवति मानवः ॥ (९)

प्रतिकूलं गुरोर्यस्तु सो ऽपस्मारी च जायते ।

मिष्टाश्येको महाभाग वातगुल्मी प्रजायते ॥ (१०)

भगभक्षस्तु कुँण्डाशी दीर्घरोगी च पीडकः । (११)

गुरु-स्वामि-द्विजाक्रोशं वेदनिन्दां तथैव च ।

श्रुत्वा भवति दुर्बुद्धिर्बधिरो मानवाधमः ॥

देवदत्तेन दीपेन कृत्वा कर्म सुदुर्मतिः ।

जायते बुद्बुदाक्षो वा नेत्ररोगयुतोऽपि वा ॥

तथैव दीनरूपश्च तेन पापेन कर्मणा ।

---

१ H. reads -पीडिते for -पीडित We have searched the manuscript Vishnûdharmottara, in the chapter 107, is this subject, but very few quoted lines occur in it. २ B D. G and H. read ग्राम-, A and I. चैव for राम, while J. मत्सरी ग्राम नास्तिको for मत्सरी राम नास्तिको The quoted verses are addressed to Râma, therefore this reading is more correct ३ J. B. D. and G. read घ्राणिक. for घूर्णिक, while E. and H घाणिक for the same. ४ B D. H E. read द्विजे for द्विज. ५. B. and D read प्रजायते for च जायते ६. B D. G and J. read मृष्टाशी for मिष्टाशी E. also reads the same, but corrects मिष्टाशी ७ B. and D read वण्डाशी for कुण्डाशी. ८ G. reads देवनिन्दां for वेदनिन्दां ९ B and D. read ऽधर्मं for कर्म

हीनवर्णस्तदा लोके भवत्यत्यन्तदुर्मतिः ॥
विरूप एव भवति तथाऽविक्रेयविक्रयी ।
विनाऽपराधेन तथा कृत्वा पत्न्यधिवेदनम् ॥
स राजभयमाप्नोति व्यवहारे तथैव च ।
मूलकर्म तथा कृत्वा वशीकरणकारणात् ॥
द्वेष्यो भवति लोकेऽस्मिन् जायते नात्र संशयः ।
परिवेत्ता तथा लोके सर्वव्याधिसमन्वितः ॥
अयाज्ययाजकश्चैव जायते वर्णसङ्करः ।
वेदविक्रयिको मूर्खः कितवश्चैव जायते ॥
नास्तिकस्तु दरिद्रः स्यात् सर्वकर्मविवर्जितः ।
अतिमानप्रवृत्तस्तु जायते कुत्सिते कुले ॥
श्वपाक-पुल्कसादीनां कुत्सितानामचेतसाम् ।
कुलेषु तेऽभिजायन्ते गुरु-वृद्धापवादकाः ॥
श्वभ्रे तु मरणं लोके विषैः स्थावर-जङ्गमैः ।
दंष्ट्रिभ्यश्च नखिभ्यश्च चण्डालाद्ब्राह्मणात्तथा ॥

---

१ I. and J. substitute तथा for सदा २ B and D read पत्न्याधिदेवताम् for पत्न्यधिवेदनम. ३ B and D. राजापथ्यम्, E G H and I. राजामयम् for राजभयम् ४ All, except A and I. read सर्वधर्म- for सर्वकर्म- ५ B D. and G read -प्रवृत्तिस्तु for -प्रवृत्तस्तु ६ I inserts here -

श्वभ्रे तु मरणं लोके विषै स्थावर-जङ्गमै ।,

whose proper place in the P E beginning with notation इति ब्रह्मपुराणे ७ I. makes all confusion here These 9 lines of Vishnûdharmottara, 11 of Mahâbhârata, 11 of Sivadharmottara, 15 of Vriddha Gautama, that is, altogether 49 lines. Again, I. omits 13 lines Umâ Mahesvarasamvâda and then reads 8 lines and one more, so the total number of lines 59 I. gives after the 7 lines of Nandipurâṇa. ८. A. and E read ब्राह्मणाभगात for ब्राह्मणात्तथा and J. ब्रह्मणस्तथा for the same.

गृहाधःपतनाच्चैव द्रुमाधःपतनात्तथा।
गोभ्यश्च मरणं लोके विज्ञेयं पापकर्मणाम् ॥
ताडितस्ताड्यते लोके हारितो ह्रार्यते तथा।
हत्वा वधमवाप्नोति नात्र कार्या विचारणा ॥
यद्यत् परस्याचरति तत्तदस्योपजायते।
प्राप्नोति यादृशीं बाधां कर्मणा स्वकृतेन यः ॥
तस्यापि तादृशी बाधा ज्ञेया जन्मनि जन्मनि।
तस्मात् सर्वप्रयत्नेन परबाधां विवर्जयेत्' ॥

(वि. ध. २.१०७. ६-३०)

इति। महाभारते ऽपि—

'ये नास्तिका निष्क्रियाश्च गुरु-शास्त्रातिलङ्घिनः।
अधर्मज्ञा गताचारास्ते भवन्ति गतायुषः ॥
कुशीला भिन्नमर्यादा नित्यं सङ्कीर्णमैथुनाः।
अल्पायुषो भवन्तीह नरा निरयगामिनः ॥
लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः।
नित्योच्छिष्टः सूचकश्च नेहायुर्विन्दते महत् ॥
आयुरस्य निकृन्तामि प्रजामस्याददे तथा।

१ B and D. read गृध्राध- for गृहाध-- २ I. reads -पातनात् for -पतनात् ३. B. D. E G H and J read पदम् for वधम् ४. G. reads च for य. ५ J reads परिबाधां for परबाधां ६ B. D. and H omit इति ७. G. reads गुण-शास्त्रातिलंघिता for गुरु-शास्त्रातिलंघिन-. ८ J. B. and D. read धर्मज्ञा विगताचारा, while J adds न before भवन्ति. ९ B and D. read नित्यसकीर्ण- for नित्य सकीर्ण- १०. J. reads न वा for नरा. ११. B. and D. read नखच्छेदी for नखखादी १२ G omits this line -

आयुरस्य निकृन्तामि प्रज्ञामस्याऽऽददे तथा।,

while B. and D read प्रकृन्तामि, E H and J. निकृन्तानि for निकृन्तामि.

ये उच्छिष्टः प्रवदति स्वाध्यायं चाधिगच्छति ।
यश्चानध्यायकालेऽपि मोहादभ्यसते द्विजः ॥
प्रत्यादित्यं प्रत्यनलं प्रतिगां च प्रतिद्विजम् ।
ये मेहयन्ति पथि च ते भवन्ति गतायुषः' ॥
( नास्तीदं मुद्रितम. भा. पुस्तके. )

इति । शिवधर्मोत्तरे—

'देवद्रव्योपजीवी च[1] स भवेदवबाहुकः[2] ।
देवद्रव्यं स्वयं येन भुक्तं यस्य सदा[3] भवेत् ॥
रसज्ञाविधुरः[4] कुब्जः कण्डूः सर्वाङ्गदुखितः ।
देवस्पर्शी नरः कृत्वा परप्रत्ययकारणात् ॥
मिथ्याचारं चरेत् पश्चाद्बुद्बुदास्यो[5] नरो भवेत् ।
देवदासोदनं[6] भुक्त्वा बृहद्गुल्मी च वै क्रमात् ॥
सर्वाङ्गकुष्ठी तिमिरी[7] नरो भवति पापतः ।
दीपं देवगृहाद्धृत्वा[8] पङ्गुश्चान्धो भवेन्नरः ।
मूर्च्छी[9] भ्रमी सुरद्वेष्टा पक्षपाती ज्वरी भवेत् ॥
देवावमन्ता भवति सर्वदा मैथुने रतः[10] ।
सदाऽपहृतसर्वस्वः कुत्सितः काममोहितः' ॥

---

१. G. omits य २ I reads अपबाइक for अवबाइक . ३ G. reads यदा for सदा ४. B. D. and G read रजसा बधिर कण्ठ कद्रु, G. reads कण्ठ कण्डू रसज्ञाविधुर , E and H. रसज्ञाबधिर कुण्ठ. कण्डुः for रसज्ञाविधुर कुब्ज कण्डू ५ G. substitutes अम्बुदास्यो, I. E and H अर्बुदास्यो and J अर्बुदाक्षो for बुद्बुदास्यो. ६ I. देवदासा धन for देवदासोदन. ७. B. and D read तिमिरो नरो भवति पातकः, G तिमिरैर्नरो भवति पापतः. ८. B. and D. read देवगृहे धृत्वा and J देवगृहाद्दत्वा both for देवगृहाद्धृत्वा ९. B. D. G and J. read मूर्च्छा- for मूर्च्छी. १० G. reads मैथुनी नर. for मैथुने रत.

इति। वृद्धगौतमः—

'देवद्रव्योपजीवी[1] हृद्रोगी। प्रतिज्ञाय ब्राह्मणस्याऽदानाद[2]ल्पायुः। पत्नीबहुत्वे सत्येकारामः[3] क्लीबः। स्वामिना धर्मे[4] नियुक्तस्तदनुष्ठानाशक्तो जलोदरी। दुर्बलबाधे बलवतामुपेक्षायामङ्गहीनः। व्यवहारपक्षपाती[5] जिह्वारोगी। स्वयं प्रवर्त्तितधर्मानुष्ठानच्छेदने प्रतिपन्नेष्टवियोगः। स्वयमग्रभुक् शूलरोगी। परिक्षीणमित्र-बन्धु-स्वामि-स्वजनावमन्ता परिभूतवृत्तिः। अतिथिं पश्यन्नश्नतः कपालपट्टिका[6]। सूर्यप्रकाशे[7] प्रतिश्रयादानादिष्टवियोगः। छद्मना गुरु-स्वामि-मित्रमुपचरतः प्राप्तार्थपरिभ्रंशः[8]। विस्रम्भापहारी सर्वदुःखाश्रयः[9]। गोदुःखकारी गोनासः[10]। गोनिर्दयश्चिपिटनासः। पथनाशको[11] निस्तेजस्कः सभायाम्। गलगण्डी[12] महदधिक्षेपी। पुण्याक्षेपी

---

१ G adds च after देवद्रव्योपजीवी २ G. reads ब्राह्मणाऽदानात् for ब्राह्मणस्याऽदानात्, while J reads प्रतिजायते ब्राह्मण स्यादनल्पायु for प्रतिज्ञाय ब्राह्मणस्याऽदानादल्पायु·. it shows that the word belongs to the first Sûtra ३ G. omits सति ४ B and D. substitute गृहे for धर्मे and हरी for जलोदरी, but the latter seems to be a mistake ५ I. reads -पाते and J. व्यवहारे पक्षपाती for -पाती and व्यवहारपक्षपाती ६ E. reads -पट्टिका, for -पट्टीका ७ G. reads सूर्यास्तकाले for सूर्यप्रकाशे. ८. H. reads -विभ्रंश for -परिभ्रंश ९. B D and G omit the following:-विस्रम्भापहारी सर्वदु खाश्रय·। गोदु खकारी गोनास। गोनिर्दयश्चिपिटनास। पथनाशको निस्तेजस्क· सभायाम्। गलगण्डी महदधिक्षेपी। पुण्याक्षेपी वक्रनास ; while E. and J. read सर्वदु खाश्रयी for सर्वदु खाश्रय. १० I. reads गोनामहा for गोनास. ११ Except A. and I all others do not insert पथनाशका, but read only निस्तेजस्क. १२. Except A., all others omit महदधिक्षेपी; while I. reads गलग्रन्थी for गलगण्डी

वक्रनासः[1]। शिष्टचीर्णधर्मदूषकः[2] केकराक्षः। साधुजन-देव-तपस्वि-द्विज[3]-गुरु-ज्ञान-योगद्वेष्टा वक्रास्यः[4]। तटा[5]-कारामभेत्ता नेत्राङ्गहीनः। कृतघ्नः सर्वारम्भविकलः। परस्वाभिलाषी[6] क्षयरोगी स्यात्। चोररक्षकः[7]—

व्यवहारेष्वमध्यस्थश्चौरवृत्तिपरश्च यः।
वाणिज्यलाभो नो तस्य देशान्तरगतस्य च॥
व्याधिः स्यात् प्राणसन्देहो मृतिस्तत्रैव पापिनः' ॥

इति। उमा-महेश्वरसंवादे[8]—

'अकृत्वा खलयज्ञं तु यस्तु धान्यं प्रवेशयेत्।
मरुदेशे[9] भवेद्वृक्षः फल-पुष्पविवर्जितः॥
दिव्यं वर्षसहस्रं तु दुरात्मा कर्षको भवेत्।
तस्यान्ते मानुषो भूत्वा कदाचित् कालपर्ययात्॥
दरिद्रो व्याधितो मूर्खो ह्यकुलीनस्तु[10] जायते।
यस्तु क्षुद्रेण भावेन स्नेहविच्छेदकारकः॥
सोऽनपत्यत्वमाप्नोति तस्य पापस्य कारणात्।
न शृण्वन्ति गुरोर्वाक्यं वेदवाक्यं[11] च ये नराः॥
सर्वेषां चैव नास्तिक्यं तेन ते यान्ति मूकताम्।
प्रार्थयित्वा तु यो गां वै सवत्सां क्षीरसंयुताम्॥

---

१. I. reads वक्रणस, but by grammatical rule it is वक्रनास २ B D, E G. H and J. read शिष्टाचीर्ण-, but the reading does not give proper sense here. ३. B and D. do not insert -द्विज-. ४ J. reads नक्रास्य for वक्रास्य ५ G. reads उडाक- for तटाक- and H. reads तटाक-रोमभेत्तारो नेत्राङ्गहीना for तटाकारामभेत्ता नेत्राङ्गहीनः. ६. E. G. and H. read परस्वभिलाषी for परस्वाभिलाषी. ७. I. reads चौररक्षक and G. चाराक्षस both for चोररक्षक. ८. I. omits उमा-महेश्वरसंवादे and also this whole quotation. ९ B and G. read मरुद्देशे for मरुदेशे १०. J. reads च for तु ११. E reads देववाक्य for वेदवाक्य

आत्मना पिबति क्षीरं तेनासौ याति चान्धताम् ॥
प्रस्रवं ष्ठीवनं वह्नौ कृत्वा सर्वाङ्गदाहयुक् ॥
उदरे शूलसंयुक्तो जायते मनुजाधमः' ॥

इति। शिवधर्मोत्तरे—[1]

'मुखकृष्णव्रणी[2] श्वित्री गरदो मत्तको भवेत्।
जिह्वा-वक्त्रव्रणी ह्यन्यदुःखकारी[3] भवेन्नरः ॥
अपकारं तु यः कुर्यादुपकर्तुर्भवेन्नरः।
श्वास-कासी ज्वरी सर्वगात्ररोगी[4] मृतप्रजः ॥
मृतपुत्रोऽप्यबन्धुः स्याद्यो द्वेष्टि परसन्ततिम्।
परवित्तविनाशाय करोति स विसर्पवान् ॥
अकारणाद्धर्मपत्नीत्यागी स्याच्च जलोदरी।
वेश्यां कुलवधूं कृत्वा वर्तते यो नराधमः ॥
भक्तं[5] भोक्तुमशक्तश्च मण्डपानेन जीवति।
परेषां चेतसः क्लेशकारी भवति मानवः ॥
क्षयी ज्वरी प्रमेही[6] च गुल्मी दाही भगन्दरी।
रजस्वला-ऽन्त्य-चण्डाल-पापिष्ठ-पतितैः सह ॥
व्यवहारी पुष्पवत्यां[7] भुक्त्वा कुष्ठी ज्वरी भवेत्।
अनपत्यो दरिद्रश्च विश्वस्तस्य[8] विषप्रदः ॥

१. I. does not insert शिवधर्मोत्तरे and the following nine lines २. J reads मूर्धकृष्णव्रणी for मुखकृष्णव्रणी. ३ H reads ह्यन्यत्- for ह्यन्य- and B and D. substitute तु for हि. ४ J reads सर्वगात्री रोगी मृतप्रजा for सर्वगात्ररोगी मृतप्रज. ५. G reads भुङ्क्ते for भक्त. ६. B. and D. read च मेही for प्रमेही and G and J substitute दारी for दाही. ७. B. D. E and J. read पुष्पवत्स्या for पुष्पवत्स्या. H also reads पुष्पवत्स्या and adds तु before भुक्त्वा. ८. B. and D. read विशस्तश्च for विश्वस्तस्य.

निषिद्धवस्तुभोगेन मोहयेद्यः परान्[1] पुमान् ।
परोपदिष्टज्ञानेन[2] भवेदुन्मत्तको ऽपि वा ॥
ऋणं दत्वाऽधिकां वृद्धिं यो गृह्णातीह मानवः ।
स भूत्वा धनिनां वंशे व्रजेद्देशान्तरं ततः[3] ॥
वाणिज्यलाभस्तत्रापि[4] नास्ति तस्य नरस्य वै ।
अमुख्यमुख्यकारी यः स ज्वरी श्वासकासवान् ॥
सर्वाङ्गरोगी पापात्मा द्वेष्टा मृतसमाङ्गभाक्[5]' ।

इति । उमामहेश्वरसंवादे—

'मृष्टान्नेन य आत्मानं पोषयन्ति नराधमाः ।
बालानां वीक्ष्यमाणानामददन्नत्ति निस्पृहः[6] ॥
न हुतं न तपस्तप्तं न दत्तं[7] किञ्च ब्राह्मणे ।
आत्मैव पोषितो येन[8] तत्पापं कथयाम्यहम् ॥
यत्र देशे त्वनावृष्टिर्यत्र वायुसमुद्भवः ।
तस्मिन्देशे क्षुधार्त्ताश्च जायन्ते पापकर्मिणः' ॥

इति । पद्मपुराणे—

'यस्तु विप्रत्वमुत्सृज्य क्षत्रधर्मं[9] निषेवते ।
ब्राह्मण्यात् स परिभ्रष्टः क्षत्रयोनौ प्रजायते ॥

---

१. G. reads पर. for परान्. २. J. and I. read -ज्ञानो वा for -ज्ञानेन ३. B. and D. read सो for स and substitute गत for तत at the end of this line ४ All, except A and I. substitute एव for अपि. ५. Except A. and I. all others substitute पापेन for पापात्मा, while J. reads -समां गति for -समाङ्गभाक्. and I. reads सर्वाङ्गरोग for सर्वाङ्गरोगी. ६. All, except I., read निस्पृहम् for निस्पृहः ७. Except G. and H. read दत्तं for न दत्त. ८. All, except A. and I., read य while G. reads यस्तु. ९. B. and D. read क्षत्रकर्म for क्षत्रधर्मं.

वैश्यकर्मा च यो विप्रो लोभ-मोहव्यपाश्रयः[1]।
स द्विजो वैश्यतामेति शूद्रकर्म करोति यः॥
स्वधर्मप्रच्युतो विप्रः स हि शूद्रत्वमाप्नुयान्[2]।
क्षत्रियो वा महाबाहो वैश्यो वा धर्मचारिणौ[3]॥
स्वानि कर्माण्यपाकृत्य शूद्रकर्म निषेवते।
स्वस्थानाच्च परिभ्रष्टो जायते वर्णसङ्करः॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो[4] वा याति तादृशः।
शूद्रान्नेनोदरस्थेन म्रियते यदि पुत्रक[5]॥
ब्राह्मणः शूद्रतामेति नास्ति तत्र विचारणा'॥
(प. पु. ९. २६. ७–१३)

इति। मार्कण्डेयपुराणे–
'ब्राह्मणः क्षत्रियो वैश्यः स्ववर्णे पाणिसङ्ग्रहम्।
अकृत्वा त्वन्यजापाणेः[6] पतन्ति नृप सङ्ग्रहात्॥
यश्च यस्यास्तु हीनायाः कुरुते पाणिसङ्ग्रहम्[7]।
अकृत्वा वर्णसंयोगं सोऽपि तद्वर्णभाग्भवेत्'॥
(नास्तीदं मुद्रितमा. पु. पुस्तके)

१ E. and J. read -व्ययाश्रय for -व्यपाश्रय २. G. reads सह शूद्रत्वमागत for स हि शूद्रत्वमाप्नुयात्. ३. B. and D. read धर्मचारिण, E. G and J धर्मचारिणि and H धर्मधारिणि all for धर्मचारिणौ ४. G. omits the following portion —

. . . . . . . शूद्रो वा याति तादृश।
शूद्रान्नेनोदरस्थेन म्रियते यदि पुत्रक॥
ब्राह्मण शूद्रतामेति नास्ति तत्र विचारणा'।
इति। मार्कण्डेयपुराणे—
ब्राह्मण क्षत्रियो वैश्य-.

५. B D. and J read पुत्रक for पुत्रक ६. B. and D read ऽत्यन्त्यजापाण, E. अन्त्यजापाणे and I. त्वन्यथापाणे all for त्वन्यजापाणे. ७. B. and D read -सम्रह. for -संग्रहम्.

इति ॥

अथ विशेषेण कर्मविपाकः ।

तत्र[1] हिंसाविशेषाद्योनिविशेषः । तत्र मनुः—

'यां यां योनिं च जीवोऽयं येन येनेह कर्मणा ।
क्रमशो[2] याति लोकेऽस्मिंस्तत्तत्सर्वं निबोधत ॥
बहून् वर्षगणान् घोरान् नरकान् प्राप्य तत्क्षयात्[3] ।
संसारान्[4] प्रतिपद्यन्ते महापातकिनस्त्विमान् ॥
श्व-शूकर-खरोष्ट्राणां गो-ऽजा-ऽवि-मृग-पक्षिणाम् ।
चण्डाल-पुल्कसानां च ब्रह्महा योनिमृच्छति' ॥
(म. स्मृ. १२. ५३-५५)

इति । नन्दिपुराणे —

'नरकेषु क्रमेणैव ब्रह्महा पात्यते[5] नरः ।
कल्पं कल्पं ततश्चान्ते स्थावरश्च[6] प्रजायते ॥
तृण-गुल्म-लता-वल्ली-वीरुद्द्रुमविभेदतः ।
तृणभेदास्त्वगणिता[7] गुल्मभेदास्तथा मताः ।
लताभेदाश्च निःसङ्ख्या वल्लीभेदास्तथैव च ॥
वीरुद्भेदास्त्वसंख्याता असंख्या द्रुमजातयः ।
तेषां च[8] देशभेदेन पुनः कष्टत्वमिष्यते ॥

---

१. J. substitutes अत्र for तत्र and E. corrects योनिविशेषा . २ E. G. and I. read क्रमशोऽश्नाति लोकेऽस्मिन्न तत्सर्वं निबोध मे , while H क्रमशोऽस्तीति for the same ३. B. D. E. G. H. I and J. read तत्क्षणात् for तत्क्षयात्. ४. E. reads ससारात् for संसारान्. ५. I reads पाच्यते for पात्यते. ६. B. and D. read स्थावरत्वं for स्थावरश्च ७. G. reads अगुणिता for अगणिता. ८. B. and D. read द्रुमभेदेन पुनस्तृणत्वम्, G. देशभेदे च पुनः कृष्टत्वम् both for देशभेदेन पुन कष्टत्वम्; while J. substitutes कृच्छ्रत्वम् for कष्टत्वम्.

तत[1]ः केनापि कालेन नानास्थावरयोनित[2]ः ।
कर्म भुक्त्वा क्रमेणैव भवन्ति च सरीसृपाः ॥
वृक्ष-वल्कलभेदेन[3] देशभेदेन वाप्यथ ।
सरीसृपादिभेदेन तत्र भुक्त्वा तु पापकर्म[4] ॥
मृगेषु जायते मर्त्यो भेदैरगणितैस्ततः ।
तत्रापि भुक्त्वा स्वं कर्म जायते पशुयोनिषु ॥
तत्रापि भौतिकं भोगं भुक्त्वान्ते गोत्वमाप्य तु[5] ।
मुच्यते पशुजन्माच्च[6] ततो जायेत मानुषे ॥
तत्रापि नियमो नास्ति श्वपाकाद्येषु जायते ।
विभ्रान्तेषु मनुष्येषु जायते पातकी नरः[7]' ॥

इति । शिवधर्मोत्तरेऽपि—

'एवं पापविशुद्धार्थ्श्च[8] सावशेषेण कर्मणा ।
ततः क्षितिं समासाद्य जायन्ते देहिनः पुनः ॥
तत्रानुभूय दुःखानि जायन्ते कीटयोनिषु ।
निष्क्रान्ताः कीटयोनिभ्यः क्रमाज्जायन्ति पक्षिणः ॥
संक्लिष्टाः पक्षिभावेन[9] जायन्ते मृगयोनिषु ।
मृगदुःखमतिक्रम्य[10] जायन्ते पशुयोनिषु ॥

---

१. I. omits this and the following nine lines, while G reads तत्र for तत. २ E. reads -योनिन. for -योनित. ३ B. D. G. H and J read वृक्ष-वल्कलभेदेन for वृक्षवल्कालभेदेन ४ J. reads पातकम् for पापकम्. ५. B and D read गोत्वमप्युत, G गोत्वमाप्नुयु both for गोत्वमाप्य तु. ६. B. D. E G and H. read -जन्मात्स fo1 -जन्माच्च. ७ G substitutes जन for नरः. ८. J. reads -विशुद्धश्च for -विशुद्धार्थ्श्च ९ B and D. read कीटभावेन for पक्षिभावेन. १०. G reads उग्रदुःखम् for मृगदुःखम्, while B. and D. omit this whole line –

मृगदुःखमतिक्रम्य जायन्ते पशुयोनिषु ॥.

पशुयोनिं समासाद्य पुनर्जायन्ति मानुषाः ।
एवं योनिषु सर्वासु परिभ्राम्य[१] क्रमेण तु ॥
कालान्तरवशाद्यान्ति मानुष्यमतिदुर्लभम् ।
उत्तमं चापि मानुष्यं प्राप्यन्ते[२] पुण्यगौरवात् ॥
विचित्रा गतयः प्रोक्ताः कर्मणां गुरु-लाघवात् ।
ततो मानुषतां प्राप्य व्याधिभिस्तत्र पीड्यते ॥
कुष्ठरोगेण घोरेण ब्रह्महत्यां प्रयोजयन्[३] ।

इति । मार्कण्डेयपुराणे—

'अशस्त्रं पुरुषं हत्वा नरः सञ्जायते खरः ।
कृमिः[४] स्त्रीवधकर्ता च बालहा[५] चोपजायते ॥ (१८)
वृषस्य[६] वृषणौ छित्वा षण्ढत्वं प्राप्नुयान्नरः ।
परिहृत्य ततो भूयो जन्मनामेकविंशतिम् ॥
कृमि-कीट-पतङ्गेषु स्थितस्तोयचरेषु[७] च ।
गोत्रं[८] प्राप्य च चण्डाल-पुल्कसादि जुगुप्सितम्[९] ॥ (३३)

---

१. I. reads परिक्रम्य for परिभ्राम्य. २. B D and J. read प्राप्नुस्ते for प्राप्यन्ते and H. प्राप्नुस्ते for the same, but it seems incorrect. ३. I. reads प्रयोजयेत् for प्रयोजयन्. ४. B. D and J. read कृमि स्त्री-वरहन्ता च, G. कृमिस्तु नरहन्ता च, E. and H. कृमि स्त्रीवरहन्ता च and I कृमि-स्त्री-परहन्ता च. all for कृमि-स्त्रीवधकर्ता च. ५. The text reads बालहन्ता च जायते for बालहा चोपजायते. ६. The text does not insert this Sloka —

वृषस्य वृषणौ छित्वा षण्ढत्व प्राप्नुयान्नर ।
परिहृत्य ततो भूयो जन्मनामेकविंशतिम् ॥.

७. I. reads तोयनरेषु for तोयचरेषु, while the text reads this line as follows —

कृमिः कीट पतङ्गोऽथ पक्षी तोयचरो मृग ।

८. E. G. H I and the text substitute गोत्वं for गोत्र. ९. E. G. H. I. and J. read जुगुप्सित for जुगुप्सितम्.

[1]पङ्ग्वन्धो बधिरः कुष्ठी यक्ष्मणा च प्रपीडितः।
[2]मुखरोगाक्षिरोगैर्वा [3]रोगैरन्यैश्च बाध्यते ॥ (३४)
अपस्मारी च भवति शूद्रत्वं [4]चैवं गच्छति। (३५)
एष एव क्रमो दृष्टो गो-सुवर्णादि[5]हारिणाम् ॥
[6]विद्यापहारिणां चैव [7]निर्देशभ्रंशिनां गुरौ' ॥ (३६)
(मा. पु. १५. १८–३६)

इति। ब्रह्मपुराणे—
'यस्तु रौद्रसमाचारः सर्वभूतभयङ्करः।
हस्ताभ्यां यदि पद्भ्यां वा रज्ज्वा दण्डेन वा पुनः ॥
लोष्टैः स्तम्भैरुपायैर्वा [8]जन्तूंस्ताडयतेऽनिशम्।
[9]हिंसार्थी निकृतप्रज्ञ उद्वेजनकरः सदा ॥

---

१. B D. E G. H. and I read पङ्ग्वन्धबधिरः for पङ्ग्वन्धो बधिरः. २. B. and D read मुखरोगाक्षिरोगादि for मुखरोगाक्षिरोगैर्वा, while J. and the text substitute च for वा. ३. The text reads गुदरोगैश्च for रोगैरन्यैश्च ४. The text reads च स गच्छति for चैव गच्छति. ५. G. and the text read -सुवर्णापहारिणाम् for -सुवर्णादिहारिणाम्., while B. and D. omit the following, —

'. . . . . . गो-सुवर्णादिहारिणाम्।
विद्यापहारिणां चैव निर्देशभ्रंशिनां गुरौ' ॥

इति। ब्रह्मपुराणे—
'यस्तु रौद्रसमाचार . . . . . . . . . , ।.

६. The text reads this line thus —

विद्यापहारिणश्चोग्रा निष्क्रयभ्रंशिनो गुरो ॥.

७. E. G. H. and J. read निश्चयभ्रंशिनां गुरो for निर्देशभ्रंशिनां गुरौ. ८ B. D. and G. read कार्यान्त ताडयेन्निशम्, J. जन्तूंस्त्रासयतेऽनिशम् both for जन्तूंस्ताडयतेऽनिशम्, while G. puts च for वा. ९. B and D. read हिंसार्थाविष्कृतप्रज्ञ उद्वेगजनकः and G. हिंसार्थाविष्कृतप्रज्ञ उद्वेजनकर both for हिंसार्थी निकृतप्रज्ञ उद्वेजनकरः.

एवं शीलसमाचारो निरयं प्रतिपद्यते ।
स चेन्मनुष्यतां गच्छेद्यदि कालविपर्ययात् ॥
वध-बन्धपरिक्लिष्टः कुले जायेत सोऽधमे ।
लोकद्वेष्टाऽधमः पुंसां स्वयं कर्मकृतैः फलैः' ॥

इति ।

अथ हिंस्रकर्मशेषफलानि ।

तत्र हिंस्रकर्मविशेषफलानि शङ्ख-लिखिताभ्यां दर्शितानि—

'अत ऊर्ध्वं बहूनि वर्षसहस्राणि यमविषये कुम्भीपाक-रौरवादिषु स्थानेषु दुःखान्यनुभूयेह जातानामिमानि लक्षणानि भवन्ति । तद्यथा ब्रह्महा कुष्ठी गोघ्नश्चान्धो ऽनेकरोगिणश्च' ।

इति । यमः—

'अशुद्धानां तु पापानां पतितानां च कर्मभिः ।
उत्तीर्णानां च तिर्यक्त्वादिहैव भवति लक्षणम् ॥
इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा ।
प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥
द्विजघ्नं कुष्ठिनं विद्यात् कुनखं स्वर्णहारकम् ।
व्यङ्गाश्चाधर्मिणश्चैव जायन्ते प्राणिहिंसकाः' ॥

---

१. Except A. G. I. and J. all read मानुष्यतां for मनुष्यतां, while B. and D substitute प्राप्तो for गच्छेत्. २. B. D. and G. read ऽधम. for ऽधमे. ३ G and I. read हिंसा- for हिंस्र-; while B. and D. read हिंस्रकर्माशेषफलानि. ४. B D. and H. read कुम्भीपाकादिरौरवादिषु ५ B. D. E. H. and J. omit तत्, while G. substitutes यत् for तत् and E. H. and J तथा for यथा. ६. G. substitutes च for तु. ७. H substitutes तु for च.

इति। हारीतः—

'कुनखी भ्रूण[1]हा। ब्रह्मघ्नः कुष्ठी। परदुःखदायिनो नित्यान्धाः। परा[2]र्तिरता दीर्घरोगिणः। दृष्ट्यपहर्तारोऽन्धाः। श्रोत्रापहर्तारो बधिराः। वाचोपहर्तारो मूकाः। एवं ह्याह—

यदङ्गं पीड्यते येन तेन हीनोऽभिजायते।
नाऽकृत्वा लभते किंचित् शुभं वा यदि वाऽशुभम्' ॥

(हा.स्मृ. २४. ७३–८०)

इति। क[3]श्यपः—

'क्ष[4]यी स्यात् क्षेत्रहरणे अ[5]र्शवान्नृवधेऽपि च।
जलोदरयुतः स[6] स्यात् स्वनारीणां च हिंसकः ॥
कर्णभेत्ता क[7]र्णशूली ओष्ठरोग्योष्ठनाशक[8]ः।
दन्तपातनकर्ता च दन्तरोगी भवेत् सदा ॥
उ[9]रःस्तम्भादुरःस्तम्भी अक्षिरोग्यक्षिनाशकः।
पदौ[10] तु यस्ताडयति विसर्पी स[11] भवेन्नरः ॥

१. G. omits भ्रूणहा. २. G. reads परस्त्रीरता and I. परदाराभिरताः both for परार्तिरता. ३. B does not insert कश्यप ४. B. D. G. H. and J. read क्षय. स्यात् क्षत्रमरणे; while H. substitutes पक्षः for क्षयी and E. reads क्षयः स्यात् क्षत्रभरणे for क्षयी स्यात् क्षेत्रहरणे. ५. B and D. read सर्वानृतवचोऽपि च for अर्शवान्नृवधेऽपि च, while G and I. substitute अर्शोवान् and H. नृपवधे for अर्शवान् and नृवधे respectively. ६ B. and D. read स्यात्तु for स स्यात् ७. E. I and J. read कर्णमूली for कर्णशूली; while J. substitutes कुष्ठ- for ओष्ठ-. ८. D. reads -नाशन. ९. I reads उरस्तस्तादुरस्तम्भी through mistake. १०. G. reads पादौ for पदौ. ११. B. D. H. substitute च for स.

पीडाभप्रियकर्ता च धनुर्व्याधिर्धनुर्ग्रहात्[1] ।
पादकीली[2] स भवति पादहन्ता च यो भवेत् ॥
स[3] गद्गदी दारयति[4] यो वृक्षानतिविस्तृतान्[5] ।
शूलेन शूली भवति मनुष्याणां च हिंसकः ॥
असृग्गदी[6] स भवति यस्तु हिंस्याद्दृढान्[7] पशून् ।
नक्तान्ध्यं जायते तस्य यो गवां नयनद्वये ॥
करोति शूलप्रक्षेपं पूर्वभावप्रचोदितः' ॥

(का. स्मृ. ३. ४०-४६)

इति । व्यासोऽपि—

'पितृहा याति पैशाच्यं जात्यन्धो मातृघातकः ।
प्राण्यङ्गं मृगशावं च हत्वा वन्ध्यो मृतप्रजाः[8] ॥
असाध्यरोगी[9] बालघ्नः क्षयी स्यात् सर्वजीवहा ।
गात्रकृच्छ्री[10] व्रणी श्वित्री विसर्पी परघातकः ॥
नेत्ररोगो[11] भवेत्तस्य यो ऽन्येषां दृष्टिघातकः ।
परेषां रसनाछेदी[12] जिह्वास्यव्रणवान्[13] भवेत् ॥

---

१. J. reads धेनुर्व्याधिर्धनुर्गृहान् for धनुर्व्याधिर्धनुर्ग्रहात्. २. B and D. read पदकीलि for पादकीलि and H. पादकी स च for पादकीली स. ३. I. reads असृग्दरी for स गद्गदी ४. G. reads धारयति for दारयति, while J. पातयति for the same. ५. B. and D read आतिविस्तरान् for अति-विस्तृतान्. ६. E. reads असृग्वादी and I. असृग्दरी both for असृग्गदी. ७. I. substitutes वृथा for दृढान् ८ B. D and I. read मृतप्रज for मृतप्रजा ९. B. D. and G read अस्पर्शरोगी, H. असाध्यरोगो both for असाध्यरोगी and J अर्शरोगी बालघ्नश्च for असाध्यरोगी बालघ्न . १०. B. and D. read गात्रवृश्वी for गात्रकृच्छ्री. ११. D. reads नेत्ररोगी for नेत्ररोगो. B. and H. read also the same, but correct नेत्ररोगो १२. E. G. A. H. I. and J. read रसनाछेदात् for रसनाछेदी. १३. J. reads -व्रणवाक् for -व्रणवान्.

कृतघ्नः स्फुटिताक्षो वा तृतीयज्वरसंयुतः।
चातुर्थकोष्ण-शीतोष्णज्वरी स्यात् संततं ज्वरी ॥
ग्रामे वने वा जन्तूनां श्वभिर्यो भीतिमर्पयेत्।
भयोद्वेगकरोऽन्येषां पाषाणेनाथ घातकः ॥
तल्पघाती च संभूतः कुलेषु धनिनां नरः।
गत्वा देशान्तरं तेषां तत्र रोगो महान् भवेत्' ॥
(व्या. स्मृ. ६. १७–२२)

इति। वृद्धगौतमः—

'वृक्षच्छेत्ता वृथा यस्तु स नाडीव्रणवान् भवेत्'।

इति। वायुपुराणे—

'भवेत्स्फुटितपादस्तु यो निहन्याद्वनस्पतीन्।
प्राणिहिंसापरो* जन्तुघाती वा मृतसन्ततिः ॥
मुखे कृष्णव्रणी श्वित्री वन्ध्यो वा स्याद्विसर्पवान्।
वल्मीकं तु खनित्वा यो हन्ति वायुभुजो नरः ॥
गजचर्मी ज्वरी च स्यादाज्ञया पूर्वकर्मणः।
भ्रूणहा स्विन्नहस्तः स्याद्ग्रहणीवानपत्यहा' ॥

---

* प्राणिहिंसापरः जन्तुघाती वा मृतापत्यः मुखे कृष्णव्रणवान् वा कुष्ठवान् वन्ध्यो वा स्यादित्यर्थः।

---

१ Except B D. G. and I. read -ज्वार- for -ज्वर- २. B. D G H. and J. read चतुर्थ- for चातुर्थ-. ३. I. reads सततज्वरी for सतत ज्वरी and G. also does the same ४. H reads सम्भूते कुष्ठेषु for सम्भूत कुलेषु. ५ I. reads रागो for रोगो. ६. Except A. and I, all others omit इति. ७ B. D. and G. do not insert इति. ८ B. and D read वृत्तिसतति, E. G H. and J. हतसंतति both for मृतसतति. ९ I reads गजचर्मा for गजचर्मी. १०. B. D G. and H. read छिन्नहस्त for स्विन्नहस्त. ११ I. reads गृहिणी दासपत्न्यपि for गृहणीवानपत्यहा, but it is meaningless.

इति । विष्णुधर्मोत्तरे—

'यं कंचिद्घातयित्वा तु प्राणिनं[1] भृगुनन्दन ।
मांसं भुक्त्वा तु[2] धर्मज्ञ भवतीह गदातुरः' ॥
(वि. ध. २. १०८. ४)

इति ॥

इति हिंसाशेषकर्म[3]फलानि ।

अथापेयपानाभक्ष्यभक्षणकर्मविशेषाद्योनिविशेषः[4]।

तत्र शिवधर्मोत्तरे—

'कृमि-कीट-पतङ्गानां विड्भुजां[5] चैव पक्षिणाम् ।
सुरापः प्राप्यते योनिं पूर्वकर्मानुसारतः' ॥

इति । उमा-महेश्वरसंवादे—

'मद्यव्यसनिनो ये च ये मद्यं सेवयन्ति च ।
शालां तु कारयेद्यस्तु मद्यपानं[6] ददाति यः ॥
मद्यविक्रयिणो ये च मद्यं[7] ये क्रीणयन्ति च ।
पिबन्ति ये नरा देवि सर्वे ते समभागिनः
ते शौण्डिका*वा चण्डाला लुब्धका मत्स्यघातकाः।
दासत्वेनैव सुश्रोणि जायन्ते पुरुषाधमाः ॥

*नरकान्ते मद्यव्यसन्यादीनां जन्मान्याह । ते शौण्डिका इत्यादि । शौण्डिकादिष्वपि दासत्वेनैव न स्वामित्वेन । शौण्डिकादिदासा भवन्तीत्यर्थः।

---

१. E. G. H and I read प्राणिना for प्राणिन २. B D substitute इह for तु. ३. G and J. omit -कर्म-, while except E. and H. हिंसाविशेष- for हिंसाशेष- ४. J reads -कर्मविशेष- for -कर्मविशेषाद्योनिविशेषः ५. B. and D read द्विजातीनां for विड्भुजां ६ B. and D. read मद्यपात्र for मद्यपान, while J. मद्यपानावदाति for मद्यपानं ददाति. ७. G. reads मद्ये for मद्य.

तिर्यञ्चोऽपि समुत्पन्ना यथा मृत्युमुपागताः[1]।
मद्यपानरता ये च शृणु तेषां गतिं शुभे[2]॥
षष्टिवर्षसहस्राणि कृमिर्भूत्वा महीतले[3]।
कृमियोनिक्षये भूते पापं तु कथयाम्यहम्॥
श्वानयोनिशतं गच्छेज्जम्बुके[4] पञ्चविंशतिम्।
मद्यपानरता ये तु कां गतिं यान्ति सुव्रते?॥
शूद्रस्य चे[5]दृशं पापं[6] मद्यपानरतस्य च।
विप्रस्य कथयिष्यामि मद्यपस्य दुरात्मनः॥
काको भूत्वा चिरं देवि विष्ठाभक्षस्तु जीवति।
वर्षाणां द्वादशे[7] लक्षे स जीवेत् पापकर्मकृत्॥
स्वे मांसे[8] परमांसेन यो देही वृद्धिमिच्छति।
तस्य योनिशतं गत्वा शरीरं व्याधितं[9] भवेत्॥
यासु योनिषु जायन्ते नरा[10] मांसस्य भक्षकाः।
व्याधि-रोगशतैर्युक्ता जायन्ते तासु कर्मणा॥

१. I. reads मृत्युमुपागताम् for मृत्युमुपागता. २. J. substitutes प्रभो for शुभे. ३. E. omits the following —

षष्टिवर्षसहस्राणि कृमिर्भूत्वा महीतले।
कृमियोनिक्षये भूते पापं तु कथयाम्यहम्॥
श्वानयोनिशत गच्छेज्जम्बुके पञ्चविंशतिम्।.

४. B D. H. and J. read जम्बुकं पञ्चविंशतिम्, and G जम्बुक पञ्चविंशति·. ५. J substitutes वा for च. ६ B. and D. read पानं for पापं. ७. Except I read पक्षी. ८. H. reads स्वमांसे परमांसेन, and I. स्वमांसं परमांसेन, while I substitutes ऋच्छति for इच्छति ९. All, except A and I, substitute बाधितं for व्याधित. १०. I. reads नरमांसस्य for नरा मांसस्य.

इति । मनुः—

'कृमि-कीट-पतङ्गानां विड्भुजां चैव पक्षिणाम् ।
हिंस्राणां चैव सत्त्वानां सुरापो ब्राह्मणो व्रजेत्' ॥
(म. स्मृ. १२.५६)

इति । विष्णुरपि—

'अभोज्यानां भोजने अभक्ष्यभक्षणे च कृमिः' ।
(वि. स्मृ. ४४. ११)

इति । वृद्धगौतमः—

'विप्रवृत्तिविलोपेन दर्दुरः सप्तजन्मसु ।
निषिद्धान्नं तु यो भुङ्क्ते कमठः सोऽभिजायते ॥
कीटाशी शीतलान्नाशी मत्स्याशी याचितान्नभुक् ।
आमन्त्रणं विना भुक्त्वा परान्नं काकतां व्रजेत्' ॥

इति ॥

## अथापेयपानादिकर्मशेषफलानि ।

इति । तत्र हारीतः—

'सुरापो बद्धजिह्वः । अभक्ष्यभक्षः श्यावदन्तः' ।
(हा. स्मृ. २४. ६८–६९)

---

१. H. reads -कीर- for -कीट-. २. E. H. and J. read विड्भुजानां च for विड्भुजां चैव. ३ B D and E omit च, while E. reads अभोज्यानामभक्ष्यभक्षणे, I. अभोज्यान्नभक्षणे, J. अभोज्यानां भक्षणे, and the text अभोज्यान्नाऽभक्ष्याशी all for अभोज्यानां भोजने अभक्ष्यभक्षणे च. ४ B and D. substitute गौतम for वृद्धगौतम; while G. omits इति and वृद्धगौतम. ५ B. and D. read this line thus:—

अविप्रवृत्तिलोपेन दर्दुर सप्तजन्मसु ।

G. also the same, but reads अविप्रे वृत्तिलोपेन and -जन्मनि. ६. E. and J. read मर्कटः, G. कर्मठ. and I. कर्कट all for कमठ.. ७. I. reads सूतकान्नाशी for शीतलान्नाशी. ८. Except A. E. and J. all others read -कर्मविशेष- for -कर्मशेष-; while G. reads उपपानादि- for अपेयपानादि-.

इति। स्कान्दे रेवाखण्डे —

'पापशेषात्तु भवति सुरापः श्यावदन्तकः'।

(स्कं. पु. रे. ख. ७१. २६)

इति। शिवधर्मोत्तरे—

'अभक्ष्यभक्षी गण्डमाली'।

इति। शङ्ख-लिखितौ—

'[1]अभक्ष्यभक्षी गण्डमाली'।

इति। काश्यपः—

'सुरापो लोलजिह्वः[2]'।

इति॥ (का. स्मृ. १३. ११)

## अथ स्तेयकर्मविशेषाद्योनिविशेषाः[3]।

तत्र[4] मनुः—

'लूता-ऽहि-सरठानां च तिरश्चां चाम्बुचारिणाम्[5]।
हिंस्राणां च[6] पिशाचानां स्तेनो विप्रः सहस्रशः॥(५७)
संयोगं पतितैर्गत्वा परस्यैव च योषितम्।
अपहृत्य च विप्रस्वं भवति[7] ब्रह्मराक्षसः॥ (६०)

---

१ B. and D. do not insert the quoted sûtra, but substitute तथैव. २. B. D. G. H. and J reads बद्धजिह्व for लोलजिह्व. ३. B. D. H. and J. substitute -विशेष for -विशेषा. ४ All, except A. and I., omit तत्र and E. omit also मनु. ५. B. and D. read अम्बुधारिणाम् for अम्बुचारिणाम् ६ I. reads स पिशाचानां for च पिशाचानां. ७. B. D. G. I. and J. read भवन्ति ब्रह्मराक्षसा. for भवति ब्रह्मराक्षसः.

मणि-मुक्ता-प्रवालानि हृत्वा लोभेन मानवः[1] ।
विविधानि च रत्नानि जायते[1] लोहकर्तृषु ॥
धान्यं हृत्वा भवत्याखुः, कांस्यं हंसो, जलं प्लवः ।
मधु दंशः, पयः काको, रसं श्वा, नकुलो घृतम् ॥
मांसं गृध्रो, वसां[2] मद्गुस्तैलं तैलपकः[3] खगः ।
चीरीवाकस्तु[4] लवणं, बलाका[5]शकुनिर्दधि ॥
कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः ।
कार्पास-तान्तवं[6] क्रौञ्चो, गोधा गां, वाग्गुदो[7] गुडम् ॥
चुच्छुन्दरी[8] शुभान् गन्धान्, पत्रं शाकं तु बर्हिणः ।
श्वावित् कृतान्नं विविधमकृतान्नं तु शल्यकः ॥
बको[9] भवति हृत्वाऽग्निं, गृहकारी ह्युपस्करम् ।
रक्तानि हृत्वा वासांसि जायते[10] जीवजीवकः ॥
वृको मृगेभं, व्याघ्रोऽश्वं, फल-पुष्पं[11] तु मर्कटः ।
स्त्रीमृक्षस्तोकको वारि, यानान्युष्ट्रः पशूनजः ॥
यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः ।

---

१. G. I. and J read मानवा. and जायन्ते the plural forms instead of मानवः and जायते the singular ones. २. The text substitutes वपां for वसां. ३. B D. E H. and I read तैलचक and J and G. तैलवेक both for तैलपक्र ४. We follow here A G. and the text, while B and D read चीरीकाक, E and H. क्षीरहार, I क्षीरवास and J. क्षीरपाक all for चीरीवाक ५ I. reads बालक for बलाका- ६. I reads कार्पास तान्तव for कार्पास-तान्तव ७ B. and D. चागुलो गुलम्, E वागुला गुडम्, H. वाग्गुलो गुडम्, I. वाह्रुदो गुडम् and J वागुदो गुलम् all for वाग्गुदो गुडम्. ८ The text substitutes छुच्छुन्दरि. for चुच्छुन्दरी ९ B. D. substitute काको for बको and गृध्रकारी for गृहकारी. १० E. reads जायन्ते जीवजीवका.. ११. B and D. read फल-पुष्पे and the text substitutes फल-मूल for फल-पुष्प.

अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ॥[1]
स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः।
एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः[2] ॥
(म. स्मृ. १२. ५७-६९)

इति। याज्ञवल्क्यः—

'हीनजातौ प्रजायेत पररत्नापहारकः।
पत्रशाकं शिखी हृत्वा, गन्धाञ्छुच्छुन्दरी[3] शुभान् ॥
मूषको धान्यहारी स्याद्यानमुष्ट्रः फलं कपिः।
जलं प्लवः, पयः काको, गृहकारी ह्युपस्करम् ॥
मधु दंशः, पलं[4] गृध्रो, गां गोधा, ऽग्निं बकस्तथा।
श्वित्री वस्त्रं, श्वा रसं च[5], चीरी लवणहारकः ॥
प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्मणि।
द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः'[6] ॥
(या. स्मृ. ३. २१३-१६)

इति। मार्कण्डेयपुराणे—

'न्यासापहर्ता[7] नरकाद्विमुक्तो जायते कृमिः। (६)
धान्यं यवांस्तिलान्माषान्कुलित्थान्[8]सर्षपाञ्चणान् ॥ (७)

---

१. B. G and D. read चैव इत for चैवाहुतं. २. B. D E. G. H. and J read पत्नीत्वम् for भार्यात्व; while B. D. and J substitute तान् for ता'. ३. E H and J read छुच्छुन्दरि. for चुच्छुन्दरी. ४. G reads फल for पल. ५ I. and the text substitute तु ६ I. reads through mistake प्राणिजायते for प्राणिजातय ७. I. reads पुसोऽपहर्ता for न्यासापहर्ता. ८. I. reads कुलुत्थान्, E. H and the text कुलत्थान् both for कुलित्थान्.

सस्यान्यन्यानि वा हृत्वा मोहाज्जन्तुरचेतनः ( ८ )
सञ्जायते महावक्त्रो[1] मूषको वज्रसन्निभः ॥ ( ९ )
भोजनं चोरयित्वा तु मक्षिका[2] जायते नरः । ( १९ )
हृत्वा दुग्धं तु[3] मार्जारो जायते नरकाच्च्युतः ।
तिल-पिण्याकसम्मिश्रमन्नं हृत्वा तु मूषकः ॥ ( २० )
घृतं हृत्वा तु[4] नकुलः काको मुहुरजामिषम्[5] ।
श्येनो[6] मार्गामिषं हृत्वा चीरी लवणहारकः ॥ ( २१ )
चोरयित्वा पयश्चापि बलाका सम्प्रजायते । ( २२ )
यस्तु चोरयते तैलं तैलपायी स जायते ।
मधु[7] हृत्वा नरो दंशो घृतं हृत्वा पिपीलिका ॥ ( २३ )
चोरयित्वा तु निष्पावान् जायते गृहगोलकः[8] ।
आसनं[9] चोरयित्वा तु तित्तिरित्वमवाप्नुयात् ॥ (२४)
अयो[10] हृत्वा तु पापात्मा वायसः सम्प्रजायते ।

---

१. J. substitutes महाचक्रो for महावक्त्रो; while the text बभ्रुसन्निभ for वज्रसन्निभ २. B and D read मक्षिको for मक्षिका. ३. The text reads ऽन्नन्तु स for दुग्ध तु. ४. The text reads च for तु. ५. H J. and the text read मुहुरजामिषम्, G मुहुरजाप्रियम् both for मुहुरजामिषम् ६. In the text we find these following two lines are for this line, viz —

मत्स्यमांसापहृत् काक श्येनो मार्गामिषापहृत् ।
चीचीकाकस्त्वपहृते लवणे दधनि क्रामि ॥.

७ H. substitutes अन्धु for मधु. while B. and D हसो for दंशो and G reads thus —

अपहृत्वा पणे दंशो घृतं हृत्वा पिपीलिकाः ॥

And in the text we find ऽपूपं for घृत ८. B D E. G. H I. and J. read गलगण्डक for गृहगोलकः. ९ The text reads आसव for आसन and gives therefore a good sense १०. E and G. read अपो for अयो.

हृते कांस्ये च हारीतः कपोतो रौप्यजे हृते ॥(२८)
जीवञ्जीवकतां याति रक्तवस्त्रापहारकः ॥ (२९)
चुच्छुन्दरी शुभान् गन्धान् सस्यं हृत्वा शशो भवेत् ।
षण्ढः पलालहरणे काष्ठहृत् घुणकीटकः ॥ (३०)
पुष्पापहृद् दरिद्रश्च पङ्गुर्यानापहारकः ।
शाकहर्ता च हारीतस्तोयहर्ता च चातकः ॥ (३१)
भूहर्ता नरकान् गत्वा रौरवादीन् सुदारुणान् ।
तृण-गुल्म-लता-वल्ली-त्वक्सार-तरुतां क्रमात्'॥ (३२)
(मा. पु. १९. ६–३२)

इति । गौतमः—

'अनृतवाक् स्खलितजिह्वो मुहुर्मुहुः सह्लंग्नवाक् ।

---

१. I reads रौप्यके for रौप्यजे and the text रूप्यभाजने for रौप्यजे हृते २. E and H substitute याता for याति, E I. J and the text read रक्तवस्त्रापहृन्नर for रक्तवस्त्रापहारक ३ B. and D omit this and the following three lines –

चुच्छुन्दरी शुभान् गन्धान् सस्य हृत्वा शशो भवेत् ।
षण्ढ पलालहरणे काष्ठहृत् घुणकीटक ॥
पुष्पापहृद्दरिद्रश्च पङ्गुर्यानापहारक ।
शाकहर्ता च हारीतस्तोयहर्ता च चातक ॥,

G omits this and the following two lines, while the text reads छुच्छुन्दरि and E. H and J. read the same for चुच्छुन्दरी ४. I reads रस and the text वासो both for सस्यं ५ E H. and J read पलालहारेण for पलालहरणे, while the text substitutes फलापहरणात् for the same ६. I. reads व्रणकीटक for घुणकीटक ७. The text reads ऽपहृन्नर for ऽपहारकः. ८ B D. E G. H. I and J. read गत for क्रमात् ९. We consulted here five different manuscripts and one printed copy of the text of Gautama, manuscripts do not concord with one another Some omit this portion altogether. In the printed copy some Sûtras are found, but their version is quite different, while H. reads स्खलित for खलित- and I. उल्वलो for स्खलितजिह्वो.

जलोदरो दारत्यागी । कूटसाक्षी श्लीपदी उच्छून-जङ्घाचरणः । विवाहविघ्नकर्ता छिन्नोष्ठः। अवगूरण-श्छिन्नहस्तः । मातृघ्नोऽन्धः। स्नुषागामी वातवृषणः । चतुष्पथे विण्मूत्रविसर्जने मूत्रकृच्छ्रः। कन्यादूषकः षण्ढः । पर्युषितभोजी कृमिः । ईर्ष्यालुर्मशकः । पित्रोर्विवदमानोऽपस्मारी । न्यासापहार्यनपत्यः । रत्नापहार्यत्यन्तदरिद्रः । विद्याविक्रयी पुरुषमृगः । वेदविक्रयी द्वीपी । बहुयाजको जलप्लवः । अयाज्ययाजको वराहः । अनिमन्त्रितभोजी वायसः । मृष्टैकभोजी वानरः । इतस्ततोऽश्नन् मार्जारः । कक्षवनदाही खद्योतः। दारकाचार्यो मुखविगन्धः । अदत्तादायी बलीवर्दः । मत्सरी भ्रमरः । अग्न्युत्सादी मण्डलकुष्ठी । शूद्राचार्यः श्वपाकः। गोहर्ता सर्पः । स्नेहापहारी क्षयी । अन्नापहार्यजीर्णी । ज्ञानापहारी

१. मातृघ्नोऽन्ध । स्नुषागामी वातवृषण । these two Sûtras do not appear in others than A and I, while B. omits ईर्ष्यालुर्मशक. २. B. D E. G H and J do not insert पर्युषितभोजी कृमि here, and change place and insert after मुखविगन्ध । ३. B. D. E G H. and J. omit पित्रोर्विवदमानोऽपस्मारी ४ B D. E G. and H. substitute कन्यापहारी for न्यासापहारी and J. omits अनपत्यहा । रत्नापहारी and reads न्यासापहार्यत्यन्तदरिद्र. ५ J. reads पुरुषो मृग for पुरुषमृग ६. J. substitutes -याचको for -याजको. ७. B D. G. omit this Sûtra ८ I reads यत - for इतः-. ९. H reads अदत्तादायो for अदत्तादायी १० E. J. and I. read भ्रमर for भ्रमर.. ११. J. reads मण्डली कुष्ठी for मण्डलकुष्ठी.

मूकः । जलापहारी[1] मत्स्यः । क्षीरहारी बलाकः[2] । परद्रव्यापहारी[3] परमेष्ठ्यः' ।

( गौ. स्मृ. २०. ४-३८)

इति । शङ्ख-लिखितौ—

'वेश्मापहारी[4] अद्रिसर्पः । परजलापहारी[5] शिशुमारः । सस्यापहारी[6] कपोतः । कव्यापहारी[7] वायसः । ताम्रापहारी वल्गुलः[8] । अपूपापहारी प्रेतः । शास्त्रापहारी[9] जडः । छत्रापहारी कारण्डवः[10] । गन्धापहारी पतङ्गः । ध्वजापहारी कृकलासः । शाकापहारी पशुः । शय्यापहार्यशयनः[11] । पुष्पापहारी दुर्गन्धी । फलापहार्यफली[12] । दीपापहारी कौशिकः । भूम्यपहारी नकुलाहि-बिडाला-ऽऽखूनामन्यतम

इति ।

---

१ Except A. and I., all others substitute जलाहारी for जलापहारी. २. Except E and I., others read बलाकी for बलाक. ३. B. reads ऽहारी for ऽपहारी ४. B reads वैश्यापहारी, D. and G. वेश्यापहारी for वेश्मापहारी and all manuscripts, except A. and I, omit -सर्प and read only अद्रि, while G. reads अहि for अद्रिसर्प ५, G. substitutes सर्व- for पर-, while I. omits पर- ६. D reads सत्यापहारी for सस्यापहारी, while B. omits this and the following three Sûtras:-

सस्यापहारी कपोत । कव्यापहारी
वायस । ताम्रापहारी वल्गुल ।

७. G. and J. substitute क्रव्यापहारी and D H कव्यहारी both for कव्यापहारी. ८. G. reads ताम्रहारी and I. बलाक for ताम्रापहारी and वल्गुलः respectively. ९. D omits these following Sûtras and reads इति at once. १०. B. omits कारण्डव and गन्धापहारी, while I. reads कारण्ड for कारण्डव and, G कदम्ब and J कौदुभव for the same H. also reads कौदभव., but gives marginal reading कारण्डव. ११ G. reads अशान्तिः for अशयन. १२. B. and G. read अफलादि for अफली.

यद्वा तद्वाऽपि पारक्यं स्वल्पं वा यदि वा बहु।
हृत्वा वै योनिमाप्नोति तत्तद्भोगानुरूपतः' ॥
इति ॥

अथ स्तेयकर्मशेषफलानि।

तत्र विष्णुधर्मोत्तरे—

'मणि-मुक्ता-प्रवालानि रत्नानि विविधानि च।
अपहृत्य नरा राम जायन्ते हेमकर्तृषु ॥ (१)
यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः।
प्राप्नोति भृगुशार्दूल मानुष्ये भारवाहिताम् ॥ (२)
धान्यचोरोऽङ्गहीनः स्यादत्यङ्गो मिश्रहृद् भवेत्।
व्याधितश्चान्नहर्ता स्यान्मूको वागपहारकः ॥ (५)
वस्त्रापहारी श्वित्री स्यात् पङ्गुश्चाऽश्वापहारकः। (६)
अन्धो दीपापहारी स्यात् काणो निर्वापको भवेत् ॥ (७)
दरिद्रः परवित्तघ्नश्चोन्मत्तश्च तथाग्निदः ॥ (८)
पङ्गुरेव तथा ज्ञेयः सर्वयानापहारकः।

---

१ B. D. G. H. and J read यद्वा तद्वा परद्रव्यं for यद्वा तद्वाऽपि पारक्य. २ All others, except A., do not insert अथ ३ H. reads विष्णोत्तरे for विष्णुधर्मोत्तरे. ४ G reads in singular form as नरो . जायते. ५ We follow here only A. and the text, while all others read राजन्, but the quoted verses are a dialogue between पुष्कर and Paraśurâma and Pushkara addressed to Paraśurâma. The vocative राजन् is not appropriate to Paraśurâma. ६ B. and D read हत्वा गोमिश्रकृद्भवेत्, G हत्वा गा मिश्रकृद्भवेत्, E and H. अन्त्यगो मिश्रकृद्भवेत्, I. अत्यन्त मिश्रको भवेत् and the text अत्यङ्गो मित्रहृद्भवेत् all for अत्यङ्गो मिश्रहृद्भवेत्. ७. G. reads च for स्यात् ८. G omits this line —

वस्त्रापहारी श्वित्री स्यात् पङ्गुश्चाश्वापहारक।

९ The text substitutes तथा for भवेत् १० We follow here only A. and the text, while all others read उन्मत्तश्चाश्वहर्तिन।

अन्धश्च जायते लोके गां हत्वा च नराधमः ॥ (८)
वस्त्र-भोज्यापहर्त्तारौ तथा नग्न-बुभुक्षितौ ।
रत्नापहारी भवति तथा कुष्ठी नराधमः' ॥ (९)
(वि. ध. २. १०७. २-९)

इति । वायुपुराणे—

'वातव्याधियुतः स्तेयी तथा कुष्ठी नरो भवेत् ।
ब्राह्मणस्वर्णहारी च प्रमेही जायते नरः ॥
प्रस्विन्नपाणि-पादः स्यादाहरेद्यो रसादिकम्* ।
अन्नचोरो भवेद्यस्तु सोऽकस्माज्जायते कृशः ॥
स्वरोपघाती वाक्यं च हृत्वा मर्त्यः प्रजायते' ॥
(वायु. पु. २. ३१. २५-२७)

इति । उमा-महेश्वरसंवादे—

'धान्यचौरस्तु हीनाङ्गस्तृणहर्ता तु वा पुनः ।
परद्रव्यापहारी च भृत्यानां वृत्तिजीवकः ॥
अन्नं क्षेत्रं गृहं वाऽपि परद्रव्यं हरन्ति ये ।
सुवर्ण-मणि-मुक्तानि वस्त्राण्याभरणानि च ॥

* आहरेत् चोरयेत् । वाक्यं हृत्वा स्वरोपघाती भवतीत्यर्थः ।

१ The text does not insert this and the following two lines, but for these three lines, the text gives one line —

अन्धो भवति गोघ्नस्तु चाण्डिकस्तैलिकस्तथा ।.

B D also omit these three lines २ H reads वस्त्र-पूजापहर्तारौ for वस्त्र-भोज्यापहर्तारौ ३ G. omits इति ४ G substitutes बाल- for वात- ५. J. reads ब्राह्मण स्वर्णहारी for ब्राह्मणस्वर्णहारी. ६ B D G. and H. substitute धान्यचोर for अन्नचोर ७ B and D read परोपघाती for स्वरोपघाती; while E reads स्वरो नृपतिवाक्यं च हृत्वा and J स्वरोपश्चातिवाक्य च रुह्य both for स्वरोपघाती वाक्यं च हृत्वा. ८ B and D. read धान्यचोरोङ्गहीन स्यात् for धान्यचौरस्तु हीनाङ्ग ९. I. reads स्थल for अन्न.

आसनानि विचित्राणि धन-धान्यमुपस्करम् ।
ये हरन्ति नरा नित्यं परद्रव्याणि मोहिताः ॥
इहलोकमृतानां[1] च तेषामेष[2] विधिः स्मृतः ।
नग्ना दीनाः[3] क्षुधार्त्ताश्च कुचैला दुःखिताः सदा ॥
बन्धुभिः परिभूताश्च भोग्य-भोगविवर्जिताः[4] ।
तांस्तु ते[5] प्रार्थयन्तीह दासवृत्तिमुपागताः[6] ॥
ये हरन्ति च तूर्याणि[7] वाद्यानि विविधानि च ।
तेन[8] पापेन ते देवि तिर्यक्त्वं यान्ति मानवाः ॥
हृत्वाऽऽनद्धादिवाद्यानि[9] झल्लरी-पटहानि च ।
तेन पापेन ते मूढा बाधिर्यं यान्ति मानवाः ॥
कांस्यकं[10] मुरजं वंशं वीणां तुम्बुरुकं[11] तथा ।
ये हरन्ति च पापेन[12] पिशाचास्ते भवन्ति च ॥
पटहं[13] लेपनं चैव तथा सम्पुटिकाश्च ये ।

---

१. B D. G. I and J. read इहलोकगतानां, E इह लोकमतानां both for इहलोकमृतानां. २ B. and D substitute एव for एष.. ३ B and D. read नाम्ना हीना., G नग्नहीना both for नग्ना हीना . ४ H and J. read भाग्यभोग- for भोग्य भोग-. ५ I. reads सुखानि and E and J. वसूनि both for तांस्तु ते. ६ B. D and E substitute सदा for दास-. ७. J. reads शूर्पाणि for तूर्याणि. ८ B and D omit the following —

तेन पापेन ते देवि तिर्यक्त्व यान्ति मानवाः ॥
हृत्वा ऽऽनद्धादिवाद्यानि झल्लरीपटहानि च ।

९. E. reads मण्डवादि-, G. मूद्धादि-, I. मद्वादि- and J. मड्डादि- all for ऽऽनद्धादि-. १०. B. D E and I read कासिक, G. and H वाशिकं both for कांस्यकं. ११. E. G. H and J read तुवविलं and I तूलविलं for तुंबुरुक. १२. G and I. read पापानि for पापेन. १३ J. reads this line as follows —

पट्टं सक्लेमन चैव तथा संबुधिताश्च ये ।,

while G. substitutes पट्ट for पटहं and B and D. सम्पुटिकांश्च for सम्पुटिकाश्च.

हरन्ति पुष्करं[1] ये तु तेन ते यान्ति मूकताम्[2] ॥
प्रासादेषु च ये देवि हरन्ते दीपकान्[3] नराः ।
गृहेषु चैव विप्राणां तेन ते यान्ति चान्धताम्' ॥

इति । शङ्ख-लिखितौ—

'सुवर्णस्तेयी कुनखी । वस्त्रापहारी श्वित्री । हिरण्यापहारी दद्रुणः । तैजसापहारी मण्डली* । स्नेहापहारी क्षयामयी[4] । अजीर्णवानन्नापहारी[5] । वागपहारी मूकः । गृध्रो देवद्रव्योपजीवकः । पाण्डुरोगी दीपहारी । ब्राह्मणवृत्तिघ्नश्च दरिद्रः । कर्मफलविशेषेण कुब्ज[6]-षण्ढ-पङ्गु-दरिद्राश्च[7] जायन्ते' ।

इति । यमः—

द्रव्यौषधापहर्ता च दीर्घरोगित्वमाप्नुयात्[8] ।
धान्यचोरो व्रणी च स्यात् कासी[9] भक्तापहारकः ॥
गलगण्डी गणद्रव्य[10]हर्ता भवति मानवः ।

---

* मण्डलं कुष्ठप्रभेदः सोऽस्यास्तीति मण्डली । अन्यत् सुगमम् ।

---

१ B D. E. G. H. and J. read पुस्तक for पुष्करं २ G. reads मूढता for मूकताम् ३ I reads हरन्ति दीपिकां for हरन्ते दीपकान्. ४ B and D. omit क्षयामयी । अजीर्णवानन्नापहारी and read स्नेहापहारी वान्तान्न for the above omitted portion. ५. G. and H. read अजीर्णवान्तोन्नहारी for अजीर्णवानन्नापहारी ६ B. D. G. H and J. read कुष्ठ– for कुब्ज–; while E कुण्ड– for the same. ७. B reads –दरिद्रश्च जायेत, G. reads –दरिद्री स जायते, H and J दरिद्रा सञ्जायन्ते. ८ G. reads दीर्घरोगान् for दीर्घरोगित्वम् ९ H. reads कृमि for कासी. १०. I. reads गलद्द्रव्य– for गणद्रव्य–, but it seems meaningless here.

विधृतिर्बलहर्ता च श्येनो मांसापहारकः'[१] ॥
(य. स्मृ. ९. ३–६)

इति । स्कान्दे रेवाखण्डे—

'मानकूटं[२]* तुलाकूटं कूटसाक्ष्यं वदन्ति ये ।
नरके ते[३]ऽन्धतामिस्रे प्रपच्यन्ते नराधिप[४] ॥
शतसाहस्रिकं कालमुषित्वा तत्र ते नराः ।
इह शत्रुगृहे बद्धा[५] भ्रमन्ते कालमीप्सितम् ॥
कुनखी स्वर्णहरणान्मूकः पुस्तकहारकः ।
फलान्याहरतो ऽपत्यं म्रियते नात्र संशयः' ॥
( स्कं. पु. रे. खं. ७१. ३६–४० )

इति ॥

अथागम्यागमनकर्मविशेषाद्योनिविशेषः ।

तत्र स्कान्दे रेवाखण्डे—

'गुरुदाराभिमर्शी च कृकलासो भवेद्ध्रुवम् ।
राज्ञीगामी भवेद्दुष्टो[६] वृश्चिको वृषलीपतिः' ॥
( स्कं. पु. रे. ख. ७१. २९ )

*मानं धान्यादिमापनसाधनं द्रोणाढकादि । तस्मिन् कूटं कपटं न्यूनत्वमित्यर्थः ।

१ I. reads this line as follows :—

विकृतिर्ब्रह्महर्ता च स्यान्मांसस्यापहारकः ।,

while E. reads वा स्यान्मांसापहारक , B. स्यान्मांसस्यापहारक , H स्यान्मांसापहारक and J स्यान्मासोपहारक all for श्येनो मांसापहारक . २ I. reads मणिकूटं for मानकूट through mistake. ३. I. substitutes तु for ते. ४. I. reads नराधमा. for नराधिप, but the quoted lines are addressed to the King ५. E. reads लभन्ते, H बद्धा लभन्ते and J. बद्धा लभन्ते all for बद्धा भ्रमन्ते. ६. J. reads भवेद्दुष्टा for भवेद्दुष्टो

इति। गौ[१]तमः—

'चाण्डाली-पुल्कसीगमनेऽजगरः। प्रव्रजितागमने मरुपिशाचः। शूद्रागमने दीर्घकीटः। स[२]वर्णाभिगामी दरिद्रः। गोगामी मण्डूकः'।

( आन्ध्रपुस्तके गौ. स्मृ. २०. ३५–४० )

इति। मार्कण्डेयपुराणे—

'[३]परदाराभिगमने रक्तद्रोणस्तु जायते। (९)
[४]श्व-सृगालेभ-गृध्रेषु क्रमाज्जातिषु जायते।
भ्रातृभार्यां च दुर्बुद्धिर्यो धर्षयति पापकृत्।
पुंस्कोकिलत्वमाप्नोति स [५]पापो नरकाच्च्युतः॥ (१०)
सखिभार्यां गुरोर्भार्यां राजभार्यां च पापकृत्।
[६]प्रधर्षयित्वा कामात्मा सूकरो जायते नरः॥ (११)
शूद्रश्च ब्राह्मणीं गत्वा कृमियोनौ प्रजायते।
तस्यामपत्यमुत्पाद्य काष्ठान्तःकीटको भवेत्॥ (१५)
सूकरः कृमिको मद्गुश्चण्डालश्च प्रजायते'॥ (१६)

(मा. पु. १५. १– १६)

---

१ These quoted Sûtras are not found in the text. २. J. reads स्ववर्णाभिगामी for सवर्णाभिगामी ३. B. and D. read परदाराभिगामी च रक्षो घोर., E. and H परदाराभिगामी तु रक्तो घोण, G. and J परदाराभिगामी तु रक्तो घोर for परदाराभिगमने रक्तद्रोण; while the text reads this line thus —

परदाराभिमर्शात्तु वृको घोरोऽभिजायते।.

४. The text reads this line as follows —

श्वा शृगालो बको गृध्रो व्यालु ( व्याल ) कङ्कस्तथा क्रमात्।,

while B. and D. श्व-सृगाल-गृध्रेषु, E. and G. श्व सृगालेषु गृध्रेषु and H, श्व-सृगालक-गृध्रेषु all for श्व-सृगालेभ-गृध्रेषु ५. The text reads चापि for पापो. ६. B. D E G. H and J. read प्रधर्षयति for प्रधर्षयित्वा, while G and I पापात्मा for कामात्मा

इति । ब्रह्मपुराणे—

'सखिभार्यां गुरोर्भार्यां राजभार्यां तथैव च ।
प्रधर्षयति कामाद्यो मृतो जायेत सूकरः ॥ (६८)
सूकरः पञ्च वर्षाणि दश वर्षाणि वै वृकः ।
पिपीलिका तु मासांस्त्रीन् कीटःस्यान्मासमेव तु[3] ॥(६९)
[4]एतानासाद्य संसारान् कृमियोनौ प्रजायते ।
तत्र जिवति मासांश्च कृमियोनौ चतुर्दश ॥ (७०)
ततोऽधर्मक्षयं कृत्वा ततो जायेत मानवः । (७१)
[5]परदाराभिमर्शं तु कृत्वा जायेत वै वृकः ।
श्वा सृगालस्ततो गृध्रो व्याल[6]ः काको बकस्तथा ।(६६)
[7]भ्रातृभार्यां तु पापात्मा यो रोचयति *मोहितः ।
कोकिलत्वमवाप्नोति सोऽपि संवत्सरं द्विजः ॥ (६७)
मनसाऽपि गुरोभार्यां यः शिष्यो याति पापकृत् ।
उग्रान् स याति संसारानधर्मेणेह चेतसा ॥
श्वयोनौ तु स सम्भूतस्त्रीणि वर्षाणि जीवति ।
तत्रापि निरयं प्राप्तः कृमियोनौ प्रजायते ॥

---

* मैथुनार्थमिति शेषः । नायं वैधनियोगस्य निन्दार्थवादः । रोचयतीत्युक्तेः सकामत्वं लक्ष्यते । नियोगे तु सन्तानजननेच्छाया एव मुख्यत्वात् । 'स मानवः' स पापफलभोक्ता पुरुषः श्वा भूत्वा ततः कृकलासो भवतीत्यर्थः ।

---

१. I reads शिष्यभार्यां for राजभार्यां २ I. reads कामात्मा for कामाद्यो. ३ G. reads च for तु. ४ G and H. read एतान्मासांश्च for एतानासाद्य. ५. G reads परदाराभिमर्शी तु मृत्वा for परदाराभिमर्शं तु कृत्वा. ६. B. D. E G. H. and J. substitute व्याघ्र for व्याल ७ B. and D. substitute आप्तभार्यां and G. भर्तृभार्यां both for भ्रातृभार्यां and I. धर्षयति for रोचयति.

कृ[1]मिभावमनुप्राप्य वर्षमेकं तु जीवति ।
ततस्तु निरयं प्राप्तो ब्रह्मयोनौ प्रजायते ॥
वृ[2]षलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते । (७७)
ततः सम्प्राप्य निधनं जायते सूकरः पुनः[3] ॥
सूकरो जातमात्रस्तु रोगेण म्रियते द्विजाः[4] ।
श्वा[5] ततो जायते मूढः कर्मणा तेन भो द्विजाः[6] ॥ (७८)
श्वा भूत्वा कृकलासस्तु जायते मानवस्ततः ॥ (७९)
तत्रापत्यं समुत्पाद्य ततो जायेत मूषकः' ॥ (८०)
(ब्र. पु. २१७. ६६–८०)

इति । ना[7]रदपुराणे—

'चिन्तयेद्वीक्षयेद्वापि[8] जननीं वा सुतां च वा ।
व[9]धूं वा भ्रातृदारान् वा गुरुभार्यां नृपस्त्रियम् ॥

---

१. B. D. and G omit this and the following two lines —
कृमिभावमनुप्राप्य वर्षमेकं तु जीवति ।
ततस्तु निरयं प्राप्तो ब्रह्मयोनौ प्रजायते ॥
वृषलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ।

२. E. and H. omit this line. ३. G. substitutes पुमान् for पुनः. ४. B D. and G read द्विज for द्विजा, but the quoted lines are addressed to the Rishis ५ B and D omit this line:—
श्वा ततो जायते मूढ कर्मणा तेन भो द्विजा ।.

६. G substitutes द्विज for द्विजा ७. E. does not insert नारदपुराणे and the following quoted six lines and इति G. and H. insert नारदपुराणे, but omit the following six lines and इति । व्यभिचारिणीस्मृति वराहपुराणे ८. B and D. read ईक्षयेत् and J. शिक्षयेत् both for वीक्षयेत्. ९. J reads वृद्धां for वधू and B. D. and J substitute -भार्यां instead of -दारान्.

स याति नरकं घोरं सञ्चिन्त्य श्वपचीमपि ।
दृष्ट्वा हि[1] प्रमदा ह्येता यः क्षोभं व्रजते नरः ॥
तस्य पुण्यं कृतं सर्वं वृथा भवति नान्यथा ।
पुण्यस्य सङ्क्षयात् पापी[2] पाषाणश्च भवेद्ध्रुवम्' ॥

इति । व्यभिचारिणीम्प्रति वराहपुराणे[3]—

'ततः शुनी[4] भवेत् पश्चात् सूकरी च ततः परम् ।
कर्मक्षये ततः पश्चान्मानुषी कुत्सिता[5] भवेत् ॥
नच सौख्यमवाप्नोति तेन[6] दुःखेन दुःखिता' ।
(व. पु. २०२. ७१-७२

इति[7] ।

'तृण[8]-गुल्म-लतानां च क्रव्याद-दंष्ट्रिणामपि ।
क्रूरकर्मरतानां च क्रमशो गुरुतल्पगः ॥
हिंस्रा भवन्ति क्रव्यादाः क्रमशो[9]ऽभक्ष्यभक्षिणः ।
परस्परादिनो मत्स्याः प्रेत्याऽन्त्य[10]स्त्रीनिषेवकाः' ॥
(व. पु. २०२. ३०-३१)

---

१. B. and D read तु प्रमदॉल्लोके for हि प्रमदा ह्येताः. २. B. and D. read स पुण्यसङ्क्षयात् पाप. for पुण्यस्य सङ्क्षयात् पापी, while I. substitutes पाप for पापी ३ B. and D substitute नारदपुराणे for वराहपुराणे ४. G. reads शुना for शुनी. ५. B D and G. read कुष्ठिता for कुत्सिता ६. G. substitutes भर्तृ- for तेन ७ B D E. G. I. and J. insert इति and show that the quotation of Varâha purâna is completed here, and the next four lines are separate A. and H. do not insert इति and show the next lines belongs to the quotation of Varâha purâna ८. B. D. and G. substitute त्रीणि for तृण– and क्रव्यादि for क्रव्याद– and I and J. क्रव्यादं for the same ९. I substitutes क्रमयो. १० B and D. read तत्स्त्रीनिषेवका, H. ऽन्यस्त्रीनिषेवकाः both for ऽन्त्यस्त्रीनिषेवकाः.

इति। अगम्यागमनकर्मविशेषात् फलविशेषः पद्मपुराणे—

'उदरव्याधियुक्तस्तु तथा गुर्वङ्गनागमे।
आचार्यभार्यागमने [१]भगन्दरयुतो भवेत्॥
[२]तथा पापेन महता गुल्मी स्यादन्त्यजागमे'॥

इति। विष्णुधर्मोत्तरे—

'षण्ढश्च जायते लोके दारातिक्रमकारकः।
परपुंसि प्रसक्ता च तस्य भार्या तथा भवेत्॥
कुष्ठी भवति धर्मज्ञ[३] अपहृत्य तथा स्त्रियम्।
लिङ्गव्याधिमवाप्नोति वियोनौ[४] मैथुने रतः॥
गां गत्वा तु द्विजश्रेष्ठ लिङ्गनाशमवाप्नुयात्।
दृष्ट्वा परस्त्रियं नग्नां [६]नरो दुष्टेन चेतसा॥
जात्यन्धत्वमवाप्नोति परलोके न संशयः।
अवकीर्णी च भवति लिङ्गव्याधिसमन्वितः॥
[७]प्रकीर्णमैथुनो जन्तुः क्लीबो भवति वै द्विज'।
(वि. ध. २. ७०. ४१–४६)

इति। शङ्ख-लिखितौ—

'[८]पर्वमैथुनी प्रमेही। पुरुषव्याधिपीडितः।
[९]परदारगाम्यगुप्तदारः। गोष्ववकीर्णी दुश्चर्मा।

---

१. G reads भगक्षययुतो for भगन्दरयुतो २. B and D. omit this and the following three lines. ३. H. and J. read धर्मज्ञ for धर्मज्ञ. ४. B D G. and H. read श्वयोनौ for वियोनौ. ५ E and I. read गां च गत्वा for गां गत्वा तु; while B and D substitute द्विजश्रेष्ठो for द्विजश्रेष्ठ. ६. B. D. and G. substitute अनुदुष्टेन and J अतिदुष्टेन both for नरो दुष्टेन; while A. मनोदुष्टेन चक्षुषा for नरो दुष्टेन चेतसा ७. I. reads प्रकीर्णमैथुने. for प्रकीर्णमैथुनो. ८ I. reads पर्वमैथुने and J. परमैथुने both for पर्वमैथुनी. ९. G. reads परदाराभ्यगामी for परदारगामी,, while G. reads अगुप्तदारी and I. अगुप्तदारक for अगुप्तदार

[1]खराभिगामी मूत्रमेही । सगोत्राभिगामी मद्यप-
स्त्रीगामी च [2]स्त्रीपदी । मातृ-पितृ-भगिनीगाम्य-
बीजी । स्वदारादन्यत्र दीव्यतः केशाल्पत्वम् ।
गुरुतल्पगो दुश्चर्मा । चण्डाल्यवकीर्णी कन्या-
दूषी सगोत्राभिगाम्यबीजी । धर्मपत्न्यामास्ये
प्रवर्तकः खल्वाटः । मातृ-भगिनीगाम्यव-
कीर्णी श्लीपदी [3]वध्री मधुमेही च' ।

इति । वृद्धबौधायनः—

'गां गत्वा मधुमेही स्यान्मूत्रकृच्छ्री चतुष्पदम् ।
मधुमेही खराश्वादिगामी भवति मानुषः ॥
सवर्णागमने रक्तः[4] पितृहा पाण्डुरोग्यथ[5] ।
अन्त्यजागमने मर्त्यो जायते नात्र संशयः' ॥

इति । वृद्धगौतमः—

'धर्मपत्नीं गुरोर्गत्वा वृश्चिको भुजगस्तथा ।
पक्षि-दंष्ट्रि-मृग-व्याल-क्रव्यादोऽपि ततोऽसकृत्[6] ॥
तथा मानुष्यतां प्राप्तः क्षयी कुष्ठी च वा[7] भवेत् ।
महोदरी प्रमेही च दुश्चर्मापि[8] भगन्दरी ॥
[9]ज्वरातिसारी दाही च पाददाही कृमिव्रणी ।
गत्वा तु मातृभगिनीं दारेषु[10] मधुमेहवान् ॥

---

१. I. reads this Sûtra as:— खराश्वाभिगामी मधुमेही; while G. reads धूममेही for मूत्रमेही २ B and D read श्वीलवादी and A. श्लिष्टवादी both for स्त्रीपदी; while E. substitutes श्रीपदी for the same. ३ I. substitutes वधी for वध्री. ४. I reads ऽइस्क for रक्तः. ५. I. reads अध. for अथ and H अत. for the same. ६. B and D read भवेत् for ऽसकृत्. ७. G. reads तथा for च वा. ८. B D and I. substitute च for अपि. ९ G. reads अतिसारी विदाही च for ज्वरातिसारी दाही च; while I. reads दाक्षी for दाही १०. B. and D read ज्वरेषु, I. नलेषु both for दारेषु.

कन्यागाम्यश्मरी शूली[1] प्रमेही मूत्रकृच्छ्र्यपि ।
कन्यां च गोत्रजां गत्वा बाहुहीनो भवेन्नरः ॥
सगोत्रां च सवर्णां च गत्वा स्यात् श्लीपदी नरः ।
मातरं च स्वसारं च गत्वा श्लीपद्यजीवकः[2] ॥
अनस्थि-पाणि-पादः स्यात् श्वश्रूगः सखिभार्यगः ।
मूत्रकृच्छ्री तथाऽजिह्वी[3] स्नुषागो मुष्कवृद्धिमान् ॥
रजस्वलाभिगामी च चण्डालीगमने रतः ।
दाहज्वरी भवेन्मर्त्यः अन्त्यजन्मसु गुल्मवान् ॥
गत्वा तपस्विनीं नारीं गुर्विणीं मूत्रकृच्छ्र्यपि ।
स्यादामयावी भवति विधवागोऽश्मरीयुतः ॥
प्रमेही मूत्रकृच्छ्री च शूली मर्त्योऽभिजायते ।
परदाराभिगामी[4] च प्रमेही गुरुदारगः ॥
दासीगामी क्रूरकर्मा सदा कामरतो भवेत्[5] ।
स्वजातिपरनारीगः कुष्ठी मर्त्योऽभिजायते ॥
वक्त्रमैथुनकर्ता च खल्वाटो जायते नरः ।
गत्वा तु महिषीं राज्ञः षण्ढो भवति मानवः ॥

---

१. B and D. substitute चैव for शूली. २. E. reads श्रीपद्यजीवकः for श्लीपद्यजीवकः. ३. I. reads ऽजिह्व for ऽजिह्वी ४. B and D. omit this and the following two lines :—

मूत्रकृच्छ्री तथाऽजिह्वी स्नुषागो मुष्कवृद्धिमान् ॥
रजस्वलाभिगामी च चण्डालीगमने रतः ।
दाहज्वरी भवेन्मर्त्ये अन्त्यजन्मसु गुल्मवान् ॥.

५. E. and J. insert इति after भवेत्.

नेत्ररोगी भवेत् प्रेक्ष्य नितरां परयोषितः ।
बहुत्वे योषितामेकपत्नीगः[1] खञ्जतां व्रजेत् ॥
स्वदारेभ्योऽन्यतो दीव्यन्नल्पकेशो भवेन्नरः ।
पुंश्चल्यो योषितो बालरण्डाः स्युर्बधिरा[2]स्तथा ॥
दास्यो वा दीर्घरोगिण्यो दृष्टिहीना भवन्ति ताः[3]' ॥

इति । ब्रह्मपुराणे–

'परदारेषु ये चापि चक्षुर्द्रष्टुं[4] प्रयुञ्जते ।
तेन दुष्टस्वभावेन[5] क्लीबत्वमुपयान्ति वै ॥ (६४)
पशूंश्च ये विव्रजन्ति[6] ये चैव गुरुतल्पगाः ।
प्रकीर्णमैथुना ये च क्लीबा जायन्ति[7] ते नराः' ॥ (६५)
(ब्र. पु. २१७. ६४–६५)

इति[8] । तदेवं कानिचिच्छास्त्राण्युदाहृत्य कियानपि कर्मविपाको निरूपितः । अनयैव दिशा विपाकान्तराण्युन्नेयानि । नहि निःशेषेण[9] केनचिदुदाहर्तुं शक्यन्ते[10] । तदुक्तं विष्णुधर्मोत्तरे–

'उक्तास्तवेमास्तु[11] मया तिरश्चां
या योनयो यानि च लक्षणानि ।
शक्यानि कार्त्स्न्येन मया न वक्तुं
या योनयश्चैव नराधमानाम्' ।
(वि. ध. २. ७२. ६७.)

१. We only follow here A. and J, while all others read योषितामेका पुत्रीगः, but it seems meaningless. २ G. substitutes विधवा for बधिरा. ३. B. D. and H. substitute ते for ता ४. H. reads दुष्टं for द्रष्टुं. ५ G. reads दुष्टप्रभावेण for दुष्टस्वभावेन. ६ B and D read येऽपि व्रजन्ति for विव्रजन्ति. ७. B and D substitute जायन्त एव ते ८. G does not insert इति. ९. J reads विपाकान्तराण्यपनेयानि । नहि विशेषेण, G. reads also विशेषेण for निःशेषेण. १०. I. reads शक्यम् for शक्यन्ते ११. G. reads तथाशक्ति, I. reads यथाशक्ति for तवेमास्तु.

इति । अशक्तिश्च कर्मानन्त्यात् । यद्यप्यतिपातकादीनि प्रकीर्णकान्तानि पापानि दशविधत्वेन विष्णुना सङ्कलितानि तथाप्यतिपातकादिजात्युपाधावेव तत्सङ्कलनम् । पापव्यक्तीनां तु स्वरूपतो देश-काल-कर्त्रवस्थादिभेदाच्च नेयत्ता । यदा कर्मणामेवेयत्ता नास्ति तदा तद्विपाकानामियत्ता दूरापास्ता । एकैकस्य कर्मणो बहुविधविपाकवत्त्वस्मरणात् । उदाहृताश्च बहुविपाकाभिधायिकाः श्व-सूकरेत्यादिस्मृतयः । तथापि तेषां निःशेष-कथनं मनसाऽपि चिन्तयितुमशक्यम् । अतो दिङ्मात्रं प्रदर्शितम् ।

एतच्च विपाकाभिधानं सञ्चेष्यमाणेभ्यः पुरुषं निवर्तयत् सञ्चितेषु चोद्वेगं जनयन्निषेधेषु प्रायश्चित्तविधिषु चार्थवादतयाऽन्वेतीति पूर्वमभिहितम् । तत्र निषेधा आचारकाण्डे प्रपञ्चिताः । प्रायश्चित्तविधयश्च प्रायश्चित्तकाण्डे । तानि च प्रायश्चित्तानि सञ्चितविषयाणि । प्रारब्धे तु विचारणीयम् । किं प्रायश्चित्तमस्ति उत नेति? । तत्र तावदस्तीति केचिदाहुः ।

उदाहरन्ति च वचनम्—

‘पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते ।
तच्छान्तिरौषधैर्दानैर्जप-होमा-ऽर्चनादिभिः’ ॥

१ B and D omit देश- and J omits -काल- and both read कर्तव्यवस्था- for देश-काल-कर्त्रवस्था-. २. E G H. I and J. omit -विध-, while I. reads विपाकस्मरणात् for विपाकवत्त्वस्मरणात्. ३. G. reads बहुविपाकाश्च सूकरेत्यादिस्मृतय. and J reads बहुविपाका श्व-सूकरेत्यादिस्मृतय for बहुविपाकाभिधायिका श्व-सूकरेत्यादिस्मृतय. ४ E G. and H substitute तत्र and J तच्च for एतच्च ५ B D and G. read रोगोद्वेग for उद्वेगं. ६ H. reads तत्तत्काण्डे for प्रायश्चित्तकाण्डे. ७. B. D. E. G. H. and J read आरब्धे for प्रारब्धे ८ H. and J. read बाध्यते, while J. substitutes व्याधिदोषेण for व्याधिरूपेण.

इति। ननु—नैतद्युक्तिसहम्[1]। तथाहि। निषिद्धस्य कर्मणः प्रायश्चित्तनिवर्तनीयत्वम्[2]। यदा फलमारब्धं तदैव[3] कर्मत्वदशामतीत्य फलत्वदशायां[4] प्रविष्टम्। नच फलस्य प्रायश्चित्तं क्वचित् प्रसिद्धमस्ति।

नायं दोषः। फलत्वदशायामपि कर्मत्वस्यात्यान्तिक[5]निवृत्त्यभावात्। अन्यथा पापकर्मणः फलमिति व्यवहारानुपपत्तेः। अथवा प्रायश्चित्तसदसद्भावः शास्त्रैकसमधिगम्यः[6]। शास्त्रं चेत् फलस्यापि प्रायश्चित्तं ब्रूते[7] किं तव च्छिद्यते? । उदाहृतं च शास्त्रम्—

'तच्छान्तिरौषधैः[8]'।

इत्यादि। तस्मादारब्धफलस्याप्यस्त्येव प्रायश्चित्तम्।

अपरे पुन[9]र्मन्यन्ते। नास्त्ये[10]वारब्धफलस्य प्रायश्चित्तम्॥ कुनखित्वादि[11]निवृत्त्यदर्शनात्। येद्यारब्धफलं[12] प्रायश्चित्तान्निवर्तते

१. B and D. read तद्युक्तिसहम् for एतद्युक्तिसहम्. २ B and D read प्रायश्चित्त निवर्तनीयम्, G प्रायश्चित्तनिवर्तनम्, E. and H प्रायश्चित्तनिवर्तनीयम् all for प्रायश्चित्तनिवर्तनीयत्वम्. ३ G. E read तदद्य for तदैव and H. reads तदाद्य- for the same. B. and D तदाद्यैक- for तदैव ४ B. H and J. read फलदशायां for फलत्वदशायां. ५ B. D. read ऽत्यन्त- for ऽत्यन्तिक-; while G. reads -निवृत्तिकाभावात् and J. -निष्टत्वभावात् for -निवृत्त्यभावात्. ६. B. and D. read -समधिगन्तव्य for -समधिगम्य. ७ E omits the following —

ब्रूते किं तव च्छिद्यते? । उदाहृत च शास्त्रम्। 'तच्छान्तिरौषधै'
इत्यादि। तस्मादारब्धफलस्याप्यस्त्येव प्रायश्चित्तम्। अपरे
पुनर्मन्यन्ते। नास्त्येवारब्धफलस्य प्रायश्चित्तम्।.

८ G H. and J. omit औषधै. ९. G. omits पुनः १० B. and D. read च for एव. ११ B and D read कुनखीत्यादीनां for कुनखित्वादि-. १२. H. reads यद्यारब्ध फल and G यथारब्धे for यद्यारब्धफलं, while B. D and G read प्रायश्चित्त निवर्तेत for प्रायश्चित्तान्निवर्तते and नैसर्गिककर्माऽपि for नैसर्गिकमपि

तदा नैसर्गिकमपि कुनखित्वादिकं प्रायश्चित्तान्निवर्त्तेत। न त्वेव-मुपलभामहे। यथा* मुक्तस्येषोर्लक्ष्यवेधोऽप्रतिसमाधेयः तथा प्रारब्धफलं न प्रतिसमाधातुं शक्यम्। एतदेवाभिप्रेत्य भगवान् बादरायणः सूत्रयामास—

'अनारब्धकार्ये एव तु पूर्वे तदवधेः'।

(ब्रा. सू. ४. १. १५)

इति। अस्यायमर्थः—ये सुकृत-दुष्कृते तत्त्वज्ञाननिवर्त्यत्वेन पूर्वयोरधिकरणयोः (१) प्रकृते, ते अनारब्धकार्ये एव। न त्वारब्धफलयोः सुकृत-दुष्कृतयोर्निवृत्तिः। कुतः। तदवधेः।

'तस्य तावदेव चिरम्'।

(छां. उ. ६. १४. २)

इति श्रुतावुत्पन्नज्ञानस्यापि मोक्षम्प्रति शरीरपातावधिश्रवणादिति। एवं-तर्हि तच्छान्तिरित्यादेः का गतिः?—इति चेत्। उच्यते। नह्यत्र प्रायश्चित्तमभिधीयते। तत्प्रकरणे पाठाभावात्। चिकित्साप्रकरणे हि इदं पठितम्। तथा च चिकित्सा यथा

*इषुदृष्टान्तेन साधितो ऽयमर्थस्तत्रभवद्भिः श्रीमद्भगवत्पूज्यपादैः। 'यथा आरब्धवेगस्य लक्ष्यमुक्तस्येष्वादेर्वेगक्षयादेव स्थितिः। नतु लक्ष्यवेधसमकालमेव'—इत्यादिना।

१ B. D. and G substitute प्रायश्चित्त for प्रायश्चित्तात्, while J. निवर्तते for निवर्तेत २ B and D. substitute तत्र for तत्त्व- and B, D and G. read -निवृत्तत्वेन for -निवर्त्यत्वेन ३. B. and D omit कार्ये एव, न त्वारब्ध- ४ B. D and G do not insert कुत. ५ B. and D श्रुत्या तावत्यन्नज्ञानस्यापि for श्रुतावुत्पन्नज्ञानस्यापि ६ B D. and H read तथा चेत् चिकित्सा and omit यथा while G. reads तथा चिकित्सा and omit यथा. E. and J. also omit यथा and give in marginal correction.

रोगनिवृत्तेर्दृष्ट उपायः तथा दानादिरप्यदृष्ट उपायः । तथा सति चिकित्सावद्दानादेर्नात्र प्रायश्चित्तत्वम् । किन्तु रोगनिवर्तकं किंचित् प्रबलं सकृतापूर्वमुत्पादयन्ति दानादयः । तच्च सुकृतप्रवृत्तान्यपि फलानि प्रतिबध्य स्वफलं प्रयच्छति । प्रतिबद्धश्च फलशेषः स्वप्नादौ जन्मान्तरे वोपभुज्यते । एतत् सर्वमुपपुराणे पराशरेण प्रपञ्चितम्—

'शरीरारम्भकं कर्म योगिनोऽयोगिनोऽपि च ।
विना फलोपभोगेन नैव नश्यत्यसंशयम् ॥
वर्तमानशरीरेण सम्पन्नं कर्म देहिनः ।
इह वाऽमुत्र वाऽज्ञस्य ददाति स्वफलं शुक ॥
इहैव फलदं कर्म प्रारब्धं प्रतिबध्य च ।
फलं ददाति स्वप्ने वा जाग्रत्कालेऽथ वाऽनघ ॥
निवृत्तप्रतिबन्धं तु प्रारब्धं कर्म सत्तम ।
निरुद्धांशफलं स्वप्ने ददाति स्थिरमुत्तमम् ॥
निरुद्धांशसमो भोगो यथोद्भूतश्च जाग्रति ।
तथा निरुद्धं तेनैव सह कर्म ददाति वै ॥
एवं निरुद्धभोगं तु स्वप्ने जाग्रति वा फलम् ।

---

१ B D. E G. H. and J. omit अपि, while I. substitutes दृष्टोपाय for अदृष्ट उपाय through mistake. २. I. omits अत्र. ३ B. D E. and H. substitute किञ्च for किं तु ४ J. reads फलविशेष for फलशेष. ५ B. D. G. and H. substitute च for वा and G and I. उपयुज्यते for उपभुज्यते ६ B. and D. omit पराशरेण, while G and H. substitute पाराशरे for पराशरेण ७ J. reads वा for च. ८. B. D. and I substitute both च for both वा; while B. and D ज्ञस्य for ऽज्ञस्य ९. B. and D. read कृत for शुक १० B and D substitute प्रतिपद्यते for प्रतिबध्य च. ११ I reads निवृत्तप्रतिबद्ध and G निवृत्तप्रतिबद्धे both for निवृत्तप्रतिबन्ध. १२ J. reads विरुद्धांश- for निरुद्धांश- १३. B D. E. G. H. and J. read यदा for यथा, while J. जायते for जाग्रति १४ B. D E G. H. and J. read तदा for तथा. १५. I. reads निरुद्धभागं for निरुद्धभोग.

आरब्धस्यानुगुण्येन भुङ्क्ते देही न संशयः ॥
अत्युत्कटैरिहत्यैस्तु पुण्य-पापैः शरीरभृत्।
प्रारब्धं कर्म विच्छिद्य भुङ्क्ते तत्तत्फलं बुधः ॥
प्रारब्धशेषं विच्छिन्नं पुनर्देहान्तरेण तु।
भुङ्क्ते देही ततो[1] भुङ्क्ते तल्लङ्घयति कः पुमान्? ॥
अवश्यमनुभोक्तव्यं[2] प्रारब्धस्य फलं जनैः।
देहेनैकेन वाऽन्येन[3] युगपद्वा क्रमेण वा।
श्व-सूकर-खरोष्ट्रादिविरुद्धैर्विग्रहैरपि।
भोक्तव्यस्य फलस्यैवं[4] शुक कर्माणि च क्रमात्[5] ॥
कारणानि भवन्तीह[6] चक्रवत्परिवर्तने[7]।
आरभन्ते क्रमेणैव तेषां नाशस्तु भोगतः ॥
सञ्चितेषु समस्तेषु प्रबलं कर्म देहिनः।
फलमारभते देहमपि तत्साधनं बुधः ॥
दुर्घटं सकलं शक्तिर्माया माहेश्वरी जडा।
घटयत्यत्र सन्देहो नास्ति सा[8] तादृशी गतिः' ॥

इति। प्रबलेन कर्मणा प्रारब्धफलस्य प्रतिबन्धाङ्गीकारे नैसर्गिकाः कुनखित्वादयोऽपि क्वचित् प्रतिबध्येरन्—इति चेत्।

---

१ E. reads ततो, I ननो, J. नरो all for ततो, while G reads बुधे देही च न भुङ्क्ते for भुङ्क्ते देही ततो भुङ्क्ते २ I reads अवश्य ननु भोक्तव्य for अवश्यमनुभोक्तव्य ३ I reads देहेनान्येन चान्येन for देहेनैकेन वाऽन्येन ४. I. reads भोक्तास्यैव फलस्येह for भोक्तव्यस्य फलस्यैव. ५ G. reads चाम्रुवन् for च क्रमात्. ६. H reads एव for इह ७ B. and D. प्रम्रुवन् for चक्रवत्. and G. परिवर्तते for परिवर्तने ८ G. reads स्वात् for सा.

प्रतिबध्यन्तां नाम। यत्र प्रतिबन्धो न दृश्यते तत्र दौर्बल्यं कल्पनीयम्। प्रबलस्य[1] तु वर-शापाभ्यां जन्मान्यथाभावोऽपि[2] क्वचित् स्मर्यते। तथा च स्कन्दपुराणे व्याघ्र[3] ईश्वरेण गणेश्वरत्वं प्राप्त इत्यभिहितम्। महाभारते नहुषस्येन्द्रपदप्रेप्सोरगस्त्यशापेनाऽजगरत्वं[4]* प्राप्तमित्यभिहितम्। यदा जातस्य देहस्यापि प्रबलेन निमित्तेनान्यथाभावोऽस्ति तदा किमु वक्तव्यं कौनख्यादेरन्यथाभाव इति।

एवं च सति रोगशान्त्यादिप्रतिपादकानि सर्वाणि शास्त्राणि[5] प्रारब्धभोगाविरोधेनानुगृहीतानि[6] भविष्यन्ति। रोगशान्तिश्चौ-

---

* उक्तं चेदमाख्यानं महाभारते उद्योगपर्वणि अष्टमाध्यायमारभ्य-षोडशाध्यायपर्यन्तं नवभिरध्यायैःशल्य-युधिष्ठिरसंवादेन। तत्र विश्वरूप-ब्राह्मणवधोत्पन्नब्रह्महत्याभयेनेन्द्रस्य पलायनं, देवैरभ्यर्थितस्य नहुषस्येन्द्रपदस्वीकारः, तस्यैश्वर्यमदः, इन्द्राणीप्राप्त्यर्थं निर्बन्धः। अगस्त्यशापेन नहुषस्याजगरत्वमित्यादि वर्णितम्। वनपर्वणि च शतोपरिसप्तसप्ततितम-मध्यायमारभ्य शतोपरि एकाशीतितमाध्यायपर्यंतेन ग्रन्थसन्दर्भेण अजगरशरीरात् नहुषस्य मोक्षोऽभिहितः। तत्र भीमस्य शरीरवेष्टनं अनन्तरं प्रश्नोत्तराभ्यां नहुषस्य मुक्तिः इत्याद्यभिहितम्। 'इन्द्रपदप्रेप्सोः' इति यदत्राचार्येणोक्तं तत्-उपरि निर्दिष्टोपाख्याने इन्द्रपदप्राप्तेः स्पष्टत्वेन निरूपणाद्विरुद्धमिव प्रतिभाति। तत्र इन्द्रपदं प्रकर्षेण गच्छतीति विग्रहे इन्द्राणीप्राप्त्यैव प्रकृष्टत्वेनेन्द्रपदप्राप्तिसिद्धेरिन्द्राणीप्रेप्सोरिति व्याख्येयमिति प्रतिभाति।

---

१ I. reads प्रबलाभ्या for प्रबलस्य and वर-शापाख्यां for वर-शापाभ्या. २ J reads -भावेऽपि for -भावोऽपि ३ J reads व्याध for व्याघ्र, while B. and D. read स्कान्दे for स्कन्दपुराणे and substitute गणेशत्वं for गणेश्वरत्व. ४. B. and D substitute गजत्व for ऽजगरत्व, but undoubtedly it is incorrect ५ B D and G omit शास्त्राणि ६ B and D. read प्रारब्धभोगविरुद्धेन and H प्रारब्धभोगविरोधेन both for प्रारब्धभोगाविरोधेन.

षधादिसाध्या । तत्रौषधान्यायुर्वेदप्रसिद्धानि । दानानि च[2] बौधायनकल्प-ब्रह्माण्डपुराणादिभ्योऽवगन्तव्यानि । जपस्तु शौनकादिप्रोक्तऋग्विधान-सामविधानादौ बहुधा प्रपञ्चितः। तथा च[3] ऋग्विधाने स्मर्यते—

'ऋतस्येति जपेत् सूक्तं[4] ह्ययुतं विष्णुमन्दिरे।
अश्वत्थे माघमासे च मूत्ररोगो विनश्यति॥ (१२३)
वायो शुक्रो जपेत् सूक्तमश्वत्थे ह्ययुतं तु चेत्।
[5]नानाविधो वातरोगो विनश्यति न संशयः॥ (१२४)
वारुणं वा जपेत् सूक्तमयुतं धात्रिमूलके।
[6]तापादिव्याधिनाशे तु सुखी[7] पश्चात् स्थितो भुवि॥(१२५)
कद्रुद्राय जपेत् सूक्तं शीतज्वरविनाशनम्[8]।
लिङ्गं स्पृष्ट्वा[9]ऽयुतं धीमानारोग्यं[10] शीघ्रतस्तथा॥ (१२६)
इमा रुद्राय तवसे जपेत् सूक्तं शिवालये।
उष्णज्वरविनाशाय अ[11]युतं नात्र संशयः॥ (१२७)

---

१. J. omits the following portion —

-साध्या। तत्रौषधान्यायुर्वेदप्रसिद्धानि। दानानि च बौधायन-
कल्प-ब्रह्माण्डपुराणादिष्ववगन्तव्यानि। जपस्तु शौनकादि-.

२ B and D omit दानानि च. ३ B D, E G, H read तथाहि for तथा च, while J omits च ४. D omits the following portion —

. . . . . ह्ययुत विष्णुमन्दिरे।
अश्वत्थे माघमासे च मूत्ररोगो विनश्यति॥
वायो शुक्रो जपेत् सूक्त . . . . . ।;

while G substitutes अयुत for ह्ययुत ५. E. G H. and J read बहुविधो वातरोगो; while I बहुधा वातरोगोऽपि both for नानाविधो वातरोगो. ६. I. substitutes वातादि- for तापादि-. ७. E. reads सुखे and H. मुखे, but the words are complicated ८ G. reads -निवारणम् for -विनाशनम्. ९. B D. and J. read दृष्ट्वा for स्पृष्ट्वा, while G. substitutes जपेत् for ऽयुतं. १०. I. reads नीरोग for आरोग्य ११. I. reads ह्ययुत for अयुत.

इमां रुद्राय सूक्तं तु जपेच्चेच्छिवमन्दिरे ।
का[2]स-शूलादिरोगघ्नमयुतं नात्र संशयः ( १२८ )
ईङ्खयन्ती जपेत् सूक्तं लक्षं बि[3]ल्वे शिवेऽपि वा ।
कुष्ठनाशो भवेच्छीघ्रं माघमासे न संशयः ॥ ( १०१ )
हंसमन्त्रं जपेद्धीमान् ऽ[4]युतं विष्णुमन्दिरे ।
अर्घ्यं दद्यात् कुष्ठरोगी सुवर्णसमतामियात् ॥ ( १०२ )
जपे[5]च्चित्रं देवमन्त्रं शिरोरोगो विनश्यति ।
आयुर्वृद्ध्यादिकं प[6]श्चादयुतं विष्णुमन्दिरे ॥
अमीवहा स्वप्नयुक्तं जपेत् सूक्तं शिवालये ।
ऽ[7]युतं चेत् कुष्ठरोगी स्वर्णवर्णं प्रयाति सः ॥ ( १०७ )
मि[8]त्रस्येति जपेत् सूक्तमपस्मारो विनश्यति ।
महापातकयुक्तोऽपि नीरो[9]गो भूतले स्थितः ॥ ( १०८ )
उदसौ कु[10]क्षिशूली तु जपेत् सूक्तं शिवालये ।
अयुतं माघमासे तु मुच्यते नात्र संशयः ॥ ( १०९ )

---

१ B and D. read this s'loka after the sixteenth line of this quotation, namely —

अर्घ्यं दद्यात् कुष्ठरोगी सुवर्णसमतामियात् ।;

while शिवसन्निधौ for शिवमन्दिरे. २ B. D E G and J substitute काय- for कास-; while H काल- for the same. ३ I reads बिल्वशिरोऽपि वा for बिल्वे शिवेऽपि वा ४ G and J. read अयुत for युत. ५ I. reads जपेच्छीघ्र for जपेच्चित्र ६. B. and D substitute पश्येत् for पश्चात्. ७ G. substitutes अयुत for ऽयुतं ८. B D E G H and J read तीव्रस्यापि for मित्रस्येति ९ I. reads नीरोगी for नीरोगो. १० G. reads कुक्षिशूले च for कुक्षिशूली तु.

सूर्यो[1] नो दिवः सूक्तं प्रत्यहं प्रजपेद्दश ॥
बदर्यां[2] च त्रिवर्षं तु क्षयादिव्याधिनाशनम्' ॥ (११०)
( ऋग्विधान १०१–१५२ )

इति। त एते जपा ऋग्विधाने शौनकेन प्रोक्ताः। होमं च तत्र स एवाह–

'ततश्च चित्रमन्त्रेण होमं कुर्यात् सहस्रकम्[3]।
अर्केण त्रिमधुं कृत्वा शिरोरोगो विनश्यति ॥
सप्तम्यां रवियुक्तायां जलमध्ये यदा[4] दश।
करवीरैस्तु गायत्र्या होमं कुर्यात् सहस्रकम् ॥
व्याधिनाशो भवेच्छीघ्रं मृत्युं जयति सः[5] पुमान्'।
( ऋ. वि. १६९–१७१ )

इति। बौधायनोऽपि–

'असाध्यव्याधिना ग्रस्त[6] उग्रेण प्राणहारिणा।
आ ते रुद्रेति[7] सूक्तेन प्रत्यृचं वाग्यतः शुचिः ॥
पूर्वमाज्याहुतीर्हुत्वा[8] उपस्थाय च शङ्करम्।
हविःशेषेण वर्तेत एकोत्तरमतन्द्रितः[9] ॥
पूर्णे मासे[10] जयेन्मृत्युं रोगेभ्यश्च विमुच्यते।
होमकर्मण्यशक्तानां जपस्तद्द्विगुणो भवेत्' ॥

१. I. reads सूर्येण for सूर्यो and प्रत्यब्द for प्रत्यह २. B and D read बाधिर्यं तु for बदर्यां तु. ३. B. D. G and H read समत्रकम् for सहस्रकम् ४. I. reads यथा for यदा. ५. G. and J read यः for स.. ६ B D. E. and H read ग्रस्ता for ग्रस्त. ७ E. G and H. read आ ते रौद्रेण, I. अतिरुद्रेण and J. अतिरौद्रेण all for आ ते रुद्रेति ८. B. D E G H. and J substitute आहुति for आहुती. ९. I. reads अतन्त्रित for अतन्द्रित. १०. I. reads पूर्णे मासि for पूर्णे मासे.

इति । तैत्तिरीयकशाखायां च द्वितीयकाण्डे रोगानिवृत्त्यर्था होमा बहुधोपवर्णिताः । तत्र तावत्प्रथमप्रश्ने काम्यपशुप्रकरणे प्रथमानुवाके–

'वायव्यं श्वेतमालभेत' ।

(तै. सं. २. १. १. १)

इति श्वेतपश्वालम्भनानुवृत्तौ[2] श्रूयते–

'वायवे नियुत्वत आलभेत ज्योगामयावी' ।

(तै. सं २. १. १. ३)

इति । ज्योगामयावी दीर्घरोगी । वायोरश्वानियुतः तद्वते नियुत्वते । फलं च वाक्यशेषे[3] श्रुतम्–

'स एवास्मिन् प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव' ।

(तै. सं. २. १. १. ४)

इति । स एव नियुत्वान् वायुरेव । अस्मिन् दीर्घरोगवति इतासुर्गतप्राणः । द्वितीयानुवाके[1] श्रूयते–

'यो वरुणगृहीतः स्यात् स एवं वारुणं कृष्णमेकशितिपादमालभेत' ।

(तै. सं. २. १. २. १)

---

१ G omits from वायव्यं श्वेतमालभेत to द्वितीयानुवाके श्रूयते २ B. and D omit from श्वेतपश्वालम्भना .. to फल च वाक्यशेषे श्रुतम We do not give any readings on these mantras though they are found in manuscripts both including यदीतासुर्भवति E. and H omit श्वेतपश्वालभन and श्रूयते and then read वायवे नियुत्वत आलभेत and add इत्युपक्रम्य omitting ज्योगामयावी' । इति। ज्योगामयावी दीर्घरोगी। वायोरश्वानियुत· तद्वते नियुत्वते। फल च वाक्यशेषे श्रुतम्·स एवास्मिन्प्राणापानौ दधात्युत and substituting उभयदातासुर् for यदीतासुर् ३. J. reads वाक्यशेषेण for वाक्यशेषे.

इति। वरुणगृहीतो[1] जलोदराख्यव्याधिगृहीत इत्येके। अ[3]ज्ञातरोगग्रस्त इत्यन्ये। एकः शितिः श्वेतः पादो यस्य स एकशितिपात्।

'स एवैनं वरुणपाशाद्विमुञ्चति'।

(तै. सं. २. १. २. २)

इति फलम्। स एव वरुण एव। वरुणपाशादुक्तरोगात्। तस्मिन्नेवानुवाके–

'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं ज्योगामयावी'।

(तै. सं. २. १. २. ७)

इति। बभ्रुः पिङ्गलवर्णः। तत्फलं तु–

'अग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्र-
समुत यदीतासुर्भवति जीवत्येव'।

(तै सं. २. १. २. ७)

इति। चतुर्थानुवाके–

'यदि बिभीयाद्दुश्चर्मा भविष्यामीति
सोमा पौष्णꣳ श्याममालभेत'।

(तै. सं. २- १- ४- ३)

इति। कण्डूत्यादिभिश्चिह्नैर्भविष्यद्रोगं निश्चितवतः तस्माद्भयं सम्भवत्येव। तत्फलं तु–

'न दुश्चर्मा भवति'।

(तै. सं २. १. ४. ३)

---

१. G omits from जलोदराख्यव्याधिगृहीत.—to तस्मिन्नेवानुवाके। - आग्नेयम् both including and substitutes उष्ण- for कृष्ण- २ B. and D read महोदरव्याध्यादि- for जलोदराख्यव्याधि-. ३. B. and I. read प्रज्ञातरोग- for अज्ञातरोग-, while E. H. I. and J. mit -ग्रस्तः-

इति । षष्ठानुवाके—

‘ प्राजापत्यं तूपरमालभेत यस्याविज्ञातामिव ज्योगामयेत’।

( तै. सं. २. १. ६.३ )

इति । तूपरः शृङ्गहीनः पशुः । तत्फलं तु—

‘स एवैनं तस्मात् स्रामान्मुञ्चति’ ।

(तै. सं. २. १. ६.९)

इति । स एव प्रजापतिरेव । तस्मात् स्रामादस्पष्टाद्दीर्घरोगात् । नवमानुवाके—

‘ मैत्रᳲ श्वेतमालभेत वारुणं कृष्णं ज्योगामयावी’ ।

( तै. सं. २. १. ९. ३ )

इति । तत्फलं तु—

‘ साक्षादेवैनं वरुणपाशान्मुञ्चति उत
यदीतासुर्भवति जीवत्येव’ ।

( तै. सं. २. १. ९. ३ )

इति । एवमेते रोगनिवर्तकाः पशवः प्रथमप्रश्नेऽभिहिताः। तथा द्वितीयप्रश्ने काम्येष्टिप्रकरणे प्रथमानुवाके श्रूयते—

‘ अग्नये सुरभिमते पुरोडाशमष्टाकपालं
निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्
यो वा बिभीयात्’ ।

( तै. सं. २. २. २. ३–४ )

इति। भयप्रतियोगी[1] तु रोगात्मकः पूतिगन्धोऽवगन्तव्यः। वाक्यशेषे—

'पूतिगन्धस्यापहत्यै'।

(तै. सं. २. २. २. ४)

इति तत्फलसंकीर्तनात्[2]। तृतीयानुवाके—

'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपे-
दग्नये पावकायाग्नये शुचये ज्योगामयावी'।

(तै. सं. २. २. ४. २)

इति। तत्फलं तु—

'यदग्नये पवमानाय निर्वपति प्राणमेवा-
स्मिंस्तेन दधाति। यदग्नये पावकाय वाचमेवा-
स्मिंस्तेन दधाति। यदग्नये शुचये आयुरेवास्मिं-
स्तेन दधाति। उत यदीतासुर्भवति जीवत्येव'।

(तै. सं. २. २. ४. २-३)

इति। तथा तत्रैव श्रुतम्—

'एतामेव निर्वपेच्चक्षुष्कामः'।

(तै. सं. २. २. ४. ३)

इति। चक्षुष्कामो नेत्ररोगग्रस्तः।

'यदग्नये शुचये चक्षुरेवास्मिंस्तेन
दधात्युत यद्यन्धो भवति प्रैव पश्यति'।

तै. सं. २. २. ४. ३-४)

---

१ B and D. read भयप्रतिरोगित्वात् तत्र रोगात्मक, H. भयप्रतिरोगीत्वत्ररोगात्मक, E and G भयप्रतिरोगी त्वत्ररोगात्मक. and J. भयप्रतिरोगात्मकः for भयप्रतियोगी तु रोगात्मक. २ I. reads -कीर्तनात् for -सर्कार्तनात्.

इति तत्फलश्रवणात् ।

अनयैव दिशा वाक्यान्तराण्यप्युदाहरणीयानि । ऋग्वेद-यजुर्वेदाश्रितौ जप-होमौ प्रदर्शितौ सामवेदाश्रितावपि सामवेदपर्यालोचनया प्रदर्शनीयौ।

अर्चनानि तु शैव-वैष्णवाद्यागमादिषु प्रसिद्धानि। अर्चनादिभिरित्यादिशब्देनार्घ्य-ध्यानयोग-प्राणायामादयो दृष्टादृष्टोपाया व्याधिनिवर्तका अवगन्तव्याः। ते च योगशास्त्रादौ प्रसिद्धाः । अस्माभिर्ग्रन्थविस्तरभयान्नात्र लिख्यन्ते ।

नच—उक्तेषु जपादिष्वनुष्ठितेष्वपि क्वचित्फलविसंवाद-दर्शनात् न विस्रम्भप्रवृत्तिरिति शङ्कनीयम् । औषधेष्वप्यस्य न्यायस्य समानत्वात्। तत्रापि मा भूद्विस्रम्भ—इति चेत्। हन्तैवमायुर्वेदो दत्तजलाञ्जलिः स्यात् ।

अथ मन्यसे प्रयुज्यमानेष्वौषधेषु कस्माच्चिद्दोषानिवर्त्यदोषप्रबलत्वाद्वा निवर्तकौषधप्रयोगस्याभ्यासोऽपेक्षितः —इति। तर्हि जपादिष्वपि तुल्यमेतदुत्तरम् ।

'सकृत्कृते कृतः शास्त्रार्थः' ।

इति न्यायस्त्वदृष्टफलेष्वेवावगन्तव्यो न दृष्टफलेषु । अत एवावघातादिष्वावृत्तिः परिकल्प्यते । न खल्वनिष्पन्नेषु तण्डुलेषु सकृन्मुसलप्रहारेणाववातविधेश्चरितार्थतां मीमांसका

१. I. reads सामवेदाथर्ववेदाश्रितावपि सामविधानादिपर्यालोचनया प्रदर्शनीयौ for सामवेदाश्रितावपि सामवेदपर्यालोचनया प्रदर्शनीयौ. २ E. G. and H read आगमादिषु for अर्चनादिभि . ३ B. D. and E. read सामान्यत्वात् for समानत्वात्. ४. J reads सकृत्कृति- for सकृत्कृते . ५ B. and D. add न before मीमासकाः.

मन्यन्ते। तत्र यथा तण्डुलनिष्पत्तिपर्यन्तोऽवघाताभ्यासः एवमत्रापि रोगनिवृत्तिपर्यन्तो जपाद्यभ्यासो[1] द्रष्टव्यः।

यत्तु क्वचिज्जपादीनामल्पसङ्ख्याश्रवणं तदल्पदोषविषयतया व्यवस्थापनीयम्। एवं च सति न क्वापि विसंवादः।

अयं च व्याधिप्रतीकारन्यायः सर्वेष्वपि अनिष्टेषु प्रारब्धफलेषु कर्मसु योजनीयः। यदि[2] जपादीनां प्रायश्चित्तत्वमङ्गीकृत्य प्रारब्धकर्मनिवृत्तिरभ्युपेयते यदि[3] वा तदनङ्गीकारेण फलमात्रप्रतिबन्धः सर्वथाऽपि विहिते जपादौ विस्रम्भेण प्रवृत्तिः सिद्ध्यति[4]।

यदा भोगैकनिवर्त्त्यत्वशङ्कायुक्तेष्वपि प्रारब्धफलेष्वीदृशप्रतीकारविस्रम्भः तदाऽनारब्धफलेषु कर्मसु प्रायश्चित्तप्रवृत्तिविस्रम्भोऽस्तीति किमु वक्तव्यम्?। तस्माद्यथोक्तेषु प्रायश्चित्तेषु निःसन्दिग्धतयैव प्रवर्तितव्यमित्यशेषमतिमङ्गलम्॥

तदेवमयं[5] भगवान् पराशराचार्यः काण्डद्वयेन व्यवहारसूचनसहितमाचारप्रायश्चित्तप्रपञ्च[6]मभिधाय शास्त्रमुपसंहरति—

एतत्पाराशरं शास्त्रं श्लोकानां शतपञ्चकम्।
द्विनवत्या समायुक्तं धर्मशास्त्रस्य सङ्ग्रहः॥

इति। पराशरेण कस्यचिदुपपुराणस्यापि[7] निर्मितत्वात्तस्य च ज्ञानप्रधानत्वात् तद्व्यवच्छेत्तुमेतदित्युक्तम्।

'अथातो हिमशैलाग्रे'—

(प. स्मृ. १. १.)

---

१. G reads -अभ्यासा द्रष्टव्या for -अभ्यासो द्रष्टव्य. २. B and D. do not insert this यदि. ३. B and D do not insert यदि ४. I. omits सिद्ध्यति ५ B and D. read तदेवमाह for तदेवमयं ६ B D E. G. H and J. read -प्रायश्चित्तद्वयम् for -प्रायश्चित्तप्रपञ्चम्. ७. B. and D read उपपातकस्यापि for उपपुराणस्यापि, but it seems quite wrong.

इत्यारभ्य प्रणीतो द्वादशाध्यायात्मको ग्रन्थसन्दर्भः प्रकृतत्वादेतच्छब्देन परामृश्यते । अस्य शास्त्रस्य कलिधर्मविषये प्रामाण्यातिशयं पूर्वोक्तमनुस्मारयितुं पराशरसम्बन्धोपवर्णनम् । [1]शास्त्रशब्दोऽत्र विधायकं वचनमाचष्टे । शासनाच्छास्त्रमिति तद्व्युत्पत्तेः । ननु—शंसनाच्छास्त्रमित्यपि तद्व्युत्पत्तिरस्ति । तदुक्तं पुराणे—

'शासनाच्छंसनाच्चैव शास्त्रमित्यभिधीयते' ।

इति । बाढम् । सा व्युत्पत्तिर्मोक्षशास्त्रविषया । तस्य सि[2]द्धब्रह्मतत्त्वाख्यानरूपत्वात् । अत्र त्वनुष्ठेयार्थकथनात्पूर्वोक्तैव । तदेवाभिव्यञ्जयितुं [3]धर्मशास्त्रस्येत्युक्तम् । वचनान्तराणामावापोद्वापनिवृत्तये सं[4]ख्याभिधानम् । मन्वादिस्मृतिवद्ग्रन्थबा[5]हुल्याभावात् केषांचिद्धर्माणामनुक्तिमाशङ्क्य तद्व्यवच्छेदाय सङ्क्षेप इत्युक्तम् ।

[6]अस्य शास्त्रस्यार्थानुष्ठानप्रधानत्वात् पाठस्य स्वर्गम्प्रति अकिंचित्करत्वमाशङ्क्य वेदाध्ययनवत्स्वर्गसाधनत्वमाह—

> य[7]थाऽध्ययनकर्माणि धर्मशास्त्रमिदं तथा ।
> अध्येतव्यं प्रयत्नेन नियतं स्वर्गगामिना ॥

---

१ E and J. substitute पराशरशब्दोऽत्र for शास्त्रशब्दोऽत्र; while G. reads शंसनात् for शासनात्  २ E reads ब्रह्मसत्त्वाख्यान-, G. -ब्रह्माख्यान-, H -ब्रह्मत्वाख्यान- and J -ब्रह्मरूपत्वाख्यान- all for -ब्रह्मतत्त्वाख्यान-. ३ I reads शास्त्रमित्युक्तम् for धर्मशास्त्रस्येत्युक्तम्  ४ E omits ऽभिधानम् । मन्वादिस्मृतिवद् ग्रन्थबाहुल्याभावात् केषाञ्चिद्धर्माणामनुक्तिमाशङ्क्य तद्व्य-  ५ B. and D. omit अभावात् and read बाहुल्यात्  ६ B D E. and H. substitute तस्य for अस्य.  ७. B. and D. substitute अथा— for यथा-.

निगदव्याख्यातमेतत्[1]।

ननु-व्यासेन[2] कलिधर्माणां पृष्टत्वात्[3]

"कलौ पाराशराः[4] स्मृताः"।

(प. स्मृ. १. २४.)

इति पराशरेणोत्तरितत्वाच्च पराशरोक्ताः सर्वे कलिधर्मा एवेति वक्तव्यम्। किञ्च।

'शेषं मुनिविभाषितम्'।

(प. स्मृ. १. ३४)

इति इतरमुन्युक्तकलिनिषेधानामप्यभ्युपगतिः स्पष्टं लक्ष्यते। अतो मूलोक्ताघसङ्कोचादीनां मूलोन्नीतदूरयात्रादीनामस्मिन् युगे प्रवृत्तावप्रवृत्तौ च विरोधो जागरूकः। नच-बाहुल्यमात्रेण स्मृतेः कलिधर्मविषयत्वं किं न स्यात्?-इति वाच्यम्। विभाजकनिमित्ताभावात्। निषेधवचनानां निमित्तत्वे कृष्यादिकस्यापि अननुष्ठेयत्वापत्तेः। एतद्ग्रन्थोक्तव्यतिरिक्तविषयाणां तेषां निमित्तत्वे अघसंकोचादीनामपि कृष्यादिवदनुष्ठेयत्वापत्तेः। संन्यासाद्याश्रम-कृष्यादिव्यतिरिक्तापद्वृत्तिः सेतुयात्राव्यतिरिक्तदूरयात्रादीनामग्राह्यत्वापत्तेः। आचारस्य तथात्वे अतिप्रसङ्गापत्तेः। स्मृतिवैयर्थ्यापत्तेश्च-इति चेत्। अत्रोच्यते-

---

१. B. D. G and J. read निगदव्याख्यानमेतत् for निगदव्याख्यातमेतत्.
२. From this word to (P. 292, L 23) the end of माधवाचार्यवर्य the intermediate portion does not appear in B. D E. G. H and J, but occurs in A. and I It is possible no doubt the coin of author.
३. I. reads स्पृष्टत्वात् for पृष्टत्वात्. ४. I. reads पराशरस्मृति..

कलौ पराशरोक्तं तद्वचनोन्नीतं च सर्वमप्यनुष्ठेयमेव। नानुष्ठेयं किञ्चिदप्यास्ति। किन्त्वनुष्ठाने विशेषो विज्ञायते। समन्वयबलात्। तथाहि–निषेधाश्च युगप्रयुक्तानुपपत्तिमूलकाः। अन्यथा विध्युत्पत्तिवैयर्थ्यात्। अनुपपत्तिश्च दृष्टाऽदृष्टा चेति द्विविधा। तत्र दृष्टानुपपत्तिमूलकानामनुष्ठानमननुष्ठानं चानिन्दितम्। यत्र अनन्यथासिद्धिप्रतिप्रसवविधिरुन्नीयते तत्र दृष्टानुपपत्तिः कल्प्यते।

"दूराध्वोपगतं श्रान्तं"

(प. स्मृ. १. ४१)

"यति हस्ते जलं दद्यात्"

(प. स्मृ. १. ५३)

"वैश्वदेव उपस्थितम्"

(प. स्मृ. १. ४१)

चातुर्वर्ण्याश्रमागतम्"

(प. स्मृ. २. १)

एकपिण्डास्तु दायादाः"

(प. स्मृ. ३. ७)

"देशान्तरमृतः कश्चित्"

(प. स्मृ. ३. १०)

"ब्रह्मचारी गृहे येषाम्"

(प. स्मृ. ३. १८)

"सव्रतः सत्रपूतश्च"

(प. स्मृ. ३. २१)

"आहिताग्निश्च यो द्विजः"

(प. स्मृ. ३. २१)

"राज्ञश्च सूतकं नास्ति"

(प. स्मृ. ३. २२)

"यस्य चेच्छति पार्थिवः"

(प. स्मृ. ३. २२)

"सम्प्रणीतः श्मशानेषु"

(प. स्मृ. ८. २२)

"दास–नापित–गोपाल–कुलमित्रा-ऽर्धसीरिणः"

(प. स्मृ. ११. २१)

"यजेत वाऽश्वमेधेन"

(प. स्मृ. १२. ७१)

इत्याद्यन्यथानुपपत्त्या दूरयात्राविधिरुन्नेयः।

"एकाहाच्छुद्ध्यते विप्रः"

(प. स्मृ. ३. ४)

इत्यघसङ्कोचविधिर्यायावरविषयत्वेन वा औपासनोक्तापवादप्रतिप्रसवविषयत्वेन वा अन्यथासिद्धः।

"नष्टे मृते प्रव्रजिते"

(प. स्मृ. ४. २८)

इति पुनरुद्वाहविधिः परिवेदनाद्यक्रमाविवाहविषयत्वेन अन्यथासिद्धः।

"क्षेत्रजश्चैव"

(प. स्मृ. ४. २२)

इत्यादि क्षेत्रजादिपुत्रभेदप्रदर्शनं कुण्ड-गोलकप्रदर्शनवत् प्रायश्चित्तार्थत्वेन अन्यथासिद्धम्।

न च-दत्तौरसयोरपि तथा स्यात्-इति वाच्यम्। ऋतुगमनप्रशंसनेन वैपरीत्यनिन्दनेन च औरसस्यैव लक्षणप्रणयनेन दत्तस्यापि विध्यभिप्रायविषयत्वप्रतिपादनात् दत्तौरसकथनं न प्रायश्चित्तरूपमिति स्पष्टीकृतम्।

"संसर्गमाचरेद्विप्रः"

(प. स्मृ. )

इत्यादि संसर्गप्रायश्चित्तं लोकविलक्षणयाजनादिविषयत्वेन[1] अन्यथासिद्धम्।

"आसनात् शयनात् यानात्"

(प. स्मृ. १२, ७९)

इति तु पातित्यमात्रापादकत्वेन अन्यथासिद्धम्।

अन्यत्र गोवधादौ अदृष्टानुपपत्तिः कल्प्यते। तेषामनुष्ठानं निन्दितम्। यत्र प्रत्यक्षोऽपूर्वविधिर्दृश्यते कृष्यादौ तस्य अननुष्ठानं निन्दितम्। तदितरविषयत्वेनैव निषेधानां प्रवृत्तत्वात्। पूर्वोक्तानन्यथासिद्धविधिविषयाणामप्येवमेव द्रष्टव्यम्। तेषामपि स्वस्वविषयेषु प्रत्यक्षापूर्वविधित्वात्। एतदभिप्रायेणैव सर्वमपि व्याख्यानं सङ्गच्छत इति[2] सर्वं समञ्जसम्।

अध्यायाचारकाण्डानभिहितसमयाचारभेदान् द्वितीये
काण्डेऽध्यायाष्टकेऽपि क्वचिदनभिहितान् निष्कृतीनां प्रभेदान्।
अध्याये द्वादशेऽस्मिन्नकथयदनघः शक्तिसूनुर्मुनीन्द्रः
तं शिष्टानुग्रहार्थं[3] सुविवृतमकरोन्माधवाचार्यवर्यः॥ १॥

१ A reads विलक्षण- for लोकविलक्षण-. २. This does not appear in I ३. A reads शिष्या- for शिष्टा-.

अध्यायेऽत्रावशिष्टं[1] समुदितमुभयोः काण्डयोर्द्वादशे स्यात्
प्रायश्चित्तं यदस्मिन्ननुपदमवेदत्[2] पातकादौ रहस्ये[3]।
अन्यत् सौम्यादिकृच्छ्रं सुविहितफलदं कर्मणो यो विपाकः
सर्वं भावोपलक्ष्यं स्मृतिहृदयविदा[4] व्याकृतं माधवेन ॥ २ ॥

इति श्रीमहाराजाधिराज[5]परमेश्वर-वैदिकमार्गप्रवर्तक[6]-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य[7] कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां द्वादशोऽध्यायः समाप्तः।

## समाप्तमिदं प्रायश्चित्तकाण्डम्।

१. B. D and H. read चावशिष्टं. G. स्वावशिष्टं and G. वा ऽवशिष्टं for ऽत्रावशिष्ट. but it seems incorrect. २ B. D. E H. J. and I read अगमत् for अवेदत्. ३. B. D. E. G. H and J read रहस्यम् for रहस्ये. ४. E. and I. read स्मृतिहृदयमिव for स्मृतिहृदयविदा, while B. D. H. substitute व्याकृते for व्याकृतं ५ B and D. read -राजाधिराज- for -महाराजाधिराज-. ६. B D. E. G. H. and J. read प्रवर्तकस्य for -प्रवर्तक-. ७. B. and D. read only अमात्यस्य for माधवामात्यस्य.

The names occurring in the Parâśara Śamhitâ.

## ADHYÂYA XII

**A list of the names of authors and works, &c., occurring in Mâdhavâchâryâ's Commentary on the Parâśar Sâmhitâ, Adhyâya XII.**

# Index of Quotations, Vol. II., Part II.

**८. उमामहेश्वरसंवादः-**

९. उशनाः—



१०. ऋग्विधानम्—

१५. गर्गः—



१६. गरुडपुराणम्—



१७. गौतमः—

**१९. चमत्कारखण्डम्—**

**३१. नागरखण्डम्—**



**३२. नारदः—**



**३३. नारदपुराणम्—**

३४. पतञ्जलिः —



३५. पद्मपुराणम् —



३६. पराशरोपपुराणम् —



३७. पुराणम् —

९०. ब्रह्मपुराणम्—

९७. मध्यमाङ्गिराः—



९८. महाभारतम् —



९९ मार्कण्डेयः—



६०. मार्कण्डेयपुराणम् —

६१. यमः—

**६२. याज्ञवल्क्यः—**

६३. लिंगपुराणम्—



६४. वराहपुराणम्—



६५. वसिष्टः—

६६. वामनपुराणम्—



६७. वायुपुराणम्—

७१. विष्णुपुराणम्—



७२. विष्णुधर्मोत्तरम्—

७३. वृद्धगौतमः—

८०. व्यासः—



८१. शंख :—

८२. शंख-लिखितौ—

८३. शाण्डिल्यः—



८४. शातातपः—



८५. शिवधर्मोत्तरम्—

८६. श्रुति :—



८७. षट्त्रिंशन्मतम् :—



८८. संवर्तः—

९२. स्मृत्यन्तरम्—



९३. स्वप्नाध्यायविदः—



९४. हारीतः—

THE

# GENERAL INDEX OF QUOTATIONS

occurring in

## MÂDHAVÂCHARYA'S COMMENTARY

on the

### PARÂSARA DHARMA SAMHITÂ,

### Vols. I.—II.

## अ.—

### अक.—

## *Vol. I. and Vol. II.*

## Vol. I and Vol. II.

अट -



अण.—



अत.—

अथ.—

अद्.—

अन.—

अम.—

अय -

अल.

अव.—

### अस.—

अह.—

## आ.

इ.

## ई.

## घ.

## छ.

### झ.



### ट.



### ड.



### त.

## द

**ध.**

न.

प.

## भ.

## म.

## र.

## ल.

## ह.

समाप्त.

# THE INDEX OF THE WORDS
## occurring in the text of the Parâśara Dharma Samhitâ.

*Adhyâya I., Sloka 1, up to the end of the XII. Abhyâya.*



### अ

## आ.

## ख.



## ग.

## त.

## फ.



## ब.

## म.

य.

ल.



व

# BOMBAY SANSKRIT SERIES.

*[illegible] the superintendence of Prof. S. R. Bhandarkar, M.A., and [illegible] K. B. Pathak, B.A.*

| | Rs. | a. | p. |
|---|---|---|---|
| Āpastamb[illegible], Part I., with Critical Notes and Index and various Readings of the Hiranyakeshi-Dharmasûtra, by Dr. G. Bühler (B. S. S. No. 14) .. ... | 1 | 6 | 0 |
| Part II., containing extracts from Haradatta's Commentary called Ujjvala, by Dr. Buhler (B. S. S. No. 50) . . .. . | 1 | 2 | 0 |
| [illegible], by Col. G. A. Jacob (B. S. S. No. 4[illegible]) .. . .. ... .. ... | 1 | 4 | 0 |
| [illegible] Vol. I., with Mallinâth's Commentary, by Mr. K. P. Trivedi (B. S. S. No. 56) .. .. | 9 | 0 | 0 |
| Vol. II., by Mr. K. P. Trivedi (B. S. S. No. 57). | 6 | 0 | 0 |
| [illegible] to the Principal Upanishads and Bhagavadgitá, by Col. G. A. Jacob (B. S. S. No. [illegible]) ... | 4 | 0 | 0 |
| [illegible], Part I., with Critical Notes, &c., by Dr. G. Buhler (B. S. S. No. 10) . . .. | 0 | 8 | 0 |
| Part II., by Dr. P. Peterson (B. S. S. No. 42) . ... | 0 | 8 | 0 |
| [illegible] Mâlâ, Part I., Text and Critical Notes, by Prof. [illegible] Dr. G. Buhler (B. S. S. No. 17) .. ... . | 1 | 0 | 0 |
| [illegible] of V[illegible], with Commentary; Tarala of Mallinatha, with Critical Notes, &c., by Mr. K. P. Trivedi, B. A. (B. S. S. No. 63) ... . .. .. | 14 | 0 | 0 |
| Gaudavaho, by Vâkpati, by Mr. S. P. Pandit (B. S. S. No. 34) | 3 | 0 | 0 |
| Handbook to Rigveda, Part I., by Dr. P. Peterson (B. S. S. No. 41) . ... .. . | 1 | 8 | 0 |
| Part II., by Dr. P. Peterson (B. S. S. No. 43) . ... ... . | 2 | 8 | 0 |
| H[illegible] of Nârâyana, by Dr. P. Peterson (B. S. S. No. 33) . | 0 | 14 | 0 |
| Hymns from the Rigveda, by Dr. P. Peterson (B. S. S. No. 36) .. | 2 | 4 | 0 |
| (Second Selection), by Dr. P. Peterson (B. S. S. No. 58). . .. .. | 4 | 0 | 0 |
| Kâdambari, Vol. I. (Text), by Dr. P. Peterson (B. S. S. No. 24). | 2 | 0 | 0 |
| Vol. II. (Introduction and Notes), by Dr. P. Peterson (B. S. S. No. 21) . . .. .. | 4 | 8 | 0 |
| Kirti Kaumudi, by Mr. A. V. Kathavate (B. S. S. No. 25). Out of print (*Copyright restored to the Author*). | | | |
| Kumârapâla Charita, by Mr. S. P. Pandit (B. S. S. No. 60) .. | 8 | 8 | 0 |
| Mrichchhakatika with two Commentaries and various Readings, by Mr. N. B. Godbole (B. S. S. No. 52) . | 3 | 8 | 0 |
| Mâlavikâgnimitra, by Mr. S. P. Pandit (B. S. S. No. 6) .. | 2 | 2 | 0 |
| Mâlatî-Mâdhava, with Critical Notes, &c., by Dr. R. G. Bhandarkar (B. S. S. No. 15) .. ... .. | 4 | 4 | 0 |